१ खण्डम्

श्रीमद्भगवद्रामानुजविरचित-
वेदान्तसूत्रव्याख्यानम्

# श्रीभाष्यम् ।

श्रीसुदर्शनाचार्य-श्रीवेदान्तदेशिकप्रणीत-
श्रुतप्रकाशिका-तत्त्वटीकाव्याख्या-
द्वयोपेतम्



वृन्दावनवास्तव्य--सर्वतन्त्रस्वतन्त्र श्रीसुदर्शनाचार्य-
शास्त्रिणामन्तेवासिना पं० धरणीधरशास्त्रिणा
सम्पादितम् प्रकाशितञ्च



तच्च

श्रीधरणीधरशास्त्रिपादान्तेवासि वे० शिरोमणि
वेदान्ततीर्थ पं० श्रीधराचार्यद्वारा संशोध्य
श्रीवृन्दावनधामनि
श्री "श्रीनिवास" यन्त्रालये मुद्रापितम्



printed by p. Shridharacharya at the
Shri "Shrinibas" Press Brindaban

सन् १९१६ ] [ रामानुजवत्सर ९००

श्रियै नमः ।

# भूमिका ।



इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्ष्वपि पुरुषार्थेषु मोक्ष एव प्रधानभूत इति, स एव निश्श्रेयसशब्दवाच्य इति च नाविदितं विदुषाम् । सन्त्यस्मिँश्च परमपुरुषार्थभूते ब्रह्मप्राप्तिलक्षणे मोक्षे वादिनामनेकधा विप्रतिपत्तयः , केचन स्वरूपोच्छित्तिलक्षणं मोक्षम् , केचित्–अविद्यास्तमयलक्षणम् , अन्ये च निश्शेष-वैशेषिकात्मगुणोच्छेदलक्षणम् , त्रय्यन्तनिष्णातास्तु तद्गुणानुभवजनितनिरति-शयसुखसमुन्मेषोपनीतात्यन्तिकतात्किङ्करत्वलक्षणं मोक्षमाचख्युरिति ।

मोक्षसाधनेऽपि विविधा विप्रतिपत्तयः , केचित् कर्मयोगलभ्यम् , केचन ज्ञानयोगलभ्यम् , अन्ये अन्यतरानुगृहीतान्यतरलभ्यम् , त्रय्यन्तविदस्तु–उभय-परिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यं मोक्षमाहुरिति ।

एवं मोक्षस्वरूपं तदुपायश्चाधिकृत्य परस्परेण विप्रतिपद्यमाना अप्येते, पार-लौकिकमस्ति किञ्चिच्छ्रेय इति , तदेवाऽक्षयं दुःखासम्भिन्नं स्थिरं सुखरूपं प्राप्यमस्माभिरित्यंशे च न किञ्चिदपि वैमत्यमावहन्ति, प्रयस्यन्ति च स्वस्वाभिमता एवार्थाः श्रुत्याद्यनुगृहीता इति स्थापयितुम् । यतो ह्येते वेदप्रामाण्यं स्वीकुर्वाणा आस्तिकतमाः, अतश्चैषां स्वस्वाभिमतार्थेषु श्रुत्याद्यानुकूल्यमवश्यं प्रदर्शनीयमासी-दिति सर्वेऽप्येते भगवद्बादरायणविरचितानि सूत्राणि , भगवन्मुखारविन्द-निस्सृतां गीताम् , उपनिषदश्च स्वस्वमतानुकूलतया व्याख्यातुमुपचक्रमिरे । एव-मन्यान्यप्यैतिहासकानि पौराणिकानि च वचनजातानि स्वस्वानुकूल्येन व्याचच-क्षिरे । एवं व्याचक्षाणैः तैर्न खलु परोपमर्दमन्तराऽऽत्मनो मतं स्थास्यतीत्यभि-प्रायकैस्तत्र तत्र परमतेषु श्रुत्यादिप्रमाणानां वैमुख्यप्रदर्शनम् , तर्कवैधुर्यनिरूप-णम् , अनुभवविरुद्धत्वप्रतिपादनञ्च नियतमकामैरप्याचरितव्यमासीत् ।

इत्थं परस्परं विसम्वादेन विभिद्यमानेष्वपि मतेषु श्रुत्यनुगृहीतानीति, वेदान्ति-मतव्यपदेश्यानीति च सकलैरप्यास्तिकैरङ्गीकृतानि– अद्वैतविशिष्टाद्वैतद्वैतद्वैता-द्वैतशुद्धाद्वैतान्येव सर्वत्र समुपलभ्यन्ते । मतान्येतानि चिरादेव रूढमूलानि, अथाप्येतन्मतानुसारेण ब्रह्मसूत्रगीतादिकञ्च व्याचक्षाणा अत एव भाष्यकारप्र-सिद्धिमुपगता एते खलु पुण्यपुरुषाः । यथा— अद्वैतभाष्यकृतः श्रीशङ्कराचार्य्याः, विशिष्टाद्वैतभाष्यकाराः श्रीरामानुजाचार्य्याः , द्वैतभाष्यकर्त्तारः श्रीमदानन्दती-

र्याचार्य्याः, द्वैताद्वैतभाष्यप्रणेतारः श्रीनिम्बार्काचार्य्याः, शुद्धाद्वैतभाष्यकृतः श्रीवल्लभाचार्य्याः । यथा— अद्वैतवादिनः श्रीशङ्कराचार्यान् शिवस्य, यथा च विशिष्टाद्वैतवादिनः श्रीरामानुजाचार्यान् शेषस्य, यथा द्वैतिनः श्रीमदानन्दतीर्थाचार्यान् वायोः, यथा द्वैताद्वैतवादिनः निम्बार्काचार्य्यान् सुदर्शनस्य, तथा शुद्धाद्वैतवादिनोऽपि श्रीवल्लभाचार्यान् अग्नेरवतार इति प्रमाणैरुपपत्तिभिः सर्वथा प्रतिपद्यन्ते ।

तत्राद्वैतमते भेदनिर्गुणवादिनीनां "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन" "निष्कलं निष्क्रियं निर्गुणम्" इत्यादीनां श्रुतीनां स्वारस्यम्; अन्यासाञ्च भेदसगुणवादिनीनां "ज्ञाज्ञौ द्वावजावीशनीशौ" "द्वा सुपर्णा सयुजा सखाया" "नित्यो नित्यानां चेतनश्चेतनानाम्" "य आत्माऽपहतपाप्मा" "आनन्दं ब्रह्मणो विद्वान्" इत्यादिश्रुतीनामस्वारस्यम्। द्वैतमते तावद्भेदवादिनीनां श्रुतीनां स्वारस्यम्, अस्वारस्यञ्चाभेदवादिनीनाम् । एवम् द्वैताद्वैतमते निर्दोषब्रह्मस्वरूपप्रतिपादिनीनां श्रुतीनाम्, शुद्धाद्वैतमते भेदवादिनीनाञ्चास्वारस्यम्। विशिष्टाद्वैतमते तु प्राकृतहेयगुणप्रतिषेधेन निर्गुणवादिन्यः, कल्याणगुणप्रतिपादनेन सगुणवादिन्यः, विशिष्टवस्त्वैक्यसमर्थनेन अभेदवादिन्यः, स्वरूपतः स्वभावतश्च तत्त्वेषु भेदवादेन भेदप्रतिपादिकाः श्रुतय इति सर्वा अपि श्रुतय आञ्जस्येन स्वारस्यमावहन्ति इति ।

यतः श्रीभाष्यकाराः स्वयमेवादौ "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः तन्मतानुसारेण व्याख्यास्यन्ते" इतिप्रतिज्ञां चक्रुः, अग्रे च वहुशः स्थलेषु वृत्तिद्रमिडभाष्यकारसिद्धित्रयादिसम्मतिमपि प्रदर्शयामासुः, अतश्च विशिष्टाद्वैतसिद्धान्तप्रतिपादकं प्राचीननिबन्धमूलमेतद्ग्रन्थरत्नं श्रीभाष्याख्यं सर्वोत्तमं वेदान्तसूत्रव्याख्यानमिति विभावयन्तु पक्षपातरहिता विद्वांस इति ।

एते चाचार्यवर्य्या दुःखत्रयसन्तप्यमानचेतनोज्जिजीविषया दक्षिणदेशतुण्डीरमण्डलस्थश्रीभूतपुर्य्यां हारीतकुलतिलकस्य सोमयाजिनाम्नो विप्रवर्यस्य जायायां भूदेवीसमाह्वायां कलेः पिङ्गलाब्दे एकोनविंशत्युत्तरशताधिकचतुस्सहस्रतमे चैत्रशुक्लपञ्चम्यामार्द्राभे प्रादुर्बभूवुः । अथ वृत्तचूलादिसंस्काराः समधिगतव्याकरणादिशास्त्राश्चैते शेषावताराः—वेदान्तसारः, वेदान्तदीपः, वेदार्थसङ्ग्रहः, गीताभाष्यम्, गद्यत्रयम्, श्रीभाष्यम्, इति षड् ग्रन्थान् निर्मिमाणा विशिष्टाद्वैतासि-

द्धान्तं सर्वतो मुखयन् तत्परिपन्थिनश्च वादाहवैर्निरुन्धन्तो न्यवसन् ।

अस्य च प्रबन्धरत्नस्य श्रीभाष्याख्यस्य पूर्वं व्याख्याद्वयं लब्धम् । एका च श्रुतप्रकाशिकाख्या श्रीहारीतकुलतिलकवाग्विजयिसूनुश्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन श्रीसुदर्शनाचार्येण प्रणीता । अपरा च सर्वतन्त्रस्वतन्त्रकवितार्किकसिंहश्रीवेदान्ताचार्यविरचिता तत्त्वटीकाभिधा ; इयञ्च व्याख्या—जिज्ञासाधिकरणान्तर्गत— "अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्याम" इति भाष्यान्तैव समुपलभ्यते ।

तत्र शुद्धप्रायं श्रुतप्रकाशिकासहितं तैलङ्गाक्षरमुद्रितं श्रीभाष्यपुस्तकमेकम्, सर्वतन्त्रस्वतन्त्रमहामहोपाध्यायश्रीराममिश्रशास्त्रिभिर्मुद्रापितन्नागराक्षरीयमेकम्, एकञ्च नागराक्षरलिखितपुस्तकम्, इति पुस्तकत्रयं, एवमपरायाश्च व्याख्यायाः तैलङ्गाक्षरमुद्रितपुस्तकम् , एकञ्च द्राविडाक्षरलिखितमिति पुस्तकद्वयञ्चादाय मुद्रापितश्चास्य ग्रन्थरत्नस्य व्याख्याद्वयोपेतस्य सटिप्पणप्रमाणाकरसहितस्य प्रथमः खण्डः विदुषां सन्निधौ समर्प्यते । परिशोधने चास्य मनुष्यसाहजिकदोषेण, अक्षरसंयोजकानामनवधानेन वा प्रमादश्चेत् तर्हि सदयहृदयैर्गुणैकपक्षपातिभिर्विपश्चिद्भिः सोढव्योऽनुकम्पया—इति विनिवेदयति—

श्रीशास्त्रिधरणीधराचार्यपादान्तेवासी
पं० श्रीधराचार्यः

# विशेषसूचना ।

प्रथमखण्डमुद्रणानन्तरं श्रुतप्रकाशिकाया व्याख्या भावप्रकाशिकाख्या समधिगता , इमामनवलोक्य गुरुमुखावगतभाष्यार्था अपि भाष्यतात्पर्यं तद्व्याख्याभिप्रायञ्च साकल्येन धारयितुं न शक्नुवन्ति, किमितरे मन्दशेमुषीका इत्यस्या मुद्रापणमावश्यकमित्येतत्सम्वलितश्चाऽस्य ग्रन्थरत्नस्य श्रीभाष्यस्य द्वितीयः खण्डः मुद्राप्यते— प्रथमखण्डस्थश्रुतप्रकाशिकाख्याव्याख्यापि कटङ्कोद्धारीयटिप्पण्या सह सम्मुद्र्य पृथक् सम्पुटे प्रकाश्येतेति ।

सर्वदेशदशाकालेष्वव्याहतपराक्रमा ।
रामानुजार्य्यदिव्याज्ञा वर्द्धतामभिवर्द्धताम् ॥





तस्मै रामानुजार्य्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ॥

# प्रथमाध्याये प्रथमपादस्य

प्रथमखण्डविषयसूचीपत्रम् ।





श्रीमते रामानुजाय नमः ।

श्रीमद्भगवद्रामानुजमुनिविरचितं

# शारीरकमीमांसाभाष्यम् ।



## श्रुतप्रकाशिका–तत्त्वटीकाव्याख्याद्वयोपेतम् ।



‡ अखिलभुवनजन्मस्थेमभङ्गादिलीले

श्रीमत्सुदर्शनाचार्यविरचिता

## श्रुतप्रकाशिका ।

( अवतरणिका )

यतीन्द्रकृतभाष्यार्था यद्व्याख्यानेन दर्शिताः ।
वरं सुदर्शनार्यं तं वन्दे कूरकुलाधिपम् ॥

वरदं द्विरदाद्रीशं श्रीनिधिं करुणानिधिम् ।
शरण्यं शरणं यामि प्रणतार्त्तिहरं हरिम् ॥ १

‡ न खिलमत्रेत्यखिलम्, खिलशब्दार्थश्चात्र ब्रह्मकर्तृकसृष्ट्यादिव्यापारविषयः, तच्छून्यत्वञ्च भुवने स्वघटितत्वसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्त्वम्, खिलशब्दो हि नञ्समभिव्याहृतः

विनतविविधभूतव्रातरक्षैकदीक्षे ।

* श्रुतप्रकाशिका *

बहिरन्तस्तमश्छेदि ज्योतिर्वन्दे सुदर्शनम् ।
येनाव्याहतसङ्कल्पं वस्तु लक्ष्मीधरं विदुः ॥ २ ॥
सम्यङ्न्यायकलापेन महता भारतेन च ।
उपबृंहितवेदाय नमो व्यासाय विष्णवे ॥ ३ ॥
तस्मै रामानुजार्याय नमः परमयोगिने ।
यः श्रुतिस्मृतिसूत्राणा–मन्तर्ज्वरमशीशमत् ॥ ४ ॥
वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् ।
भाष्यामृतप्रदानाद्यः सञ्जीवयति मामपि ॥ ५ ॥

स्वार्थान्वयिनञर्थान्वयितावच्छेदकधर्मावच्छिन्नान्वयितावच्छेदकधर्मावच्छिन्नासम्बन्धिनं बोधयति, यथा अखिलो घटः कुलालेन क्रियत इत्यादौ खिलशब्दार्थान्वयिनञर्थान्वयितावच्छेदकीभूतो यो घटत्वादिधर्मस्तदवच्छिन्नान्वयितावच्छेदककुलालकृतिविषयतात्वावच्छिन्नासम्बन्धी खिलशब्दार्थः, तदभावो नञा घटे बोध्यते; तथा च कुलालकृतिविषयताशून्यः कोऽपि घटो नास्तीति व्यतिरेकोक्त्या कृत्स्नस्यापि घटस्य कुलालकर्तृकत्वं तादृशवाक्याल्लभ्यते, तद्वदिहापि विवक्षितार्थलाभः. नच भुवनशब्दार्थान्वयितावच्छेदकमत्र केवलजन्मत्वादिकमेव, नतु ब्रह्मकर्तृकत्वविशिष्टजन्मत्वादिकम्, विशेषणांशस्योपस्थापकविरहात्. तथा च निरुक्तव्युत्पत्तिबलेन केवलजन्माद्यसम्बन्ध्येव खिलशब्दार्थो भवेदिति ब्रह्मकर्तृकजन्माद्यसम्बन्धिनो विवक्षितार्थस्य नात्राभावप्रतियोगितया बोधो युज्यत इति वाच्यम्, कुलालोऽखिलं घटं करोतीत्यत्र कुलालनिष्ठकृतिविषयत्वाभाववानभावप्रतियोगितया यथा वा खिलशब्देन बोध्यते तथात्रापि विवक्षितार्थबोधसम्भवात्. तदुपपादनं च पूर्वोक्तव्युत्पत्तिशरीरे नञर्थान्वयितावच्छेदकधर्मान्वयितावच्छेदकत्वस्थाने तादृशधर्मावच्छिन्नान्वयितावच्छेदकत्वेन तात्पर्यविषयत्वस्य निवेशेन कर्तव्यम्. तात्पर्यनिर्वाहश्च शब्दजन्यशाब्दबोधे कुलालकृतिविषयितात्वावच्छिन्ने घटान्वयाभावेऽप्युदीच्यमानसबोधे तदवच्छिन्ने तदन्वयेन सम्भवतीति, प्रकृतेऽपि ब्रह्मकर्तृकसृष्ट्यादिव्यापारविषयतात्वस्य भुवनान्वयितावच्छेदकत्वासम्भवेऽपि तेन रूपेण तात्पर्यविषयताया मानसबोधमाश्रित्य सम्भवेन तदवच्छिन्नासम्बन्धिनः खिलशब्दार्थत्वं नानुपपन्नम्. नच सिद्ध्यसिद्धिभ्यां व्याघातः खिलशब्दार्थस्य प्रतियोगिनः प्रसिद्धौ तदभावो न सम्भवति, अप्रसिद्धौ च प्रतियोगिप्रसिद्धेरभावप्रसिद्धावपेक्षणीयतया तदभावस्य सुतरामप्रसिद्धिरिति वाच्यम्, प्रतियोगिनः खिलशब्दार्थस्य ब्रह्मतद्गुणादेः प्रसिद्धत्वेन स्वघटितत्वसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववत्त्वरूपाखिलशब्दार्थस्य भुवने अक्षतत्वात्, स्वघटितत्वमत्र स्वनिष्ठकार्यत्ववत्त्वरूपम्, स च सम्बन्धोऽत्र व्यधिकरणसम्बन्धः ॥

# श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे

* श्रुतप्रकाशिका *

प्रपद्ये प्रणवाकारं भाष्यं रङ्गमिवापरम् ।
परस्य ब्रह्मणो यत्र शेषित्वं स्फुटमीक्ष्यते ॥ ६ ॥
श्रुत्यन्तेषु श्रुतं भाष्ये मतं ध्यातं हृदम्बुजे ।
लक्ष्मीपतिं प्रपद्येऽहं दृष्टं श्रीरङ्गधामनि ॥ ७ ॥
प्रमाणं च प्रमेयं च प्रमातारश्च सात्त्विकाः ।
जयन्तु क्षपितारिष्टं सह सर्वत्र सर्वदा ॥ ८ ॥
अविस्तृताः सुगम्भीरा रामानुजमुनेर्गिरः ।
दर्शयन्तु प्रसादेन स्वं भावमखिलं दृढम् ॥ ९ ॥
श्रीरङ्गेशाज्ञया लब्ध—व्याससञ्ज्ञं सुदर्शनम् ।
वाचाविजयिनः पुत्रं भाष्यभक्तिरचूचुदत् ॥ १० ॥
गुरुभ्योऽर्थः श्रुतः शब्दैस्तत्प्रयुक्तश्च योजितः ।
सौकर्याय बुभुत्सूनां सङ्कलय्य प्रकाश्यते ॥ ११ ॥
कः कृत्स्नं वेत्ति भाष्यार्थं श्रुतांशस्थितये कृतिः ॥
आढ्यैः काकणिकेवैषा नोपेक्ष्या भाष्यवित्तमैः ॥ १२ ॥
भाष्यं चेद्व्यवृणोत्स्वयं यतिपतिर्व्याख्यानवाचां तथा
गाम्भीर्यादनवस्थितिर्मितमतिर्दूरे जनस्तद्गिराम् ॥
प्रष्टव्यः कथमीश्वरः स हि न नः प्रत्यक्षरूपो दृशां
तद्भाष्यं स च भाष्यकृत्स च हरिः सम्यक् प्रसीदन्तु नः ॥ १३ ॥

सर्वेषां पुरुषाणां प्रमाणाधीनप्रमेयनिश्चयानामुपादित्सितजिहासितेष्टानिष्ट—तत्साधनानामलौकिकपुरुषार्थतत्साधनरूपे वस्तुनि शब्दैकसमधिगम्ये, तत्राप्यपुरुषशेमुषीदोषमषीमालिन्यस्य वेदाख्याक्षरराशेरेव प्रधानतः प्रमाणतया आश्रयणीयत्वे सिद्धे, तत्र च पशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकामुष्मिकार्वाचीनफलतत्साधनपरेऽवगते पूर्वभागे, परमपुरुषार्थावबोधके च तदुपरिभागे पूर्वाचार्याभिमतमुक्तिघण्टापथकण्टकायमानविविधकुदृष्टिजनदुर्वचनशतोपप्लुते तदुपदर्शितकुपथप्रवृत्तिनि जगति च मोमुह्यमाने तदुज्जिजीवयिषया सदसद्विवेचनचतुरपूर्वाचार्य-

भवतु मम परस्मिन् शेमुषी भक्तिरूपा ॥ १ ॥

* श्रुतप्रकाशिका *

परिचितं प्राचीनमेव समीचीनमध्वानं निष्कण्टकीकृत्य परमपुरुषार्थाभ्यर्थिजनसार्थं कृतार्थयितुं भवभयाभितप्तजनभागधेयवैभवभावितावतरणेन परमकारुणिकेन भगवता भाष्यकारेण शारीरकशास्त्रं व्याचिख्यासितम् । परमर्षिप्रणीतानि व्याख्येयानि, तेषां च महर्षिप्रणीतानि व्याख्यानानि च सन्ति चेत्तान्येवानुरोद्धव्यानि । नह्यनृषेः सूक्ष्मदर्शित्वम्, ऋषेरभिप्रायमृषिरेव स्वतो वेदितुमर्हति न तु जडमतिरितरो जनः । ऋषिवचसामेवाभिन्नवक्तृकाणां मिथो विरोधे पूर्वपक्षाभिप्रायवैभववादादिभिरविरोधो नेयः । भिन्नवक्तृकाणां तु विरोधे दुष्परिहरे युक्तियुक्तं ग्राह्यमिति न दोषः । ये पुनः सन्त्यपि तान्यनादृत्य व्याख्येयान्तराणि व्याख्यानान्तराणि च तद्विरुद्धानि रचयन्ति तेषामाग्रहगृहीतहृदयत्वे पण्डितमानित्वे पाण्डित्यख्यापनपरत्वे च तत्प्रवृत्तिरेव प्रमाणम् । इतरेषां च व्याख्यातॄणामार्षव्याख्यानातिलङ्घित्वम् "उपासात्रैविध्यात्" "सर्वत्र प्रसिद्धोपदेशात्" 'भूमासम्प्रसादादध्युपदेशात्' "दहर उत्तरेभ्यः" इत्यादिषु स्पष्टतरम्, इह तु वृत्त्यनुसारः प्रतिज्ञातः । नच तत्प्रतिज्ञानमहृदयमिति शङ्कनीयम्; दुष्परिहरबाधकानुपलम्भात् । यद्यपि कर्ममीमांसायां च क्वचित्क्वचिदर्वाचीनव्याख्यातृभिराकुलत्वमापादितम्, तथापि तत्र प्रयोगमार्गे स्खलनाभावादनुष्ठानमात्राधीनायाः स्वर्गादिफलसिद्धेर्देवतास्वरूपतद्याथात्म्यसत्कार्यवादादिज्ञाननैरपेक्ष्यम्, परमपुरुषार्थस्य ज्ञानैकसाध्यतया ज्ञानमार्गस्खलनस्याऽऽत्महानिफलकत्वेन तद्विपरीतज्ञानानामवश्यपरिहर्तव्यत्वम् । उत्तरभागे च तत्तदर्थौपयिकतया प्रसक्तानां पूर्वभागार्थानां प्रदर्शितयैव दिशानुक्तानामपि शिक्षणीयार्थान्तराणां सुकरनिर्वाहत्वं चाभिप्रेत्य ब्रह्मसूत्राण्येव भगवान् भाष्यकारः प्रारभते विवरीतुम् ॥

एवं प्रारिप्सितस्य प्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनार्थं स्मृत्याचारसिद्धमिष्टदेवतोपासनरूपं मङ्गलं श्रौतमाचरति—

(अखिलेत्यादिना श्लोकेन)

"मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते ॥"

इति हि स्मर्यते ।

आचर्यते च तत्तत्प्रबन्धृभिः, श्रोतृबुद्धिमनस्समाधानार्थं शास्त्रार्थसङ्क्षेपश्चार्थतः क्रियते । यथा चोदनासूत्रेण धर्मस्वरूपं प्रमाणञ्च श्रुत्यर्थाभ्यां निरूपितम् ।

प्रसिद्धं हि

श्रोतुः प्रतिपत्तिसौकर्याय वक्तुरर्थप्रतिपादनस्य सङ्क्षेपपूर्वकत्वम् । 'इष्टं हि विदुषां लोके समासव्यासधारण'मिति शास्त्रार्थसङ्क्षेपेण वस्तुनिर्देशो भवत्वित्याशीर्वादश्च कृतौ भवतः । 'विनतेति' "भक्तिरूपे"ति च ब्रह्मणि प्रह्वीभावावगमात् प्रणतिरपि फलिता । णमु प्रह्वत्वे इति हि धातुः । एवं त्रिविधं मङ्गलमाचरितं भवति । श्लोकस्य प्रथमपादेन पूर्वस्याध्यायद्विकस्यार्थः सङ्क्षिप्तः । द्वितीयेन तूत्तरद्विकस्य । कर्ममीमांसायां प्रतिपाद्यभेदेन षट्कभेदवदत्रापि विषयविषयिरूपप्रतिपाद्यभेदेन द्विकभेदः । शास्त्रप्रतिपाद्यमुपायोपेयात्मकम् सिद्धोपाय उपेयश्च ब्रह्म । साध्योपायो भक्तिः । तत्र सप्तम्यन्तैः पदैः सिद्धोपायरूपमुपेयञ्च ब्रह्मोच्यते । भवतीति भुवनं कार्यवर्गः । रूढिशक्त्या तत्कारणस्य कुलालादितो व्यावृत्तिः । भुवनशब्दो हि विपुलतरकार्यविशेषे रूढः । अखिलशब्देन सर्वदेशसर्वकालवर्तीन्यण्डजातानि विवक्षितानि तेन ब्रह्मादिव्यावृत्तिः । खिलं नास्तीत्यखिलं कार्येषु ब्रह्मणः सृष्ट्या-दिव्यापराविषयभूतं न किञ्चिदित्यर्थः । अनया व्यतिरेकोक्त्या प्रायिकत्वानिवृत्तिः । " अज्ञातं नास्ति ते किञ्चिदि "ति वत् । अतः सकलमित्यन्वयमुखेनानुक्तिः । अकारोपक्रमत्वसिद्धये निखिलेत्यनुक्तिः । " अ " इति भगवतो नारायणस्य प्रथमाभिधानं भगवतो वाचकम्, "अकारं प्रयुञ्जानेन किन्नाम मङ्गलं न कृत"मिति चाभियुक्तैरभ्यधायि । अत्र भगवद्वाचित्वाविवक्षायामपि भगवद्वाचकत्वशक्तियोगादकारो माङ्गलिकः । "अइउण्" इत्यत्राकारवत् । नञो निषेधवाचित्वे ऽपि निषेध्यवशाच्छुभत्वाशुभत्वे अतो "निष्प्रत्यूहमुपास्महे" इत्यादिनिर्देशस्येव शुभत्वं, वैकल्यनिषेधेन पौष्कल्यपरत्वात् । अखिलशब्देन चिदचिद्भेदो ऽप्यभिप्रेतः ॥ " जन्म " नित्यनैमित्तिकप्राकृतरूपं, [१]"स्थेमा"स्थितिः । सा चान्तर्यामि–विष्णव-

१ ननु श्रुतप्रकाशिकायां स्थेमा स्थितिरिति व्युत्पादनञ्चानुपपन्नम् ॥ तत्र "पृथ्वादिभ्य इमनिज्वा" इतिसूत्रपठितपृथ्वादिगणे स्थिरशब्दस्य सत्त्वे हि तत इमनिचि स्थेमेति स्यात् तदेव तु न सम्भवति पृथ्वादिषु स्थिरशब्दपाठाभावात् ॥ अत एव माधवीयधातुवृत्तावपि काशिकाकारसम्वादेनापि स्थिरशब्दस्य पृथ्वादिष्वपाठादिमनिच् नास्त्येवेति वृत्तौ स्थितं ॥ तेन स्थेमशब्दश्चिन्त्य इत्युक्तम् ॥

वतार—लोकपाल—मन्वादि—नृप—मातापित्रादिमुखेन क्रियमाणा बहुविधा विवक्षिता। "भङ्गः"। नित्यनैमित्तिकप्राकृतरूपः। मोक्षस्य लयान्तर्भवेऽपि शास्त्रस्य परमप्रयोजनत्वादत्र स नान्तर्भावितः। अत एवादिशब्देऽपि नान्तर्भाव्यः॥ तस्य साधारणतया स्फुटप्रतिपत्तिहेतुत्वाभावात्। पृथगेव हि पूर्वैश्च स्पष्टतरं निर्दिष्टो मोक्षः। "जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः" इति। "जगज्जन्मस्थितिध्वंसमहानन्दैकहेतव" इति च भगवान् भाष्यकारश्च तथा निर्दिशति। यथा वेदार्थसङ्ग्रहे "उद्भवस्थितिप्रलयसंसारनिवर्त्तनैकहेतुभूत" इति, भाष्ये च "निखिलजगदुदयविभवलयमहानन्दैककारण"मिति "विनते" त्यादिपदेन स्थेमान्तभूतस्वर्गादिसांसारिकफलप्रदत्वस्य पृथगुक्तिरनपेक्षिता। शास्त्रासाधारणस्य परमप्रयोजनस्य मोक्षस्यैव हि पृथगुक्त्यपेक्षा। आदिशब्देन सृष्ट्याद्यौपयिकमन्तःप्रवेशनियमनादि गृह्यते। तथा च भाष्ये स्वयमेव वक्ष्यति "जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलील"मिति जन्मस्थेमभङ्गोक्त्यैवान्तःप्रवेशनियमनादेरर्थसिद्धत्वाश्रयणमयुक्तम्। अभ्यासपरिणामपक्षयोस्तस्यार्थत्वाभावेन तद्व्यावृत्त्यर्थं स्वमते पृथग्वक्तव्यत्वाच्छाब्दत्वे सम्भवत्यार्थत्वकल्पनाऽयोगाद्विस्तरेणोक्तस्यार्थस्य संक्षेपोक्तौ विवक्षितत्वोपपत्तेश्च "लीला" शब्देन भगवतः परिपूर्णत्वानन्यप्रेर्यत्वस्वच्छन्दचेष्टितत्वादिकमभिप्रेतम्। यथोक्तम् महाभारते "अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी। मोदते भगवान् भूतैर्बालः क्रीडनकै रिवे" ति। अप्रमेयत्वं परिपूर्णत्वम्। अनियोज्यत्वमनितरचेतनप्रेर्यत्वं। यत्र कामगम इत्यनेन वायूदकादिप्रेरणाधीनाऽबुद्धिपूर्व

---

यथाकथञ्चिच्छब्दसाधनेऽपि स्थिरत्यर्थकरणासंगतिर्जनिमवदौणादिकस्थेमशब्दकल्पनेऽपिचतुर्थपादारम्भभाष्ये ब्रह्मैककारणत्वस्थेम्ने इति प्रयोगस्य अन्ययोगव्यवच्छेदस्य स्थैर्यमस्मिन् पादे इति स्वपरव्याख्यानासंगतिश्चेति चेत्॥ अत्राहुः॥ जनिमवदौणादिकसाधनक्लेशस्त्वस्मदीयैर्नाङ्गीक्रियते॥ किं तु "अजिरशिथिलस्थिरे"त्याद्यौणादिकनिपातसिद्धयोगार्थकर्तृवाचकस्थिरशब्दस्य दृढादिषु पाठस्य विद्यमानत्वेन ततः "वर्णदृढादिभ्यःष्यञ् च" इति चादिमनिचि "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः" इति स्थिरस्य स्थादेशे "टे" रिति लोपे प्राप्ते "प्रकृत्यैकाच्" इति प्रकृतिभावे गुणे च स्थैर्यार्थकः स्थेमशब्दः सिध्यति, तेन चतुर्थपादभाष्यटीकयोः सांगत्यं भवत्येव॥ एवं शब्दसिद्धिसत्त्वात् स्थेमशब्दश्चिन्त्य इत्यनवधानेन वदन्तो माधवधातुवृत्तिकारादय एव चिन्त्याः॥ अत एव प्रतिभराणिकास्थेमानः–संहताः स्थेमभाजः, इत्यादिशिष्टप्रयोगाश्चोपलभ्यन्ते॥ एवं च स्थित्यर्थकत्वं निश्चलार्थकत्वं च शब्दस्य लोकसिद्धं जानता टीकाकारेण प्रकृतभाष्ये जनिभंगशब्दसमभिव्याहारात् अस्थिरस्याऽपि भगवदधीनस्थितिकत्व सिद्ध्यनुरोधात्तथा व्याख्यातमिति सर्वं चतुरस्रम्॥ १॥

परिस्पन्दादिचेष्टाव्यावृत्तिः । स्वेच्छाकृतप्रवृत्तिविघातव्युदासो वा स्वाधीनलीलोपकरणत्वं वशिशब्दार्थः । विश्वं वशे यस्य स वशी । इन्द्रियव्यापाराधीनचेष्टाव्यावृत्त्यर्थो वशि-शब्दः, बालक्रीडनकदृष्टान्तेन लीलायाः प्रयोजनान्तरनैरपेक्ष्यमभिप्रेतम् । अनेन राज्ञां पणबन्धपूर्वकद्यूतादिव्यावृत्तिः । कार्यवर्गापेक्षया भगवन्महिम्नो विपुलतरत्वं 'क्रीडनकै'रित्यनेन फलितम् ॥

ननु प्रयोजकव्यापारो हि लीला, अतो भङ्गस्य लीलात्वे युक्तेऽपि कथं प्रयोज्यव्यापारभूतयोर्जन्मस्थित्योर्लीलात्वम् । उच्यते । "बहु स्यां प्रजायेये" ति हि श्रुतिः । अतः प्रयोजकव्यापारवत् प्रयोज्यव्यापारस्य च लीलात्वकथनेनोपादानत्वं फलितम् । लीलाशब्देन निमित्तत्वं च । "भङ्गादी" त्यन्तेन प्रथमाध्यायार्थः संक्षिप्तः । अवाप्तसमस्तकामस्य व्यापारानुपपत्तिं परिहरता लीलाशब्देन विरोधपरिहारपरद्वितीयलक्षणार्थः सूचितः, । एवं पूर्वाद्धिकोक्तं कारणत्वरूपं परत्वं संक्षिप्तम् । तस्यैव परस्य ब्रह्मणः समाश्रयणीयताप्रतिपत्त्यर्थमुत्तरार्द्धिकोक्तमभिगम्यत्वमोक्षप्रदत्वलक्षणं सौलभ्यं सङ्क्षिप्यते । "विनते" त्यादिपदेन केवलं परत्वं केवलं सौलभ्यं च कनकाचललोष्टशकलयोरिव न समाश्रयणीयत्वाय कल्पत इति तदुभयव्यावृत्त्यर्थमिदं पदद्वयम् । विशेषेण नताः प्रह्वीभूता विनताः न्यासोपासनात्मकाशेषविद्याविशेषनिष्ठाः सर्वे विवक्षिताः । वैविध्यं च "तदुपर्यपि बादरायणः सम्भवात्" "ऊर्ध्वरेतःसु च" त्यादिना वक्ष्यमाणदेवत्वमनुष्यत्ववर्णाश्रमादिभेदेन जन्मवृत्तगुणैश्चाभिप्रेतं भगवज्ज्ञानेन लब्धसत्ताकत्वं भृतशब्दार्थः । "अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो विदु" रिति हि श्रुतिः । लब्धस्वरूपाणाञ्च "तेषामेवानुकम्पार्थमहमज्ञानजं तमः । नाशयाम्यात्मभावस्थः" । "ददामि बुद्धियोगन्तम्" । "अहं स्मरामि मद्भक्तमि" त्याद्युक्तप्रकारेण साक्षात्कारविरोधि- निवर्त्तनादिकं हि भगवत एव भर इति । न स्वरूपप्रच्युतिः सम्भवः। भृतसम्बन्धी व्रातो भृतव्रातः । संश्रितसम्बन्धिनोऽपि तत एव कारणाद् भगवता रक्ष्या इत्यभिप्रायः । यथा "आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः। वैष्णवो नः कुले जातः स नः सन्तारयिष्यती" ति । "पशुर्मनुष्यः पक्षी वा ये च वैष्णवसंश्रयाः । तेनैव ते प्रयास्यन्ति तद्विष्णोः परमं पदमि" ति च॥

ननु षष्ठ्यन्तनिर्दिष्टानतिरिक्तविषयः समुदायशब्दः। यथा 'ब्राह्मणसमाज'

इति । नैवम् । राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात्, समासान्तर्गताया: षष्ठ्या: सम्बन्धमात्रविषयत्वात् षष्ठ्यन्तनिर्दिष्टानतिरिक्तत्वनियमस्यानुशासनाभावाच्च समुदायशब्दे श्रुते समुदायिन: के ? इत्यपेक्षायां संनिहितशब्दवाच्यनिष्ठ: समुदाय: शीघ्रं प्रतीयत इति, ब्राह्मणसमूह इत्यादिष्वनतिरेकप्रतीति: । राजपरिषदित्यादिष्वतिरिक्तस्यापि दर्शनात् तत्तत्समुदायग्राहकप्रमाणानुरोधेनार्थवर्णनं युक्तमिति यथोक्त एवार्थ: । एवं च सति व्रात--शब्दप्रयोगस्यार्थवत्त्वं स्यात् इष्टप्रापणपर्यन्तानिष्टनिवारणलक्षणा रक्षा तस्यामेकदीक्ष: प्रधानदीक्ष: "दीक्षा" सङ्कल्प: स्वसत्ताया अपि संश्रितरक्षासङ्कल्पनिर्वर्त्तनस्यात्यन्ताभिमतत्वं प्राधान्यम् । "अप्यहं जीवितं जह्या"मिति ह्युक्तम् । "काममात्मानं भार्यां पुत्रं वोपरुन्ध्यान्न त्वेव दासकर्मकरमि"ति चापस्तम्ब: । ईदृशीयं स्मृतिर्यस्याज्ञा तस्यापि तथानुष्ठानस्याभिमततरत्वम् "अप्यहं जीवितं जह्या"मित्यनेनावगम्यते । दीक्षाया: प्राधान्येन रक्षाप्राधान्यं फलितम् । दीक्षा—शब्देनाश्रितसंरक्षणस्य स्वप्रयोजनत्वं दर्शितम् । व्रतभ्रंशसमाप्त्योरनर्थाभ्युदयफलत्वं हि व्रतिन एव, संश्रितरक्षणं च तद्व्रतम् । 'यथा"ददाम्येतद्व्रतं ममे"ति । विनत—रक्षा—शब्दाभ्यां तृतीयचतुर्थाध्यायार्थौ संक्षिप्तौ । एवं जगत्कारणत्वमोक्षप्रदत्वे कथिते, एते हि राज्ञ: छत्रचामरवद् ब्रह्मणोऽसाधारणं चिह्नं । परत्वसौलभ्ये च संश्रयणीयतानिमित्ततयावगते यथा "य एनं विदुरमृतास्ते भवन्ती"त्युपक्रम्य "सम्बाहुभ्यां नमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एक" इति, सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छती"ति च । प्रमेयशरीरं साधीय: यदि प्रमाणमुपलभामहे इत्यपेक्षायां द्विकद्वयशेषभूतचतु:सूत्र्यर्थं वदन् प्रमेयानुरूपं प्रमाणं दर्शयति । श्रुतिशिरसि विदीप्त"इति । श्रुति:, अनेनापौरुषेयत्वान्निर्दोषत्वं विवक्षितम् । अत एव पूर्वमीमांसान्यायानां प्रामाण्याद्युपयोगिनामत्रोपजीव्यत्वं सूचितम्, शिर:—शब्देनानन्यपरत्वं विवक्षितम् । परतत्त्वप्रधाना मन्त्रब्राह्मणभागा ह्युपनिषद: "विदीप्ते" पूर्वभागेऽपि अग्नीन्द्रादिरूपतया ब्रह्मण एव प्रतिपाद्यत्वं 'तदेवाग्निस्तदादित्यस्तद्वायु'रित्यादिनोपनिषद्वाक्येनैव ज्ञायत इति । विशेषेण दीप्तं विदीप्तं यद्वा क्षुद्रसुखसाधनभूतदु:खात्मकप्रवृत्तिनिवृत्तिरूपं प्रयोजनं पूर्वभागे दीप्तं ब्रह्म तु स्वयं निरतिशयानन्दरूपतया परमपुरुषार्थभूतमुपरितनभागे विशेषेण दीप्तमिति भाव: । अ-

तेन समन्वयाधिकरणार्थः सूचितः । तत्पूर्वाधिकरणत्रयार्थश्चात्र द्योतितो भवति व्युत्पत्तिलक्षणसौष्ठवाभावे श्रुतिशिरोवेद्यत्वायोगात्, श्रुतिशिरःशब्दस्य प्रमाणान्तरव्यावर्त्तकत्वाच्च । "ब्रह्मणी"ति सामान्यपदमौपनिषदानां सद्ब्रह्मात्मादिसामान्यशब्दानां प्रदर्शनार्थम् । 'श्रीनिवास'इति विशेषपदं नारायणादिविशेषशब्दानां प्रदर्शनार्थम् । "पशुना यजेत" "छागस्य वपाया मेदस" इत्यत्र "छागो वा मन्त्रवर्णा"दिति सूत्रोक्तन्यायेन पशुशब्दस्य छागशब्दपर्यवसायित्वनिर्णयात् । सामान्यवाचिपदानां विशेषपदे सति तात्पर्यावसायित्वात् सद्ब्रह्मादिसामान्यपदानां नारायण एव विशेषे पर्यवसानं सूचितम् । श्रीनिवास–शब्दस्यावयवशक्त्या नित्यविभूतिमत्त्वं सूचितं, रूढिशक्त्या त्रिमूर्त्तिसाम्यं तदैक्यं ब्रह्मणस्तदुत्तीर्णत्वं च निषिद्धम् । ईश्वर एव ब्रह्म स त्रिमूर्त्त्यतिरिक्तः सदाशिवः ब्रह्मादयस्त्रयोऽप्यनीश्वरा इति पक्षश्च व्युदस्तः "परस्मिन्निति" "परमतः सेतून्माने"त्यधिकरणार्थः सूचितः । तेनैवोपेयान्तरव्यावृत्तिः "ब्रह्मविदाप्नोति पर"मित्यत्र प्राप्यस्य पर—शब्देनाभिधानात् ॥ यद्वा कारणत्वशङ्कितदोषव्युदासाय "न स्थानतोऽपि परस्ये"त्यधिकरणसिद्धं शोधकवाक्योक्तमुभयलिङ्गतया वैलक्षण्यं सूचितम् । अथोपायस्वरूपं वदति "शेमुषीति" अयं सामान्यशब्दः "भक्तिरूपे"ति विशेषशब्दः । अत्रापि "छागो वा मन्त्रवर्णादिति" न्यायोऽभिप्रेतः। शेमुषीशब्दोपादानेन ज्ञानकर्मसमुच्चयमतव्यावृत्तिः । भक्तिरूपेति" वाक्यार्थज्ञानव्यावृत्तिः । "शुद्धभावङ्गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम्" । "भक्त्या त्वनन्यया" "ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं"चेत्युक्तप्रकारेण ज्ञानदर्शनप्राप्तिसाधनभूता भक्तिरप्यत्र विवक्षिता। आविशेषेण "भक्तिरूपे" त्युक्तत्वात् "अहमस्म्यपराधानामालय" इत्याद्युक्तप्रकारेण । स्वात्मानमनुसन्धायाह "ममेति" "भवत्वि"ति भक्तेरेव स्वादुतमतया प्रार्थनीयता सूचिता; यद्वा न हि भक्तिः सर्वेभ्योपि स्वदतइत्यत्राह "ममेति" मम प्रतिबन्धकपापरहितस्य; शान्तपित्तस्य हि क्षीरे स्वादुतमताबुद्धिरिति भावः । रक्षैकदीक्षे परस्मिन्नित्यन्तैः सप्तम्यन्तैः पदैरुपेयभूत एव सिद्धोपाय उक्तः "भक्तिरूपे" ति सिद्धोपायः । अत्र श्लोके शास्त्रप्रतिपाद्यैकदेशभूतः परपक्षप्रतिक्षेपश्चार्थतः सूचितो भवति । जन्मस्थेमभङ्गादिशब्देन युगपत्सर्गादिकमनभ्युपगच्छन्तो भाट्टप्राभाकरा व्यावर्त्तिताः लीलाशब्देन साक्षिमात्रेश्वरत्वादिहैरण्यगर्भव्युदासः विन-

तेत्यादिपदेन जीवानांपरस्परं ब्रह्मणा च भेदमनभ्युपगच्छन्तोऽब्रह्माज्ञानवादिनोऽपास्ताः, श्रुतिशिरसीत्यनेन वेदबाह्यचार्वाकबुद्धार्हन्मतनिरासः, तेनैव पदेनानुमानिकेश्वरवादिनो व्युदस्ताः, ब्रह्मणीत्यनेनाब्रह्मात्मकप्रधानपरमाणुकारणवादिसाङ्ख्यवैशेषिकादिव्युदासः । श्रीनिवास–शब्देन पाशुपतादिव्युदासः । अनेनैवेश्वरोत्तीर्णब्रह्मवादिनो भेदाभेदवादिनो व्युदस्ताः, शेमुषी–शब्देन ज्ञानकर्मसमुच्चयोपायवादिव्युदासः । भक्तिरूपेतिवाक्यार्थज्ञानमात्रोपायवादिव्युदास इत्येवमनुसन्धेयम् ॥






श्रियै नमः ।

श्रीमते रामानुजाय नमः ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते निगमान्तदेशिकाय नमः ॥

# श्रीमद्वेदान्ताचार्यविरचिता

# तत्वटीका



श्रीमान् वेङ्कटनाथार्य्यः कवितार्किककेसरी ।
वेदान्ताचार्य्यवर्य्यो मे सन्निधत्तां सदा हृदि ॥

सजयति यतिराजमुनिः करुणाजलधिः क्षमापरिष्कारः ।
करिशैलकृष्णमेघः काङ्क्षितवर्षी यदर्पितैस्तोयैः ॥ १ ॥

स्वतस्सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं ।
सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ॥
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलम् ।
हताशेषावद्यं हयवदनमीडीमहि महः ॥ २ ॥

प्रणम्य वरदाचार्य्यवादिहंसाम्बुदावपि ।
त्रय्यन्तसूत्रभाष्यार्थ–तत्त्वटीका विधीयते ॥ ३ ॥

असावनतिसङ्क्षेपादतिविस्तरवर्जनात् ।
सर्वन्यायानुकूलत्त्वाद् गृह्यतां सारवेदिभिः ॥ ४ ॥

शाततिशशतदूषण्यां शङ्करादिमहाग्रहः ।
शारीरकशरीरन्तु व्यक्तमत्र प्रदर्श्यते ॥ ५ ॥

विश्वामित्रकुलीनेन वेदान्ताचार्यसूरिणा ।
शश्वद्विधीयते विश्ववैतण्डिकविधूननम् ॥ ६ ॥

निखिलनिगमश्रेणी चूडापरिष्कृतिरूपिणी
निपुणमनसामाशासौधस्थलीषु निबध्यते ।
यतिपतिभुवो भाष्यस्याऽसौ यथा श्रुतिचिन्तित-

प्रवचनविधावष्टा—विंशे जयध्वजपट्टिका ॥ ७ ॥

तत्र तावत्—

अखिलेत्यादिभाष्यस्य दशार्थानभिदध्महे ।
विषयादित्रिकस्योक्तिः प्रथमं प्रतिपाद्यते ॥ * ॥
तस्यार्थस्य च सौत्रत्वात्तद्विस्तारात्मकं पुनः ।
अनवद्यमिदम्पद्यं भाष्यलक्षणलाक्षितम् ॥ * ॥

यद्यपि "अथातोब्रह्मजिज्ञासे" ति सूत्रं ब्रह्मजिज्ञासो स्तद्विचारस्य कर्त्तव्यत्वे प्रवृत्तम्, तथापि शारीरकविषयादिष्वप्यर्थतो वर्त्तते, यथा धर्मजिज्ञासासूत्रम् ।

आहुश्च— "अथातो धर्मजिज्ञासा सूत्रमाद्यमिदङ्कृतम् ।
धर्माख्यं विषयम्वक्तुं मीमांसायाःप्रयोजन" मिति । एवमत्रापि
ब्रह्मेति तावद्विषयं प्राप्यत्त्वेन प्रयोजनम् ।
जिज्ञासाकर्मभावेन सम्बन्धमपि चाब्रवीत् ॥ * ॥

निरतिशयबृहत्त्वं हि ब्रह्मशब्दार्थः, बृहतिधातोः " बृहे रम्चे "ति मनिन्प्रत्यये ऽमागमे च ब्रह्मेति व्युत्पत्तेः; 'ब्रह्मपरिबृढं सर्वत' इति यास्कोक्तेश्च । यत्त्वाथर्वणिकी निरुक्ति र्बृंहणत्त्वमप्याह, 'बृहति बृंहयति तस्मादुच्यते परंब्रह्मेति' पौराणिकी च प्रसिद्धिः "बृहत्त्वाद् बृंहणत्त्वाच्च तद्ब्रह्मेत्यभिधीयते"इति । तद्गोबलीवर्दन्यायादिति न विरोधः । बृंहणत्वस्य बृहत्त्वविशेषत्त्वाच्च । तदयमर्थः—स्वतो बृहद् बृंहणत्वेनाऽपि बृहदिति, प्रयुक्तपदान्तरपौनरुक्त्यपरिहाराय सामान्यशब्दसङ्कोचो गोबलीवर्दन्याय इतिलक्षणानुसारेण बृहच्छब्दो बृंहणत्त्वात्मकबृहत्त्वादन्यत्र वर्त्तते यथा " विष्णुनामा स वेदेषु वेदान्तेषु च गीयते " इति । तेनाऽनवधिकातिशयबृहत्वमेव ब्रह्मशब्दार्थ इत्येके ॥ अपरे तु बृहत्त्ववद्बृंहणत्वमप्यनवधिकातिशयं ब्रह्मशब्दार्थः । "बृहति बृंहयति" बृहत्त्वाद् बृंहणत्वाच्चेति पृथगभिधानस्वारस्यात्" समुच्चयोपादानस्वारस्याच्चेत्याचक्षते । वयन्तु ब्रूमः । उभयत्रापि विरोधाभावादुभयथाऽप्याचक्ष्महे इति । अयमत्र सङ्ग्रहः, 'बृहत्त्वं ब्रह्मशब्दार्थो बृंहणत्वन्तु तत्सदा । यद्वाऽर्थो ब्रह्मशब्दस्य बृंहणत्वं बृहत्त्ववत् ' ॥ अथवा बृहत्वंबृंहणत्वसमुच्चयो वा । एतत्सर्वमभिप्रेत्योक्तम् जन्माद्यधिकरणभाष्ये " उपलक्ष्यं ह्यनवधिकातिशयबृहद् बृंहणञ्च बृहतेर्धातोस्तदर्थत्वादिति " । अन-

योऽश्च सर्वातिशायित्त्वमपरिच्छेदाद्यास्कनिरुक्तिसामर्थ्याच्च सिद्ध्यति ।

"अनुपाधिकनिर्देशो ह्यसङ्कोचो मनीषिभिः ।
सिद्धे शब्दार्थसम्बन्ध इति न्यायेन कथ्यते" ॥ * ॥

ईदृशं ब्रह्मास्य शास्त्रस्य विधानविषयः; प्राप्यतयां परमञ्च प्रयोजनम् निरुक्तिद्वयार्थस्य द्विकाभ्यां विवरणात् ।

प्राप्यत्त्वं ब्रह्मणः सिद्ध्येद् बृंहणत्वस्य कीर्त्तनात् ।
स्वप्राप्तेः साधनत्वं हि बृंहणत्त्वमिहोच्यते ॥ ६ ॥

नच बृहतिधातौ बृंहयतीत्यभिधानस्य विरोध इति वाच्यम्; 'बृहबृंहि वृद्धा' विति धातुद्वयसिद्धत्त्वान्निरुक्तिद्वयवाक्यस्य ।

अर्थमात्रे च तात्पर्य्यादन्यधातोश्च [illegible]ः ।
तस्य धातोरिदित्वाच्च नुमागमसमन्वयः ॥

प्रयोजनञ्चाऽत्रावश्यं वक्तव्यम्, तदप्याहुः सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनन्नोक्तं तावत्तत्केन गृह्यते इति । 'मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रया । न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजन'-मिति च । सम्बन्धस्तु विषयभूतेन ब्रह्मणा निर्णायकत्वादिः प्रयोजनभूतेन प्रापकत्वादिः, जिज्ञासापदविवक्षितविचारसाध्यविदीसितन्मूलविनाशितत्साध्यरक्षणरूपैस्तु प्रयोजनैर्यथार्हं साक्षात् परम्परया वा हेतुत्वबोधकत्वे ।

शास्त्रारम्भेषु सर्वत्र सम्बन्धः कथ्यते बुधैः ।
असम्बद्धप्रलापत्वे न प्रवर्त्तेत बुद्धिमान् ॥ * ॥

तदेवं सौत्रमेव विषयादित्रिकम् श्रोतृबुद्धिसमाधानार्थमुपादित्सार्थञ्च विशेषतः ख्यापयन्, प्रारिप्सितप्रबन्धस्याविघ्नेन परिपूर्त्यर्थं प्रचयार्थञ्च शङ्कितप्रत्यूहशान्त्यै शिष्टाचारादिसिद्धमिष्टदेवभक्त्याशीरूपं मङ्गलं स्वात्मनाऽनुष्ठितमपि शिष्यशिक्षार्थं स्वकृतानुकीर्त्तनेन तेषां महिष्ठमङ्गलार्थञ्चादौ निबध्नाति भगवान् भाष्यकारः (अखिलेति)

गुरोराचारमाश्रित्य वर्त्तन्ते मङ्गलार्थिनः ।
यान्यस्माकमितिश्रुत्या तदेतदभिधीयते ॥ * ॥

नमस्क्रियावस्तुनिर्देशावप्यर्थसिद्धौ, सर्वोत्तुङ्गमङ्गलतमतत्त्वोक्तेः । उक्तञ्च

नीचोच्चयोः स्वभावोऽयं नन्तृनन्तव्यतात्मक, मिति। तत्र सप्तम्यन्तैः सिद्धविषय-प्रयोजनत्वोक्तिः 'श्रुतिशिरसी' त्यवान्तरविषयसङ्ग्रहः।

यथा हि वेदवाक्यस्य विषयो ब्रह्म कथ्यते।
तथैव सूत्रवाक्यस्य त्रय्यन्तः परिकीर्त्त्यते॥ * ॥

विदीप्तविनतरक्षाशब्दैः साध्यप्रयोजनत्रयकीर्त्तनम्। विशिष्टाऽत्र दीप्ति-र्दीप्तिः निर्णयः। सतु विचारतः। यथाहुः 'धर्मे प्रमीयमाणे तु वेदेन करणात्मना। इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति॥" इति। उक्तञ्च न्यायसुदर्शने 'ज्ञाय-माने तु वेदान्तैः करणैः परमात्मनि। इमामुत्तरमीमांसामिति कर्त्तव्यतां विदु' रिति। वेदस्य निरपेक्षत्वलक्षणप्रामाण्ये सत्यपि प्रतिपत्तृमान्द्यापराधनिमित्तसं-शयविपर्य्यापनोदनाय ( मीमांसा ) क्रियत इति।

प्रयोजनोक्तिराप्तस्य निश्चये निश्चयं दिशेत्।
तत्सन्देहेऽप्युपादित्सां सिद्धां सन्धुक्षयेदसौ॥ * ॥

तत्र सामान्यतः प्रयोजनवत्त्वनिश्चयेऽपि स्वापेक्षितप्रयोजनविशेषवत्त्वनि-श्चयस्तु वक्तृवाक्यादृते न सिद्ध्यतीति प्रयोजनकथनमवश्यकर्त्तव्यमेव। त-दिह सम्बन्धोऽपि सूचित एव। सम्बन्धाश्रयभूतशास्त्रप्रयोजनादीनामुपादान-नान्तरीयकत्वात्सम्बन्धावगमस्य।

विचारत्वं विचार्य्यत्वं निर्धार्य्यत्वन्तथेतरत्।
प्राप्यत्वं प्रापकत्वञ्च सम्बन्ध इति कथ्यते॥ * ॥

तत्र तत्त्वत्रयमर्थपञ्चकमित्यादिकमध्यात्मविद्भिरत्यादरेण परिगृहीतमर्थजातं स्वय-मेव सूरिभिः सम्प्रत्याय्यमिति न विविच्य लिख्यते।

इति विषयप्रयोजनसम्बन्धवादः।



विषयादिप्रधानत्वमाद्यपद्ये समीरितम्।
अधुना मङ्गलाचारप्राधान्यमनुवर्ण्यते॥ ॥

स च मङ्गलाचारःकेषुचिद् ग्रन्थेष्वदृष्टोऽपि निमित्तफलाभ्यामुन्नेयः। आहु-श्च "प्रारिप्सितनिमित्तं स्यादविघ्नेन समापनं। प्रचयश्च फलं तस्मान्मङ्गलाचार

इष्यत" इति । अविघ्नसमाप्त्यादिसम्वलितस्य प्रबन्धारम्भस्य तत्राधिकारिविशेषणत्वमित्यर्थः । उक्तञ्च विवरणकारैः " सम्वलितमत्र विशेषणं, जातेष्टिवत्; यथा जातेष्टौ पुत्रजन्मनो निमित्तत्वेऽप्यार्थवादिकानां पुत्रगतपुत्रत्वादीनां फलत्वकल्पनं; नच गौरवं, फलस्य विशेषणत्वे प्रवृत्तिसौकर्य्यात्; फलमात्रे तु गर्हानुपपत्तिः नहि काम्याकरणेगर्हे"ति । अथवा शवरशङ्करग्रन्थयोरनीश्वरप्रतिपादकत्वादीश्वरनमस्कारादिमङ्गलं न कृतमिति व्याचक्षते । न च पक्षिलादयः परमास्तिका निमित्ते सत्यपि मङ्गलन्नाचरन्तीति सिद्धम्भवति, अपि तु तस्याऽपि नमस्कारादेर्मङ्गलस्य ग्रन्थनिवेशनमेव न कृतमिति व्याकुर्वते । केचित्वीश्वरवाचकस्य प्रमाणशब्दस्य प्रथमोपादानात्कृतमङ्गलाचार एव पक्षिलमुनिरिति व्याचख्युः । अनुपास्थितमङ्गलत्वे वा कथं फलसिद्धिः,अनुष्ठितमङ्गलानान्तु फलव्यभिचारः कर्मकर्तृसाधनवैगुण्यमवलम्ब्यते । नन्वारब्धसमाप्तिकामो मङ्गलमाचरेदिति विध्यभावादकर्तव्यत्वं मङ्गलाचारस्य, अयं खल्वनधिगतवेदानामश्रुतमीमांसानामालापः, अविगीतशिष्टाचारस्यैव मूलप्रमाणकल्पकत्वात् । तत एव चोदनालक्षणत्वसिद्धिः । नच मङ्गलाचाराभावेऽपि फलन्दृष्टमितिवाच्यं, संसारस्याऽनिदम्प्रथमतया तस्याऽपि भवान्तरीयसुकृतविशेषनिबन्धनत्वात् । न च किमनेन मङ्गलाचारेण, तदेव फलम्प्रददातीति वाच्यम् । तत्सद्भावे निश्चयाभावात्, निमित्तानुवन्धिनो नैमित्तिकस्य शिष्टाचारप्राप्तत्वेनाऽऽवश्यकत्वाच्च ।

किञ्चिदारभमाणस्य बुद्धिस्थं पूरणादिकं ।
त्यक्त्वाऽन्यफलकतृप्तिस्तु नीतिमङ्गचो न रोचते ॥ ७ ॥
भक्तिराशास्यमानापि पूरणप्रचयाविह ।
नोपरुद्ध्य प्रवर्तेत सा च तौ च तदाशिषा ॥ * ॥
भक्तिर्हि मङ्गलतमा तद्बोधादेश्च कारणम् ।
तस्मात्सर्वप्रधानत्वाद्भक्तेराशासनं वरम् ॥ * ॥
अथवा भक्तिभेदत्वान्नमस्कारार्चनादिकम् ।
सर्वमेव हि माङ्गल्यमाशास्यमिह मन्महे ॥ ७ ॥

स्यादेतत्, अस्तु तावन्मङ्गलाचारः मङ्गलनिबन्धस्तु तत्तद्भाप्येप्वदर्शनादयुक्त इति चेन्न, उपयोगादनिषेधात् ।

शिष्याणां शिक्षणं तावत्तेषां स्वकृतकीर्तनात् ।
महिष्ठमङ्गलावाप्तिस्तत्फलं प्रागुदीरितम् ॥ × ॥

द्रमिडभाष्यादिषु "नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलैकबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे, नमो जैमिनये वेदरहस्यसम्पुटनिगूढविस्फारयित्रे न्यायप्रज्वलितचेतसे, नमोऽस्त्वाचार्य्येभ्य" इत्यादिभ्यस्तद्दृष्टेश्चावश्यकर्त्तव्य एवाऽयमाचारः । ईश्वरापह्नोतॄणामाचारो नास्त्येव इतिप्रागेवोक्तं । "स्मृत्याचारविरोधे तु स्मृतिरेव बलीयसी" तिन्यायाच्च सिद्धमेतत् । स्मर्यते च तत्र मङ्गलाचारः 'मङ्गलाचारयुक्तानान्नित्यं च प्रयतात्मनाम् । जपतां जुह्वताञ्चैव विनिपातो न विद्यते" इत्यादिभिः ।

करणत्रयसारूप्यात्कथ्यते मङ्गलक्रिया ।
तस्माद् ग्रन्थनिवेशोऽपि मङ्गलस्य प्रमाणवान् ॥ ÷ ॥
पूर्वे पुलस्त्यमुख्याश्च क्रियासमभिहारतः ।
कार्यारम्भेषु सर्वेषु मङ्गलाशासनं विदुः ॥ ÷ ॥

मङ्गलाचारः पुराणारम्भे दृष्टश्च 'प्रणिपत्याभिवाद्यचे' ति । गुरुप्रणिपातादिरूपः । अत एव 'युष्मदस्म' दित्यादौ कुग्रन्थत्वमाशङ्क्य प्रत्यक्तत्त्वानुसन्धानेन मङ्गलत्वमाचक्षु र्व्याख्यातारः । तच्च मन्दं 'युष्मदर्थानुसन्धानस्यैव तत्राऽपि प्राथम्यात्, मध्यलघुत्वेन वन्हिदैवत्यस्य रगणस्य निवेशाच्च ।

शन्नो मित्रादयो मन्त्राः शतंते सूरिभिस्स्मृता ।
कर्मानुष्ठानकालेषु पठितव्या मनीषिभिः ॥ ÷ ॥

एवमिह पद्यनिबन्धनचोद्यमपास्तुः । दृष्टश्च केषुचित् 'प्रणम्य हेतुमीश्वर' मित्यादि ।

अकारोपक्रमश्चाऽस्मिन् मङ्गलत्वाभिसन्धितः ।
निश्शेषत्वन्तु सुगमन्निखिलेत्यपि भाषिते ॥ * ॥
अस्यार्थोऽप्यत्र वर्णोऽयं विष्णुनामा स्वभावतः ।
यदृच्छाशङ्खशब्दादिन्यायाद्भवति मङ्गलम् ॥ ÷ ॥
आदौ च पाणिनीयादेः तथाऽन्यैरनुवर्णितः ।
सूत्रे चाथादिरन्यार्थस्तदर्थोऽप्यन्वमन्यत ॥ × ॥

ततोऽप्यत्र शुभत्वं स्याद्वैकल्यप्रतिषेधतः।
निषेध्यभेदतो ह्यस्य शुभाशुभविकल्पना ॥ × ॥
अपहन्तव्यदुःखोक्तिमप्यारम्भे शुभाम्विदुः।
अपौष्कल्यनिषेधेऽस्मिन्नतः कैमुत्यमत्ततम् ॥ + ॥
आदावखिलशब्देऽस्मिन्नगणत्वनिवेशनम्।
आयुःपूर्त्तिनिदानत्वादविज्ञायैव कल्पते ॥
सर्वस्याऽपि गणस्याऽत्र नगणो हि विशिष्यते।
तत्रादिमचतुष्पद्यामष्टार्थानपरान्विदुः ॥ × ॥
विशिष्टमङ्गलाचारप्रक्रिया नान्तरीयकान्।
व्याख्यानमाद्यसूत्रस्य ब्रह्मलक्षणसङ्ग्रहः ॥ * ॥
चतुरध्याय्यनुक्रान्तिर्ध्येयसंशोधनं तथा।
परपक्षप्रतिक्षेपपरारम्भनिवारणम् ॥ * ॥
स्वेष्टारम्भविरुद्धानां निश्शेषोद्धार इत्यपि।
पौरुषेयेषु वाक्येषु प्रयोजनविशेषतः ॥ * ॥
प्रकृतानुगुणानेकविवक्षा ह्याश्रिता बुधैः।

प्राहुः किल वार्तिककारा 'लोक' इत्यादिभाष्यार्थविवरणे "लोक इत्यादि भाष्यस्य षडर्थान् सम्प्रचक्षते। सर्वव्याख्यामुपालम्भं प्रत्याख्यानंतथा परे॥ परिसंख्यास्तुतिः केचिदथशब्दस्य दूषण" मिति। "लोके येष्वर्थेषु प्रसिद्धानिपदानितानि सति सम्भवे तदर्थान्येव सूत्रेष्ववगन्तव्यानि, नाध्याहारादिभिरेषां विकल्पनीयोऽर्थः परिभाषितव्योवे' ति भाष्यमापादचूडं सम्यग्व्याख्यानप्रक्रियायाः सङ्ग्रहेणोपवर्णनात् सर्वव्याख्या। भवदासादिव्याख्यायामुक्तप्रकारवैपरीत्यख्यापनादुपालम्भः। सूत्रस्य स्वरसार्थप्रतिपादनस्वाभाव्येन व्याख्यानानपेक्षत्वकथनेन सूत्रन्न व्याख्यायते, सूत्रेण श्रुतिरेव व्याख्यायत इति श्रुतिव्याख्यानप्रतिक्षेपात्प्रत्याख्यानम्। श्रुतिसूत्रविसम्वादे सूत्रस्य स्वारसिकार्थप्रहाणेनाऽध्याहारादिभिः कथञ्चिन्नेयत्वेन यथा श्रुतपरिग्रहस्याऽपास्तत्वात्परिसङ्ख्या। जैमिनिसूत्राणां स्वरसार्थप्रतिपादकत्वस्वाभाव्येनोपवर्णनात् सूत्रकारस्तुतिः। अथशब्दस्य प्रसिद्धार्थप्रतिपादकत्वावश्यम्भावित्वेनाऽपि वृत्तादर्शनादिभिरानन्तर्य्यार्थत्वन्न विद्यत इति पूर्वपक्षिणा क्षिप्यत इ-

त्यथशब्ददूषणमिति भाष्यविभागः ।

एकस्मिन्नेव भाष्ये तैष्षडर्था यद्वदीरिताः ।
तद्वदेव दशाप्यर्थानत्राऽप्याचक्ष्महे वयम् ॥ * ॥
सर्वव्याख्यादिकैन्तावदर्थषट्कनिदर्शनम् ।
तथा पक्षिलभाष्यादौ तत्तदर्थाः प्रदर्शिताः ॥ * ॥
सञ्जिघृक्षित नानार्थैस्सूत्रकारादिभिस्तथा ।
तन्त्रावृत्त्यनुनिष्पाद्याः कल्पितास्तद्वदेवं नः ॥ × ॥

दृश्यते हि— 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणा' दित्येकस्मिन्नेव सूत्रे प्रत्यभिज्ञाप्रामाण्यमात्मनित्यत्वमिन्द्रियनानात्वं विषयस्थैर्य्यं गुणगुणिभेद इत्याद्यर्थजातम् । तदिह सूत्रार्थोक्तौ ब्रह्मशब्देन व्याख्येयसङ्ग्रहः । तन्निरुक्तिवादाभ्यां दर्शिते । श्रीनिवासत्वं तदुपपादकलिङ्गम् । अथेत्युक्तमानन्तर्य्यं श्रुतिशिरसीति व्याख्येयक्रमान्मुख्यक्रमतः स्थाप्यते । अतश्शब्दोक्तौ विशिष्टारम्भहेतुर्विंदीप्त इत्यनेनोद्गृहीतः भ्रमेत्यर्थसिद्धजिज्ञासाधिकार्य्युदाहृतिः । शिष्टेन सर्वोत्कृष्टवस्तुगोचरतया स्वयञ्च स्वादुतयाऽऽशीर्विषयोपायविशेषोक्त्या तद्विषयब्रह्मविचारस्य सम्प्रत्ययसूचितरागप्राप्त्युत्तम्भनादर्थादनारभ्यत्वभ्रमापोहः

सूत्रार्थयोर्द्वयोरर्थः फलतः प्रतिपादितः ।
अत्र शब्दस्तु सूत्रार्थः तस्मान्नपुनरुक्तता ॥ ७ ॥
द्वितीयसूत्रभावस्थकृत्स्नलक्षणसङ्ग्रहे ।
ब्रह्मेतिलक्ष्यं शिष्टैस्तु तल्लक्षणसमाहृतिः ॥ × ॥
नोद्देशमात्रात्प्रमितिः परीक्षालक्षणाश्रया ।
प्राधान्याल्लक्षणस्याऽत्र प्रतिपत्तिर्हि युज्यते ॥ ७ ॥

तत्र हि सर्वकार्यस्रष्टृत्वादीनि मुमुक्षूपास्यत्वमोक्षप्रदत्वत्रय्यन्तप्रधानवेद्यत्वश्रीनिवासत्वपरमप्राप्यत्वानि च गृह्यन्ते । यैर्योगायोगाभ्यामपवर्गपरिपन्थ्यभक्त्युन्मूलनपारावर्यविवेकः ।

असाधारणधर्मो हि लक्षणत्वेन लक्ष्यते ।
बहुत्वं तस्य धर्मस्य बुद्धेरुन्मेषकारणम् ॥ * ॥
न लक्षणानां भिन्नत्वे लक्ष्यभेदः प्रसज्यते ।

विरुद्धलक्षणानान्तु भेदकत्वं विदुर्बुधाः ॥ + ॥

चतुरध्याय्यर्थसङ्ग्रहस्तु परस्मिन्ब्रह्मणीतिकाण्डान्तर्वेद्यव्यावृत्तप्रधानार्थोक्तिः । पादाभ्यां सिद्धिविषयरूपः साध्यविषयरूपश्च द्विकद्वयार्थः सङ्गृह्यते । श्रुतिशिरसि विदीप्त इत्यनेन प्रमाणविशेषायोगतदन्ययोगव्यवच्छेदेनोपोद्घातरूपचतुःसूत्र्यर्थोद्ग्रहः; श्रुतिशिरस्येव विदीप्त इतिसावधारणनिर्देशस्य विवक्षितत्वात् ।

अयोगश्रुतिभिर्योगो ह्यनुमानेन वार्य्यते ।
सूत्रैश्चतुर्भिः किन्नाऽत्र वक्तव्यमवधारणम् ॥ + ॥

एकदेशिनस्त्वाद्यसूत्रार्थोक्तिरितिव्याचख्युः । ननु कथमन्यप्रमाणव्यवच्छेदः स्मृत्यादिभिरपि तत्सिद्धेः । मैवम्, तेषां तन्मूलतयैव प्रामाण्यस्य न्यायसिद्धत्वात् । एतेन स्मृतिविरोधाच्छ्रुतिबाधशङ्का निरस्ता । श्रुतिरेव शरणम् । तदुक्तम् ‘ विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमान ’ मिति । वक्ष्यति च ‘ स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गा ’दिति । श्रीनिवासभक्तिरूपपदाभ्यां प्राप्यप्रापकयथार्थनिष्कर्षः । परत्वञ्चोक्तप्रकारेण चतुर्धा चतुर्लक्षणवेद्यम् । ममेत्युपायाधिकार्युदाहृतिरिति । अत्र भुवनमात्रोक्तौ सकलेतिविशेषणोपादानेऽपि वा प्रायिकत्वं शङ्क्येत, अतोऽत्राऽखिलेति निश्शेषत्वोक्तेश्चतुर्मुखादिभ्यो व्यावृत्तिरिति ।

व्यतिरेकमुखेनोक्तावर्थदार्ढ्यं प्रतीयते ।
तस्मादिष्टार्थसिद्धिः स्यादनिष्टविनिवारणम् ॥ + ॥

नहि चतुर्मुखादीनां निखिलकारणत्वं । नहि ते स्वेषां स्वपूर्वोत्तरेषामण्डान्तरस्थानां शुद्धसृष्ट्यादेर्वा हेतवः । व्यष्टिसृष्ट्यादौ च नियताधिकाराः परप्रयोज्याश्च । कार्यसमुदायविशेषरूढोऽप्यत्र भुवनशब्द उपलक्षणाद्भवतीति वा कार्यमात्रपरः । प्रकरणानुक्रान्तयोगस्य रूढितो बलीयस्त्वात् । जन्मादिषु बहुव्रीहिस्तद्गुणसंविज्ञानः ‘ सर्वादीनि सर्वनामानी’’तिवत् ।

द्रव्यस्य नित्यसिद्धस्य यथा दृष्ट्यवधारणे ।
जन्मस्थित्याद्यवस्थाः स्युः सामग्रीभेदशक्तितः ॥ + ॥
आकाशत्वादिधर्माणामागन्तुत्वविवक्षया ।
तत्तद्द्रव्यस्य नित्यत्वे व्युत्पत्त्यादिरपि श्रुतः ॥ + ॥

यथा पाकेन रूपाद्याः परेषान्नित्यवस्तुषु ।
तथा नस्त्रिगुणद्रव्ये परसङ्कल्पतो दशाः ॥ + ॥

जन्माद्यवस्थाश्च नित्यनैमित्तिकादिभेदाद्बहुधोक्ताः । प्रागसिद्धस्यात्मलाभ उत्पत्तिर्जन्म । उत्पत्तिलब्धाकृतेरर्थस्याऽऽप्रणाशसामग्र्याः स्थितिः स्थेमा । ननु कथं स्थेमशब्दः ? कथं च स्थित्यर्थः ? नह्यसौ स्थानादिवत्तिष्ठतेर्निष्पन्नः नच "पृथ्वादिभ्य इमनिज्वे" त्यस्य विषयः । यद्यपि 'प्रियस्थिरे' त्यादिना स्थिरशब्दस्य स्थादेशः, तत्र 'चतुरिष्टेमेयस्स्वि'ति प्रत्ययत्रयं प्रकृतं, तथाप्यत्र प्रियोरुगुरुबहुलघुदीर्घाणामेवादेशेष्विमनिज्भवति; नान्येषां; पृथ्वादिष्वपाठात् । न चाऽसावाकृतिगणः, अतः कथमयं प्रयोगः । अत्र ब्रूमः—

प्रयोगतस्स्थितिः स्थेमा प्रत्ययाद्यूहशासनात् ।
अखण्डितो वा शब्दोऽयमधातूद्भवपक्षतः ॥ × ॥

अस्ति हि न्यायतात्पर्यटीकायां तत्प्रयोगः--"स्थेमा च भावानामुपपादयिष्यत" इत्यादि । तात्पर्यशुद्धौ च संशयपरीक्षायां " बौद्धादेर्निश्चितक्षणिकत्वादेरपि (न) झटिति विघटितसाधनस्य प्रतिवादिसाधनात्परितो निरस्तविभ्रमाशङ्कात्संशयम्विनैव स्थेमादिनिर्णयोत्पत्ते" रितिच । "निस्स्थेमानो दशाननकीर्तय" इत्यादयश्च महाकविप्रयोगाः । तदत्र प्रसिद्धबहुविद्वत्प्रयोगभूयस्तया साधुत्वं सिद्धम् । शक्या च व्युत्पत्तिः । यथोक्तम्—" नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् । यन्न पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम्"माभूद्वा प्रकृत्यादिविभागः, मतभेदेनाऽखण्डितप्रातिपदिकभाषणात् । नामचेत्यादिना तत्सूच्यते ॥

ईदृशानां प्रयोगाणामबहिष्कारसिद्धये ।
बहुधा बहुलादीनामष्टाध्याय्यामुपक्रमः ॥ + ॥
नानाव्याकरणाभिज्ञबहुविद्वत्परिग्रहे ।
शब्दे साधुत्वमाहुर्ये शाब्दिकास्तान्न मन्महे ॥ ÷ ॥
विशिष्टोक्त्यनुसारेण व्युत्पत्तिः स्मर्यते बुधैः ।
अविगीतप्रयोगेषु विगानन्नैव साम्प्रतम् ॥ ÷ ॥

भङ्गशब्दो नात्यन्तिकलयग्राही, रक्षाशब्देन तदुक्तेः; प्रयोजनस्यापि विषय-

वत्पृथक्वक्तव्यत्वाच्च । अतो "जगज्जन्मस्थितिध्वंसमहानन्दैकहेतव" इत्यादिष्विव ब्राह्मणपरिव्राडित्यत्र पृथगुक्तिः । विनतेत्यादाविन्द्रादिशरीरकतया बन्धरूपकाम्यफलप्रदत्त्वमात्रम्वदतामपि स्थेमशब्दे रक्षाशब्दे च सङ्कोचस्स्यादेव । अत एवात्राऽऽदिशब्दसमानाधिकरणजन्माद्यन्यपदार्थविशेषतयाऽपि न मोक्षसङ्ग्रह उचित इत्याहुराचार्य्याः । विशेषस्फौट्याभावादत्रैवपूर्णार्थोक्तौ "जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादिलील"मितिस्वोक्ते सति परोक्तस्य विप्रकृष्टस्योक्तस्य वाऽनुरोधायोगाज्जन्मादित्रयोपयुक्ततमतत्सहाम्नातानुप्रवेशादीनामपि तैस्सङ्ग्रहणौचित्यात्तेषामार्थत्वादपि शाब्दत्वस्य परत्वाच्च । अस्वाधीनसहकारिनैरपेक्ष्यं चाऽनेन भगवतस्सिद्ध्यति ।

स्वकार्यस्थस्य जन्मादेस्स्वलीलात्वोक्तिशक्तितः ।
स्यामित्याद्युक्तरीत्यैवोपादानत्वञ्च सूचितम् ॥ ७ ॥
नृत्यन्तं पश्यतां नृत्तं न लीला किन्तु तद्दृशिः ।
देहद्वाराऽत्र तन्निष्ठं लीलाजन्मादिकम्भवेत् ॥ * ॥
अवस्थान्तरयोग्यत्वमुपादानत्वमूचिरे ।
आगन्तुकापृथक्सिद्धधर्मोऽवस्थेतिकीर्त्यते ॥ ७ ॥
अचिज्जीवस्वधीद्वारा स्वरूपेण च सर्वगे ।
अवस्थास्सन्त्यदोषास्ते निर्विकारोक्तिरन्यतः ॥ ७ ॥

एतदर्थञ्चात्राऽन्तःप्रवेशाद्युक्तिः, ततोऽन्यस्य तच्छरीरत्वव्यक्तेः । प्रधानादिक्षेत्रज्ञशरीरकस्स एव जन्मादिलील इत्युक्तम्भवति ।

सर्गादिकन्ततोऽस्यैव भूतस्थमुपकारकम् ।
इतिचेत्तदभिप्रायमाहुस्त्रय्यन्तपारगाः ॥ ७ ॥

नचाऽत्र विवक्षितनिष्कर्षभुवनशब्दवृत्तिविरोधः, "स्वतन्त्रभूतचेष्टालील" इत्यादिवदुपपत्तेः । भुवनानि विष्णुरित्यादिवदनिष्कर्षेण विशेष्यपर्य्यन्तत्वेऽप्यविरोधः । तथाच विवरणम् "भुवनशब्दस्सजीवात्मकाचिदभिप्रायः, कारणवाक्येषु तथैव कारणत्वप्रतीतेः । ब्रह्म तु पृथङ्निर्दिश्यते । यद्वा—विशिष्टं ब्रह्म शब्दार्थः तत एवेति । ये चान्येऽप्यर्थास्तात्पर्य्यतूलिकोक्ताः "कार्यत्वाज्जन्मादिषु लीलाशब्दोपचारः, जन्मादिकार्यत्वाज्जन्मादिभूता लीला यस्येति वा, भुवनजन्मा-

दिपु लीला यस्येति व्यधिकरणबहुव्रीहिर्वा, जन्मस्थेमभङ्गानामादिभूता लीला यस्येतितत्पुरुषगर्भबहुव्रीहिर्वा" इति । ते तु प्रधानार्थे प्रोक्तेऽप्यविरुद्धतया वैभवादुक्ताः ॥

एवं जन्मादिशब्देन तद्धेतुरुपलक्ष्यते ।
यद्वा जन्मादिका लीला यस्येत्यर्थद्वयं मतम् ॥ ७ ॥
किञ्चिदिष्टमनुद्दिश्य न प्रवर्तेत चेतनः ।
तच्चाप्तार्थस्य नेत्येतल्लीलोक्त्याऽत्र निवार्य्यते ॥ ७ ॥
यद्यदिष्टं तदा तस्य सिद्धिरस्याप्तकामता ।
नातः क्षेप्यो यथालोकं साध्यलीलान्वितः श्रुतः ॥ ७ ॥
यत्पूर्णमद इत्यादि तदप्युक्तन्न बाध्यते ।
प्रत्युतानुगुणं तस्य स्वतोऽनेन च पूर्तितः ॥ ७ ॥

अस्याऽपि प्रयोजनान्तरनिरपेक्षस्वच्छन्दव्यापारव्यक्त्यै बालक्रीडनकैरिवेति दृष्टान्तः। तदभिप्रायन्तु सूत्रं "लोकवत्तुलीले" त्यादि । हेतुत्वोक्त्याऽपि समन्वयलक्षणार्थस्सिद्ध्येत्, लीलाशब्दस्तु स्थालीपुलाकन्यायादविरोधलक्षणार्थोपलक्षणः । अनेन स्वबुद्धिपूर्वकस्वप्रीत्यर्थव्यापारवाचिना कर्तृत्वञ्चोपादानत्वाविरुद्धं व्यञ्जितम् । सूक्ष्मप्रकृतिविशिष्टतयोपादानं सङ्कल्पतः कर्ता च स्यात् । एवं सहकारिकलापान्तर्यामितया सहकारित्वमपीति निर्वाह्यम् । विकाराश्रयत्वव्यतिरिक्ताकारेण कार्य्योपयुक्तं हि निमित्तं,नतूपादानादन्यदेव । उभयाभिप्रायेण हि कारणवाक्येष्वेकाद्वितीयशब्दौ । "सोऽभिध्याये" त्यादिभिश्चैतदुपबृंहितम् । विनतादिव्रातान्तं साधनलक्षणार्थपरं, ततोऽत्र नतिर्मानसी--यथा विधिप्रहृता गुणोपसंहारोक्ततत्तद्विद्यारूपा । विशब्दस्तु नानार्थः । तद्वन्तो विनताः । पूर्वपादद्वयसिद्धवैराग्यादिवैशिष्ट्यपरोवा विशब्दः । विनतानां वैविध्यं विद्याङ्गपादोक्ताश्रमादिभेदात् । तदुपर्य्यपीत्याद्युक्तदेवादिभेदोऽप्यत्र द्रष्टव्यः । भूतशब्दस्तापत्रयहतेस्तन्निवृत्त्युपायपाटवस्य च हेतुना देहविशेषेण योगमभिप्रयन्नार्थित्वादिकं व्यनक्ति । धात्वंशश्च "सन्तमेनं ततो विदु" रित्याद्युक्तां शुद्धधीवैशिष्ट्यरूपां सत्तामाचष्टे । "अत्र ब्रह्म समश्नुत" इत्यधीतां ब्रह्मनिर्वेशात्मिकां वा । भूतसम्बन्धी व्रातोऽत्र तानितदीयानिचं, षष्ठ्या सम्बन्धसामान्योक्तेः, अन्यथा व्रातशब्दनैरपेक्ष्यात् । न

ह्यत्र सत्रवत्संहतानामेव प्रवृत्तिः फलावाप्तिर्वा । साकेतनिवासिवत् फललाभस्तु न सार्वत्रिकः । तदत्र " नास्यावरपुरुषाः क्षीयन्ते " "नास्याब्रह्मवित् कुले भवति" " पशुर्मनुष्यः पक्षी वे" त्यादिविख्याप्यम् । राजपरिषदित्यादौ हि राजा चान्ये च विवक्ष्यन्ते । विविधशब्देन पशुपुत्रान्नाद्यस्वर्गस्वाराज्यादितत्तत्फलकामकर्तृवैविध्यम्, आतोक्त्या तत्तदुपायनिष्ठव्यक्तिभूयस्त्वं विवक्षितमिति केचित् । वयञ्च वैभववाद इत्यनुमन्यामहे । आहुश्च " सर्वव्याख्या विकल्पानां द्वयमिष्टप्रयोजनम् । पूर्वत्राऽपरितोषो वा विषयव्याप्तिरेव वे " ति ।

फलाध्यायक्रमेणाऽत्र परप्राप्तिविरोधिनां ।
शमनं निग्रहादीनां रक्षाशब्देन गृह्यते ॥ * ॥
प्रत्यूहात्यन्तभङ्गेषु स्वतःप्राप्तसुखादिकम् ।
यावत्स्वरूपं तत्प्राप्तं तत्संसिद्धिरिहाथतः ॥ * ॥
यद्वाभीष्टार्थमानञ्च रक्षेति परिगृह्यते ।
तदलाभनिमित्ताद्धि विषादात्त्रायते यतः ॥ * ॥
प्रयासानतिरेकेण फलाधिकृतिनीतितः ।
चतुर्विधानां भक्तानां रक्षोक्तिश्च न दुष्यति ॥ * ॥

आनन्दयितृत्वश्रुतिसूत्रे चाऽत्र भाष्ये । एकशब्द इह प्रधानार्थः ॥ अप्यहं जीवितंजह्या" मित्यादिषु तद्विरोधे तद्विपरीताभीष्टतमकृत्स्नत्यागोक्तेः । अनन्येषु प्रमाद्यत्स्वपि निरयादिप्रापकनिग्रहनिवृत्त्यर्थो वा, तेषां यमविषयगमनादिनिषेधात् । दृश्यते हि " न खलु भागवता यमविषयं गच्छन्ती " ति । " इहैवेषां केचिदुपक्लेशा भवन्तीति । शिक्षामात्राम्नानाच्च । दीक्षा दृढसङ्कल्पः, " न त्यजेयं " एतद्व्रतं मम " त्याद्युक्तेः । दीक्षोक्त्या स्वार्थत्वञ्च सूचितं । राजार्थं खलु रथतुरगगजादिसंरक्षणं । रक्षायामेकदीक्षा यस्येति व्यधिकरणबहुव्रीहिः, रक्षायां वा दीक्षाकार्यत्वादुपचारः, रक्षायामेकदीक्ष इति वा योज्यम् ।

दृष्टमन्यापराधे हि दण्डनं खण्डनादिकम् ।
राजपुत्रापराधे हि दण्डनं लघु दृश्यते ॥ * ॥

फलसाधनतया चोदितस्याऽप्यार्थं फलप्रदप्राधान्यं सिद्ध्यति ॥

राजानः फलदा राजपरिचर्याविधायिनां

फलप्रदस्य प्राधान्यं फलात्तदवगम्यते ॥ ॥

विनतरन्तोक्त्या तत्सहगीतदुष्कृतनिग्रहव्यञ्जनान्निवर्त्यो बन्धहेतुः कर्मादिः ख्यापितः। तत एव वैषम्यनैर्घृण्यपरिहारश्च । श्रुतिशब्दो निरपेक्षसम्प्रतिपत्तिन्यायान्नित्यं श्रूयमाणे वेदे रूढः । सिद्धे शब्दार्थसम्बन्ध"इत्यादौ चैवं प्राहुरित्युक्तं । तेन वक्तृदोषाभावसिद्धिः । साधितं च सर्वाद्यपादे वेदानां प्रामाण्यं, कारणदोषबाधकप्रत्यययोरभावेन, कर्तुश्च तेषामनुमातुमशक्यत्वात्, कल्पादिष्वपि यथा पूर्वप्रादुष्करणात्, काठकादिसमाख्यानां कर्तृविशेषोपस्थापकत्वाभावाच्च । 'शिरः' ब्रह्मप्रधानतयोत्तमोभागः । दीप्तिः । स्फूर्त्तिः । सा पुनराद्याधिकरणोक्तिसिद्धार्थव्युत्पत्तेः । विशब्दोक्तं वैशिष्ट्यं त्वन्यदेवतोक्तिराहित्यं । "तदेवाग्नि"रित्यादिनाऽग्न्यादिशब्दानां शरीरिणि पर्यवसानं, जन्मादिसमन्वयसूत्रोक्तकारणत्वस्वतः पुरुषार्थत्वाभ्यां व्यावृत्तिश्चाऽत्र विवक्ष्यते । मानविशेषोक्त्या शेषनिषेधन्यायेन तृतीयसूत्रार्थस्सिद्ध्यति । एवमिह न्यायसुदर्शने सङ्ग्रहः "व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्यमन्येन लभ्यत्वमथाफलत्वं । एतानि वै सूत्रचतुष्टयेनाऽनारम्भमूलानि निराकृतानि इति । न्यायसङ्ग्रहे च सेनेश्वराचार्य्यैः "व्युत्पत्त्यभावात्प्रतिपत्तिदौस्थ्यादन्येनसिद्धेरफलत्वतश्च । अमात्वमाशङ्क्य निराचकार न्यायैश्चतुर्भिः प्रतिपाद्य तत्त्व"दिति । एतेन "को धर्म"इत्यादिवत्किं ब्रह्मेत्यादिविचारपर्य्यन्तफलरूपप्रमितिवैशिष्ट्यमुक्तं । नुन यदि ब्रह्मशब्दोऽत्र सामान्यवाची, तदा श्रीनिवासशब्देन विशेष्येत । नैवमसौ, तस्मादन्यत्रौपचारिक इत्यत्रैव स्थापनात्, जन्मादिसूत्रे निरतिशयबृहद्बृंहणश्चे' । तिनिर्वचनोक्तेः, कारणत्वाधिकरणे च "ब्रह्मशब्दस्य परमात्मासाधारणत्वेऽपि प्रत्यगात्मन्यपि कदाचिदुपचरितप्रयोगदर्शना" दित्यादि, वियदधिकरणे च सूत्रं "स्याच्चैकस्य" ब्रह्मशब्दवदिति" तत्र च भाष्यं 'यथाब्रह्मशब्दः' 'तस्मादेतद्ब्रह्मनामरूपमन्नं च जायत' इत्यत्र प्रधाने गौणतया प्रयुक्तस्तस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म ततोन्नमभिजायत' इतिब्रह्मणि मुख्यतया प्रयुज्यतेतद्व' दिति 'परं जैमिनिर्मुख्यत्वा'दित्यत्र चैवं भाष्यं "ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वादि । नापि परशब्दवदौपचारिकप्रयोगव्यवच्छेदार्थोऽत्र विशेषकः श्रीनिवासशब्दः" परस्मिन्नित्यनेनैव पर्याप्तेः । नाप्येकत्र रूढत्वेप्यप्रसिद्धतया पर्य्यायेण बोधनं तदयोगात् । नह्यत्र कोकिलः पिक इतिवदन्वयः, असामर्थ्या-

द्वाक्यभेदाच्च। नच तद्युक्तं, 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यत' इतिन्यायात्। श्रीनिवास इतिनाम, अन्यस्तु त्यक्तरूढिर्योगतो विशेषक इतिचाऽयुक्तं अखिलेत्यादिना गतार्थत्वात्। अथ च सामान्यवाची ब्रह्मशब्दः क्वचिद्भाति, समन्वयसूत्रे तावत् सद्ब्रह्मादिशब्दानामुत्तरोत्तरविशेषकत्वाभिप्रायेण समभिव्याहारः। आकाशाधिकरणेऽपि "सदादिशब्दास्साधारणाकारा" इत्युक्तं। आरम्भणाधिकरणेऽपि "सद्ब्रह्मादिशब्दास्तुल्यप्रकरणस्थास्तत्तुल्यप्रकरणस्थेन नारायणशब्देन विशेषितास्तमेव गमयन्तीति। पाशुपताधिकरणेऽपि" सृष्टिवाक्योदितं स्रष्टारं नारायणमेव समानप्रकरणस्थाः "सदेव सोम्येदमग्र आसी" दित्यादिसद्ब्रह्मादिशब्दाः प्रतिपादयन्तीति। अतः कथमेतत्। इत्थं, प्रत्ययितग्रन्थस्थे परस्परविरोधे तात्पर्य्यतः तावद्विरोधो निवार्यः। या ब्रह्मशब्दस्यैव परमात्मन्येव रूढिरादावेव स्थापिता, सैव सर्वत्रेष्टा। असाधारण्यानुक्तिस्तु बहुषु श्रुत्यादिप्रयोगदृष्ट्या कुदृष्टिवादिविप्रतिपत्त्या चात्मादिशब्दवज्जातिशब्दत्वं योगमात्रमनेकरूढिम्वा पश्यतामाभिमानिकं साधारण्यमन्वारुह्य तदिष्टान्यार्थत्वशङ्कानिरासाय स्यात्। तथा च 'ब्रह्मणी,ति सामान्यशब्दः श्रीनिवास इति विशेषशब्द, इतिव्याख्यानेष्वप्येवंगतिः। तथाऽत्रसाधारण्यान्वारोहेण श्रीनिवास इति विशेषनिष्कर्षः स्यात्। यद्वा ब्रह्मशब्दस्यैकरूढिमनुरुद्ध्यैव तदेव श्रीनिवासशब्देन विशेष्यते, या सर्वैराश्रीयते सा च तदाश्रयेति। अत एवाऽत्र छागपशुन्यायोऽभिप्रेतः। अन्यथा चतुर्मुखादित्वमप्याशङ्क्येत। अत एव "ह्रीश्च ते लक्ष्मीश्च पत्न्या" वितिपरतत्वासाधारणपुरुषशब्दार्थोऽपि श्रियःपतित्वेन विशेष्यते। तेन कारणत्वादिभिरिव परस्मिन् ब्रह्मशब्दरूढिस्स्थापिता स्यात्। प्रसिद्धतमनामान्तरवाच्यत्वलक्षणान्वयः, श्रीनिवासशब्दार्थे ब्रह्मणीति। श्रीनिवासस्य वा परत्वसिद्ध्यै प्रकृताकारबृहत्वनिमित्तब्रह्मशब्दवाच्यत्वं विशेषणीकार्यमिति। सत्यत्वादिस्वरूपनिरूपकधर्मपञ्चकनिरूपितमपि परंब्रह्म श्रीनिवासत्वेन विशेषितमेव ब्रह्मविद्यावेद्यमित्युक्तंभवति। श्रीसंश्रयणां नित्यं स्वरूपवन्मूर्त्याऽपि, "श्रीवत्सवक्षा नित्यश्री" रित्यभिधानात्। अत्र शान्तानन्तेत्यादिकमनुसन्धेयम्। एतेन पर्य्यङ्कविद्यादिप्रसिद्धविभूत्यन्तरवत्वञ्च। भवत्वित्याशिषा प्राप्यान्तरेभ्यः स्वादुतमोयमुपाय इति व्यज्यते। यथोक्तम् "क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम्। क्व जपो वासुदेवेति मुक्तवीजमनुत्तम" मिति।

मम । —"सोऽहं भगवः शोचामि" इत्याद्युक्तावस्थस्येति भावः । परस्मिन् । सर्वनियन्तृत्वनिरुपाधिकानन्दयितृत्वाभ्यां 'सा काष्ठा सा परा गति' रित्याम्नातवशीकार्यत्वप्राप्यत्वकाष्ठाभूते । प्राप्यत्वोक्त्या "रसं ह्येवाय" मित्यादिसिद्धमुक्तावस्थाशोधनञ्च । सृष्ट्याद्युपयुक्तसार्वज्ञादिकृत्स्नोत्कर्षपरमसीमत्वम्वा परत्वम् ॥ एवं परत्वसौलभ्याभ्यामधिगम्यं सिद्धप्राप्यादिरूपं भजनीयं विशोधितम् ।

परत्वं सुलभत्वेन रहितं नोपकारकम् ।
सुलभत्वं तथा तेन रहितं नोपकारकम् ॥ ÷ ॥

साध्योपायशोधने तु—

भक्तेः पूजादिमात्रत्वं धियश्चिन्तादिरूपताम् ।
व्यवच्छेत्तुमिहात्यन्तं शेमुष्यादिपदद्वयम् ॥ * ॥

वेदनादिशब्दानां पश्वादिनीत्या वक्ष्यमाणाया विशेषविश्रान्तेः सङ्ग्रहोऽयम् । शेमुषीति शमाद्यङ्गिकां बुद्धिं दर्शयति । महनीयविषयप्रीतिर्भक्तिः, प्रीतिश्च धीविशेषः । यादृश्या धिया सा साध्या परेष्टा तादृश्या एव तत्वं युक्तम् । तदुक्तं भक्तिमेवाधिकृत्य वेदार्थसङ्ग्रहे " विषयविशेषेण विशेषितं ज्ञानं सुखस्य जनकमित्यभिमतं, तद्विषयं ज्ञानमेव सुखं, तदतिरिक्तपदार्थान्तरन्नोपलभ्यते । तेनैव सुखित्वव्यवहारोपपत्तेश्च" इति । " स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इतिच ।

आपादचूडं शास्त्रार्थ इत्थमत्रानुवर्णितः ।
प्रसिद्धिरवधित्सायां यथा स्थानं भविष्यति ॥ * ॥

एवं शास्त्रार्थोऽनुक्रान्तः, विशेषतश्चोभयलिङ्गपादगत्या ध्येयंशोध्यते । पूर्वद्विकसिद्धेऽपि ब्रह्मत्वे पुनस्तत्प्रभावविशेषस्थापनातिशयात्पादोयमुपयुक्ततमः, अनन्योपासिसिषातिशयहेतुत्वात् । अत्रत्यब्रह्मगुणविशेषाकारवादैरनन्तरपादे विद्यानानात्वोक्तेश्च । तदिहाऽखिलेत्यादिना स्वप्नप्रपञ्चादेरपि जन्मादिहेतुत्वेन परतत्वातिशयोक्त्या सन्ध्याद्यधिकरणचतुष्टयाऽभिप्रेतं क्षेत्रिणां स्वप्नसुषुप्त्यादेः कारणं परस्याकुण्ठितविचित्रशक्तित्वं व्यञ्जितम् । विदीप्त श्रीनिवास इतिपदाभ्यां मिथोनुपमर्दिव्यावृत्तिविधिरूपविशेषणवर्गोपलक्षणान्न स्थानतोऽपि परस्येत्युक्तपरशब्दोपादानाच्चोभयलिङ्गाधिक्रियार्थ उदाहृतः । चिदचिदनुप्रवेशादिसङ्ग्रहाल्लीलाशब्दाच्चांशतोऽपि स्वस्य स्वयमेवाऽज्ञत्वापादनशङ्काप्रतिक्षेपादहिकुण्डलाधिकरणोक्तं सारितम् ।

परस्मिन्निति कारणस्यैवाऽत्र परत्वोक्त्या परमत इत्यधिकरणार्थोऽपि ख्यापितः विनतैत्यादिना फलमत इत्युक्तं दर्शितम् । शेषेणाऽर्थसिद्धोपासिसिषासूचनमिति । प्रकारान्तरेणाऽपि ध्येयमिह शोध्यते ।

पूर्वं द्विलिङ्गपादस्य प्रक्रिया परिशोधिता ।
नारायणानुवाकादिनिर्णीतार्थस्त्विहोच्यते ॥ ७ ॥

अत्र ह्यखिलेत्यादिना सर्वकारणत्वं, विनतेत्यादिना मोक्षार्थसर्वविद्यावेद्यत्वं, श्रुतिशिरसि विदीप्त इत्यनेन सर्वोपनिषदेकप्रतिपाद्यत्वं च, परस्य ब्रह्मण उक्त्वा तस्य श्रीनिवासत्वं च वदतोऽयं भावः "कारणन्तु ध्येय" इत्यादिषु सर्वकारणमेव मुमुक्षो र्ध्येयं श्रुतं, तदेव सद्ब्रह्मादिशब्दैरुक्तं, ते च न भिन्नविषयाः, सर्वत्र जगत्कारणस्यैकत्वोक्त्या विकल्पसमुच्चयायोगात्, कृत्स्नवेदप्रामाण्ये निश्चिते सर्वेषामन्यतमस्य त्यागायोगाच्च, अन्यथा विविधघटन्यायेनेतरप्रमाणायोगाच्च । अत एकविषयत्वे सिद्धे ब्रह्मेशानादिनिषेधयुक्तभूयिष्ठाबाधितार्थबहूपबृंहणानुगुणमहोपनिषत्पठितान्यसाधारणरूढ्यास्पदनारायणशब्दोक्तश्रीपतिरेव सदादिशब्दार्थः; कारणविषयपरविद्योपास्यनिर्धारणं च नारायणानुवाकविषयलिङ्गभूयस्त्वाधिकरणसिद्धं सर्वेषां च कारणवाक्यानां सर्ववेदपठितपुंसूक्तैकार्थ्यं युक्तं, तत्प्रतिपाद्यश्च श्रीपतिरित्युत्तरानुवाकसिद्धं । कारणविषयहिरण्यगर्भशब्दस्य "अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ" इतिश्रुत्यैव श्रीपतिविषयत्वं दर्शितं । एवं पुंसूक्तशब्दार्थप्रत्यभिज्ञया श्वेताश्वतरोपनिषदादयोऽपि व्याख्याताः । अतः "सर्वे वेदा यत्रैकम्भवन्ति" "वेदैश्च सर्वैरहमेव वेद्य" इत्यादिसिद्धमिह स्थापितं, अतएव पुरुषनारायणोत्तरनारायणनारायणानुवाकानामैककण्ठ्येन श्रीनिवासे ब्रह्मणीति श्रीनिवास एव ब्रह्मशब्दार्थ इति ।

परपक्षनिरासश्च कृतश्शास्त्रैकदेशतः ।
व्यज्यतेऽस्मिन् पदैस्तैस्तैः पद्ये शास्त्रार्थसङ्ग्रहे ॥ ७ ॥
व्यनक्त्यखिलशब्दोऽत्र चिदचिद्भेदसत्यताम् ।
एकस्मन्नपि तद्युक्तिर्भागभेदव्यपेक्षया ॥ ८ ॥
अर्थेन्द्रियगतैस्तद्वदुभयानुभयाश्रितैः ।
विना दोषैरिहाध्यक्षं बाध्यमिच्छन् स्वधीहतः ॥ ७ ॥

भेदसत्यत्वपक्षस्य भेदमिथ्यात्वपक्षतः ।
विभागो यदि मिथ्या स्याद्व्याहतिस्सर्वतोमुखी ॥ ७ ।
अनन्यपरवाक्योक्तविभूतिगुणविग्रहान् ।
अबाधितत्वैव नेतव्या नेतिनेत्यादयः प्रभौ ॥ ७ ॥
श्रुतिस्तु नित्यनिर्दोषा स्वतःप्रामाण्यशालिनी ।
अलौकिकेर्थे न क्षेप्या स्वेष्टदूरादभुतोक्तिवत् ॥ ७ ॥
मिथोंशानां सशेषैश्च शेषस्यैक्यन्निगृह्णति ।
अखिलोक्तिरनेकान्तवादानपि विलुम्पति ॥ ७ ॥
विश्वमेतदनेकान्तं वदतो विहतिं त्यजः ।
न साध्यदूष्यसिद्धान्तरागद्वेषादिसम्भवः ॥ + ॥
नञ्प्रयोगश्च सार्थोऽसौ यथा व्युत्पत्तिबोधकः ।
अभावस्याऽनुपाख्यत्वं हन्ति निर्बाधबोधतः ॥ ७ ॥
भावान्तरमभावोऽसौ पदार्थान्तरमेव वा ।
द्विधापि निस्स्वभावत्वं तत्स्वभावे कथं भवेत् ॥ * ॥
चतुर्विधाणुमनसामाकाशादेश्च नित्यताम् ।
अस्यत्यखिलजन्मोक्त्या नित्यमन्यत्तु शास्त्रतः ॥ × ॥
सज्जायतेतिकण्ठोक्तकार्यासत्वापलापिनः ।
सत्तार्थधातुनिष्पन्नभुवनोक्त्या निराकृताः ॥ × ॥
सदसत्कोटिनिर्मुक्तकल्पना हि निरर्थिका ।
सदसद्रूपपक्षोक्तविरोधस्याऽविशेषतः ॥ × ॥
भावाभावविकल्पे तु कोट्यन्तरमसम्भवि ।
व्यक्त्यध्यासविसृष्ट्यादिविकारेषु विवक्षताम् ॥ + ॥
जन्मव्याहरणाद्बाधः कृतश्रुत्यादिदर्शनात् ।
अभिव्यक्तेरनादित्वे कारकाणामनर्थता ॥ ७ ॥
तदागन्तुकतामिच्छन् किं नान्यत्रैवमिच्छति ।
विसृष्टिः क्वचिदिष्टैव विकाशोऽपि दशान्तरम् ॥ ७ ॥
विकाशतद्वतोरैक्ये व्याघातः सांख्यपक्षवत् ।

एक एव निमितञ्चोपादानं चेति सूचनात् ॥ * ॥
योगवैशेषिकाद्युक्तं युक्त्याभासमभाषत ।
कर्तास्वपरसंयोगे समवायी च विश्वकृत् ॥ × ॥
न च कम्प्रेषु संयोगं नित्यं भौतेषु भावयेत् ।
जनयन् स्वसुखादीनि दृष्टोजीवोऽपि तत्र च ॥ + ॥
कर्त्तृत्वसमवायित्वे काणादैरपि दुस्त्यजे ।
बहु स्यामितिमन्तुश्च विकारः परिकल्पितः ॥ + ॥
शरीरद्वारतस्सृष्टेस्सूचनात्प्रत्यरुध्यत ।
क्रमाज्जन्मादिसर्वेषामेकतस्तदितीरणात् ॥ + ॥
क्षणभङ्गप्रवाहेशपक्षश्चाऽत्र पराकृतः ।
स्थिरापेक्षाद्यनुमितिः स्थिराभावं न साधयेत् ।
नच प्रत्यक्षमक्षोभ्यप्रत्यक्षान्तरबाधतः ॥ × ॥
सर्गप्रलयवादानामान्यपर्यान्मृषार्थता ।
अर्धलोकायतारूढैरुक्ताऽप्यत्र बहिष्कृता ॥ + ॥
अनुप्रवेशादिपदन्निराचक्रे यथाश्रुति ।
सामानाधिकरण्यस्य बाधैक्यादिप्रयुक्तताम् ॥ * ॥
विशिष्टविषयानेकसामानाधिकरण्यतः ।
निर्भेदैकार्थतां तस्य वदन्त इह वारिताः ॥ × ॥
चार्वाकादिमतं चाऽत्र हेत्वाद्युक्त्या निवर्तितम् ।
निरानन्दोक्तिपक्षश्च सलीलत्वेनखण्डितः ॥ + ॥
निरीश्वरजगत्सर्गशब्दादेचश तदुद्भवः ।
निर्व्यापारेशपक्षश्च तत एव न्यषिध्यत ॥ ७ ॥
बहुश्रुत्यादिसिद्धत्वाद् बाधलेशविमुक्तया ।
लीलोक्त्यैवैक्यपक्षेषु स्रष्टृत्वायोग उच्यते ॥ + ॥
सङ्कल्पाध्यसनं तावन्न विकल्पं सहेदिह ।
अचेतनतया नित्यमविद्यावृत्तिमात्रयोः ॥ × ॥
त्र्यंशसद्ब्रह्मवादे च सुषुप्तस्येशितुस्तदा ।

अचिज्जीवसमानस्य न लीलोद्यमसम्भ्रमः ॥ × ॥
नित्यसर्वज्ञताश्रुत्या सुषुप्तिश्चाऽस्य बाधिता ।
कालाधीनप्रबोधादेरनैश्वर्य्यं च दुस्त्यजम् ॥÷॥
सुषुप्तिश्च प्रबोधश्च प्राक्सङ्कल्पादितित्वसत् ।
अनन्तानुभवानन्दजिहासानुपपत्तितः ॥ * ॥
नाचित्सङ्कल्पयेन्नाऽपि जीवोऽसिद्धेन्द्रियादिकः ।
ईश्वरश्शान्तनिद्रोऽपि कुर्य्यान्नानर्थमात्मनः ॥ * ॥
नित्यप्रबुद्ध ईशांशोऽप्यतो नेदृग्विहारवान् ।
भोक्तॄणां स्वात्मतादात्म्यं न वेत्ति नहि सर्ववित् ॥ ÷ ॥
विनतादिपदैरत्र जीवानामितरेतरम् ।
ईशित्रा च स्वरूपैक्यं तत्तन्मानैः परास्यते ॥ ७ ॥
असर्वज्ञोऽहमित्यात्मा येनाऽध्यक्षेण दृश्यते ।
सर्वज्ञैक्यमतिस्तस्य नतच्छक्त्याऽपि सम्भवेत् ॥ ÷ ॥
नानात्मनो व्यवस्थात इत्यन्यैरपि सूत्रितम् ।
विरुद्धधर्मसंसर्गं व्यनक्ति विविधोक्तितः ॥ * ॥
वर्णाद्यैर्नन्तृवैविध्यादलेपकमरं हतम् ।
यावज्जीवं मुमुक्षोश्च तद्धर्मो निश्चलीकृतः ॥ ७ ॥
अन्याश्रमिभ्य इत्येतत्प्रशस्ताश्रमयोगतः ।
अलेपश्च श्रुतः पापैः प्रमादात्तैरिति स्थितिः ॥ × ॥
तदुपर्यादिसूत्रोक्तौ सर्वदेवैकसेव्यता ।
व्यञ्जिता विविधोक्त्यैव तत्तत्पारम्पर्यनुत्तये ॥ * ॥
व्रातशब्देन जीवानामानन्त्यमपि सूचयन् ।
इतः प्राक् सर्वमुक्तिस्स्यादिति चोद्यमवारयत् ॥ * ॥
आत्मानन्त्यादमुक्तानां मुक्तानामप्यनन्तता ।
आनन्त्यतारतम्येन सद्द्रव्यादिनयाद्भवेत् ॥ ÷ ॥
एको जीव इतः पूर्वममुक्तोहेत्वनागमात् ।
इतिपश्यन्ननेकेषु तथात्वं किन्न पश्यति ॥ ÷ ॥

मुक्तेर्नतिभवत्वोक्त्या नित्यमुक्तिर्निराकृता ।
स्वरूपस्य न मुक्तित्वं सिद्धसाध्यविरोधतः ॥ ꣸ ॥
क्रियातच्छक्त्यपूर्वाद्यैस्स्वर्गादीति परोदितम् ।
नन्तृरक्षणदीक्षोक्त्या निरस्तं निगमाश्रया ॥ ꣸ ॥
विध्यपेक्षे तु वेदार्थद्वारे श्रुत्यैव दर्शिते ।
श्रुतिहानादिरन्याय्यो रात्रिसत्रादिनीतितः ॥ * ॥
नतिरक्षादिजीवेशव्यापारप्रतिपादनात् ।
साक्षिमात्रत्वमनयोस्तत्तदुक्तमपास्यत ॥ ꣸ ॥
वेदानित्यत्ववादश्च वेदोज्झितपथस्तथा ।
अनुमेयेशपक्षश्च श्रुत्याद्युक्त्या निवारितः ॥ + ॥
ईशितुस्सगुणत्वेन भङ्गुरत्वादिसाधयन् ।
धर्मिग्राहकवेदान्तविदीप्तिध्वस्तदृष्टिकः ॥ × ॥
अवेद्यत्वमवाच्यत्वमपि प्रोक्तं कुदृष्टिभिः ।
निगमान्तविदीसत्वानिर्देशेन निर्वर्तितम् ॥ + ॥
उपासनाद्यनर्हं यत्तद्ब्रह्म श्रुतमित्युशन् ।
परस्य विद्युपास्यादिविषयत्वोक्तितो हतः ॥ ꣸ ॥
न विभ्वस्तीति वदतान्तत्तन्मानैः प्रणुत्तये ।
बृहत्वमपरिच्छेद्यं ब्रह्मशब्देन दर्शितम् ॥ ७ ॥
भागभेदाद्ययोगेन विभुतत्त्वस्य निह्नवे ।
अणुष्वपि सुदुर्वारस्सर्वासत्वे स्ववाग्घतिः ॥ × ॥
व्यतिरेकग्रहायोगाद्विभुकारणमुज्झतः ।
अबाध्यश्रुतिसिद्ध्यैव तत्सिद्धं समदर्शयत् ॥ ७ ॥
कारणत्वादिधर्माणां प्रतियोगिमतामपि ।
अकाल्पनिकताम्प्राह तथा तन्मानबोधनात् ॥ ७ ॥
स्वेष्टस्वपरनिर्वाहन्यायात्सम्बन्ध आश्रितः ।
नानवस्थितये नातिप्रसक्त्यै चेति भाव्यताम् ॥ ८ ॥
श्रीनिवासपदेनाऽत्र निर्विशङ्कार्थवाचिना ।

त्रिमूर्तिसाम्यतादात्म्यव्यक्त्यन्तरजुषः क्षताः ॥ ७ ॥
अन्योक्तिः परविद्यासु निरुक्त्यादेः पराश्रयाः ।
तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥ ७ ॥
बाह्यैः कुदृष्टिभिश्चोक्तास्त्रिमूर्त्युत्तीर्णक्लृप्तयः ।
ब्रह्मणः श्रीनिवासस्य परत्वोक्त्या पराहताः ॥ × ॥
आप्नोति परमित्येतत्सूचयन् परशब्दतः ।
स्वात्मप्राप्त्यादिमात्रस्य निराचक्रेऽपवर्गताम् ॥ + ॥
परानुभूतेर्नाभावो नच ह्रासो निरंहसः ।
अनिश्शेषितकर्मा तु मुक्त इत्युपचर्य्यताम् ॥
परत्वमनवच्छिन्नमुक्तादिभ्योऽपि हि श्रुतम् ।
ततस्सर्वगुणात्यन्तसाम्यवादोऽप्यपोदितः ॥ ७ ॥
एकीभावश्रुतिश्चाऽत्र प्रकारैक्यविवक्षया ।
शुद्धाशुद्धाम्बुयोगे हि तादृक्त्वं श्रुतिदर्शितम् ॥ ÷ ॥
अयन्तदीप्ततामुक्त्वा भक्तेराशासनात्पुनः ।
शब्दतोऽध्यक्षसम्पत्तेरसम्भव उदाहृतः ॥ ७ ॥
आत्मनोऽनहमर्थत्वं वदतामपनुत्तये ।
ममेतीरितमात्मानमहमर्थं न्यदर्शयत् ॥ ७ ॥
शेमुष्यादिपदाभ्यान्तु कर्मधीतद्विकल्पयोः ।
वाक्यार्थैक्यमतेश्चात्राऽनुपायत्वं प्रदर्शितम् ॥ × ॥
बोद्धृबुद्धिभिदामत्र ममकारेण दर्शयन् ।
विषयग्राहिणी बुद्धिरात्मेति मतमच्छिनत् ॥ + ॥
मम स्वरूपमितिवद्भेदोक्तिरुपचारतः ।
इत्यसद्बाधविरहो नचेद्देहेऽपि का गतिः ॥ + ॥
बाधस्स्वारसिको नास्ति संविदाम्बोद्धृबोध्ययोः ।
कुतर्कैर्यदि शेमुष्या प्रतिबन्दीमसूचयत् ॥ + ॥
विषयेणाऽऽश्रयेणाऽपि स्वधर्मेणापि शेमुषीम् ।
विशिंषंस्तन्निराकर्तृन्निरास्थदिति मन्महे ॥ + ॥

एवन्तु जीवपरयोस्स्वरूपैक्याभिमानिनाम् ।
अत्र शारीरकारम्भस्त्वयाणामुपरुध्यते ॥ ७ ॥
मिथ्याभूतस्य बन्धस्य तत्वबुद्ध्यैव बाधनात् ।
तत्प्रधानमिदं शास्त्रमारभ्यमिति दुर्भणम् ॥ ७ ॥
प्रमितस्याऽस्य सत्यस्य परभक्त्या विनाशनम् ।
प्रतिपादयताऽनेन परारम्भो निवारितः ॥ ७ ॥
न जिज्ञासेत धीरत्र ज्ञातृत्वादिप्रहाणतः ।
ज्ञातृभूतोऽहमर्थश्चेन्नारभेत स्वनाशनम् ॥ ७ ॥
स्वदुःखशान्तये कश्चित्स्वनाशं मूढ इच्छति ।
न तथाऽत्र गतक्लेशस्स्वात्मस्थितिसमर्थनात् ॥ ७ ॥
इत्थं ब्रह्मप्रतिच्छन्दजीवपक्षेऽपि दूषणम् ।
ईश्वरोऽपि न जिज्ञासुस्सार्वज्ञ्याध्याससम्मतेः ॥ ÷ ॥
भावाभावात्मकाशेषविशेषोज्झितब्रह्मणः ।
जिज्ञासाकर्मताऽप्यत्र विशिष्टोक्त्यैव बाधिता ॥ + ॥
विषयत्वप्रहाणाच्च जिज्ञास्यत्वम्विहन्यते ।
न ह्यत्रोपहिते चिन्ता न च सा भ्रान्तिशान्तिकृत् ॥ + ॥
अवेद्ये हि न जिज्ञासा सा चेत्कथमवेद्यता ।
न च कोटिद्वयोन्मुक्तं किंचित्स्याद्व्याहतत्वतः ॥ × ॥
ज्ञेयत्वे चाऽऽत्मता न स्याद्घटादिवदिति त्वसत् ।
सहदृष्टेर्द्वयोर्वह्नेर्वस्तुत्वोष्णत्वयोरिव ॥ ·|· ॥
कर्मकर्तृविरोधश्च स्वदृष्टौ भङ्गगुम्भितः ।
नहि दृष्टेर्विरुद्धत्वं न दृष्टिश्शक्यनिह्नवा ॥ ÷ ॥
अवेद्यमिति वेद्यत्वे वेद्यत्वं स्वीकृतम्भवेत् ।
अवेद्यमित्यवेद्यत्वे वेद्यत्वमनपोदितम् ॥ × ॥
अवाच्यमित्यवाच्यत्वे वाच्यत्वेऽपि च वस्तुनः ।
वाच्यतैव भवेत्तस्य वाच्यावाच्यवचोऽन्वयात् ॥ ८ ॥
प्रोवाचावचनेत्याद्या उक्तयश्च परात्मनः ।

अपरिच्छेद्यतार्थास्युर्नचेत्स्वोक्त्यादिभिः क्षतिः ॥ ·|· ॥
ज्ञानत्वाज्ज्ञेयता नास्ति ज्ञातृताऽप्यात्मनस्त्विति ।
दृष्टश्रुतिविनिर्धूतं ज्ञानत्वन्तु स्वभासनात् ॥ ७ ॥
किंच श्रुतिशिरस्येव विदीप्तिम्वदता विभोः ।
परेषां व्यज्यतेऽर्थेषु त्रय्यन्तनिरपेक्षता ॥ * ॥
स्वप्रकाशा मतिर्धीत्वाद् दृश्यत्वाद्भिमतम्मृषा ।
इत्याद्यैरेव सिद्धेऽर्थे कृतन्त्रय्यन्तचिन्तया ॥ + ॥
सगुणोपासनादीनां सिद्ध्यै तच्चिन्तनं यदि ।
तच्चेदद्वैतधीसिद्ध्यै तद्वृथा तद्विरोधतः ॥ ·|· ॥
फलान्तरार्थं तच्चिन्ता यदीष्येत तथासति ।
मोक्षप्रधानशास्त्रत्वं गतं शारीकस्य ते ॥ ७ ॥
श्रुतिवाक्यप्रसूता धीर्बाधिका नाऽऽनुमानिकी ।
इति वक्तुन्न ते शक्यमदृष्टस्याऽनपेक्षणात् ॥ ८ ॥
अनुमानाच्च वाक्याच्च रज्जुसर्पादिविभ्रमे ।
अविशेषेण बाधो हि दृष्टस्तद्वदिहाऽस्तु ते ॥ ७ ॥
प्रत्यक्षं शब्दजन्यं च दुःसाधं निष्फलंच ते ।
परोक्षादपि शब्दार्थात्क्वचिद्बाधस्य सम्मतेः ॥ * ॥
नचाऽनुमानाशक्तस्य वाक्यमित्यपि युज्यते ।
सर्वमानान्तरानर्हे शास्त्रमानत्वसाधनात् ॥ ÷ ॥
अनेकनियमोपेतवाक्यचिन्ताविधेर्वरम् ।
लोकदृष्ट्यनुसारेण श्रुतादेश्च क्षमानुमा ॥ * ॥
ज्ञातेदृशानुमानानां भ्रान्तिर्न भ्रश्यतीति चेत् ।
ज्ञाततादृशवाक्यानां समं तत्संभ्रमादृते ॥ ·|· ॥
द्वैताद्वैतमतेऽप्येवमारम्भोऽनुपपत्तिमान् ।
न हि सर्वविदश्चिन्त्यं जीवस्य न तदैक्यतः ॥ * ॥
उपाधितस्स्वतो वाऽत्र भेदे सत्यपि किं भवेत् ।
रागादिभेदाद्वैषम्यं सर्वज्ञैक्यसमत्वतः ॥ ·|· ॥

सर्वेषु चाऽवतारेषु नित्यं सर्वार्थवेदिनः ।
सुषुप्तिभ्रमदुःखाद्यं प्राहुश्शैलूषनीतितः ॥ + ॥
इच्छया संसृतिश्चाऽपि न शक्यमितिभावितुम् ।
परेच्छा तव जीवेच्छा तन्मूलश्च भवो यतः ॥ छ ॥
ज्ञातस्वजीवतादात्म्यः शक्तश्चेत्प्रसहेद्भवम् ।
अशक्तो यदि मोक्षार्थं जिज्ञासेत्तत्कथं परम् ॥ * ॥
अतो जीवेशयोर्भेदमभेदस्पर्शवर्जितम् ।
बभाषे नन्तृनन्तव्यरक्ष्यरक्षकतादिभिः ॥ ·|· ॥
इत्थं निवारितो भेदाभेदवादविधायिनोः ।
द्वयोरपि च शास्त्रस्य प्रारम्भः प्रातिकूल्यतः ॥ × ॥
स्वमते तु स्वरक्षार्थविशिष्टविषयोत्थितः ।
निश्शेषमिह निर्धूताश्शास्त्रानारम्भहेतवः ॥ × ॥
ज्ञातमज्ञातमपि वा न जिज्ञास्यमितित्वसत् ।
विदिताविदिताकारभेदेनैवोपवर्णनात् ॥ ·|· ॥
सिद्धं धर्मिणमुद्दिश्य साध्यधर्मविधानतः ।
इत्थमेवाऽनुमानेऽपि वादिनोप्यनुमेनिरे ॥ छ ॥
व्युत्पत्तिद्वारसिद्धेऽपि तद्विशेषेऽपि शास्त्रतः ।
अलौकिकेऽर्थे समभिव्याहारात्साहि सम्मता ॥ ·|· ॥

नेदं शास्त्रं निर्विषयं, "श्रोतव्यो मन्तव्य" इति श्रुत्यनूदितविषयोक्तेः । नाऽप्यसौ भ्रान्त्या मानान्तरेण वा सिद्धः, निर्बाधे श्रुतिशिरस्येव विदीप्तत्वात् । नच निरूपितः, पूर्वकाण्डयोरान्यपर्य्यात् । शास्त्रान्तरे तु प्रसङ्गाभावाद्विरुद्धोक्तेश्च नच ध्वांक्षदन्तसंख्यावदनिरूप्यः, स्वगृहविनिक्षिप्तबृहन्निधिसामान्यात्तदधीनबृंहण-त्वरूपरक्षोक्तेश्च । नच मुक्तिःसिद्धा, प्रत्यक्षादिविरोधात् । नाऽप्यन्येन साध्या, देहादिसृष्ट्या बन्धकस्यैव पुरुषस्य स्वनन्तृमुक्तिहेतुत्वात् । नाऽप्यन्येन विरोध्या, एतस्य स्वायत्ताखिलसत्ताकानिस्समाभ्यधिकत्वात् । सतोऽपि सा दुष्प्रापा, तस्य तदेकदीक्षितत्वात् । न स्वर्गादिवत्पुनरावृत्त्यादिभिर्दुरन्ता, निग्रहादेर्निःशेषनिवृत्त-त्वात् । नच समव्यत्ययफला, सुखोपायेन निरवधिकसुखलब्धेः । नाऽप्यत्राऽधि-

# पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृताम् ।

कार्य्यभावः, यथाश्रुति 'विनतविविधभूते' तिसामान्यतो 'ममे'ति विशेषतश्च व्यञ्जनादिति ।

प्रतितन्त्रविहीनत्वादनारभ्यत्वमित्यपि ।
असाधारणरूपेण भाषणेन निराकृतम् ॥ + ॥

श्रूयते हि सर्वशरीरत्वं सर्वान्तर्यामित्वमित्याद्यर्थजातमत्रैव ।

अथवा

सर्वानिष्टमिहानूक्तं तावतापि किमागतम् ।
तस्मात्प्रामाणिकं चिन्त्यं परेष्टमथवान्यथा ॥ ७ ॥
आभिमानिकमानैश्च सिद्धान्ताः स्थापिताः परैः ।
साधारण्यं क वा न स्याद्वैपुल्याद्देशकालयोः ॥ + ॥

प्रतिपदमिह युक्तिं भाष्यकाराशयस्थाम्
कथयितुमुतमन्तुं कः प्रभुस्तां प्रभूताम् ॥ ७ ॥
तदपि कतिचिदस्मद्दर्शितं किञ्चिदेत-
द्धुतफलमवयन्तस्स्वादयिष्यन्ति सन्तः ॥ ७ ॥

इति श्रीमद्वेदान्तदेशिकनिर्मिताऽखिलेत्या-
दिश्लोकस्य तत्त्वटीका समाप्ता ।

* श्रुतप्रकाशिका *

श्रुतेरेवोपायोपेयावगतौ सत्यां किं भवतोवक्तव्यमित्यत्राह "पाराशर्येति" प्रथमश्लोकेन स्वप्रबन्धस्य परमप्रयोजनतया सिद्धरूपः परमविषयोदर्शितः साध्यरूपं प्रयोजनं च रक्षापदेनातिसङ्क्षिप्तम् । अथ द्वितीयेन श्लोकेन स्वप्रबन्धस्यावान्तरविषयः,परम्परया ब्रह्मविषयत्वं, स्वप्रबन्धं प्रति सम्यग्ज्ञानस्याव्यवहितावान्तरप्रयोजनत्वं,परम्परया मुक्तेः परमप्रयोजनत्वं,स्वव्याख्येयस्य प्रमाणमूलताकथनेन व्याख्येयान्तराणामप्रमाणमूलता, स्वव्याख्येयविषयभाष्यान्तरव्यावृत्त्यर्थं स्वोक्तार्थस्य साम्प्रदायिकत्वमित्यादिश्रौतमुच्यते, स्तुत्यात्मकगुरूपासनरूपमङ्गलाचारश्चार्थतः क्रियते "जायमानं हि पुरुषं यं पश्येन्मधुसूदनः" । "तद्विद्धि प्रणिपातेन"

संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीविनीम् ॥

* श्रुतप्रकाशिका *

"ददामि बुद्धियोगन्त" मित्यादिभिराचार्योपसत्तेरपि भगवत्कटाक्षहेतुकत्वावगमात् परदेवतोपासनानन्तरभावित्वं गुरूपासनस्य युक्तम् । । तथा च श्रुतिः— "यस्य देवे परा भक्तिर्यथा देवे तथा गुरा" विति । पूर्वैरपि तथा चरितम् । यथा भगवता वैशम्पायनेन "नमस्कृत्य हृषीकेशम्" नमो भगवते तस्मै व्यासाये" ति । यथा च द्रमिडाचार्यैः । "नमःप्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे नमो जैमिनये वेदरहस्यसम्पुटनिगूढविस्फारयित्रे न्यायप्रज्वलितचेतसे नमोस्त्वाचार्येभ्य" इति। पाश्चात्यैश्च "विशुद्धज्ञानदेहाय" "अभिवन्द्य गुरूनादा" विति "प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वत"इति । पाराशर्य–शब्देन जन्मोत्कर्षः "सहोवाच व्यासः पाराशर्यः" इति श्रुतिसिद्धः । तस्यैव बादरायणसंज्ञत्वं च विवक्षितम्, यथोक्तम् महर्षिणैव "द्वीपे बदरिकामिश्रे बादरायणमच्युतम् । पराशरात्सत्यवती पुत्रं लेभे परन्तप"मिति, यद्यपि ऋष्यन्तरेऽपि बादरायणशब्दप्रयोगः, तथापि सूत्रकृद्विषयो बादरायणशब्दः पाराशर्यगोचर एव, तथाच स्कान्दे व्यक्तमुक्तम् ।

नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
किंचित्तदन्यथा भूतं त्रेतायां द्वापरे खिलम् ॥ + ॥
गौतमस्य ऋषेः शापात् ज्ञाने त्वज्ञानतां गते ।
सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥ ÷ ॥

* तत्त्वटीका *

अत्रैवं वरगुरुस्तुत्यादिविशिष्टमङ्गलान्तर्हितपरमविषयाद्युक्त्याऽस्य शास्त्रस्याऽनारभ्यत्वमप्यपास्तं । अथ "नमस्कृत्य हृषीकेशं" "नमोभगवते तस्मै व्यासाय" इत्याद्याचारक्रमेणावरगुरुकीर्त्तनादिरूपमङ्गलगर्भावान्तरविषयाद्युक्त्या विधित्सितस्य स्वप्रबन्धस्याऽनारभ्यतां निरस्यति "पाराशर्ये" त्यादिना 'व्याख्यास्यन्त' इत्यन्तेन ।

कुहकोक्तं भ्रमोक्तं वा निष्फलं निष्परिग्रहम् ।

**पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-**

---

* श्रुतप्रकाशिका *

शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
तैर्विज्ञापितकार्यस्तु भगवान्पुरुषोत्तमः ॥ ÷ ॥
अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
उत्सन्नान्भगवान्वेदानुज्जहार हरिस्स्वयम् ॥ ÷ ॥
चतुर्द्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
शतधा चैकधा चैव तथैव च सहस्रधा ॥ + ॥
कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥ + ॥
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदोविदुः ॥ + ॥
निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः ।
सविशेषाणि सूत्राणि ह्यपराणि विदो विदुः ॥ × ॥
मुख्यस्य निर्विशेषेण शब्दो ऽन्येषां विशेषतः ।
इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः ॥ + ॥
एवंविधानि सूत्राणि कृत्वा व्यासो महयशाः ।
ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु ॥ ७ ॥

* तत्त्वटीका *

स्पष्टदुर्निर्वहं बोद्धृहीनमन्योज्वलं न हि ॥ ÷ ॥

'अथैतच्छास्त्रं लोकायतादिवत्प्रतारकप्रोक्तं भ्रान्तिमूलं निष्प्रयोजनमपरिगृहीतं स्पष्टार्थं विवक्षिते नेतुमशक्यमनधिकारिकमन्यतश्चरितार्थं वा स्यात्, न तर्हि व्याख्येयमिति शङ्काऽत्र क्षिप्यते । पराशरः—परान् बाह्यकुदृष्टीन् प्रमाणतर्कैराशृणातीति पराशरः । तस्याऽपत्यं पाराशर्यः, न तादृशापत्यमतादृक्स्यादितिव्यक्त्यै पाराशर्योक्तिः । श्रुतिश्च "सहोवाच व्यासः पाराशर्य" इति । अत्र स्वगुणः पितृगुणेन ख्याप्यते । नाऽत्रसूत्रकृद्बादरायणसामान्य इतिमन्तव्यं, द्वीपे बदरिकामिश्रे बादराय-

# मानीतान्तु निजाक्षरैस्सुमनसो भौमाःपिबन्त्वन्वहम् ॥

* श्रुतप्रकाशिका *

ज्ञानं संस्थाप्य भगवान् क्रीडते परमेश्वरः ॥ इत्यादिना ।

( वचस्सुधां ) वचशब्दस्यार्थे तात्पर्यं यथा 'वेदविच्छास्त्रवित्' इत्यादौ वेदादिशब्दानाम्, अर्थाभिधायकं हि वाक्यम् । वचसः सुधामिति केचिदाचार्याः रूपकप्रकरणात्ः, सुधाशब्दलक्षणाभयाच्च; सुधेव वच इति "उपमितं व्याघ्रादिभि" रित्यादिसमासमपर आचार्या आद्रियन्ते । सुधाशब्देन भोग्यत्वमभिप्रेतम् । एवं मतान्तरविषय उक्तः । तर्हि कथं ब्रह्मणो विषयत्वमिति शङ्कायां सद्वारकं ब्रह्मविषयत्वमित्याह ( उपनिषदिति ) ब्रह्मण्युपनिषण्णेत्युपनिषत् "उपनिषण्णत्वा-

* तत्त्वटीका *

ख्यमच्युतम् । पराशरात्सत्यवती पुत्रं लेभे परन्तपम् ॥" इत्यादिप्रसिद्धेः । तस्य च ब्रह्मसूत्रकृत्वं स्कान्दोक्तं "अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान्भगवान्वेदानुज्जहार हरिस्स्वयम् ॥ चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैव च सहस्रधा ॥ कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा ॥" इति । "ब्रह्मसूत्रपदैश्चैव" इतिभाविदर्शिभगवद्वाक्यं सूत्रपश्चाद्भावि वा स्वयमेव भारते न्यबध्नात् । सूत्रविषयतया च तद्वाक्यरूपा प्राक्तनी भाविनी वा कृतिरुदाह्रियत इति न परस्परविरोधः ।

अथवाऽनादिसिद्धत्वात्स्मृतिसूत्रप्रवाहयोः ।
परस्परगृहीतिस्तु न विरोधाय कल्पते ॥ + ॥

आह च परभाष्यव्याख्याता "ब्रह्मसूत्रकृते वेदव्यासायाऽपरवेधसे । ज्ञानशक्त्यवताराय नमो भगवते हरेः ॥ इति । सुधाशब्देनाऽस्यार्थस्य भोग्यत्वं दर्शयतीविवरणम् । अत्र च वचसः सुधेतिविग्रहे सुधाशब्दस्य गौणीवृत्तिः । रूपकप्रकरणानुरोधेन वा वचश्शब्दलक्षितस्तदर्थस्सुधात्वेन रूप्यते । यद्वा सूत्रमेव वा सुधेति रूपितम् । उपनिषद्विमर्शोत्थन्यायरूपार्थद्वारा उद्धृतत्वाद्युक्तिः । ननु श्लेषोपस्कृतनिजाक्षरानीतत्वादिसामान्यप्रयोगे कथमिहो "पमित" मित्यादिना समासः । इत्थं, समाससूच्यं स्वादुत्वसामान्यमिहाप्रयुक्तं तदन्यस्य प्रयोगेऽपि न दो-

* श्रुतप्रकाशिका *

द्रोपनिषदि''ति हि वाक्यम् । ''गहने हीयं विद्या सन्निविष्टे''ति तद्विषयं द्रमिडभाष्यम् । ''गहने ब्रह्मण्युपनिषण्णे''ति भाष्यविवरणा आनन्दटीका, अद्वारकभगवत्प्रतिपादकत्वम् उपनिषण्णत्वम् । ( दुग्ध ) शब्देन पूर्वभागादप्युपनिषदः सारत्वं विवक्षितं यथा ''आरण्यकं च वेदेभ्यः औषधीभ्यो यथाऽमृतमिति ( अब्धि ) शब्देन आलोचितानामुपनिषदामानन्त्यादि सूचितम् । ( मध्य ) शब्देन सर्ववाक्यानां मुख्यार्थापरित्यागोऽभिप्रेतः, मध्यस्य सर्वपर्यन्तदेशापेक्षया तुल्या ह्यासत्तिः (उद्धृत) शब्देनाऽतिनिम्नदेशनिमग्नोद्धरणमप्यभिदधता निश्शेषार्थग्रहणं सूच्यते । स्वप्रबन्धस्यावान्तरविषयः पाराशर्यसूत्र तस्यावान्तरविषय–उपनिषत् । तद्विषयभूतं ब्रह्मेति परम्परया ब्रह्मणः प्रतिपाद्यत्वं बादरायणसूत्राणामुपनिषन्मूलकत्वकथनेन सांख्यादिग्रन्थानामप्रमाणमूलत्वात्तदनादरेणैतद्व्याख्यानमिति सूचितम् । प्रणाड्या शास्त्रजन्यं परमप्रयोजनमाह ( संसारेति ) ।

× तत्त्वटीका ×

षः, भाष्याब्धिगम्भीर इत्यादिवत् । वैधर्म्यरूपत्वं वा विशेषणेष्विह सर्वेषु योज्यं । सुधा ह्यमृताक्षरोपचरितैरन्यस्य च्छन्दसोऽक्षरैरानीता, इयन्तु स्वाक्षरैरेव, सुधा किल केवलदुग्धाब्धिमध्योद्धृता—इयन्तूपनिषद्दुग्धाब्धिमध्योद्धृता, इत्थं शेषमपियोज्यं ।

साधर्म्यात्स्वादुतासिद्धिस्तथा स्वादुतमत्वधीः ।
वैधर्म्यादिति वैषम्यं भाव्यमत्र मनीषिभिः ॥ ÷ ॥
यद्विवक्षितसामान्यं तत्प्रयोगो निषिद्ध्यते ।
उक्तिस्तदन्यसामन्यविषयानविरुध्यते ॥ ४ ॥
विवक्षितन्तु सामान्यं स्वादुत्वादिकमिष्यते ।
तत्पुनर्नोच्यते साक्षात्समासस्तेन सिद्ध्यति ॥ * ॥
अविवक्षितसामान्यप्रयोगः काव्यशास्त्रयोः ।
दृश्यते बहुशस्तस्मान्नसमासोऽत्र दुष्यति ॥ ÷ ॥

''औषधीभ्यो यथामृत'' मितिवच्छिरश्शब्दाभिप्रायव्यक्त्यर्थउपनिषच्छब्दः उपनिषीदति–अव्यवधानेन नित्यं समन्वेतीत्यनन्यपरांशोक्तिः, तथाच वाक्यं

* श्रुतप्रकाशिका *

संसाराग्निशब्देन संसारस्य कार्त्स्न्येन तापत्रयरूपता विवक्षिता, यथा "स्वर्गेपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृति"रिति । (दीपन) शब्देनाऽसङ्कोचात् सदाभिज्वलनवाचिना विद्यालब्धेः पूर्वं कदाचिदप्यनिवार्यत्वमभिप्रेतं वैविध्यमाध्यात्मिकादिरूपेण, तेषु त्रिष्वेकैकस्यापि शारीरमानसादिरूपेण च । आत्मनां [प्राणः] परमात्मा । "सर्वाणि ह वा इमानि भूतानि प्राणमेवाऽभिसंविशन्ति" "कोह्येवान्यात्कः प्राण्यादि"ति श्रुतेः [गत] शब्देन तदलाभः, उपसर्गाभ्यां

× तत्त्वटीका ×

"उपनिषण्णत्वाद्वोपनिषदिति । तत्र द्रमिडभाष्यं "गहने हीयं विद्यासन्निविष्टे"ति । तस्य वामनटीका "गहने—ब्रह्मणि, उपनिषण्णे"ति । भाष्यस्य सूत्राणि, तेषामुपनिषदः, तासां ब्रह्मेति विषयक्रमः । प्रयोजनानि च यथार्हाणि । "आरण्यकञ्च वेदेभ्य" इतिश्रुतिधेनुसारभूतस्वादुतमरसतयाऽऽनन्त्यगाम्भीर्यादिभिश्च दुग्धाब्धित्वोक्तिः । मध्यस्याशेषपर्यन्तासक्तिसाम्यात्तद्वत्त्या सर्वश्रुत्यानुगुण्यवृत्तिः, उद्धृतत्वोक्त्याऽर्थस्याऽकल्पितत्वमामूलग्रहणञ्च ख्याप्यं । "संसारे" त्यादिकमपेक्षिततमावान्तरप्रयोजनकथनम्, "अस्ति ब्रह्मेतिचेद्वेद" इत्यादिश्रुतेः । वाक्यार्थनिर्धारणे च सूत्राणां विश्रमात् । अचिद्भिरेकीकृत्य जन्मादिप्रवाहप्राप्तिस्संसारः । यद्वा संसरत्यनेति संसारः कर्म । स तु स्वर्गादेरपि तापत्रयमयत्वादग्नितयोक्तः । दीपनं क्लेशकर्मादिज्वालोद्गतिः । सा चाऽपवर्गप्रतिकूलतया संसृष्टनाशकावस्था । तद्वैविध्यमविद्यादिभेदात्पञ्चधा त्रिधा द्विधेत्यादि तत्र तत्र कथ्यते । अत्र शारीरादिविविधदुःखावहतया च वैशिष्ट्यं विशब्दार्थः । अत्र प्राणः प्राणिनां प्राणनहेतुः परमात्मा, "न प्राणेन नाऽऽपानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥" "प्राणस्य प्राणं" "प्राणमेवाऽभिसंविशन्ति" इत्यादिश्रुतेः । "प्राणस्तु प्रणवे जीवे जीविते परमात्मनि" इति च पठ्यते । अपगतःअतिदूरस्थः, शास्त्रेषु दर्शयत्स्वपि कूटयुक्त्यादिभिरयथावदसद्ब्रह्मेतिवेद्यतां प्राप्तः । विशब्दः श्रवणाद्यन्यतमेनाऽप्यनाप्राप्तत्वपरः । विशेषतो वाऽपगतःस्वयमवतीर्य स्वात्मानं दर्शयत्यपि व्यावृत्ततया दुर्दर्शः । अत्र 'प्राणो ज्ञान,मिति न्यायसुदर्शनम् । आत्मनां तद्गुणसारतया तदंशोक्तिः । तदा व्यपगति-

* श्रुतप्रकाशिका *

तस्याऽनादित्वं विविधत्वं च विवक्षितं, ज्ञानदर्शनप्राप्तिष्वन्यतमस्याप्यभावाद-लाभस्य वैविध्यम् । [ सञ्जीविनी ] मिति जीवनमुज्जीवनम्--संसारोन्मूलनम् । [ स ] मिति कैवल्यव्यावृत्तिः ।

अथ सांप्रदायिकत्वमाह [ पूर्वेति ] पूर्वशब्देन शङ्कराद्यर्वाचीनव्यावृत्तिः [ सुरक्षितां ] नोपदेशमात्रेण ग्रन्थरूपेण चेति भावः । पूर्वाचार्यग्रन्थैरर्थस्वरूपं प्रतिपन्नं चेत् किंभवतः कृत्य ? मित्यत्राह [ बहुमतीति ] बह्व्यो मतयो बहूनां मतयो वा तासां परस्परव्याघातेन, ताभिः समीचीनार्थव्याघातेन च अर्वाचीनजनै-

* तत्त्वटीका *

रतिसङ्कोचः । व्यपगतप्राणानां सञ्जीवनं नाम बाह्यकुदृष्ट्यनपहार्य्यप्राणस्थापनम् । तन्मुखेन रक्षोक्तिसङ्क्षिप्तप्रयोजनविवरणं वैतत् । तदा तूपसर्गेण स्वात्मप्रापणादि-मात्रव्युदासः । पूर्वाचार्य्याः बौद्धजैनगन्धिभ्योऽन्ये । औपदेशिकी रक्षा तदैव तत्रैव; ग्रान्थिकी तु कालान्तराद्यनुच्छेदात्सुरक्षोक्ता ।

रक्षितत्वन्तु रामार्य्यैस्त्रय्यन्तार्थे हि सूचितम् ।
आत्मसिद्ध्यादिभिः प्रोक्तं यामुनार्य्यनिबन्धनैः ॥ + ॥

सुधा--सुरक्षितशब्दाभ्यां वक्तृस्तुतिरार्थी । सुधा तु सुरुगुरुचक्रयन्त्रादिभिर्दृढगुप्ता । सुरक्षितत्वेऽपि त्यक्तसम्प्रदायैः कुदृग्भिः क्षोभितत्वमाह ( बह्विति ) बह्व्यः— मिथोविरुद्धाः, बहूनां वा मतयः, ताभिर्व्याघातः—विविधा अभिव्याप्ता पीडा, स्वारसिक ( धी ) विरोध, इत्यर्थः । तेन, दूरस्थितां— बोद्धॄणां रजस्तमस्तारतम्यादबोधासमग्रबोधान्यथाबोधार्हामित्यर्थः ।

अबोधश्चायथाबोधस्तत्त्वबोधविरोधिनौ ।
अनिश्चितावबोधेऽपि तथा बोधकृतास्थिता ॥ ÷ ॥
सद्भिर्यदि विर्गायेत न सङ्गृह्येत पश्चिमैः ।
न तन्मतानुसारश्च सत्यं स्याद्याजिहीर्षतः ॥ × ॥
कुदृष्टिभिश्च बाह्यैश्च यदि वाऽभ्युपगम्यते ।
कः स्वपक्षतया रक्ष्यः परपक्षश्च को भवेत् ॥ + ॥
तदत्र चतुरध्याय्यां साधनाक्षेपभागयोः ।

* श्रुतप्रकाशिका *

दुरवगमत्वमाह [ दूरस्थिता ] मिति न यथावदप्रतीतिमात्रम्, अन्यथा च प्रतिपत्तिरासीदिति भावः । सूत्राद्यवान्तरविषयस्य विषयी स्वग्रन्थ इति पूर्वं न कण्ठोक्तं तदाह ( आनीता)मिति सुधापक्षे निजाक्षरैर्गायत्र्यवयवभूतैरमृताक्षरैरिति यावत्, अतो मदक्षरैरित्यनुक्तिः, (सुमनसः) सारासारविवेकज्ञा इत्युक्ताः अनेनासदपरिग्रहो न दोषायेत्युक्तं भवति, देवादीनां वृत्तिकारग्रन्थैः सुगमत्वात् (भौमा) इत्युक्तम् ( पिबन्त्वन्वह)मिति रस्यतातिशयान्नतृप्तिकरीति भावः । फलान्तराद् भगवत्प्राप्त्युपाय एव हि स्वादुतमः । यथोक्तम् "क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क्व जपो वसुदेवेति मुक्तिबीजमनुत्तम"मिति । यद्वा । गम्भीरत्वादन्वहं शीलनीयेति भावः ।

* तत्त्वटीका *

निदानमभिसन्धाय निर्दिष्टं भेदतो द्वयम् ॥ + ॥

सुधा तु विरुद्धमतिदैत्यादिव्याघातभयाद्दूरस्थिता । यद्वा कद्रूविजितायाः सुपर्ण्यास्तथा बहुमतिव्याघातदशायामात्मनिष्क्रयणार्थमाहर्त्तव्यतया दूरे तृतीयस्यां दिवि स्थिता । स्वव्याख्यानस्याऽप्यन्यैर्व्याघातादसामार्थ्यापरिहार इत्यत्राह ( आनीतां ) बुद्ध्यासन्ने स्वार्थे स्थापिताम् । एतेन व्याख्यातद्वतोस्सम्बन्धश्शोधितः । परेष्टव्यावहारिकसाधकव्यावृत्त्यै तद्व्यनक्ति ( निजाक्षरैरिति ) वचःप्रस्तावात् तदक्षराणि निजाक्षराणि, सूत्राक्षराणीति वक्ष्यमाणत्वात् । यथा विवरणं "सूत्राक्षराणि यमर्थं स्वरसतो बोधयन्ति, स एव साम्प्रदायिकः वक्तुस्स्वसमीहितार्थवाचकशब्दप्रयोगव्युत्पत्तेः स्वरसतः परप्रत्यायनार्थत्वाच्छब्दप्रयोगस्य" इति । बहूनां व्याख्यानानां मिथोव्याघाते व्याख्येयस्वारस्यं सम्प्रदायव्यवस्थापकमितिभावः । सुधा तु सोमाख्या सौपर्णाख्यानप्रसिद्धैर्गायत्र्यवयवैरमृताक्षरैस्सहानीता । मदुक्तिभिरिति वाऽर्थः । तन्त्रतः स्सुधासमाधिसिद्ध्यै तथानुक्तिः । सुधायाः सुमनसो देवा भोक्तारः । यद्वा गायत्र्यभिमानिसुपर्णानीतायाः सोमलतारूपेण परिणताया एकाहाद्युपयुक्ताया भौमास्सुमनसः प्रतिसमयं भोक्तारः । वचोरूपायास्तु ब्राह्मणा विविदिषन्तीति वचोदनानर्हव्यावृत्ताः 'सारासारविवेकज्ञा' इत्यादिना स्वेनैवाऽन्यत्रोक्ताः । एतेन ब्रह्मविद्यासम्प्रदानम-

# भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुस्तन्मतानुसारेण सूत्राक्षराणि व्यख्यास्यन्ते ।

* श्रुतप्रकाशिका *

तर्हि पुरातनग्रन्था एव वाचयितव्याः किमपूर्वग्रन्थनिर्माण—तत्प्रवर्तनयत्नगौरवेणेति शङ्कायामाह । [भगवदिति] भगवच्छब्देन शङ्करादिवदनाप्तत्वन्नास्तीत्यभिप्रेतम् । (बोधायन) शब्देन पूर्वाचार्यशब्दोऽप्यर्थाद्विवृतः [विस्तीर्णां सञ्चिक्षिपु]रित्यनेनवृत्त्यादीनामत्रत्येष्वद्यतनजनेष्वकार्यकरत्वं सूचितम् । बोधायनेन ह्यतिविस्तीर्णा वृत्तिः कृता; द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपायनादरेणाऽतिसंक्षिप्तान्ग्रन्थानरचयन्, अतिविस्तीर्णातिसंकुचितग्रन्थानां साफल्यमायुष्मद्बुद्धिमज्जनप्रचुरेषु देशकालान्तरेषु एव भवति नहीदानीन्तनपुरुषाणां सर्वेषां शतायुष्ट्वं यावज्जीवं ग्रन्थपरिश्रमः सहजधीविशेषाश्च सन्ति । तस्मात्परमतनिरासाद्यर्थमनतिविस्तरतया सुग्रहत्वार्थं च सूत्रं व्याख्यातव्यमिति यावत् । ( तन्मतानुसारेण )

* तत्त्वटीका *

पि शिष्यते । श्रुतंह्येतच्छान्दोग्ये "इदंम्वाव तज्ज्येष्ठाय पुत्राय पिता प्रब्रूयात् प्राणाय्याय वाऽन्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय" इति । प्रणाय्यः—— प्रश्रितत्वानसूयत्वऋजुत्वादिभिर्योग्यः । नहि भौमास्सुमनस इति भूसुरमात्रोक्तिर्युक्ता, अधीतवेदवर्णत्रयार्हत्वान्मीमांसायाः । स्वतो विदुषां स्वर्गादिभुवां प्रायो न सूत्रव्याख्यानापेक्षा, सत्यामपि तस्यां विशालधीयोग्यैर्वृत्त्यादिभिस्ते चरितार्थाः, अतो वृथाऽत्र भौमत्वोक्तिः । पिबन्तु——अयत्नंसुखमनुभवन्तु ॥ यत्नो हि सुधायां मन्थनत आनयनतश्च । अन्वहम् अतिगम्भीरत्वादत्यन्तहृद्यत्वाच्च ॥

सुधेयं सूत्रकारेण हरिणेव समुद्धृता ।
आनीता भाष्यकारेण द्विजेन्द्रेणेति चाशयः ॥ ×

तथापि किमहर्दीपवदनुपकारकृतकरनिर्माणगौरवेण,

अनुच्छिन्नाश्शुद्धाः प्राचीनव्याख्याः प्रवर्त्यन्तां, तत्राह ( भगवदिति ) उत्पत्तिंप्रलयञ्चैव' त्याद्युक्ताध्यात्मबोधातिशयपरोऽत्र भगवच्छब्दः । तेन शावरशङ्क-

# ॥ ❀ ॥ अथाऽतो ब्रह्मजिज्ञासा ॥ ❀ ॥ १ ॥

* श्रुतप्रकाशिका *

न तु स्वोत्प्रेक्षितमतान्तरेण ( सूत्राक्षराणि ) सूत्रपदानां प्रकृतिप्रत्ययविभागानुगुणं वदामः न तु स्वोत्प्रेक्षितार्थेषु सूत्राणि यथाकथञ्चिद्योजयितव्यानीति भावः । [ व्याख्यास्यन्ते ] व्याङ्भ्यामुपसर्गाभ्यामपेक्षितविस्तरसंक्षेपौ द्योतितौ ।

ननु "सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु"रिति हि भाष्यलक्षणम् । अतः सूत्रव्याख्यानरूपत्वाभावादखिलेत्यादिकं न भाष्यान्तर्भावीति चेन्न । सूत्रतात्पर्यार्थपरत्वाद् भाष्यान्तर्भाव्येव । सूत्रतात्पर्यार्थपरत्वं च श्लोकव्याख्याने स्पष्टम् । किञ्च मङ्गलाचरणं प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्याद्यर्थतया तदुपयोगीति तदन्तर्भाव्येव । शावरशाङ्करा-

* तत्त्वटीका *

रादिव्यावृत्तिः । विस्तीर्णत्वोक्तिरयतनैर्दुस्तरत्वमभिप्रैति । अत्र पूर्वाचार्याः ब्रह्मनन्द्यादयः । तन्निबन्धनानामतिसङ्क्षेपाद्गहनत्वं सूचयति ( सञ्चिक्षिपुरिति ) "सूत्रस्थापितार्थपरैर्ग्रन्थैरित्याशयः, परोक्तेरनाप्तसम्प्रदायत्वं वक्तुमाह ( तन्मतानुसारेणेति ) "अल्पाक्षरमनल्पार्थं" "लघूनि सूचितार्थानि स्वल्पाक्षरपदानिच" इति । सूत्राणां बह्वर्थसूचकाल्पाक्षरतया व्याख्यापेक्षत्वायाह ( सूत्राक्षराणीति ) प्रकृतिप्रत्यययोरक्लेशमभिप्रेत्याऽक्षरशब्दः । तेन "सूत्राणि यथासम्भवं द्रष्टव्यानि" इति परोक्तिरनास्थेया । उक्तं च भास्करैः "सूत्राभिप्रायसम्वृत्या स्वाभिप्रायनिवेशनात् । व्याख्यातं यैरिदं शास्त्रं व्याख्येयंतन्निवृत्तये" इति । अक्षरार्थमात्रं ब्रूमः, सूच्यन्तु निश्शेषदुर्वचं, अक्षरशक्त्यतिरिक्तस्फोटो न कल्प्यत इत्यपि व्यङ्ग्यम् । व्याख्यास्यन्त इत्यत्रोपसर्गाभ्यां धातुना चाऽद्यतनबुद्ध्यनुगुणमनतिसङ्कोचविस्तारं स्पष्टोक्तिश्च व्यज्यते । यद्वा वैशिष्ट्यं प्रावल्यञ्च निपातद्वयार्थः । 'पदच्छेदः पदार्थोक्ति' रित्यादिच भाव्यं । अखिलेत्यादेरेतदन्तस्य "सूत्रार्थो वर्ण्यते" त्याद्युक्तं भाष्यलक्षणं तदर्थसङ्ग्रहात्वादर्थ्याच्च सिद्धम् । ७ । व्याख्यापेक्षत्वव्यक्त्यै सूत्रमुद्गृह्णाति ( अथेति ) अत्राऽथातइति पिण्डितं रूपमव्युत्पत्तेः पृथगर्थसम्भवादंशान्तरमैरर्थ्यक्याच्च नयुक्तम् । क्लृप्तगतिस्तु न गतिसद्भावे । अथश-

# अत्रायमथशब्द आनन्तर्ये भवति ।

* श्रुतप्रकाशिका *

दिभाष्येषु नमस्कारादर्शनादत्र नमस्कारकथनमयुक्तमितिचेन्न "नमः प्रवरगुणैका- स्पदाये" ति द्रमिडभाष्ये देवतागुरुनमस्कारश्रवणात्, शावरशाङ्करयोस्त्वीश्वरा- नभ्युपगमाज्जीवब्रह्मभेदानभ्युपगमाच्च नमस्यानादरः । अत्र तु सिद्धान्तानुरूप्या- न्नमस्यात्यन्तोपपन्ना, शाङ्करग्रन्थोपक्रमे च व्याख्यातृभिर्नमस्काराद्यभावात् कुग्रन्थ- त्वमाशङ्क्य 'युष्मदि' त्यादिग्रन्थेन प्रत्यगर्थानुसन्धानेनाऽर्थान्मङ्गलाचारः कृत इति परिहृतम् ।

"अथातो ब्रह्मजिज्ञासा" पूर्वं पदानि व्याचिख्यासुः प्रथममथ–शब्दं व्याचष्टे । ( अत्रायमथशब्द आनन्तर्ये भवति ) "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्य-

* तत्त्वटीका *

ब्दस्याऽऽनन्तर्ये प्रसिद्धिः प्रकृष्टाऽपि सोपयोगासाधारणवृत्तविशेषादृष्ट्याऽपोदिता, अत एव न प्रकृतादर्थान्तरपरत्वं, कल्पद्वयादृष्टेश्च, प्रश्नस्त्वनर्थकोऽनुत्तरश्च कार्त्स्न्येमनपेक्षितवचनं, एकदेशचिन्ता हि न शङ्कारूढा, तस्मादारम्भार्थकत्वं स्यात्, आरभते ह्यत्र सूत्रकारः, मङ्गलार्थत्वं वा, स्मर्यते हि "ओङ्कारश्चाऽथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठम्भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" । इति, तत्राह ( अत्रेति ) भवतिनाऽथशब्दस्य स्वारस्यानुक्तिः । अत्राऽयम्पदाभ्यामपवादापोहः अत्र वेदोत्तरांशविचार्यत्वार्थे सूत्रे । तेन यतः कुतश्चिद्वा भागान्तरसाधारणाद्वा कुतश्चिदानन्तर्योक्तेरानर्थक्यात्कर्मविचाररूपं वृत्तं विविनक्ति । अयं–"अथाऽतो धर्मजिज्ञासा" "अथाऽतः क्रत्वर्थपुरुषार्थजिज्ञासा" इत्यादिष्विवाऽतशब्दोपेतः । एतच्छब्दो हि प्रस्तुते स्वरसः, विभक्तिश्चाऽसौ हेतुत्वे । एवं सामान्यतोऽत इत्यभिहिते ब्रह्मजिज्ञासया विशेषत आक्षिप्ते वृत्ते सत्यानन्तर्यस्वारस्यं नापोद्यते । अथाऽत इतिसमुदितप्रयोगनिरपेक्षसामर्थ्यव्यक्त्यर्थोऽत्रायं शब्द इति केचित् । अत्रेत्यादिनैवाऽर्थान्तराणामिहाऽनन्वयस्सूच्यते । तथाहि । मङ्गलार्थत्वं तावत्प्रतिक्षिपामः । तत्किमस्याऽविवक्षितार्थस्य सन्निधिमात्रेण, तद्वाचकतया वा ? नाऽऽद्यः, अबोधकस्य वाक्ये निबन्धनायोगाच्छ्रुतप्रयोजनमात्रस्य मङ्ग-

* श्रुतप्रकाशिका *

योजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षण''मिति हि व्याख्याप्रकारः ।

ननु नैतावथातः-शब्दौ व्याख्येयौ प्रयोजनाभावात्, अज्ञान-संशय--विपर्ययनिवृत्त्यर्थं हि व्याख्यानम्, न तावदत्राज्ञानम् आनन्तर्ये, प्रकृतस्य हेतुभावे च, तयोः प्रसिद्धत्वात् । नापि संशयः, अर्थान्तरेषु सत्स्वपि तयोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यात्, न हि गोशब्दं शृण्वतः सास्नादिमति संशयो जायते, अत एव विपर्ययोऽपि दूरोत्सारितइति । अत्र ब्रूमः । आनन्तर्य-वृत्तहेतुभावपरत्वनिर्ण-

× तत्त्वटीका ×

लस्य पदान्तरार्थेऽनन्वयाच्च । विवक्षितार्थोऽन्तरस्याऽपि सन्निध्युपजीवनोपपत्तेश्च । न द्वितीयः, द्योतकमात्रत्वात् 'अथशब्दानुशासन' मित्यादावर्थं वदद्भिरप्यधिकृतमित्यादिपदमध्याहारेणोक्तं, नत्वर्थशब्दवाच्यत्वमभिसन्धाय । वाच्यत्वेऽप्यत्रमङ्गलस्य वक्तव्या सङ्गतिः । मङ्गलोक्तेः प्रकृतौपयिकमङ्गलत्वेऽप्यनुनिष्पत्त्यैव तत्सिद्धिर्युक्तेत्युक्तं ।

मङ्गलध्वनिनीतिन्तु वक्ति माङ्गलिकी स्मृतिः ।
प्रयोक्तुश्श्रोतुरप्येतौ मङ्गलप्रापकाविति ॥ ÷ ॥

अन्यथा ब्रह्मशब्देनाऽन्यपरत्वं, भिन्नत्वं वाक्यस्य, भवत्वित्यध्याहारश्च स्युः । अकृतकसर्वोत्तुङ्गमङ्गलतमतत्ववाचकत्वाद्ब्रह्मशब्दस्य । नचाऽत्र हेतोस्साध्यस्य वा मङ्गलत्वमनूद्यते, विधीयते वा, नैरर्थक्यात् । नह्यत्र तद्विरुद्धत्वाशङ्का, अनिषेधात् । न्यायसूत्राणि च संशयनिरासार्थानि । ननु मङ्गलत्वं विचारस्य व्याप्यताम्, अत एव तद्विधिरिति तत्सार्थता । तदपि मन्दं, अत इति हेतुनैराकाङ्क्षाद्धिकोक्तेरनुपयोगाच्च । आरम्भार्थत्वमप्ययुक्तं, नारभ्यत इतिशङ्कानुत्थानात् । साध्यतया बुद्धस्यारम्भस्य कथनानर्थक्याच्च । नच जिज्ञासाया आरम्भयोग्यत्वमथशब्दो वक्ति द्योतयति वा, अव्युत्पत्तेः । योग्येतिपदाध्याहारेऽप्यनन्वयः, आरब्धुमिति क्रियानुपस्थानात् । अन्यथा समुच्चयादिद्योतकेष्वपि समुच्चेतुमित्यादिविवक्षया योग्यपदान्वयप्रसङ्गात्, आरब्धव्येत्येव च पदमध्याहार्यं, तदा किं तदर्थेनाऽथशब्देन । नचाऽत्राध्याहारार्थद्योतनं, साकाङ्क्षतयैव तत्सिद्धेः । प्रसिद्धप्रहाणेन क्लिष्टग्रहणायोगाच्च । योगशब्दानुशासनयोरानन्तर्यमगत्या त्यक्तं । अत्र तु न

* श्रुतप्रकाशिका *

यस्य पूर्ववृत्तविशेषावगमसापेक्षत्वात्तदप्रतिपत्त्या प्रसिद्धिप्राचुर्यस्य सापवादत्वात् । अथ–शब्दस्याधिकारादिषु, एतच्छब्दस्य चैतदुक्तं भवतीत्यादिषु वक्ष्यमाणेर्थे तसेश्च सर्वविभक्त्यर्थवाचिन "इत"इत्यादिषु पञ्चम्यर्थव्यतिरिक्तेर्थे च प्रयोगदर्शनात् संशयविपर्ययौ स्यातामिति तन्निरासायाथातः–शब्दव्याख्यानं युक्तम् । अतस्तौ

* तत्त्वटीका *

शास्त्रारम्भार्थतापि । अन्यो हिं विचारः, अन्यदनुशासनं । नच तस्यात्रोपादानं । ननु ज्ञाप्यतया ब्रह्माधिक्रियतां ? उपसर्जनश्रवणविलम्बात् । व्याख्यानुशासनशब्दाभावादेव जिज्ञासाशब्दस्य मीमांसापर्य्यायत्वाभावेन ज्ञाप्यतानुपस्थापनाच्च । अत एव विचारः कर्तव्यत्वेन बोध्यतयाऽधिक्रियत इत्यपि न वाच्यं, विचारारम्भणीयत्वस्थापनेनैव सिद्धे पदान्तरवैयर्थ्यात् । अपेक्षिते सत्यनपेक्षितायोगात्, उभयोक्त्या गौरवाच्च । तस्मात्स्वारसिकमनपोदितमानन्तर्यमेवाऽत्र स्थापितं । अतशशब्दस्य प्रकृतिर्धीस्थे वर्तिष्यमाणेऽपि स्यात्, प्रत्ययश्च सार्वविभक्तिकः "ततोऽथमौन"मित्यादिष्वन्यार्थः, पञ्चम्यर्थोऽप्यनेकः, अतो नाऽर्थविशेषसिद्धिरित्यत्राह ( अतशशब्दइति ) इहाऽप्यत्रायंभवतीनामनुषङ्गः स्वारस्यमुत्तरपदसमभिव्याहारश्च प्राग्वत् । विचारितकर्मणां ब्रह्मविचारहेतुतया वक्ष्यमाणहेतुरनुपलम्भनिरस्तः । ब्रह्मविचारापेक्षया वर्तिष्यमाणस्य तु न तद्धेतुत्वम् ।

प्रयोजनमपि न स्वरूपेण हेतुः, मिथस्संश्रयात्, तदिच्छा तु वृत्तैव । प्रत्ययस्य च विभिक्त्यन्तरार्थकत्वमपादानत्वादि च प्रकृतानुपयुक्तं । अयमिति पदस्य स्वरूपमात्रमनुषज्यते, तेनाथशब्दयुक्तत्वमिह विवक्षितं । नचैवं मिथस्संश्रयः,शब्दस्वारस्ययोस्स्वतस्सिद्धतया स्वरूपसिद्धौ मिथोऽनपेक्षणात् । सहकारित्वमात्रस्यैव मिथोऽपेक्षत्वाच्च। अयमिति पदम्वा नाऽनुषञ्जनीयं । नन्वथातःपदयोरन्यतरेणालं, सूत्रं ह्येतत् । मैवं, प्रयोजनाधिक्यात् । कर्मविचारव्यवधायकशास्त्रान्तरनैरपेक्ष्यद्योतनार्थत्वादथशब्दस्य । ब्रह्मविचार्यत्वहेतोरनन्यलभ्यप्रयोजनवत्वेनापातधीस्थस्य विशेषणविशेष्यांशासिद्धिनिरासार्थत्वादतशशब्दस्य ।

आनन्तर्येप्यहेतुत्वं हेतुत्वेऽपि विलम्बनम् ।
दृष्टमिष्टं च तत्सार्थं द्वयं काण्डान्तरे यथा ॥ + ॥

# अतश्शब्दो वृत्तस्य हेतुभावे ।

* श्रुतप्रकाशिका *

व्याख्यायेते । अत्र तावदथ—शब्दस्याधिकारार्थत्वमयुक्तम् । अधिकारो हि प्रस्तावः ब्रह्मजिज्ञासा प्रस्तूयतइति वचो मन्दप्रयोजनम्, प्रारभ्यत इत्युक्तिविनापि प्रारम्भादेव प्रारभ्यमाणत्वावगमात्, उच्यमानं हि वचनं ब्रवीमीत्युक्तिमन्तरेणापि सन्निहितपुरुषेणोच्यत इत्येवावगम्यते न तु नोच्यत इति, प्रस्तोतव्यत्वमुच्यतइति चेत् । तदानीमपि न्यायप्रतिपादकस्य सूत्रस्योपदेशज्ञापनपरत्वाभावाद्युक्तितः प्रारम्भयोग्येत्यर्थः स्यात् योग्यत्वमशाब्दम् । नन्वध्याहारेण योजना स्यात्, आनन्तर्यपक्षेऽपि कर्तव्येति ह्यध्याहर्तव्यमिति चेन्न, अधिकारार्थत्वपक्षेऽध्याहृतस्यापि पदस्यान्वयदौर्घट्यात् । यथा च योग्येत्युक्ते समुच्चेतुं योग्येत्यर्थो न शक्याभिधानः, एवमथ योग्येत्युक्तेप्यधिकर्तुं योग्येत्यभिधानं हि न शक्यम् । अत एव हि महाभाष्ये "शब्दानुशासनं शास्त्रमधिकृतं वेदितव्य"मित्युक्तम्, न त्वधिकर्तुं योग्यमिति । अधिकृतमित्यपि फलितार्थकथनम् । न तु वाचनिकोक्तिः, चादीनां द्योतकत्वात् । अत्र त्वधिकृतमित्यर्थपरत्वे वैयर्थ्यमित्युक्तम् । शब्दानुशासनोपक्रमे त्वधिकारार्थत्वमगत्याश्रितम् । न ह्युपनीतेन वेदमधीयानेनाध्येतव्यस्य तदङ्गभूतस्य व्याकरणस्यासाधारणो वृत्तविशेषः सम्भवति । इह तु प्रयोजनवदर्थान्तरसम्भवादधिकारार्थत्वाश्रयणमयुक्तम् । आनन्तर्यपरत्वे प्रयोजनवत्त्वं च वक्ष्यते । मङ्गलं तु नाऽथशब्दवाच्यम् । अपि तु शङ्खस्वनादिवच्छ्रूयमाणोऽथशब्दो मङ्गलावह इत्योङ्कारस्येवार्थान्तरपरत्वेऽपि मङ्गलं सिद्ध्यति । ओङ्कारतुल्यो ह्यथशब्दः स्मर्यते । "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभा"विति । मङ्गलवाचित्वाभ्युपगमेऽपि मङ्गलरूपा ब्रह्मजिज्ञासेति ब्रह्म-

* तत्त्वटीका *

एकं जिहासितं त्वत्र द्वितीयं हेयमापतेत् ।
स्वाधिकारं स्वहेतुञ्च विचारस्स्वयमाक्षिपेत् ॥ ४ ॥
तस्मादारम्भसूत्रेऽस्मिन् धर्मचिन्तादिसूत्रवत् ।
प्रायुङ्क्त प्रातिलोम्येन प्रतिज्ञादित्रिकं पृथक् ॥ ८ ॥

* श्रुतप्रकाशिका *

जिज्ञासा स्तुता स्यात्, ततश्च सूत्रास्यार्थवादतास्यात्, न तु न्यायनिबन्धनत्वं, जिज्ञासाविशेषणत्वाभावे मङ्गलं भवतीतिवाक्यभेदः स्यात् । प्रकृतादर्थादर्थान्तरपरत्वं चायुक्तम् । तद्धि प्रकृतमपेक्ष्य वक्ष्यमाणस्यार्थान्तरत्वज्ञापनम् । तच्च कल्पान्तरोपन्यासविवक्षायामेव दृष्टं, अत्र तु कल्पान्तरोपन्यासाभावात्तदनुपपन्नम् । प्रश्नपरत्वमप्ययुक्तम् । वचनव्यक्तेः, प्रश्नप्रतिवचनरूपत्वाभावात्, तथा हि किं ब्रह्मजिज्ञासा कर्त्तव्येत्युक्तं स्यात् सा कर्त्तव्येति वाक्यान्तरेण प्रतिवचनं स्यात् ।

न च प्रतिवचनरूपं वाक्यान्तरमुपलभ्यते । अथ–शब्दस्य कार्त्स्न्यपरत्वे कार्त्स्न्येन सा कर्त्तव्येत्यर्थः स्यात् । सोऽनुपपन्न एकदेशकर्त्तव्यतायाः शङ्कितत्वाभावात्, कर्त्तव्यतामात्रं हि संशयपदं तन्निरासार्थं च सूत्रम् । किञ्च, अधिकाराद्यर्थान्तरपरत्वमतश्शब्दान्वयोऽपि निवारयति । अतश्शब्दो हि प्रकृतमर्थं हेतुतया परामृशन्नथशब्दोपस्थापितं ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तम् परामृशति । तत्र यद्यथशब्दोपस्थापितमधिकृतत्वं हेतुतया परामृशेत् । तदा अधिकृतत्वादधिकर्त्तव्येति, हेतोः साध्याविशिष्टता स्यात् । मङ्गलस्यानभिधेयतया न पदान्तरपरामर्शयोग्यता वाच्यत्वाभ्युपगमेऽपि तस्य च प्रकृतापेक्षत्वस्य कार्त्स्न्यस्य च पूर्वपक्षयुक्तिप्रत्यनीकत्वाभावान्न तानि हेतुतया परामर्शनीयानि, न ह्यमङ्गलत्वप्रकृतानपेक्षत्वाकार्त्स्न्यैः पूर्वपक्षोत्थानं, न्यायसूत्राणि च विरुद्धार्थव्युदासपराणि, प्रश्नवाक्यगतप्रश्नस्तु तस्मिन्नेव वाक्ये हेतुतया परामर्शानर्ह एव—किंब्रह्मजिज्ञासा कर्त्तव्येति वाक्येऽपरिसमाप्ते कथं किंशब्दार्थो हेतुतया परामृश्येत, अतोऽतश्शब्दपरामर्शयोग्यार्थश्चेदथशब्दोऽभ्युपगम्यते तदाऽधिकाराद्यर्थत्वं न घटते; यदि ब्रह्मजिज्ञासापदसामर्थ्याक्षिप्तस्य पूर्ववृत्तत्वेन तत्तद्व्याख्यातृभिमतस्य वस्तुनोऽतश्शब्देन परामर्श इष्येत, तदानीं जिज्ञासानुपयोगिनस्तदाक्षेपव्यत्वायोगात् उपयोग्यर्थएव तदाक्षेप्य

* तत्त्वटीका *

अत्र कीदृग्वृत्तं यन्नियमेनाऽपेक्षं, कीदृग्वर्तिष्यमाणं येन वृत्तविशेषाक्षेपः, तयोश्च पौर्वापर्येऽपि कथङ्कार्यकारणभावः, तत्सिद्धौ च तृणारणिमणिन्यायस्स्यात्, नियमेऽपि तत्वधीमुक्त्योरिव माभूदानन्तर्य्यं—

इत्यत्राह ( अधीतेति ) कर्मब्रह्मविचारौ वृत्तवर्तिष्यमाणौ । तयो "रल्पा-

* श्रुतप्रकाशिका *

इति तत्परामर्शिनाऽतश्शब्देन जिज्ञासोपयोगितया पूर्वभाव्यर्थविशेषोपस्थापनादथशब्दस्य स्वारसिकानन्तर्यपरत्वे सम्भवत्यस्वरसविफलार्थान्तरस्वीकारोन घटते, ततश्चातश्शब्दवत् ब्रह्मजिज्ञासापदसामर्थ्यमप्यधिकाराद्यर्थपरत्वनिवारकं स्यात् । एवमर्थान्तराणामनुपपन्नतामर्थतो दर्शयन् आनन्तर्यार्थत्वमप्यथशब्दस्योपपादयति । (अत्रायमथ--शब्द आनन्तर्ये भवती) ति " अथ--शब्द आनन्तर्य " इति प्रतिज्ञा, तदुपपादकमत्राऽयं भवतीति पदत्रयं, तत्र भवतीति पदेन आनन्तर्ये स्वारस्यं सूच्यते । स्वारस्यापवादिकां पूर्ववृत्ताप्रतिपत्तिं परिहरति " अत्रायमि " ति । अत्र वेदस्योत्तरभागविचाररूपब्रह्ममीमांसारम्भसूत्र इत्यर्थः । ब्रह्मजिज्ञासापदसामर्थ्यात् पूर्वभागविचाररूपवृत्तविशेष आक्षिप्त इतिभावः । हेत्वन्तरमभिप्रयन्नाह "अय" मिति । अयमथ--शब्दः "अथशब्दानुशासनम्" 'अथ योगानुशासन' मित्यादिसूत्रान्तर्गताथशब्दव्यावृत्तइत्यर्थः. अतश्शब्दशिरस्क इत्युक्तं भवति । वेदान्तसारे ह्ययमर्थः कण्ठोक्तः, प्रकृतपरमर्शिनैतच्छब्देन पूर्ववृत्तसामान्यमभिहितमित्यभिप्रायः । एवं समभिव्याहृतोभयपदस्वारस्यात् सामान्यतोऽभिहितं विशेषत आक्षिप्तं च पूर्ववृत्तंसिद्धमितिवृत्तविशेषाप्रतिपत्तिरूपस्य स्वारस्यापवादकस्याभावादथशब्द आनन्तर्यार्थ एवेति वाक्यार्थः । एवमथशब्दस्योत्तरभागविचारारम्भसूत्रगतत्वम् । अतश्शब्दशिरस्कत्वमानन्तर्यस्वारस्यं च दर्शयद्भिः आनन्तर्योपपादकैरत्राऽयं भवतीति पदैरेवाऽस्मिन् सूत्रे अर्थान्तराणां गत्यभावस्वीकार्याणामनादरणीयत्वं फलितम् ।

अतश्शब्दं व्याचष्टे " अतश्शब्दो वृत्तस्य हेतुभाव " इति वृत्तस्येति प्रकृत्यर्थ उक्तः, हेतुभावइति प्रत्ययार्थ, इयं प्रतिज्ञा--अत्राऽयं भवतीत्यनुषक्तं पदत्रयमुपपादकं, प्रकृतिप्रत्यययोरुक्तार्थपरत्वेन प्रसिद्धिप्राचुर्यं भवतिना दर्शितम् । अत्रेत्यस्य पूर्ववद्-

× तत्त्वटीका ×

स्थिरफलानन्तास्थिरफलशब्दाभ्यां" सञ्जातेत्यादिना च हेतुहेतुमद्भावव्यञ्जनं । स्थिरास्थिरशब्दाविह नाशराहित्यतद्वत्वपरौ । कर्मज्ञानमिह निर्णयरूपं तस्याधिगतिः प्राप्तिः । "परीक्ष्य लोका" नित्यादिभिरल्पास्थिरफलतयाऽवगमो वा अनुष्ठानद्वारा कर्मज्ञानस्य फलसम्बन्धः । अल्पास्थिरफलत्वं कर्मविशेषणं वा मोक्षवि-

* श्रुतप्रकाशिका *

र्थः। अनेन वृत्तविशेषस्तस्य हेतुभावार्हत्त्वं चाक्षिप्तं, तदर्हत्वं च अनन्तरमेव व्यक्तं भविष्यति, अयम् आनन्तर्यस्वरसाथशब्दपूर्वकः, अनेन वृत्तसामान्यमाक्षिप्तं, नन्वथ-शब्दार्थनिर्णयोऽतश्शब्दार्थनिर्णयसापेक्षः, अतः-शब्दार्थनिर्णयश्चाथ-शब्दार्थनिर्णयसापेक्ष इत्यन्योन्याश्रयः। नैवम् । अथ—शब्दस्यानन्तर्यस्वारस्यं हि नातः शब्दार्थनिर्णयसापेक्षम्। अतः-शब्दस्य वृत्तहेतुभावपरत्वस्वारस्यं च नाथ-शब्दार्थ-निर्णयसापेक्षम्। अथ-शब्द आनन्तर्यपरः स्वस्वारस्यात्, समभिव्याहृतपदान्तरस्वारस्याच्च, अतः-शब्दोपि वृत्तस्य हेतुभावपरः स्वस्वारस्यात्, समभिव्याहृतपदान्तर-स्वारस्याच्चेति "भवत्ययं-शब्दाभ्यां" दर्शितं भवति । इमे चाऽभ्युच्चययुक्ती, अत्र पदाभिप्रेतब्रह्मजिज्ञासापदसामर्थ्यादेव पदद्वयस्योक्तार्थपरत्वसिद्धेः, अतः स्वपरपद-स्वारस्यात् ब्रह्मजिज्ञासापदसामर्थ्याच्चाऽथातः-शब्दौ यथोक्तार्थपराविति न दोषः ।

ननु अथातः-शब्दयोरन्यतरेणालऽमिति चेत्, न। अथ-शब्दस्यानन्तरकाल-मुपस्थापयतो वर्तिष्यमाणब्रह्मजिज्ञासाविशेषणतया, अतः शब्दस्य वृत्तहेतुभावपरतया चाऽपर्यायत्वात्, प्रतिज्ञाहेतुरूपेण पदयोर्भिन्नप्रयोजनत्वाच्च । ब्रह्मजिज्ञासा कर्त्तव्येति हि प्रतिज्ञेति चेत्, न । "ब्रह्मजिज्ञासे"ति धर्मिनिर्देशः । "अथेति" साध्यधर्मोक्तिः, न कर्त्तव्यतामात्रं साध्यधर्मः, अपित्वानन्तर्यविशिष्टं कर्त्तव्यत्वम् । एवमथातःपदयोः प्रतिज्ञाहेत्वर्थत्वेन विभागो "ऽथातो धर्मजिज्ञासे"त्यत्रापि समानः । एवमर्थभेदस्याविवक्षितत्वेन हि "अथ योगानुसासनम्" "अथ शब्दानु-शासन" मित्यादिष्वतः शब्दाप्रयोगः ।

ननु ब्रह्मजिज्ञासासामर्थ्याक्षिप्ततया बुद्धिस्थस्य कर्मविचारस्य हेतुभावो-

* तत्त्वटीका *

आन्तविद्याङ्गकर्मव्यावृत्त्यै केवलशब्दः । अनन्तास्थिरफलशब्दः कर्मधारयवृत्त्या ब्रह्मविशेषणं । बहुव्रीहितया वा परम्परया मोक्षहेतुभूतां जिज्ञासां विशिनष्टि । समित्युपसर्गेण हेतुनिरपेक्षमानन्तर्यञ्च सूच्यते । सांख्यादिशीलनजन्या दुःखदृष्टिमात्रजन्या वा मुमुक्षा हि समीचीं ब्रह्मचिन्तां न सूते । कर्ममात्रेऽनन्तफलदुराशायां निरस्तायां निवृत्ततत्प्रतिबन्धतया व्युत्पत्तिभूयस्त्वोपनिपतितधीवृद्ध्याच तीव्रतमे

अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवल-

* श्रुतप्रकाशिका *

ऽतः—शब्दावगन्तव्य इति किमथ—शब्देन । मैवम् । आनन्तर्योक्तिमुखेन-तस्य हेतोः शास्त्रान्तरश्रवणाव्यवधानैरपेक्ष्यद्योतनार्थत्वादथ--शब्दस्य, ततश्च वेदान्तश्रवणात् पूर्वं शास्त्रान्तरश्रवणेन विना संपादयितुमशक्यत्वात्, शास्त्रान्तराणामनवसरग्रस्तत्वाच्च शास्त्रान्तरसापेक्षाणां नित्यानित्यविवेकादीनां पूर्ववृत्तत्वव्युदासः फलितः स्यात् ।

ननु न यत् किञ्चिदतीतं पूर्ववृत्तत्वेन वक्तव्यम् अतिप्रसङ्गात् । अतो वर्तिष्यमाणोपयुक्तमेव पूर्ववृत्तमथ-- शब्दोपस्थापितमिति तस्य हेतुत्वमपि शास्त्रान्तरश्रवणानैरपेक्ष्यवत्तैव वस्तुसामर्थ्येन सिद्धमिति किमतः शब्देन ?। मैवम् । अथ—शब्दात्तिप्तहेतुत्वसिद्धिशङ्कापरिहारार्थत्वादतः— शब्दस्य, हेतुश्च विशिष्टः, तस्य विशेषणांशविशेष्यांशयोरसिद्धिशङ्कातत्परिहारप्रकारौ सूत्रकाराभिप्रेतौ परस्ताद्दर्शयिष्येते, इति प्रयोजनवत्तरं पदद्वयम् ।

अत्रेति—पदसूचितब्रह्मजिज्ञासापदसामर्थ्यसिद्धं वृत्तं वर्तिष्यमाणं तयोर्हेतुमद्भावं च विवृण्वन् उक्तमानन्तर्यमुपपादयति ( अधीतेति ) । कर्मज्ञान--शब्देन वृत्तमुक्तं, ब्रह्मजिज्ञासा—पदेन वर्तिष्यमाणमुक्तम् । अल्पास्थिरफला—नन्तस्थिरफल—शब्दाभ्यां हेतुहेतुमद्भावो दर्शितः । केवल—-शब्देन ब्रह्मज्ञानपूर्वककर्मव्या-

* तत्त्वटीका *

मोक्षाभिलाषे सामग्रीदशापन्ने ब्रह्मविचारविलम्बो न स्यादित्याशयः ।

विघ्नान्तरविहीने तु स्यादानन्तर्यमत्र नः ।
अतो नाऽतिप्रसक्तिस्स्यात्तथान्यैरपि सम्मतः ॥ + ॥

अधीतेत्यादिना मुमुक्षोत्तम्भकमतान्तरशीलनानवसरज्ञापनं । । जिज्ञासोत्पादकफलापातर्धावृद्ध्यै वेदमात्रनियतव्युत्पत्तिविशेषसिद्ध्यै वा "निष्कारणष्षडङ्गो वेदोऽध्येय" इत्यादिसिद्धसाङ्गत्वोक्तिः । अङ्गग्रहणविचारप्रयोजकस्य प्रयोजनालोचनस्य सिद्ध्यर्थमितितूलिका । फलाधिक्याद्विशेषं गृह्णता सशिरस्कशब्देनाऽध्ययनविधौ स्वाध्यायशब्दस्य नियतक्रमभागद्वयविषयत्वात्तद्विचारार्थायास्त्रिका-

**कर्मज्ञानतया सञ्जातमोक्षाभिलाषस्याऽनन्तास्थिरफलब्रह्म-जिज्ञासा ह्यनन्तरभाविनी ॥**

× श्रुतप्रकाशिका ×

वृत्तिः । कर्मज्ञानस्यैव पूर्ववृत्तत्वं कथम्? अनन्तास्थिरफलापातप्रतीतिश्च कथम्? इति शङ्कायां 'मधीतेत्यादिपदेन तदुपादानम् । सशिरस्कवेद-शब्देन कृत्स्नाध्ययनस्य विहितत्वं, व्याख्यानपौर्वापर्यहेतुभूतव्याख्येयपौर्वापर्यनियमो भागद्वयस्यैकप्रबन्धत्वं च सूच्यते । साङ्ग—शब्देनानन्तास्थिरफलापातप्रतीतिजनकत्वहेतुर्दर्शितः । "कृष्णपक्षे तथाङ्गानि" "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः । सकल्पंसरहस्यं च तमाचार्यं प्रचक्षत" इत्यादिवचनान्यधीतसाङ्गसशिरस्कवेदस्येत्यत्राभिप्रेतानि । एवमधीतेत्यादिषष्ठ्यन्तविशेषणद्वयेन ब्रह्मजिज्ञासापदसामर्थ्यानुगृहीताथातःशब्दोपस्थापितोऽधिकारिविशेषः प्रदर्शितो भवति । समधिगतकर्मा सांसारिकफलनिर्विण्णोऽनन्तस्थिरफलाकाङ्क्षी हि शास्त्रमधिकरोति ।

(अनन्तस्थिरफलब्रह्मजिज्ञासे) ति । अनन्तस्थिरफलरूपस्य ब्रह्मणो जिज्ञासेत्यर्थः । अनन्तस्थिरफलत्वस्य ब्रह्मजिज्ञासाविशेषणत्वे जिज्ञासायास्तथात्वमागमोत्थविवेकादिजन्यज्ञानद्वारेणेति द्रष्टव्यम् । (अनन्तरभाविनी) ति पदेनाथातश्शब्दफलितं हेतोःशास्त्रान्तरनैरपेक्ष्यं विवक्षितम् । कर्मविचारानन्तरं ब्रह्मविचारस्य कर्तव्यत्वे कर्मणामल्पास्थिरफलापातप्रतीतिरित्ययं विशिष्टो हेतुः । अतःशब्देन वृत्तस्य कर्मविचारस्य हेतुतयोक्तत्वात् कर्मविचारस्य साङ्गाध्ययनजन्यानन्तास्थिरफलापातप्रतीतिपूर्वकत्वादावृत्तिविधानादिभिः कर्मणामल्पास्थिरफलत्वावगमहेतुत्वाच्च । अयं विशिष्टो हेतु "रधिगताल्पास्थिरफलकेवलकर्मज्ञानतया सञ्जातमोक्षाभिलाषस्ये" त्यनेनोक्तः । अत्रा "धिगते"ति पदेन कर्मणः फलद्वारा

* तत्त्वटीका *

गङ्ग्या ऐकशास्त्र्यं क्रमश्च सूच्यते । न ह्यध्ययनविध्यनालीढं शिरः, येन न विचार्यं स्यादितिभावः । वेदशब्द इह पुरुषार्थतदुपायादिबोधनार्हत्वं व्यनक्ति । तत एव विचारेच्छा जनकापातधीसिद्धिः । षष्ठ्यन्तपदाभ्यामधिकारिनिष्कर्षः । यदुक्तं कैश्चित्कर्मसूत्रारम्भे "प्रसिद्धोऽप्यथशब्दादेः किम्पदार्थोपवर्णितः । प्रदर्शनार्थ-

* श्रुतप्रकाशिका *

हानाय ज्ञातव्यत्वं कण्ठोक्तं, स्वरूपेणोपादानाय ज्ञातव्यत्वमपि कर्मविचारपूर्ववृत्तत्वे हेतुः । अपेक्षितकर्मस्वरूपज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसाऽवसेयमिति हि वक्ष्यते, तत्र स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता उपायतदितिकर्तव्यताविशेषैः सहैव ह्यनन्नतस्थिरफलापातप्रतीतिरिति विशिष्टहेत्वन्तर्भावं उपरितनग्रन्थाविरोधश्च ।

ननु कर्मविचारो ब्रह्मविचारस्य निरपेक्षहेतुश्चेत् कृतकर्मविचारैः सर्वैरपि ब्रह्म विचार्येतेति स्वर्गार्थकर्मानुष्ठानाभावप्रसङ्गः । मैवम् । अश्रुतमीमांसत्वेऽप्युपाध्यायादिवचनाद् येऽनुतिष्ठन्ति तेषां स्वर्गार्थानुष्ठानाविरोधात् । श्रुत्वापि ये स्वर्गार्थिनः, तेषामदृष्टवैगुण्यात् असमीचीनव्याख्यानश्रवणमूलस्यामुमुक्षुत्वस्य संभवाच्च । साङ्गाध्ययनं कर्मविचारस्य पूर्ववृत्तं चेदधीतसाङ्गवेदैः सर्वैरपि कर्म विचार्येत ।

न च तथा क्रियते, वेदेऽधीतेऽप्यश्रुतकर्ममीमांसा हि बहवो दृश्यन्ते । तेषां कर्मविचारानधिगतिरदृष्टदेशकालादिवैगुण्यात् न तु साङ्गाध्ययनस्य पूर्ववृत्तत्वाभावादिति चेत् तदिहापि तुल्यं, तथा साधनचतुष्टयादिलाभेप्यनधिगतब्रह्मविचारानेकपुरुषदर्शनात् साधनचतुष्टयादेर्ब्रह्मविचारं प्रति नियमेन हेतुत्वं कथमिति परिचोदिते तत्पूर्ववृत्तत्ववादिभिरप्यदृष्टादिवैगुण्याददोष इति परिहर्त्तव्यं, तदिहापि तुल्यं, दुष्परिहरदूषणान्तरसद्भावस्तेषां वैषम्यम् । तस्माद् घटनिष्पत्तेः कुलालादिवद् ब्रह्मविचारस्य कर्मविचारः पूर्वभावित्वेन नियतः, दृष्टादृष्टप्रतिबन्धकविरहितस्य समीचीनः कर्मविचारो ब्रह्मविचारसामग्रीति न कश्चिद्दोषः । एवमथातश्शब्दार्थो निरूपितः ।

* तत्त्वटीका *

मित्येके केचिन्नानार्थवादिनः । समुदायादवच्छिद्य भवदासेन कल्पितात् ॥ शक्तितोवयवस्यैव वर्णयन्त्यष्टमादिवत् । इति । तदिह नाऽतीव पेशलं, प्रसिद्ध्यपवादशङ्कायां पदद्वयव्याख्यानस्याऽवतारितत्वात् । तृतीयपदेऽपि वृत्तेरनेकधासम्भवेन विशेषव्यक्त्यै विगृह्णाति ( ब्रह्मणो जिज्ञासेति ) अत्र हि व्यासस्तावन्न घटने, जिज्ञासानन्वयात् । अत एव न कर्मधारयः । सामानाधिकरण्याहर्त्वेऽ-

**ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा, ब्रह्मण–इतिकर्मणि षष्ठी ७ "कर्तृकर्मणोः कृती" ति विशेषविधानात् ।**

* श्रुतप्रकाशिका *

अथ ब्रह्मजिज्ञासापदार्थं विवक्षुस्तदैकपद्यस्य समासनिबन्धनत्वात् प्रथमं समासार्थं निरूपयति "ब्रह्मण" इत्यादिना, कर्मत्वकरणत्वादिसम्बन्धविशेषेषु इतरा विभक्तयः "कर्मणि द्वितीये"त्यादिभिः सूत्रैर्विहिताः । "षष्ठी शेष" इति सूत्रेण संबन्धसामान्ये षष्ठी विहिता, अत्रतस्याः सामान्यविषयतामाशङ्क्य कर्मविषयत्वं निश्चीयते । तत्र सामान्येन समासस्यानेकविभक्तिसाधारणत्वाद्विभक्त्यन्तर-शङ्काव्यावृत्त्यर्थमिह तेषामनुपपत्तिमभिप्रयन् पदं विगृह्णाति "ब्रह्मणो जिज्ञासे"ति । चतुर्थीपरिग्रहे प्रयोजनत्वसिद्धावपि प्रकृतिविकारभावाभावे चतुर्थीसमासायोगात्तद-परिग्रहः । "सप्तमी"ति योगविभागाद् ब्रह्मणि जिज्ञासेति समासेऽपि ब्रह्मणो विषयत्वमात्रं स्यात्, न तु प्रयोजनत्वमिति सप्तम्यपरिग्रहः । शङ्कुलया खण्ड इतिवत् तृतीयासमासे विषयत्वप्रयोजनत्वे न सिद्ध्येते इत्यभिप्रायः । ब्रह्मण-इति शब्दरूपस्य षष्ठीपञ्चमीसाधारण्यात् षष्ठ्याश्चऽनेकार्थत्वात्तन्निर्णयार्थमाह (ब्रह्मण इती)ति । कुत इत्यत्राह "कर्तृकर्मणो"रिति । षष्ठ्याः कर्तृकर्मसाधारण्येपि जिज्ञासाकर्तृत्वं तापत्रयातुरस्यैव, ब्रह्मणस्तु कर्मत्वमित्यभिप्रायेण (ब्रह्मणइति कर्मणि षष्ठी)त्युक्तम्, कर्मणि षष्ठीस्वीकारे ब्रह्मणो विषयत्वप्रयोजनत्वे सिद्ध्येतामिति भावः ।

× तत्त्वटीका ×

पि विशेषणविशेष्यव्यत्यासाद्विवक्षितानुपयोगाच्च । द्वितीया तु कृद्योगापोदिता । ब्रह्मणस्सर्वहेतुतया तृतीयासमाससम्भवेऽपि विषयाद्युक्तिर्वृत्तविशेषाक्षेपश्च न स्यात् । तादर्थ्यचतुर्थ्यास्त्विह समासः प्रतिषिद्धः । तादर्थ्यसमासे प्रकृतिविकृतिग्र-हणं कर्तव्यमितिकात्यायनोक्तेः । आहुश्च 'प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते । तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता' इति । तथा न सम्प्रदानत्व-मपि, ब्रह्मणस्सम्प्रदानत्वाभावात् । सप्तमीसमासेऽपि विषयत्वमात्रं सिद्ध्येदिति

७ अष्टा० अ० २. पा० ३. सू० ६५.

# यद्यपि सम्बन्धसामान्यपरिग्रहेपि जिज्ञासायाः

* श्रुतप्रकाशिका *

ननु तर्हि कथं "यद्यपी" त्यादेः सम्बन्धसामान्यमरिग्रहशङ्काविषयस्य भाष्यस्योत्थानंयुज्यते ? । उच्यते । सम्बन्धसामान्यस्वीकारेपि जिज्ञासापदसामर्थ्याद् ब्रह्मणः कर्मत्वसिद्धेः, परम्परया सम्बन्धिनामुपायोपासकप्रतिबन्धादीनामपि जिज्ञास्यत्वसिद्धेः, प्रतिपदविहितषष्ठ्याः समासनिषेधाच्च । तत्र सामर्थ्यात् षष्ठ्याः कर्मार्थत्वसिद्धिं ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वस्य सिद्धिं च शङ्कते ( यद्यपी ) ति ।

* तत्त्वटीका *

भावः । तदिह पञ्चमीमर्थान्तरत्वशङ्काञ्च वारयति । ( ब्रह्मण इतीति ) ( कर्मणि षष्ठीति ) उक्तं ह्याचार्य्यैः 'असूत्रस्यापि षष्ठीयं समासप्राप्त्यभावतः । विभक्त्यर्थस्य सान्निध्याद्व्याख्यातुमिह युज्यते" इति । अपादानादिः पञ्चम्यर्थो वाक्यानन्वितोऽध्याहारसापेक्षश्च प्राधान्येन कर्तृत्वानुपपत्तिस्तद्धिजिज्ञासस्वेत्यादिकमनुसरता ब्रह्मण इत्यनेनैव सूचिता । नहि मुख्यं ब्रह्म स्वमन्यद्वा जिज्ञासेत, स्वतस्सर्वदर्शित्वात् । उक्तं च न्यायतत्वे "यो वेत्ति युगपत्सर्वं प्रत्यक्षेण सदा स्वतइति । किंचिज्ज्ञस्तु कर्ता न वक्तव्यः । अधीतवेदस्य तदर्थं निर्णिनीषोरादितः प्रभृत्यनुवृत्तेः, कर्मत्वोक्तावभीप्सिततमतया प्राधान्येन विषयत्वं प्रयोजनत्वं च सिद्ध्येत् । अतस्सदपि स्वस्वामिभावाद्यत्र न वक्तव्यमितिभावः । तथाप्यस्तु सामान्यतः प्राप्ता षष्ठी विशेषस्त्वौचित्यलब्धेरवाच्य इत्यत्राह ( कर्तृकर्मणोरिति ) सम्बन्धविशेषेऽपि षष्ठी विधौ सिद्धे साङ्काङ्क्षसूत्रोक्तान्निराकाङ्क्षोक्तं युक्तं । तत्र विशेषयोर्विधिसाम्येऽपि कर्तुस्सकर्मकाकर्मकसाधारण्यादिह च कर्त्रर्थत्वायोगादसाधारणाकाङ्क्षितकर्मोपस्थापनमुचितमितिभावः । ननु किमर्थलभ्ये शब्दव्यापारेण, नचैवं प्रतिपदानुशासनवैयर्थ्यं, तस्य कर्मादिविवक्षायामपि द्वितीयानिषेधेन षष्ठीसाधुत्वे तात्पर्य्यात्; अतो विशेषविधिर्न शैषिकषष्ठीमपवदेत् तद्ग्रहे च व्यवहितसम्बन्धस्यापि तदन्तस्थितेर्ब्रह्मानुबन्धिनामुपायादीनामपि जिज्ञासासम्भवात्तत्कर्मत्वस्य चार्थसिद्धेः कृत्स्नशारीरकार्थविचार्य्यत्वसूचनमधिकं प्रयोजनमित्याह ( यद्यपीति ) परिग्रहः परितो ग्रहः, सानुबन्धग्रहणं । उत्तरग्रन्थे तु गृह्यत इत्युक्त्या सम्बन्धस्याशाब्दत्व-

# कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः, तथाप्याक्षेपतः

* श्रुतप्रकाशिका *

"सम्बन्धसामान्यपरिग्रह" इत्यत्र परिणा ब्रह्मानुबन्धिनामपि जिज्ञास्यत्वसिद्धिः सूच्यते । परितो ग्रहणेन हि परितः स्थितानामपि ग्राह्यत्वं लभ्यते । अत एव उत्तरत्र 'गृह्यत' इत्युक्तं न तु परिगृह्यत इति । तदुभयं परिहरति (तथापी) ति । अत्राऽयमर्थः—प्रधानस्य ब्रह्मणोऽप्रधानानामन्येषां च कर्मत्वस्याक्षेपसिद्धत्वादपि प्रधानकर्मत्वस्याभिधानिकत्वमितरेषां प्रधानसम्बन्धादाकाङ्क्षावशाच्च कर्मत्वस्य

* तत्त्वटीका *

मात्रमभिप्रेतम् कर्मापेक्षत्वेन-सकर्मकतया प्रथमं कर्माकाङ्क्षाजननस्वाभाव्यात् कर्मार्थत्वसिद्धिर्नाम कर्तृत्वव्युदासेन षष्ठ्याः कर्माख्यविशेषेऽर्थतः पर्यवसानं, परप्रत्यायनार्थे प्रयोगे बिलम्बितधीहेतुर्न ग्राह्य इत्यभिप्रायेणाह (तथापीति) नह्यत्रार्थलभ्ये शब्दक्लृप्तिः, किन्त्वाक्षेप्याद्वरं क्लृप्तशक्तिकशब्दोक्तमित्युच्यते । नन्वाक्षेपत इत्ययुक्तं, आकृत्यधिकरणनीत्या सामान्यशक्तेर्विशेषपर्यन्तत्वस्य वक्ष्यमाणत्वात् । मैवं सा हि विशेषमात्रमुपादत्ते, न कर्मत्वादिकं नहि गोशब्दशक्तिर्विशेषतः खण्डत्वादिग्राहिणी नचाऽत्राभिधानिकग्रहेऽप्यनुबन्धित्याग इति भ्रमितव्यं, सामान्यधीस्थानुबन्धविषयत्वात्सर्वत्र जिज्ञासायाः । एवमप्याक्षेपः स्वीकृत इतिचेत् ? सत्यं, अभ्यन्तरकर्मत्वस्याऽपि शाब्दत्वमुभयकर्माक्षेपाद्वरं, किमुत प्रधानांशकर्मत्वस्याऽऽक्षेपात्, एवकारश्शीघ्रधीहेतोर्बलीयस्त्वं व्यनक्ति कथं ब्रह्मणः कर्मत्वं शाब्दं, "धातोः कर्मणस्समानकर्तृकादिच्छायां वे"तिज्ञानस्यैव कर्मत्वात् मैवं, सन्नन्तत्वेऽपि प्रकृत्यनुसारेण सकर्मकत्वाकर्मकत्वविभागः । अत एव हि प्रकृत्यर्थापेक्षया "कर्तृकर्मणो" रित्यनुशिष्टः, धर्मोजिज्ञासितव्य इत्यादौचधर्मादेरभिहितकर्मत्वं । ननु तथापि नाभिधानिकत्वं उपपदविभक्तेरर्थाभावात् प्रयोगमात्रात्तस्यासार्थत्वे गाव्यादावपि प्रसक्तेः नच तत्र शक्तिरस्ति ।

न शब्दशक्तिर्गाव्यादौ गोपदंसारयेत्ततः ।
बुद्धिस्थेनैव तेनापि गोजातिः प्रतिबुद्ध्यते ७ ॥

आप्तप्रयोगस्त्वनर्थकत्वेऽपि साधुत्वात्स्यात्, अन्यत्रापि तथादृष्टेस्सम्मतेश्च,

प्रामादाभिधानिकस्यैव ग्राह्यत्वात्कर्मणि षष्ठी गृह्यते ।

× श्रुतप्रकाशिका ×

सामर्थ्यसिद्धत्वं च स्वीकर्तुं युक्तमिति, अतः प्रतिपदविहिता षष्ठी ग्राह्या "विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयानि" तिन्यायात् षष्ठ्याः सम्बन्धसामान्यविवक्षायां हि कर्मत्वधीर्विलम्बिता स्यात्; कृद्योगषष्ठीविवक्षायान्तु शीघ्रभाविनी ।

ननु कर्तृकर्मणोरुभयोरप्यर्थयोः सूत्रप्रतिपन्नत्वाद् विलम्बिता कर्मधीरिति चेन्न । कर्तुर्जिज्ञासोरधिगतकर्मणः प्रतिपन्नत्वात् कर्मार्थत्वमेव हि प्रथमतरं धिय-

* तत्त्वटीका *

अनुशिष्टिश्च तावद्विशेषव्यक्त्यर्था तत्तदर्थधिग्रस्त्वन्यथासिद्धेः अन्यलभ्ये शक्तेरकल्प्यत्वात्, गत्यन्तराच्च वहुशक्तिकल्पनायोगात्, नच शक्तिरौपयिकी । तत्र यथा कर्तृकरणयोरित्यादिवशात्कारकविभक्तिस्सार्था ऽनेकार्थाच, तथा कर्तृकर्मणोः कृतीत्यादिबलादुपपदविभक्तिरपि, अन्यथा ऽतिप्रसङ्गात् कारकविभक्तेरुपपदविभक्तिदौर्बल्यन्तु पदान्तरविमर्शसापेक्षतामात्रात् । तथापि न शक्तिभङ्गः । पदान्तरसन्निधिरत्र शक्तिम्व्यनक्ति, नत्वाधत्ते, यथा नानार्थगवादिशब्देषु । यद्वात्रा ऽनाभिधानिकत्वे ऽपि विशेषानुशासनानुमतवृत्तिविशेषवद्विभक्तिसिद्धस्यशाब्दसमत्वं व्यञ्जयितुमाभिधानिकत्वोक्तिः, कर्मत्वस्य सूत्राभिधानसिद्धत्वमाभिधानिकशब्दद्वयेना ऽत्र प्रतीयते । उपपदस्वरूपविमर्शस्य पदबोध्यविमर्शादविलम्बितत्वाच्च । ननु न विग्रहादिह समस्ते विभक्तिरस्ति, येना ऽभिदध्याल्लक्षयेद्वा । नचाप्रयुक्तापिस्मृताभिधत्तां, प्रयोगस्या ऽपि तद्धीमात्रार्थत्वादिति वाच्यं, समासतो ऽर्थबुद्धौ विभक्तिस्मरणानियमे मानाभावात्, सर्वत्र च लक्षणाद्युच्छेदप्रसङ्गात् । षष्ठ्या चा ऽभिधानमिति तद्विदा । तदेवमभिधायकाभावे कर्मत्वस्य कथमाभिधानिकत्वं तत्समत्वम्वा ।

मैवं सम्बन्धसामान्ये कर्मत्वे वा समीहिते ।
विभक्तिलोपात्सोढव्या प्रकृत्यैव हि लक्षणा ॥ + ॥

तथा ऽनुशासनाधीननिरूढलक्षणाधीनाया अभिधानसमत्वाच्छाब्दत्वमिति मतं कर्मार्थत्वमते ऽपि समं । एवन्तु "केचिद्व्यासे समासे च सविभक्तिकाविभक्ति-

# न च "प्रतिपदविधाना षष्ठी न समस्यत" इति

* श्रुतप्रकाशिका *

मविरोहेत् । समासनिषेधमप्याशङ्क्य परिहरति ( नचे ) ति । चः शङ्कासमुच्चये । प्रतिप्रसवोऽपवादापवादः, सर्पिषो ज्ञानमित्यादिप्रयोगेषु "ज्ञोविदर्थस्य करणे" इत्यादिसूत्रविहितायां षष्ठ्यां समासनिषेधस्य सावकाशत्वं, सर्पिषा प्रवृत्तिरिति हि तस्य वाक्यस्यार्थः । यद्यपि ज्ञानपदं कृदन्तं तथापि सर्पिष इति षष्ठी न कृद्योगविहिता । सर्पिषा जानीत इति तिङन्तपदान्वयार्हत्वात्, धातोर्विभक्तेश्च प्रवृत्तितत्कारणार्थत्वाच्च न च तत्सर्वं कृद्योगविहितत्वे सिद्ध्यति, अतो नाऽत्र प्रतिप्रसवप्राप्तिरिति समासनिषेधस्य सावकाशत्वम् ।

ननु नेयं षष्ठी व्याख्येया अप्रयुक्तत्वात्। सूत्रे प्रयुक्त एव हि शब्दोऽर्थबोधकः न

× तत्त्वटीका ×

कशब्दयोर्दधिदध्यशब्दन्यायेन सैव शक्तिः । अतोलुप्तविभक्तिकयाऽपि प्रकृत्यासम्बन्धो न लक्ष्यः । वाच्यसम्बन्धिनि वस्त्वन्तरे वृत्तिर्हि लक्षणा । न च सम्बन्धः सम्बन्धिनि कर्मत्वादिश्च सम्बन्धरूपः । एवं स्वपरनिर्वाहकतया सम्बन्धफलसिद्धावपि तथा विवेकरहितानामप्यत्र प्रकृत्या विभक्त्यर्थधीर्दृष्टा । सन्नपि चाजानतः सम्बन्धो न लक्षणाहेतुः । अतिप्रसङ्गात् । अतः प्रयोगस्याऽनन्यथासिद्धेरन्यथासिद्धिशङ्कायाश्चानुशासनेनोपरोधाद्विभक्त्यर्थः समासेऽप्यविधेयः । एवं विभक्तिव्यतिरिक्तलोपेष्वपि नीतिः । ननु निषादस्थपतिशब्दे विभक्त्यर्थलक्षणादोषापनुत्त्यै षष्ठीसमासः त्यज्यते तत्कथमाभिधानिकत्वं । तन्मुख्यत्वे तु क्लृप्तकल्प्यविरोधे क्लृप्तस्यैव ग्राह्यत्वान्नान्यत्राधिकारक्लृप्तिः । मैवं । सामानाधिकरण्यस्य प्राग्वैयधिकरण्यतोऽविलम्बितधीयोगात्प्राबल्यं प्रतिपादितमितिन्यायेन शैघ्र्याच्छाब्दव्यवहारः । अथानुशासनस्वारस्यादर्थः, तर्हि यथानिर्णये तु नादरः, । अर्थाविरोधात् । इति । उपपदविभक्तावुक्तमिदं समासेऽपिभाव्यं ।

सोऽयं वैभववादो वा परमार्थोक्तिरेव वा ।
आभिधानिकतोक्तिस्तु युक्ताधीशैघ्र्यबोधनात् ॥ × ॥

एवं कर्मणि षष्ठ्यामनौचित्यन्निरस्तम् । तत्र समासे निषेधशङ्कामपि निर-

**कर्मणि षष्ठ्याः समासनिषेधः शङ्कनीयः "कृद्योगा च**

* श्रुतप्रकाशिका * .

त्वप्रयुक्तः, बोधकशब्द एव हि व्याख्येयः, अप्रयुक्तापि स्मृता विभक्तिर्बोधिकेति सा व्याख्येयेति चेन्न । तत्स्मरणेन विनाप्यर्थप्रतिपत्तेः । अर्थप्रतिपत्तिश्च प्रातिपदिकेन लक्षणया, लक्षणा च योग्यतादिना, अतोऽनुशासनेन तद्व्याख्यानमयुक्तम् । उच्यते । अप्रयुक्तविभक्त्यर्थस्य प्रातिपदिकेन लक्षणा हि समासः, अत्र लक्ष्यार्थोपलक्षणतया विभक्तिरनुप्रविष्टा, अतो लक्ष्यार्थविशेषनिर्णयाय विग्रहवाक्यस्था षष्ठी व्याख्येया । तर्हि नानुशासनेन सा व्याख्येया, लाक्षणिकार्थो हि योग्यतादिनावसीयते, न हि गङ्गायां घोष इत्यत्रानुशासनवशात्कूलं लक्ष्यते अपि तु योग्यतादिनैवेति । मैवं, सर्वासु लक्षणासु-योग्यतादिनैवार्थनिर्णयइति नियमाभावात् । सतु नियमः प्रातिपदिकेन प्रातिपदिकान्तरार्थलक्षणायाम् । प्रातिपदिकेन विभक्त्यर्थलक्षणायां त्वेतद्विभक्त्यर्थोलक्ष्यः, न विभक्त्यन्तरार्थइति हि नियमो भवति, स च शब्दानुशासनाधीनइति तदनुरोधेन तन्निरूपणं युक्तम् । तत्र सम्बन्धसामान्यं लक्षयित्वा तेन कर्मत्वस्याक्षेपादपि प्रथमतएव कर्मत्वस्यैव लक्षणा शब्दानुशासनानुमता युक्ता, अतः समस्तपदलक्ष्यार्थविशेषनिर्णयायाऽनुशासनानुरोधेन लक्ष्यार्थोपलक्षणभूता विग्रहवाक्यस्था षष्ठी व्याख्येयेति । यद्वा लुप्तविभक्तिकशब्देन विभक्त्यर्थबोधनं मुख्यं स्यात् । संबन्धिनो हि लक्षणा दृष्टा न संबन्धमात्रस्य । विभक्त्यर्थश्च स्वयं संबन्धरूपः

न च सम्बन्धस्य सम्बन्धान्तरानपेक्षत्वेन स्वस्मिन् सम्बन्धिकार्यकरत्वाल्लक्षणा सम्भवतीति वाच्यम् । सम्बन्धस्य स्वपरनिर्वाहकत्वानभिज्ञानामपि विभक्त्यर्थप्रतीतेः । न हि सम्बन्धस्स्वसत्तया लक्षणाहेतुः किन्तु ज्ञायमानतयैव । न चेदतिप्रसङ्गात् । एवं लक्षणानुपपत्त्या प्रयोगस्यानन्यथासिद्धत्वात् समस्तशब्देन

* तत्त्वटीका *

स्यति ( नचेति ) कर्माणि षष्ठ्या इत्यनेन साधारणः प्रतिपदविधानशब्दस्सङ्कोचार्ह इति सूच्यते । "ज्ञोऽविदर्थस्य" इत्युनुशिष्टायामेव समासापवादः । अवेदनार्थस्य जानातेः कृद्योगः कचित्सन्नपि तत्र कारणषष्ठ्या अनपेक्ष्यः । सर्पिषो जानीत इत्युदाहरणात् । निषेधस्य सङ्कोचमाह ( कृद्योगे इति ) प्रतिप्रसवोऽपवा-

समस्यत" इति प्रतिप्रसवसद्भावात् ।

* श्रुतप्रकाशिका *

विभक्त्यर्थबोधनं मुख्यम् । अमुख्यत्वेपि वा का नः क्षतिः ।

ननु विग्रहवाक्येपि कथं कर्मत्वमाभिधानिकं ? प्रयुज्यमानापि ह्युप-पदविभक्तिर्निरर्थिका तद्विधानं" दाराःकलत्रमितिवत्प्रयोगसाधुत्वाय, अर्थ-स्त्वर्थसामर्थ्याक्षिप्तः, अतएव हि कारकविभक्तेरुपपदविभक्तेर्दौर्बल्यं, समासे त्वप्रयुक्ताया उपपदविभक्तेः कथन्तरां कर्माभिधायकत्वमितिचेदुच्यते । आभि-धानिकत्ववत् कृदन्तपदप्रयोगेण शीघ्रधीविषयत्वसाम्यादाभिधानिकत्वोक्तिः । पदान्तरश्रवणापेक्षामात्रान्नाक्षेपादिवद्विलम्बाधिक्यम् । सामान्यषष्ठीपक्षे सम्बन्ध-सामान्यं प्रतिपाद्य जिज्ञासाशब्दार्थगतसकर्मकत्वस्वभावालोचनयाऽर्थविशेषावग-मादपि कृदन्तश्रवणमात्रभुवः कर्मत्वधियः शीघ्रत्वादिति कश्चित्परिहारः । "कर्मणि द्वितीये" तिवत् "कर्तृकर्मणोः कृती" ति सप्तम्यन्तनिर्दिष्टयोः कर्तृकर्मणोरभिधेयत्वमनुशासनस्वारस्यानुगुणमितिभाष्यकाराभिप्रेतः परिहार इति सम्प्रदायः, कारकविभक्तेरुपपदविभक्तिवैषम्यं पदान्तरयोगविहितत्वरूपगस्त्येव ।

न च पदान्तरयोगावगम्यत्वमाभिधानिकत्वविरोधी, तस्य क्वचिन्मुख्यार्थव्य-वस्थापकत्वदृष्टेः, यथा 'आदित्यस्य गावः प्रकाशयन्ती' त्यादिषु । न हि तत्रादि-त्यादिपदान्तरयोगेन गोशब्दस्य किरणपरत्वं लाक्षणिकं पदान्तरपरामर्शसापेक्ष-त्वेन विलम्बितधीहेतुरुपपदविभक्तिः, कारकविभक्तिस्तु तन्निरपेक्षत्वाच्छीघ्रधीहेतुरि-ति प्राबल्यदौर्बल्यविभागएव, न तु सार्थकत्वनिरर्थकत्वाभ्यां वैषम्यं विभक्त्यश्र-वणादमुख्यत्वन्तु परिहृतम् ।

एवं समासान्तर्गतविभक्त्यर्थे निरूपिते समस्तयोः पदयोः प्रथमं ब्रह्मशब्द

ॐ तत्त्वटीका ॐ

दनिरासः, तस्य सद्भावात्, न केवलं प्रयोगदृष्ट्येतिभावः । एवमैकपद्यहेतुस्स-मासःप्रथमं व्याख्यातः । तत्राऽऽद्यप्रकृत्यंशस्य यौगिकार्थनिमित्तत्वश्रुतेरन्यत्राऽपि यथादृष्टिमुख्यत्वशङ्कांनिर्विशेषचिन्मात्रभोक्तृभोग्यनियन्तृसमष्टितदंशिसन्मात्रादिपरे-ष्टार्थं स्वेष्टे चोपचारवृत्तिं क्षिपन् सर्वतः परिबृढत्वाय बृहत्वबृंहणत्वे चाऽनवच्छिन्न

ब्रह्मशब्देन च स्वभावतो निरस्तनिखिदोषोऽनवधिका-

* श्रुतप्रकाशिका *

व्याचष्टे ( ब्रह्मशब्देन चे ) ति । ब्रह्मशब्दस्य प्रधीनाद्यर्वाचीनार्थान्तरेषु प्रयोगदर्शनादि, तरव्याख्यातृभिरीश्वरातिरिक्तवस्तुपरत्वेन व्याख्यातत्वा, द्देवतान्तरपरत्वस्य कैश्चिदभ्युपगमाच्च तद्व्यावृत्त्यर्थं 'ब्रह्मशब्देन पुरुषोत्तमोऽभिधीयत' इतिप्रतिजानीते । पुरुषोत्तमशब्दस्य रूढ्या ब्रह्मशब्दस्य देवान्तरपरत्वव्युदासः । अवयवशक्त्या बद्धमुक्तावस्थचेतनवैलक्षण्यमुक्तम् । स्वेतरवैलक्षण्यमात्रं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थं 'स्वभावत'इत्यादिना विशेषणद्वयेन तद्वैलक्षण्यं विशिनष्टि । इदं विशेषणद्वयं शब्दशक्तेरर्थसामर्थ्याच्च ब्रह्मशब्दस्य पुरुषोत्तमपरत्वप्रतिपादनोप-

* तत्त्वटीका *

विवृणोति । ( ब्रह्मशब्देनेति ) चस्त्वर्थश्शङ्कानिरासे । स्वभावत इत्यादिना परिकल्पितैस्सदोषत्वनिर्गुणत्वावाच्यत्वावेद्यत्वैरजिज्ञास्यत्वाप्रसङ्गोऽपास्तः । निरस्तनिखिलदोषत्वं च बृंहणत्वोपयुक्तो बृहत्वविशेषः । गुणादिविधिनिषेधयोरुत्सर्गापवादादिनीतिविषयत्वं विशेषणद्वयेन व्यञ्जितम् ।

विशेषविधिबाधेन तदन्यार्थत्वकल्पनात् ।
सामान्यवृत्तिसङ्कोचं परन्नीतिविदो विदुः ॥ * ॥

परपक्षे तु मिथ्यात्वसत्यत्वविवादेऽपि निरस्यत्वेनाऽभिमतानां दोषाणामारोपित उपाध्यवच्छेदतस्स्वाभाविकांशतः परब्रह्माश्रितत्वात्तत एव सार्वज्ञादिभङ्गाच्च जिज्ञास्यत्वायोगश्श्रुत्यादिकोपश्च स्यादितिभावः । स्वरूपतो नामान्तरभजनार्हावस्थावन्तोऽचित्पदार्थास्तदभावेऽपि क्लेशादिमन्तो बद्धाः कतिपयक्लेशादिरहिता मुमुक्षवस्तदत्यन्तोच्छेदवन्तो मुक्तास्तदत्यन्ताभाववत्त्वेपि पराधीनतथात्वा नित्याश्च बुद्ध्यवतारक्रमेण ( निरस्तनिखिलदोष ) इत्यादिमुखेन प्रथमविशेषणे व्यवच्छेद्याः । तत्र, स्वभावत इतिपदेनाऽनादित्वविवक्षायां मुक्ता अनन्याधीनत्वविवक्षायां नित्याश्च व्यावृत्यन्ते । द्वितीयेऽपि ते सर्वे । अन्यासम्भाव्यगुणविर्न्नित्या एव वा तेषां ज्ञानादेर्ब्रह्मसाम्येपि हि पराधीनत्वं सिद्धं; शक्तिस्तु ततो न्यूना । वक्ष्यति च सत्यादिवाक्येऽनन्तपदव्याख्याने ( साति-

**तिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते ।**

* श्रुतप्रकाशिका *

योगितयोक्तम् । न तु प्रवृत्तिनिमित्ततया गुणतोऽपि बृहत्त्वे सति शब्दशक्त्यसंकोचसिद्धेर्मुमुक्षोरशेषदोषनिवृत्तिनिरतिशयानन्दप्राप्तिहेतुत्वाच्च । वाद्यन्तरोक्तस्याऽविद्यादिदोषान्वयस्य निर्गुणत्वस्य च व्यावृत्त्यर्थमुपाध्युपहितब्रह्मस्वरूपस्यैव कर्मवश्यत्वदुःखित्वादिव्यावृत्त्यर्थं, ज्ञानादिशक्तियोग एवाऽस्य स्वाभाविकः सार्वज्ञ्यनिरतिशयानन्दादियोगस्तु कादाचित्कइति मतस्य च व्यावृत्त्यर्थमिदं विशेषणद्वयमुक्तम् । निरस्तकतिपयदोषत्वं निरस्तनिखिलदोषत्वं च केषांचिद् बद्धानां, नित्यानां, मुक्तनामप्यस्तीति तद्व्यावृत्त्यर्थं ( स्वभावतो निरस्तनिखिलदोष ) इत्युक्तम् । नित्यसिद्धानामपि भगवन्नित्यसङ्कल्पाधीनं हि नित्यनिर्दोषत्वं, स्वभावत इत्युत्तरत्रानुषङ्गः, तेन गुणानामप्यविद्याकल्पितत्त्वपक्षव्यावृत्तिः "ते ये शत" मित्यत्र पूर्वपूर्वगुणेभ्य उत्तरोत्तरगुणानामतिशयः सावधिरिति तद्व्यावृत्त्यर्थमनवधिकातिशय-शब्दः, तत्र हि ब्रह्मगुणातिशयस्य वाङ्मनसागोचरतया ऽनवधिकत्वमुक्तं, सत्यसङ्कल्पत्वान्तर्भूता वशित्वादिगुणा इति हि वक्ष्यते, अतः कस्मिंश्चिद्गुणे तद्विधाभेदरूपतया गुणानां बहूनामन्तर्भावाभिप्रायो गण-शब्दः ।

❁ तत्त्वटीका ❁

शयस्वरूपस्वगुणा नित्या व्यावृत्ता ) इति । न हि ते विश्वव्यापिनः नापि सर्वशरीरिणः । अतिशयशब्देन धातूक्तावृद्धिरातिशायनमितिव्यञ्जितम् । अनवधिकविशेषणेन शतगुणितोत्तरक्रमप्रदर्शितनिरतिशयदशाशिरस्कत्वोक्तिः । ईश्वरस्य ज्ञानानन्दादिगुणयोगः कादाचित्कः तच्छक्तिस्तु नित्येतिपक्षः "स्वभावत" इतिपदानुषङ्गात्प्रतिक्षिप्तः । ज्ञानाद्येकैकगुणविततरूपावान्तरगुणवर्गव्याख्यानाय गुणशब्दः । उक्तञ्च षाड्गुण्यविवेके "तवानन्तगुणस्यापि षडेव प्रथमेगुणाः । यैस्त्वयैव जगत्कुक्षावन्येऽप्यन्तर्निवेशिता" इति । अनवधिकातिशयशब्दोऽत्र गणान्विशिंषन् प्रत्येकमतिशयपरश्रुत्या विदुषी परिषदिति न्यायाच्चाऽर्थतो गुणान्विशिनष्टि । अन्यथा अन्यपदार्थासिद्धिः । सत्याङ्गतौ व्यधिकरणबहुव्रीह्ययोगः । शैलजन्मेत्यादिष्वगत्या तत्स्वीकारः । एतत्सूत्रसम्बादिन्या ', परीक्ष्ये ' त्यादिश्रुत्या

* श्रुतप्रकाशिका *

नन्वनवधिकातिशयशब्दस्य गुणविशेषणत्वे गणशब्दसामानाधिकरण्याभावाद् बहुव्रीहिर्न स्यात् । गणविशेषणत्वमप्ययुक्तं, गुणस्वरूपस्य ह्यनवधिकातिशयत्वं, न तु गणस्वरूपस्य नैवम् । गण एव विशेष्यइति बहुव्रीहिसिद्धिः, तथाप्यर्थवशाद् गणान्तर्भूतैकैकगुणव्यक्तेरनवधिकातिशयत्वं फलितं स्यात् 'यथैषा परिषदभिजनवती श्रुतशीलशालिनी'त्यत्र श्रुतशीलादीनां परिषद्विशेषणत्वे प्रतीतेऽपि तदन्तर्भूतानामेव श्रुताद्यन्वयः, नतु समूहस्य ततो निर्गतानां श्रुताद्यभावप्रसङ्गात् । असंख्येयत्वमपि गणविशेषणं युक्तं, गणासंख्येयत्वे गुणासङ्ख्येयत्वं कैमुत्यसिद्धम् । अनवधिकातिशय--शब्देन नित्यसिद्धव्यावृत्तिश्च । तद्गुणानां जगद्व्यापारानुगुणत्वेन भगवद्गुणापेक्षया सातिशयत्वात्, तेषामीश्वरतद्गुणविभूतिसाक्षात्कारस्यात्यन्तानुकूलस्य निरवधिकातिशयत्वेऽपि तादृशासंख्येयगुणाभावात्तद्व्यावृत्तिः । अनुषक्तेन ( स्वभावत ) इतिपदेन वा नित्यसिद्धव्यावृत्तिः । तेषां तादृशगुणकत्वं हि भगवन्नित्येच्छाधीनं, स्वरूपेणाऽनवधिकातिशयत्वाभावाच्च नित्यसिद्धव्यावृत्तिः,ते ह्यगुणस्वरूपाः; अत्र स्वरूपस्याऽनवधिकातिशयत्वं गर्भितम् । विभुत्वस्यापि गुणान्तर्भावित्वात्, बृहत्त्वं च स्वरूपेण गुणैश्चेत्युपपादकग्रन्थोक्तेः । ( अभिधीयते ) मुख्यया वृत्त्या बोध्यते । अस्मिन् ग्रन्थे "येनाक्षरं पुरुषं वेद सत्य"मिति श्रुतिश्चैतत्सूत्रानुवादिन्यनुसंहिता भवति, तत्र हि "प्रोवाच तां तत्त्वतो ब्रह्मविद्या"मि-

* तत्त्वटीका *

ब्रह्मपुरुषशब्दोक्तजिज्ञास्यनिष्कर्षे सर्वोपनिषदां पुंसूक्तैकार्थ्यमीश्वरस्याध्यस्तत्वं ब्रह्मांशत्वासम्भवमीदृशस्य गीतानिरुक्त्या प्रकृत्यादेर्देवन्तान्तरेभ्योऽपि विशेषव्यक्तिश्चाऽभिप्रेत्याह ( पुरुषोत्तमइति ) अवधारणमिह ग्राह्यम् । यद्यप्यत्र समानाधिकरणसमासे पौर्वापर्यव्यत्ययः, निर्धारणेतु षष्ठ्यानसमासः । तथापि द्वाविमौ पुरुषावित्यारभ्योत्तमः पुरुषस्त्वन्य इत्यधमप्रतियोगित्वोक्त्या सम्बन्धिशब्दतया समासस्स्यात् । अक्षरादपिचोत्तमः इत्यनेन पञ्चमीसमासोवा सूच्यते । योगविभागस्तु यथाप्रयोगनिष्ठः । अतएव सप्तमीनिर्धारणेपि समस्यते । नागोत्तमादिशब्दाश्चैवं शाब्दे निरूढाः । रूढ्या तु कामं पुरुषोत्तमोऽस्त्विवति वदन् श्रुत्यादिबाध्यः अतोस्मि लोके वेदेच प्रथितःपुरुषोत्तम इति सर्वविदुक्तेः । अभिधीयते—मुख्यवृत्त्या

सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः, बृहत्त्वं च स्वरू-

* श्रुतप्रकाशिका *

ति पुरुषपर्यायतया ब्रह्मशब्दः प्रयुक्तः ।

एवं प्रतिज्ञातार्थं शब्दसामर्थ्यात् प्रथममुपपादयति ( सर्वत्रे ) त्यादिना । तत्राऽर्थान्तरेषु ब्रह्मशब्दप्रयोगस्यान्यथासिद्धिं विवक्षुस्तदुपयुक्तं गुणयोगं दर्शयति ( सर्वत्रे )ति सर्वत्र--ब्रह्मशब्दप्रयोगविषयेषु सर्वेषु बृहत्त्वगुणयोगोस्तीत्यर्थः । पुरुषोत्तमे गौणत्वमन्यत्र मुख्यत्वं च किन्न स्यादित्यत्राह ( बृहत्त्वञ्चे ) ति बृहत्त्वगुणमात्रयोगिषु सर्वेषु ब्रह्म-शब्दाप्रयोगात् स्वरूपतो गुणतश्चानवधिकातिशयबृहत्त्वं प्रवृत्तिनिमित्तमित्यर्थः ।

ननु "बृहति बृंहयति तस्मादुच्यते परं ब्रह्म" "बृहत्वाद् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत"इति श्रुतिस्मृतिभ्यां बृहत्त्वबृंहणत्वे च प्रवृत्तिनिमित्ततयावगते कथमिह बृहत्त्वमात्रं निमित्तमुच्यते गुणतो बृहत्त्वे बृंहणत्वस्यान्तर्गतत्वादिति ब्रूमः "स चानन्त्याय कल्पत "इत्यादिश्रुतिप्रसिद्धसकलसङ्कोचनिवृत्तिपूर्वकनिरवधिकज्ञान-

* तत्त्वटीका *

विषयीक्रियते । एतेन तदेकनाम्नो ब्रह्मशब्दस्य तत्रैव लक्षणामिच्छन्तो निरस्ताः । रूढिविषये कचिल्लक्षणाम्वदन्तश्च निरस्ताः, ननु गवादिशब्दवज्जातिद्वारा पाचकादिवत्क्रियाद्वारा डित्थादिवद्यदृच्छया वा ऽन्यत्रापि मुख्यतास्यादित्यत्राह ( सर्वत्रेति ) प्रकृत्यादिष्विव ब्रह्मशब्दस्थलेष्वित्यर्थः । तेषु मिथोविषयेषु, तदन्यव्यावृत्ताजातिः क्रिया वा न दृष्टा । ब्रह्मणत्वन्तु बृहत्वापेक्षमतस्तन्निमित्तत्वे गौरवम् । बृहत्वं च किञ्चित्तत्र तत्र प्रकृतम्, विवक्षितं च । ब्रह्मशब्दवृत्तिद्वारा तन्निरुपाधिकवृद्धिरूपधात्वर्थप्रसिद्धिश्च नोपेक्ष्या । अतस्सम्भवद्वृत्यन्तरे न यदृच्छापीति भावः । हिः प्रसिद्धौ हेतौ वा तर्हि बृहच्छब्दवदसौ बृहत्वमात्रनिमित्तस्स्यात् नेत्याह । ( बृहत्वमिति ) सर्वतःप्रभुत्वमसङ्कोचात्स्वरूपतोगुणतश्चेत्युच्यते । तेन परिच्छिन्नस्वरूपाणां गुणबृहत्वरहितस्य गुणादेश्च व्यवच्छेदः । अस्येत्यनेन बृहच्छब्दाद्व्यावृत्तिर्दर्शिता । नह्यसाविति इदम्ब्रह्मेत्यवधिनिर्देशं तरप्तमप्प्रयोगञ्च सहते । सर्वंखल्विदम्ब्रह्म 'सर्वं प्रोक्तन्त्रिविधम्ब्रह्ममेतत्' त्रयंयदाविन्दते ब्रह्ममेत-

पेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योर्थः । स च सर्वेश्वर एव, अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः ।

* श्रुतप्रकाशिका *

विकासरूपानन्त्यावहत्वं हि बृंहणत्वं, तद्धि सकलहेयप्रत्यनीकत्वक्षान्तिकारुण्यादिमोक्षप्रदत्वौपयिकगुणगणवत्त्वम्, अत एव हि स्वभावतो निरस्तनिखिलदोष इत्यादिकं प्रतिज्ञावाक्येऽभिहितम् ।

ननु स्वरूपतो बृहत्त्वमेव निमित्तमस्तु किङ्गुणैरपीति चेत् । न । ब्रह्मगुणादेरपि स्वरूपेण बृहत्त्वाद् ब्रह्मशब्दवाच्यत्वप्रसङ्गात् । तर्हि गुणतो बृहत्त्वमेवास्तु निमित्तमिति चेन्न । शब्दशक्तेरसङ्कोचस्य स्वतः प्राप्तत्वात् स्वरूपेण च बृहत्त्वसम्भवात् "सत्यं ज्ञानमनन्तं ब्रह्मे"ति हि श्रुतिः ।

गुणतो बृहत्त्वन्नाम सद्वारकबृहत्त्वं गुणद्वारा हि तत्, स्वरूपेण गुणैश्च निरतिशयबृहत्त्ववद्वस्तु पुरुषोत्तमादन्यदपि स्यादन्यदेव वा स्यादित्यत्राह (स चे) ति चः शङ्कानिवृत्तौ सर्वेश्वरशब्देनैवकारेण च "तमीश्वराणां परमं महेश्वरं" "न तत्समश्चाभ्यधिकश्च दृश्यत" इति वाक्ययुगलार्थो विवक्षितः । ततः किमित्यत्राह ( अत ) इति अतः—अनवधिकातिशयबृहति ब्रह्मशब्दस्य मुख्यत्वत्, सर्वेश्वरस्यैतादृशबृहत्त्वगुणयोगित्वाच्चेत्यर्थः । कथं तत्रैव मुख्यवृत्तः अन्यत्रापि हि

* तत्त्वटीका *

त्, इत्यादिषु । अन्येषान्तच्छरीरतया देवोहमित्यादिवत्सामानाधिकरण्यं नतु तत्तद्वस्तुषु ब्रह्मशब्दप्रयोगः । त्रैविध्योक्तिश्च प्रेरितृत्ववैशिष्ट्यं भोक्तृभोग्यवैशिष्ट्यञ्चापेक्ष्य नारायणपरम्ब्रह्मेत्यत्र परमिति विशेषणन्त्वौपचारिकव्यावृत्त्यर्थं । अतो बृहत्वमात्रं नान्यनिमित्तमितिभावः । प्रयोगनियत्या तत्र तत्र काष्ठाप्राप्तबृहत्वं स्यादित्यत्राह ( सचेति ) अपरिच्छिन्नबृहत्वाश्रय इतियावत् । सर्वेश्वरइति समाधिकदरिद्रत्वादिश्रुतिव्यञ्जनी समाख्या । "अजस्सर्वेश्वर" इति तन्नामपाठात् । एकस्यैव सर्वनियमनादिरूपनिरतिशयबृहत्वं शास्त्रोक्तम् । तदन्येषान्तु तादर्थ्यात्तत्वन्तादृक्त्वमपि नास्तीत्यवधारणाभिप्रायः । अन्यत्र निमित्तासम्भवान्नैमित्तिकासम्भवस्य फलितत्वमाह ( अत ) इति । कथन्तद्वाचकत्वाभावे

तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्प-

* श्रुतप्रकाशिका *

ब्रह्मशब्दः प्रयुज्यतइत्यत्राह ( तस्मादि ) ति तस्मात्—ब्रह्मणः । सर्वत्र मुख्यः कुतो न स्यादित्यत्राह ( अनेकार्थे )ति । परस्माद् ब्रह्मणोऽन्यत्र प्रयोगस्यान्यन्यथासिद्धत्वान्न तत्र शक्तिकल्पनम् । "अनन्यथासिद्धः प्रयोगः शक्तिं कल्पयती"ति न्यायादित्यर्थः; । अनेकशक्तिकल्पनं गौणत्वं वा न स्याद् बृहत्त्वगुणयोगिसर्वव्यक्तिष्वेकयैव शक्त्या मुख्यत्वसम्भवादित्यत्राह ( भगच्छब्दव )दिति तथाच श्रीमति वैष्णवे पुराणे भगच्छब्दं प्रकृत्योक्तं "तत्र पूज्यपदार्थोक्तिपरिभाषासम-

ঙ্ তত্त्वटीका ঙ্

सम्बन्धगुणयोगयोश्च सर्वत्र सम्भवे क्वचित्प्रकृत्यादिष्वनियतप्रयोग इत्यत्राह ( तस्मादिति ) अयम्भावः, नह्यत्र सम्बन्धमात्राल्लक्षणा, नच किञ्चित्साम्याद्गौणीवृत्तिः, किन्तु तद्गुणो निरतिशयबृहत्वम् तल्लेशोपि लोकोत्तरबृहत्वं, तन्निबन्धनोपचारनियमान्नातिप्रसङ्गः । प्रयुञ्जतेच यथेष्टं स्तुतिनिन्दाभिप्रायेण मुख्यासन्ने तद्गुणप्रकर्षयोगिनि च तच्छब्दन्नामतयेति ॥ नन्वमुख्ये लभ्ये नोपचारः, नचावयवशक्तित्वाद्ब्रह्मशब्दस्यैकत्राप्यन्या शक्तिर्न कल्प्या किमुताऽनेकत्रेतिवाच्यं, तादृशस्यापि प्रयोगनियत्यै रूढेः कल्प्यत्वात् । पङ्कजादिषु पद्मत्वादिवच्चैकं नियामकं नदृष्टं अतो यावत्प्रयोगं शक्तिर्भेदेत्यत्राह ( अनेकेति ) क्लृप्तशक्तेः शब्दस्य प्रयोगविमर्शे हि प्रथमं मुख्यानुसारः, शक्तिपरीक्षायां स्वैकविषये शक्त्या प्रयोगान्यथासिद्धौ न शक्त्यन्तरङ्कल्प्यम्, गौरवात् अन्यथोपचार एवलुप्येत, अस्ति चासाविति गौणमुख्याधिकरणे स्थापितम् क्वचित्त्वगत्या ऽनेकशक्तिक्लृप्तिरित्याशयः ।

नैघण्टुकैस्त्वनादृत्य शब्दनिष्कर्षणाङ्गिराम् ।
प्रयोगप्रौढिशिक्षार्थं पठ्यते नेकनामता ॥ + ॥

यदत्र नियामकतयोक्तं लोकोत्तरबृहत्वं तेनैवैकेन निमित्तेनान्येष्वपिमुख्यत्वं स्यात् अन्यथा विपरिवर्तः किन्नस्यादित्यत्र दत्तोत्तरत्वमभिप्रयन् "प्रत्यक्षेपि विसम्वादो येषाङ्कस्त्वयमुत्तरं । तेभ्यो दद्यादितिज्ञात्वा वृद्धानामतमब्रवी" दितिन्या-

* श्रुतप्रकाशिका *

न्वितः । शब्दोयं नोपचारेण अन्यत्र ह्युपचारत" इति, अनेन प्रस्तुतचोद्यस्य कः परिहार उक्तो भवति ? । उच्यते बृहतिधातोर्मनिन्प्रत्ययान्तत्वेन निष्पन्नस्य ब्रह्मशब्दस्य प्रधानादिषु दृश्यमानः प्रयोगो नावयवशक्तिनिबन्धनः, तथा हि सति बृहन्महच्छब्दादिवदापेक्षिकबृहत्त्वयोगिषु सर्ववस्तुषु प्रयोगः स्यान्न च तथा प्रयुज्यते, त्रसरेणुमपि हि ततोणिष्ठतयाऽभिमतद्रव्यान्तरापेक्षया महिमगुणशालीति वदन्ति । न च त्र्यणुकादिषु ब्रह्मशब्दप्रयोगः । एवं सर्वत्र प्रयोगदर्शनात् पङ्कजशब्दव्यवस्थापककुमुदादिव्यावृत्ततामरसानुवृत्तपद्मत्वजातिवद् ब्रह्मशब्दप्रयोगविषये पञ्चषव्यक्त्यनुवृत्तान्यव्यावृत्ताकारादर्शनादनेकशक्तिकल्पने प्राप्ते, अनन्यथासिद्धस्य प्रयोगस्य शक्तिकल्पकत्वाद् ब्रह्मशब्दप्रयोगविषयेष्वन्येषु च बृहत्त्वगुणलेशयोगेन प्रयोगस्यान्यथासिद्धत्वाच्च नानेकशक्तिकल्पनं युक्तम् । तस्मात्पुरुषोत्तम एव प्रवृत्तिनिमित्तपौष्कल्यवति मुख्यत्वम् । अन्यत्रौपचारिकत्वं च । "औपचारिकस्तु प्रयोगः सङ्कोचसह इष्टः न तु सार्वत्रिक"इतितमिमं न्यायमभिप्रेत्य भगवच्छब्दस्य पुरुषोत्तम एव मुख्यत्वमन्यत्रामुख्यत्वं च भगवता पराशरेणोक्तम् । तथाहि ज्ञानादिमात्रं वा निरङ्कुशज्ञानादिकं वा, भगवच्छब्दप्रवृत्तिनिमित्तं, आद्ये पिपीलिकादावपि भगवच्छब्दः प्रयुज्येत, द्वितीये तु सर्वत्र निरवधिकज्ञानाद्यभावात् प्रवृत्तिनिमित्तासिद्धेर्नैकशक्त्या सर्वत्र मुख्यत्वम् । अनेकशक्तिकल्पनं चाऽयुक्तं प्रयोगान्यथासिद्धेरिति भगवत्पराशराभिप्रायः ।

ननु "उत्पत्तिं प्रलयं चैव भूतानामगतिं गतिम् । वेत्तिविद्यामविद्यां च स वाच्यो भगवानि"ति ग्रन्थोक्तेष्वौपचारिकभगवच्छब्दप्रयोगयोग्येषुयदलौकिकार्थसाक्षात्कारित्वमस्ति तदेव प्रवृत्तिनिमित्तीकृत्य भगवच्छब्दः सर्वत्राऽयं मुख्यः स्यात् । नैवम् । अलौकिकार्थसाक्षात्करणमात्रस्य प्रयोगाविषयव्यावृत्तत्वाभावान्न हि समाधिपर्यन्तयोगकाष्ठानिष्ठेषु केशिध्वजखाण्डिक्य—प्रह्लादादिषु भगवच्छब्दः

⁂ तत्त्वटीका ⁂

यात्पुराणोक्तिं निदर्शयति (भगवच्छब्दव) दिति तत्र " शुद्धे महाविभूत्याख्य " इत्यादिना, " अन्यत्र ह्युपचारतः " इत्यन्तेन भगवच्छब्दस्य यौगिकार्थपौष्कल्यवत्येव मुख्यत्वमुक्तं पुराणान्तरेपि " भगवानितिशब्दोयं तथापुरुषइत्यपि । नि-

**नायोगात्, भगवच्छब्दवत् । तापत्रयातुरैरमृतत्वाय स**

* श्रुतप्रकाशिका *

प्रयुज्यते । किञ्च प्रत्यक्षमूलव्युत्पत्त्या गवादिशब्दानामिवाऽऽगममूलव्युत्पत्त्या समग्रषाड्गुण्यादिमत्येव तस्य मुख्यत्वावगमात् ' ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्य शेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभि" रिति निर्दोषत्वपर्यन्तानां ज्ञानादीनां प्रवृत्तिनिमित्ततया वाच्यत्वमुच्यते, निर्दोषत्वञ्च निमित्ततया वाच्येत्वेनोच्यते, अन्यथा तदुक्तिवैयर्थ्यात्, न ह्यवाच्यं सर्वं निषेद्धव्यमनुक्त्वैव ह्यवाच्यत्वं सिद्ध्यति ।

न च ज्ञानशक्त्यादिष्वेकैकस्य प्रवृत्तिनिमित्तत्वं, किन्तु ज्ञानादिसमुदायस्यैव अन्यथा अशेषत इतिपदवैयर्थ्यादैश्वर्यस्य समग्रस्येत्युक्तत्वात् गवादिष्वतिप्रसङ्गभयाच्च प्रकर्षविशेषवतां ज्ञानादीनां समुदायस्यैव प्रवृत्तिनिमित्तत्वमुक्तमित्यभ्युपेयम् । एवं न्यायसिद्धार्थस्याऽऽगमसिद्धार्थो भाष्ये दृष्टान्तक्रितः "भगवच्छब्दव"दिति तथा भगवता पाराशर्येण "परं जैमिनिर्मुख्यत्वात्" "स्याच्चैकस्यब्रह्मशब्दव"दित्यादिसूत्रेषु ब्रह्मशब्दस्य भगवत्येव मुख्यत्वमुत्तरत्रोक्तम् । अतो यथोक्त एवार्थः । तथा च स्पष्टीकृतं श्रीमति गारुडे पुराणे, "वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने" इत्यारभ्य "यस्मिन् प्रयुज्यमाने तु गुणयोगः सुपुष्कलः । तत्रैव मुख्यवृत्तोऽय मन्यत्र त्वुपचारतः" इत्येवं शब्दसामर्थ्यमुपपादितम् । अथ ब्रह्मशब्दस्याऽनेकार्थमुख्यवृत्तत्वेऽप्येतत्सूत्रस्थस्य तस्यार्थस्वाभाव्यात् पुरुषोत्तमपरत्वमुच्यते । (तापत्रयातुरै)रिति (स एवामृतत्त्वाये)ति पदै "स्तमेवं विद्वानमृत इह भवति

* तत्त्वटीका *

रुपाधी च वर्तेते । वासुदेवे सनातन" इति । दार्ष्टान्तिकमपि गारुडे स्थापितं— "वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि । तस्मिन्नेव ब्रह्मशब्दोमुख्यवृत्तोमहामुने" इत्यारभ्य "यस्मिन्प्रयुज्यमानेतु गुणयोगस्सुपुष्कलः । तत्रैवमुख्यवृत्तोयमन्यत्रत्वुपचारत" इति॥ अस्त्वेकत्रैवास्यशक्तिः, अस्मिन्सूत्रे भेदकाभावादमुख्यत्वं किन्नस्यादित्यत्र ॥ "नास्ति भैषज्यमन्यत्र नारायणरसायनात्" 'वासुदेवंपरि-

एव जिज्ञास्यः । अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म ।

* श्रुतप्रकाशिका *

नान्यः पन्था" इत्यादिश्रुत्यर्थो विवक्षितः । अत एव हि "पुरुषोत्तमोऽभिधीयते" इत्युक्तं श्रुतेरपि पूर्वोक्तहेयप्रत्यनीकत्वकल्याणगुणाकरत्वविशिष्ट एव तापत्रयातुरैरुपास्यः, न तु तेष्वन्यतमइति न हि कारागारनिगडित एव तन्मोचानार्थिभिरभ्यर्थनीयः, तथा च वैष्णवे पुराणे निर्दोषकल्याणगुणाकरस्यैव मुमुक्षूपास्यत्वमुक्तं "स सर्वभूतप्रकृतिं विकारान् समस्तकल्याणगुणात्मकोसा" वित्यादिना 'तज्ज्ञानमज्ञानमतोन्यदुक्त'मित्यन्तेन, ब्रह्म--शब्दव्याख्यानं निगमयति, अतो–निर्दोषमङ्गलगुणाकरस्य सर्वेश्वरस्यैव तापत्रयातुरैर्जिज्ञास्यात्वादत्र तापत्रयातुरजिज्ञास्यतयोक्तं ब्रह्म सर्वेश्वर एवेत्यर्थः । यद्वा "अतः"–उक्तशब्दसामर्थ्यादर्थसामर्थ्याच्चेत्यर्थः ।

ननु ब्रह्मशब्दो व्युत्पन्नोऽव्युत्पन्नो वा भगवति मुख्यः ? अव्युत्पन्नत्वे बोधकत्वविरहिणस्तस्य न क्वचिन्मुख्यत्वम् । नापि व्युत्पन्नः स मुख्यः, अलौकि-

७ तत्त्वटीका ७

त्यजययोन्यन्देवमुपासते । तृषितोजान्हवीतीरे कूपंखनतिदुर्म्मतिः' इत्यादिप्रमाणगत्या प्रत्याह ( तापेति ) नह्यत्र मुख्यस्य बाधः भगवतः स्वतन्त्रस्वामित्वात् । अस्वतन्त्रस्यान्यस्य वा ऽयमर्थः सिद्धः, "जुष्टंयदा पश्यत्यन्यमीश" मित्यादिभि स्सोपबृंहणैः परोपास्तेरेव तापत्रयनिवर्तकत्वोक्तेः, । सएव " मन्तव्योऽन्वेष्टव्य " इतिविचार्य्यत्वेनाऽपि श्रुतइतिभावः । "अनेकार्थत्वेपि ब्रह्मशब्दस्यास्मिन्प्रयोगे सएवार्थ इत्याहे"ति विवरणान्तवन्वारोहेपि शक्तिविशेषदार्ढ्यपरं । जातिगुणादिनिमित्तत्वबहुरूढत्वपक्षेष्वपि हि समभिव्याहृतपदान्तरादेरर्थविशेषस्सिद्ध्येत् । यद्वा, मुख्यामुख्ययोस्तन्त्रेणानेकार्थत्वानुक्तिः । अमृतशब्देनैव कारणेच " तमेवं विद्वानमृतइति—तमेवम्विदित्वे " तिच वाक्यद्वयसूचनाद् द्वयोरविरोधः ख्यापितः । ननु प्रत्यगात्मन्यपि " सोन्वेष्टव्य " इतिदर्शनात् " नात्माश्रुते " रित्यादौ तस्यापि निरूपयिष्यमाणत्वाच्च " सएवेत्यवधारण " मिहाशक्यं, तादिदन्निगममुखेन व्युदस्यति [ अतइति ] शब्दशक्त्या प्रकृतार्थस्वाभाव्याच्चेत्यर्थः । त-

## ज्ञातुमिच्छा–जिज्ञासा इच्छाया इष्यमाणप्रधानत्वादि-

* श्रुतप्रकाशिका *

केर्थे व्युत्पत्त्यसंभात् कथमप्रतीते व्यवहाराविषये बुद्धिपूर्वका यादृच्छिकी च व्युत्पत्तिः सम्भवति । उच्यते । यथा कामिनीचन्दनभवनादिषु प्रयोगेण सुखविषयतया व्युत्पन्नस्य "यस्मिन्नोष्ण"मित्याद्यर्थवादपदसमभिव्याहारेण लौकिकसुखविषयतया व्युत्पत्तिः । यथा लोके क्वचिदप्यव्युत्पन्नत्वेपि यूपाहवनीय स्फ्य-कपाल-चपाल-चषाल-चात्वालादिशब्दानां वाक्यान्तरपदान्तरसमभिव्याहाराच्चत्तदर्थविषयतया व्युत्पत्तिः । एवं ब्रह्मात्मेश्वरादिशब्दानां लोके केषुचिदर्थेषु प्रयोगाद् व्युत्पत्तौ सत्यामसत्यामपि । "यतोवा इमानि भूतानि जायन्ते" "सत्यं ज्ञानमनन्तं ब्रह्म"त्यादिप्रसिद्धार्थवाक्यान्तरपदान्तरसमाभिव्याहारात् अलौकिकपरमात्मविषयत्वव्युत्पत्तिरुपपद्यते । अतो ब्रह्मशब्दस्योक्तरीत्या भगवत्येव मुख्यत्वं युक्तम् ।

अथ जिज्ञासाशब्दस्य व्याख्येयत्वस्फोरणाय प्रकृतिप्रत्ययविभागं दर्शयति ।

"ज्ञातुमिच्छा जिज्ञासे" ति विषयवैलक्षण्याधीनाया इच्छायाः कथं विधेयत्व ? मित्यत्राह । 'इच्छाया' इति । ज्ञानस्य विधानार्हतामाह "इष्यमा-

* तत्त्वटीका *

दुभयं "सर्वेश्वर" इत्यादिपदद्वयाभिप्रेतम् । [ जिज्ञासाकर्मभूतं ] जिज्ञासया प्राप्तुमिष्टतममित्यर्थः । प्रधानतया ह्यत्र जिज्ञास्यः परः, तद्भक्त्यारोहायाऽहङ्ग्रहोपास्तौ विशेषणतया बोद्धुश्च स्वात्मा विचिन्त्यः । प्रजापतिवाक्यादिषु च प्रत्यगात्मज्ञानं प्रकृतपरविद्यार्थतयैवोच्यतइति । वक्ष्यते सन्निहानिच्छार्थ इच्छार्थोवा ? नाद्यः, गुप्तिजित्यादावपाठात्, नद्वितीयः, विचारे विवक्षिते तदिच्छाभिधानविरोधात्' सूत्रलक्षणविरोधात्, उपचारायोगाच्चेत्यत्राद्यमनभ्युपगत्याऽन्त्यंसमर्थयितुं विगृह्णाति [ ज्ञातुमिति ] ननु प्रत्ययार्थप्रधाने जिज्ञासापदे ज्ञानस्य निमग्नत्वान्न विधेयत्वं, इच्छा तु न पुरुषतन्त्रा, नहि सा स्वज्ञानजन्या, विषयानूकूल्यधीनिघ्नतया तदभावे तदनुपपत्तेरप्रतीयमानत्वाच्चेत्यत्राह [ इच्छाया इति ] स्वविषयसिद्ध्यर्थतयेच्छारूपक्रियायाः प्रोक्षणादेरिव स्वकर्मप्रधानत्वं सिद्धं । "धातोःकर्मण"

# ष्यमाणं ज्ञानमिह विधीयते ।

* श्रुतप्रकाशिका *

णप्रधानत्वादि" ति सन्वाच्याया इच्छाया धात्वर्थः कर्म, कर्मणश्च क्रिया शेषभूता तत्सिद्ध्यर्थत्वाचस्याः, यथा यागीयव्रीह्यादेः प्रोक्षणादिः । कर्त्तुः क्रियया आप्तुमिष्टतमत्वं हि कर्मत्वम् । अतः प्रकृत्यर्थभूतज्ञानकर्मिकेच्छा तत्सिद्ध्यर्था अत इच्छाया इष्यमाणज्ञानप्रधानत्वाद् इष्यमाणं ज्ञानं विधेयमित्यर्थः । जिज्ञासायाः कर्त्तव्यत्वे प्रतीयमाने ज्ञानस्य कथं विधेयत्वम् ? उच्यते । यथा स्नात्वा भुञ्जीत प्राङ्मुखोभुञ्जीतेत्यत्र भुजिधातोर्विधिप्रत्ययान्तत्वाद् भोजनस्य कर्तव्यत्वे प्रतीतेपि स्नानप्राङ्मुखत्वनियमयोरेव विधेस्तात्पर्यमित्यर्थस्वभावादभ्युपगम्यते, तयोरप्राप्तत्वात् "अप्राप्ते हि शास्त्रमर्थवत्" तत्र भोजनं चान्यतः प्राप्तमनूद्यते, एवमिच्छाया विधेयत्वासम्भवात् तद्विषयभूतं विचारात्मकं ज्ञानमेव तात्पर्यतो विधीयते । "इष्यमाणं ज्ञानमिहाभिप्रेत" मिति हि सारेऽभिहितं । सनन्तनिर्देशश्च "निदिध्यासितव्यः" "विजिज्ञासितव्यः" "तद्विजिज्ञासस्वे" त्यादिश्रुत्यनुसारेणक्रियते । श्रुतिश्च उपायदशाप्रभृति भगवज्ज्ञानस्य प्रीतिरूपत्त्वेन इच्छाविषयत्वात्तथा निर्दिशति । यद्वा "ब्रह्मजिज्ञासे"ति सनन्तनिर्देशो विचारस्य

७ तत्त्वटीका ७

इत्यत्र च धात्वर्थस्य प्राधान्यमार्थं ग्राह्यं । अप्राप्तमेव विधेयं, अत इच्छावाचिना तत्सम्बन्धिविवक्षाऽत्र न युक्तेतिभावः ॥ तर्हि ज्ञानमात्रं वाच्यं, किमजागलस्तनकल्पेन प्रत्ययेनेत्यत्राऽधिकमधिकमर्थं सूचयतीतिनीत्या प्रत्युक्तिः [ इष्यमाणमिति ] सन्दिग्धसप्रयोजनविषयतया रागप्राप्तं विचाररूपं ज्ञानन्नोपासनादिवद्वैधमिति सूचनार्थकसन्नित्याशयः । ज्ञानशब्दश्चाऽत्रौचित्यादुक्तविशेषणपरः । रागविषयफलरूपज्ञानमुखेन विचाराक्षेपक्लृप्तिस्तु न युक्ता, धीविलम्बात् । विवक्षितस्य च साक्षाद्वक्तुं शक्यत्वात् । इह—मीमांसाख्यशास्त्रोत्तरभागारम्भे । एवमेव "अथातो धर्मजिज्ञासे" त्यादिष्वपीतिभावः ॥ ननु रागप्राप्तविचारे कथम्विधीयत इत्युक्तिः । नाप्यत्र गुर्वभिगमनादिनियमांशापेक्षया विध्युक्तिः न्यायानुपयोगात् । तादृशनियमनिषेधेन पूर्वपक्षानुत्थानाच्च । मैवं, न्यायप्राप्तत्याऽ-

* श्रुतप्रकाशिका *

रागप्राप्तत्वज्ञापनार्थः। एवमेव धर्मजिज्ञासेत्यत्रापि। अत्र तर्करूपं ज्ञानं विधेयं तर्कानुगृहीतवाक्यजन्यप्रमितिरूपज्ञानं तु फलत्वान्न विधेयं, प्रमितिरूपं विधेयं तर्करूपं ज्ञानमार्थमित्यपि परैरुक्तम्। अन्तर्णीतं विचारमाक्षिपतीति ततोपि प्रागुक्तपक्षः साधीयान् वेदान्तार्थविचारात्मकन्यायनिबन्धनरूपं हि शास्त्रं ब्रह्ममीमांसेति प्रसिद्धिः, प्रमितिश्च फलम्। अत एव हि ब्रह्मविचारः कर्तव्य इति भाष्ये वक्ष्यते। सनन्तस्याऽस्य ज्ञा--धातोर्ज्ञानसामान्यवाचिनो विशेषाकाङ्क्षायां समुचितविशेषपर्यवसानं हि न्याय्यं, ब्रह्मणो जिज्ञासा कर्तव्या न तु कपिलसुगताद्यभिमतानां प्रधानादितत्त्वानामिति ज्ञातव्यविशेषनिर्णयपरं सूत्रं व्याख्यातं यादवप्रकाशाचार्यैः, तद्व्यावृत्त्यर्थइह--शब्दः, इह--अस्मिन्नुपक्रमसूत्र इत्यर्थः। ब्रह्मणो जिज्ञास्यत्वमात्रे सिद्धे हि तस्यैव जिज्ञास्यत्वसिद्धिः, न चोभयं सूत्रप्रतिपाद्यं ब्रह्म जिज्ञास्यमेव ब्रह्मैव जिज्ञास्यमिति वाक्यभेदप्रसङ्गात्।

ननु ब्रह्मणो मुमुक्षुभिर्नियमेन जिज्ञास्यत्वं तन्त्रान्तरसिद्धानां प्रधानादीनाम् अजिज्ञास्यत्वेन विना न सिद्ध्यतीति ब्रह्मजिज्ञास्यत्वसमर्थने प्रधानादेरजिज्ञास्यत्वसमर्थनमर्थादापततीति न वाक्यभेदप्रसङ्ग इति चेत् न। अधीतक्रमेण वेदार्थे निरूप्यमाणे पूर्वभागविचारानन्तरमुत्तरभागविचारस्य प्रधानादिनिरासनिरपेक्षत्वात्, न ह्येकस्य प्रबन्धस्यैकदेशे निरूपिते तदेकदेशान्तरनिरूपणस्य प्रबन्धान्तरप्रमेयनिराससापेक्षता भवति, न हि पूर्वषट्केनिरूपिते उत्तरषट्कनिरूपणं, कपिलसुगतादिमतव्युदासेन विना न सम्भवति, यदि वेदान्तार्थस्य श्रद्धाद्रढिम्ने तदितरपक्षनिरसनमपेक्षितमिह क्रियतइति मतं, तदनुपपन्नं कृतकरत्वप्रसङ्गात्। एतदुक्तं भवति इहप्रधानादीनामजिज्ञास्यत्वं किं वेदान्तानामतत्परत्वोपपादनेन समर्थ्यते ? उत

× तत्त्वटीका ×

प्यनारभ्यत्वभ्रमे तन्निषेधपरत्वादत्र विधिशब्दस्य ॥

जातापि हि विचारेच्छा पूर्वपक्षोक्तियुक्तितः।
सीदत्युत्तभ्यते युक्त्या सिद्धे व्युत्पत्तिपूर्वया ॥ × ॥

अत्र " आपत्रये " तिग्रन्थे यादवप्रकाशोक्तं पूर्ववृत्तान्तरं, सांख्यादिविचारस्याऽनारभ्यत्वस्थापनञ्च, विवक्षितमिव प्रतिभाति, तद्व्युदस्यन्वाक्यार्थमाह

मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरि-

* श्रुतप्रकाशिका *

कपिलसुगताद्यागमाप्रामाण्य—तत्प्रमेयदौस्स्थ्यप्रतिपादनेन समर्थ्यते ? न प्रथमः ईक्षत्यधिकरणादिभिर्वेदान्तानामतत्परत्वस्य वक्ष्यमाणतयाऽत्र वक्तव्यत्वाभावात्; न द्वितीयः वेदविरुद्धस्मृतीनामप्रामाण्यस्य पूर्वमीमांसायामेव समर्थितत्वात् ; सांख्य-सौगताद्यभिमतप्रमेयदौस्स्थ्यस्य तर्कपादे प्रतिपादयिष्यमाणत्वात् । "विप्रतिषे-धाच्चासमञ्जसम्" "इतरेषां चानुपलब्धेः" "एतेन योगः प्रत्युक्तः" "उदा-सीनानामपि चैवं सिद्धिः" "अन्त्यावस्थितेश्चोभयनित्यत्वादविशेष" इत्यादिभिः सूत्रैस्तदुक्तमोक्षतदुपायनिरासस्यापि करिष्यमाणतया चात्र वक्तव्यत्वाभावात् । किञ्च "एतेन सर्वे व्याख्याता व्याख्याता" इत्यत्र । "अनावृत्तिः शब्दादना-वृत्तिः शब्दा" दिति शास्त्रान्ते च सूत्राभ्यासफलमनुक्तांशज्ञापनम् । अनुक्तांशश्च सांख्ययोगावगमतइति वदतां मोक्षस्य सांख्ययोसमुच्चयसापेक्षत्वं च प्रतिपादयतां सौगतादिवत् सांख्यादिनिरासेन शारीरकस्यैवारम्भणीयत्वप्रतिज्ञानमिति च व्या-हतं सांख्ययोगयोर्विरुद्धांशाभिप्रायमनादरणीयत्वकथनमिति चेन्न । विरुद्धांशाना-दरणीयत्वस्यविरोधाधिकरणन्यायसिद्धत्वादेव, अतो यादवप्रकाशकृतं सूत्रतात्पर्य वर्णनमनुपपन्नमितीह—शब्दाभिप्रायः । ( विधीयत ) इति अज्ञातज्ञापनं विधि-रिह विवक्षितम्, न त्वप्रवृत्तप्रवर्त्तनं रागतः प्रवृत्तेर्वक्ष्यमाणत्वात् । रागतः प्रवृत्त-स्यापि पूर्वपक्षयुक्त्याऽनारम्भणीयताबुद्धौ सत्यामारम्भणीयत्वज्ञापनम् हि अज्ञात-ज्ञापनम् अतो विधीयत—इत्यस्य स्वयमेव प्रवर्त्ततइति वक्ष्यमाणग्रन्थेनाविरोधः । इत्थं पदार्था व्याख्याताः ।

* तत्त्वटीका *

( मीमांसेति ) "माङ मान" इत्यत्र सन्नन्तत्वन्निपात्य वा, 'मान पूजाया' मि-त्यत्र वा "मानवधे" त्यादिनानिच्छासन्नन्तो वाऽयंशब्दः । मनेर्जिज्ञासाया, मितिवैयाकरणोक्तिस्त्वदूरविप्रकर्षात् । जिज्ञासाविशेषात्थाप्ये हि पूजितविचारे तदनुबन्धिनि प्रशस्तन्याये वा वृद्धप्रयोगादस्य शक्तिनिष्कर्षः । आहुश्च "मीमांसा संज्ञितस्तर्कस्सर्वो वेदसमुद्भवः" इत्यादि । तादृशन्यायनिबन्धात्मनि शास्त्रे भाक्तो

तनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च, पूर्ववृ-

* श्रुतप्रकाशिका *

अथ सूत्रस्य वाक्यार्थमाह ( मीमांसे ) ति अत्र पूर्ववृत्तात्कर्मज्ञानाद् अनन्तरं तत एव हेतोरित्यथातः—शब्दार्थ उक्तः । ब्रह्म ज्ञातव्यमिति—ब्रह्मजिज्ञासापदार्थः ( ज्ञातव्यम् ) विचारयोगग्यम् । ( तत एवे )त्येवकारेण शास्त्रान्तराधिगमनैरपेक्ष्यमथ—शब्दफलितमभिप्रेतम् । उक्तं भवतीति शब्दतोऽर्थतश्चेवि

७ तत्त्वटीका ७

मीमांसाशब्दः, अतः पूर्वपरविभागे ज्ञातत्वावसेयोक्तिरविरुद्धा । अत्र पूर्ववृत्तादित्यादिना वाक्ययोजनाशिष्टं तत्रत्यहेत्वंशसमर्थनम् ॥

विचारक्रमनिर्देशस्सौत्रस्तद्व्यक्तये त्विह ।
शास्त्रैक्यतत्क्रमौ प्रोक्तौ सूत्रकाराभिसंहितौ ॥ × ॥

पूर्वभागोपरितनभागशब्दाभ्यां नियतक्रमव्याख्यानरूपप्रबन्धैक्यम्व्यज्यते, तन्निदानं व्याख्येयस्य वेदस्य क्रमवत्त्वम् पदयोजनायां सशिरस्कशब्देन दर्शितं । पदवाक्यनिर्वाहयोस्तात्पर्यभेदादपुनरुक्तिः । ज्ञातस्य निर्णीतस्य अवसेयस्य—अबाधितापातधीस्थतया निर्णेतव्यस्य—ब्रह्मज्ञानस्य—ब्रह्मोपासनस्य । ब्रह्मस्वरूपमात्रविवक्षायामत्र ज्ञानशब्दाधिक्यात् "ज्ञातव्यस्य कर्मण" इत्येतत्समशीर्षतया साध्यविशेषग्रहणौचित्यात्, विचाररूपस्य निर्णयरूपस्य वा ज्ञानस्यावसेयत्वोक्त्ययोगात्, निर्दिश्य फलं प्रत्यचोदितत्वाच्च । तदिह समन्वयनीत्या स्वयमनन्ताक्षयफलत्वेन प्रधानतया ज्ञातव्यमपि ब्रह्म स्वोपासनस्याऽनन्ताक्षयफलसाधनत्वेन तद्विषयतयाऽपि ज्ञातव्यमितितदुपसर्जनतयोक्तिरपि सुसङ्गता । ब्रह्म ज्ञातव्यमित्यनेन तु तत्प्राधान्यं व्यज्यते । अत्र प्रयोजनवत्तयाऽऽपातधीस्थत्वं विचार्यत्वेहेतुः । कर्मविचारात्पश्चाद्भावितस्य तु प्रतिबन्धशान्तौ तत्सापेक्षत्वं, आनन्तर्यस्य च तादृशापेक्षणीयान्तराभावः ॥ अत्र श्रुत्युक्तनिर्वेदपूर्तिपर्यन्ताविचारविशेषाभिप्रायेण, 'तत एवे' त्युक्तम् । अवधारणमिह हेतुवैकल्यनिवृत्त्यर्थं, साधारण हेतुनिषेधायोगात् ॥ "केचित्तु हेत्वन्तराद्ब्रह्मविचारेऽनावश्यकत्वशूद्राधिकारत्वयोः प्रसङ्गात् कर्मधीव्यतिरिक्तहेत्वनादरोपदेशोऽयमित्याहुः ।" अत्र प्रधानप्रतिज्ञानं

त्वात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति । तदाह वृत्तिकारः—

* श्रुतप्रकाशिका *

भावः । कथमस्य सूत्रस्यायमर्थ इति शङ्कायां ? तदुपपादयति ( मीमांसे)त्यादिना । अथातइत्यादिपदानां यथोक्त एवार्थः कर्मब्रह्ममीमांसयोरैकशास्त्र्यात्, ऐकशास्त्र्यं च नियतपौर्वापर्यभागद्वयात्मकवेदाख्यैकप्रबन्धव्याख्यानरूपत्वादित्यर्थः। अत्र व्याख्येयस्य पूर्वापरभावेनावस्थितभागद्वयरूपत्वं तद्धेतुकं व्याख्यानस्य पौर्वापर्यविशेषविशिष्टभागद्वयरूपत्वं, चोभयं पदयोजनायां वाक्ययोजनायां च वक्तव्यं, तथापि ग्रन्थलाघवार्थं पदयोजनायाम "धीतसाङ्गसशिरस्कवेदस्ये"ति व्याख्येयस्य नियतपौर्वापर्यभागद्वयरूपत्वमुक्तम् । अत्र तु वाक्ययोजनायां व्याख्यानस्य नियतपौर्वापर्यभागद्वयरूपतयैकशास्त्र्यमुक्तम् । उभयत्रोभयमनुसन्धेयम् । भाग—शब्दाभ्यां मीमांसाद्वयस्य एकावयवित्वं सूचितम् । पूर्वोपरित्रन—शब्दाभ्यां क्रमनियम उक्तः । कर्मब्रह्म—शब्दाभ्यां वृत्तवर्त्तिष्यमाणकथनम् । अल्पास्थिरफलत्वानन्तस्थिरफलत्वाभ्यां तयोर्हेतुहेतुमद्भावोपपादनम् । मुक्त्युपायोपयोगितया कर्मणां स्वरूपेणोपादेयताप्रतीतिरनन्तस्थिरफलापातप्रतीत्यन्तर्भूता अतः पू-

७ तत्त्वटीका ७

तद्धेतुः प्रतिज्ञान्तर्हेतुश्च नोक्तस्स्यादितिबह्वनौचित्यम् । आकाङ्क्षितहेतुपूर्वकसाध्यविशेषायोगव्यवच्छित्यैवाऽर्थतो हेत्वन्तरादिनिरासस्तु युक्तः । ज्ञातव्यंविचार्य्यमित्यर्थः "कर्त्तव्य" इतिहि भाष्यते । अत्राऽर्हार्थे कृत्यप्रत्ययः । कर्मज्ञानादित्यत्राऽपि ज्ञानं विचारः "ब्रह्म ज्ञातव्यं भवती" त्यनेन स्वारस्यं युक्तिश्च सूच्यता ब्रह्मैव ज्ञातव्यमिति वाक्यार्थं वदन्तः प्रत्युक्ताः । इदं सूत्रमविचार्य्यत्वनिरासार्थं । ब्रह्मणोज्ञातव्यस्येतः पूर्वमसिद्धतया तदेव ज्ञातव्यमितिनियमो नोदेति । कथञ्च शब्दानां सिद्धपरत्वमसाधयित्वा सिद्धविशेषस्यविचार्य्यत्वोक्तिः । समन्वयसूत्रात्तत्साधनं साकाङ्क्षयोजना च न युक्तं ॥ अत्र चोदनासूत्रवच्छब्दतोऽर्थतश्चायोगान्ययोगव्यवच्छेदौ, वाक्यभेदाभावश्चेत्यप्ययुक्तम्, ।

[1]"वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति । वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं [2]"संहितमेत-

* श्रुतप्रकाशिका *

थगनुक्तिः । एवं क्रमविशेषविशिष्टैकव्याख्येयव्याख्यानरूपतया कर्मब्रह्मविचारयोरैकशास्त्र्यत्वात् सूत्रस्य यथोक्त एवार्थः ।

पूर्वप्रतिज्ञातं वृत्तिकारमतानुसारं वृत्तिग्रन्थेन सम्वादयति ( तदाहे ) ति कर्माधिगमस्यैव पूर्ववृत्तत्वं केवलं कण्ठोक्तम् ऐकशास्त्र्योक्त्यासिद्धंचेत्यभिप्रयन्नाह । ( वक्ष्यतिचे ) ति ।

वृत्तादित्यादिः संहितामित्यादिश्च वृत्तिग्रन्थौ (शारीरकं) ब्रह्ममीमांसा-जगच्छरीरः परमात्मा—शारीरः "तस्यैष एव शारीर आत्मे"ति श्रुतेः, तद्विषयं शास्त्रं शारीरकमित्युच्यते "षोडशलक्षणेन" षोडशाध्यायेन ( संहितमि ) ति नियतपौर्वापर्यैकव्याख्येयव्याख्यानरूपतया संगतमिति भावः "अर्थैकत्वादेकं वाक्य"मिति न्यायेन प्रधानंप्रतिपाद्यैक्याद्व्याख्येयस्य वेदस्यैकप्रबन्धत्वं भवेत्, तच्चोपपद्यते पुरुषार्थपरत्वाद्वेदस्य ब्रह्मपरत्वाद्वा "सर्वे वेदा यत्पदमामनन्ति" वेदैश्च सर्वैरहमेव

× तत्त्वटीका ×

अनुपयुक्तप्रतिज्ञामात्रानुपपत्तेः । "ब्रह्मशब्दावर्धकतयाऽन्यनिषेधः प्रस्तुतोपयोगी" ति च मन्दम्, तत्प्रतिज्ञानेपि हेतुश्चाऽत्रोक्तः । तदूहेत्वीक्षत्यधिकरणाद्यैः तर्कपादान्तैः साधनप्राप्तैः कृतकरत्वं च स्यात् । किञ्च शारीरकेऽनुक्तांशस्य साङ्ख्ययोगावगम्यत्वम्वदाद्भिः कथमिह तन्निषेधःप्रतिज्ञायते । वेदविरुद्धानादरणीयत्वन्तु विरोधाधिकरणतः प्रागेवसिद्धम् । अतोऽत्र ब्रह्मज्ञातव्यमेवेतियोजना युक्तेतिवृद्धाः । अनेन श्रोतव्यादिश्रुतिरनुसृता भवति । अत्र स्वोक्तौ पदार्थवाक्यार्थौ वृत्त्याऽपि दृढयन् तन्मतानुसारेण तत्कृतिसम्वादन्दर्शयति ( तदाहेति ) अनन्यथासिद्धिपूर्वत्वविवक्षया कर्मविचारस्य हेतुत्वमपि वृत्त्यभिप्रेतं । अधिगम्यतेऽनेनेत्यधिगमोऽत्र विचारः । विविदिषोक्तिर्जिज्ञासोक्तिवन्नेया । स्वोक्तसूत्रार्थसिद्ध्यै सूचितम् शास्त्रैक्यमपिसम्वादयति ( वक्ष्यतीति ) व्याख्यास्यमानप्रदेशान्तर

१ बोधायनवृत्तिः ॥ २ बोधायनवृत्तिः ॥

च्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्व-

* श्रुतप्रकाशिका *

वेद्य" इति हि श्रुतिस्मृती वेदार्थविचारस्यानुगतत्वान्मीमांसाया एकप्रबन्धत्वम् अनेनैकशास्त्र्येण कर्माधिगमस्य पूर्ववृत्तत्वमाक्षिप्तम् ।

ननु यद्यैकशास्त्र्यं कर्मब्रह्मविचारयोस्तर्हि उपक्रमे साधारणोर्थः प्रतिज्ञायेत 'अथातो वेदार्थजिज्ञासे'ति नचैवं प्रतिज्ञातं, किन्तु पूर्वभागासाधारण एव प्रतिज्ञातः—'अथातो धर्मजिज्ञासे'ति । अत्र ब्रूमः ब्रह्मजिज्ञासेत्येवोभयभागसाधारणार्थप्रतिज्ञा, कर्मविचारस्तु ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन सङ्गतः, ब्रह्मविचारान्तर्भावेपि पृथक्करणमुपपद्यते यथा निग्रहान्तर्भूतच्छलजात्योराह्निकभेदेन पृथगुक्तिः, यथा च निग्रहान्तर्भूतहेत्वाभासानामध्यायभेदेन पृथगुक्तिः, पृथक्करणं च बहुग्रन्थप्रतिपाद्यत्वात् तत्र च पूर्वभावित्वमुपजीव्योपजीवकभावादिवक्ष्यमाणहेतुनिबन्धनम् । एतदुक्तं भवति, अर्थक्रमाद् ब्रह्ममीमांसातृतीयलक्षणचतुर्थपादेन

* तत्त्वटीका *

विषयतया भविष्यन्निर्देशः । ऐकशास्त्र्यमिह न केवलमेकविद्यास्थानत्वं किन्त्वैकप्रबन्ध्यमपीत्यभिप्रायेण संहितत्वोक्तिः । अधीतकृत्स्नवेदार्थरूपविचार्यैक्यसिद्धौ कर्मब्रह्मकाण्डयोः प्रत्येकमपूर्णार्थत्वेन परस्परसाकाङ्क्षत्वान्नष्टाश्वदग्धरथन्यायेन सङ्घटितमित्यर्थः । इयञ्च वृत्तिश्शास्त्रभेदभ्रमहेतूंस्तत्परिहारांश्च सूचयति, सर्वशरीरगोचरत्वं दर्शयता शारीरकशब्देन विषयभेदज्ञापनात् "एतदिति" प्रयोजनाधिकारिभेदयोरर्थभेदस्फुरणस्य चाऽङ्गुल्यैव निर्देशात् जैमिनीयेनेतिभेदशङ्काद्योतनम् । तत्परिहारस्तु षोडशलक्षणेनेतिद्वादशाध्यायीचतुरध्यायीरूपकाण्डद्वयेन तत्र "कर्मदेवता ब्रह्मगोचरा सा त्रिधोद्गभौ सूत्रकारतः । जैमिनेर्मुनेः काशकृत्स्नतो बादरायणादित्यतःक्रमादितितत्वरत्नाकरोक्तेश्च । वृत्तेश्च क्वचिदुपचरणाविरोधो ग्राह्यः । षोडशलक्षणेनेति प्रतिबन्दीमभिप्रयताऽवान्तरविषयादिभेदानां सम्बन्धैक्यविरोधित्वमिति दर्शितम् । "जैमिनीयेनेत्यनेनैवार्थविरोधशङ्का सूत्रतात्पर्यानभिज्ञतयेति सूच्यते । सूचयिष्यति हि शारीरकशास्त्रेषु बहुषु जैमिनेस्सम्वादं व्यामोहशान्त्यै "धर्मञ्जैमिनिरतएवे" त्यादिषु तत्सम्वादोक्तिनिरासौ । परामर्शञ्जैमि-

* श्रुतप्रकाशिका *

कर्मविचारः सङ्गतः। प्रतिपत्तिसौकर्यलक्षणक्रमात्तु कर्मविचारस्य पूर्वभाव इति एवं वा साधर्म्यवैधर्म्यसमयेऽज्ञोत्योः कथनेन यथा प्रतिधर्मसमोभयानुयायिन्यर्थ-सिद्धा। एवं भागद्वयासाधारणार्थप्रतिज्ञाद्वये कृते साधारणार्थप्रतिज्ञानमार्थं स्यात् साधारणार्थे प्रतिज्ञातेऽप्यसाधारणार्थस्तु पृथगेव प्रतिज्ञातव्यः, धर्मजिज्ञासायां प्रतिज्ञातायामप्य "थातः शेषलक्षणम्" "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे" त्यादौ ह्यसाधारणार्थप्रतिज्ञा कृता, अतो भागद्वयासाधारणार्थप्रतिज्ञानेन तदनुगतसाधारणार्थप्रतिज्ञानमार्थं स्यादिति प्रथम 'मथातोधर्मजिज्ञासे' ति प्रतिज्ञातं न तु वेदार्थजिज्ञासेति। अथवा, अथातोधर्मजिज्ञासेत्येव साधारणप्रतिज्ञा, अलौकिकं श्रेयः साधनं हि धर्मः, तदनुयायिप्रतिपाद्यं, धर्मश्च साध्यसिद्धभेदेन द्विविधः, सिद्धरूपे वस्तुनि धर्मशब्दप्रयोगो महाभारते दृष्टः, यथा—"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातन"मिति, तथाभियुक्तैश्च लौकिकत्वे सति श्रेयः साधनत्वं धर्मशब्दप्रवृत्तिनिमित्तं मन्यमानैः सिद्धरूपेर्थे धर्मशब्दः प्रयुक्तः, द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते। तेषामैन्द्रियकत्वेपि न तादूरूप्येण धर्मतेत्यादौ, तत्र द्रव्यादिसद्भावेपि क्रियाप्राधान्यात् साध्यधर्मपरः पूर्वभागः। उपासनतदङ्गसद्भावेपि ब्रह्मप्रधानत्वात् सिद्धधर्मपर ऊर्ध्वभागः। अत उभयभागविचारणी प्रथमप्रतिज्ञा, तत्र धर्मशब्दस्य साध्यधर्मविषयतया प्रसिद्धिप्राचुर्येण बुद्धिस्थत्वात् पूर्वभागप्रतिपन्नत्वेन प्राथम्याद्धर्मजिज्ञासापदेनैव तन्त्रेण वा अर्थतोवा प्रतिज्ञातत्वोपपत्तेश्च, तल्लक्षणमुक्तं चोदनासूत्रे। सिद्धरूपधर्मविशेषस्य च साधारणप्रतिज्ञयैवार्थतः प्रतिज्ञातत्वेपि तस्य बहुग्रन्थ-

७ तत्त्वटीका ७

नि". रित्यादौ नैष्ठिकाद्याश्रमाभावो जैमिन्यसूत्रितोऽपि शास्त्रे नूनं सकामानां ग्रहस्थधर्मवैमुख्यनिवारणार्थं कदाचिदुक्तोऽनूद्यापास्तः। अन्यथा 'तद्भूतस्य तु नातद्भावो जैमिनेरपी' इत्यादौ नैष्ठिकाद्याश्रमप्रच्युतिनिषेधस्य जैमिनिसम्वादोक्त्ययोगात् "मध्वादिष्वसम्भवादनधिकारञ्जैमिनिः" 'भावञ्जैमिनिर्विकल्पामननात्' दित्यादिष्वपि शास्त्रैक्यविरुद्धानुक्तिः। स्वोक्तव्याख्याभेदवत् स्वल्पान्यथोक्तेस्तदविरोधात् संहितत्वोक्त्या कर्तृभेदाभेदयोर्यथादृष्टिप्रबन्धभेदाभेदानापादकत्वं ख्या-

* श्रुतप्रकाशिका *

व्यवधानाच्छब्दाबोध्यत्वशङ्कापरिजिहीर्षया च पुनः प्रतिज्ञा कृता, तस्य लक्षणमुक्तं जन्मादिसूत्रइति युक्तमैकशास्त्र्यम् ।

ननु पूर्वभागस्य साध्यधर्मप्रधानतोक्तिरुदाहृतवचनेन विरुध्यते तत्र पूर्वभागेपि सिद्धरूपस्य परस्य कर्माराध्यतया प्रधानप्रतिपाद्यत्वावगमात् तस्मिन्वचने वेदविच्छब्दो हि पूर्वभागाभिज्ञपरः, गोबलीवर्दन्यायाद् "विष्णुनामा स वेदेषु वेदान्तेषु च गीयत" इत्यनेनैकार्थ्याच्च ।

न च गुणभावेन कर्मणां प्रतिपाद्यत्वमित्यविरोधः, प्राधान्येन प्रतिपाद्यत्वस्य जैमिनेरभिमतत्वात्, भवद्भिरपि तथोक्तत्वाच्च, सत्यम् । वस्तुतः प्राधान्यं परमात्मन एव यथा राज्ञस्तात्पर्यगोचरतालक्षणं, शब्दप्राधान्यन्तु कर्मण एव यथा राजपुरुषस्य, तच्चातिरस्कृतं तत्र तस्य परमात्माराधनरूपत्वानवगमात् ।

नच तदवगमोऽवश्यं सम्पाद्यः, अन्तवत्स्वर्गादिफलप्रदत्वे कर्मणां परदेवताज्ञाननैरपेक्ष्यं हि श्रुतिस्मृतिभ्यामवगम्यते "यो ह वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" इति "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च, न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते" इति च अतस्तन्नैरपेक्ष्यलक्षणमपि प्राधान्यमस्ति कर्मणः, अतः पूर्वभागे कर्मणः प्रागवगतं प्राधान्यं पश्चादवगन्तव्यं परमात्माराधनरूपत्वं चाविरुद्धम्, अतः प्रतिज्ञोपपत्तेः शास्त्रैक्यं युक्तं, यद्यपि कर्मब्रह्ममीमांसयोरैकशास्त्र्यमविवक्षितं जैमिनिना, तथापि तदङ्गीकृत्य तदेकशास्त्रतया बादरायणेन ब्रह्मसूत्रप्रणयनं युक्तं, यतः, अतदर्थतया क्लृप्तमपि योग्यमपेक्षितं तादर्थ्यमर्हति, ग्रामे कल्प्येपूर्वतडागवद् विवक्षितत्वसम्भवश्च दर्शितः । अतः शास्त्रैक्यं युक्तम् ।

❀ तत्त्वटीका ❀

पितम् । अर्थसङ्गतौ सत्यां ह्यन्यतराभिसन्धेरुभयाभिसन्धेर्वा सन्धायकत्वं युक्तम् ।

ब्रह्मसम्वाददार्ढ्येन प्रधानार्थाविरोधतः ।
अप्रधानविरोधस्तु तात्पर्यादपनोद्यते ॥ ७ ॥
परिकल्पितसूत्रार्थविरुद्धांशव्यपोहतः ।
शेषपूरणवद्वात्र संहितत्वोक्तिसम्भवः ॥ * ॥

सिद्धि" रिति, अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः ।

* श्रुतप्रकाशिका *

नन्विदमयुक्तमेकशास्त्र्यं शारीरकशब्दसूचितात् प्रधानप्रतिपाद्यभेदाज् जैमिनीयशब्दसूचितात् कर्तृभेदात् तदुभयफलितात् प्रयोजनभेदादर्थविरोधाच्चेत्याशङ्कां परिहरति ( अतः प्रतिपिपादयिषिते )ति । अतः—वृत्तिकारोक्तादेकव्याख्येयव्याख्यानरूपत्वसम्बन्धादित्यर्थः । षट्कभेदः—पूर्वमीमांसायामध्यायभेदस्तत्रोत्तरत्र च निदर्शनार्थमुक्तौ, अर्थभेदाभावे ह्येकं षट्कमेकोध्यायो वा स्यात्, अत एकावयवित्वे सिद्धे सत्यवान्तरार्थभेदो न महावाक्यैकत्वविरोधी, यथा पदार्थभेदो वाक्यार्थैकत्वाविरोधीति भावः । अनेन प्रतिपाद्यभेदः परिहृतः । प्रयोजनभेदश्चाऽर्थात्परिहृतः । षट्कद्वयचिन्तितप्रकृतिविकृतिप्रयोजनभेदस्य शास्त्रभेदकत्वाभावात्, अनेन वृत्तिग्रन्थगतषोडशलक्षणशब्दतात्पर्यं च दर्शितं । पूर्वोत्तरमीमांसाशब्देन जैमिनीयशारीरकशब्दौ च विवृतौ । प्रतिपिपादयिषितशब्देनार्थविरोधः परिहृतः प्रतिपादयितुमिष्टं हि प्रतिपिपादयिषितं स च तात्पर्यविषयोऽर्थः, विरुद्धतया प्रतीयमानेषु देवतानिरासादिषु न तात्पर्यमित्यभिप्रायः । नन्वेवं कथमभिधीयते ?

छ तत्त्वटीका छ

कुतस्तर्हि तद्भेदप्रथा, सति वा भेदे कथञ्च प्रबन्धैक्यमित्यनवहितानुयोगे द्वितीयवृत्त्यभिप्रेतं व्यनक्ति ( अतइति ) सयुक्तिकसम्प्रदायादित्यर्थः, प्रतिपिपादयिषितत्वोक्त्या कर्मकाण्डदेवताधिकरणादेर्देवतातत्वनिश्चयरहितानामपि कर्मप्राशस्त्यप्रतिपादनपरत्वेन विग्रहादिनिराकरणादौ तात्पर्याभावस्सूच्यते । उक्तं ह्यागमप्रामाण्ये— "यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासम्वर्धनाये" ति विवृतश्चैतद्भेदार्थसङ्ग्रहे "अश्रुतवेदान्तानां कर्मण्यश्रद्धा माभूदिति देवताधिकरणेऽतिवादाः कृता" इति अतिवादाः— अन्यपरोक्तयः । तावताऽपि बाह्योक्तानित्यसंयोगादिनिमित्तश्रुत्यप्रामाण्यशङ्कानिरासात्तत एव स्वाभीष्टसिद्धेरित्याशयः ॥ अपि चैवं नवमाद्यपादे "फलदेवतयोश्च । न चोदनातो हि ताद्गुण्य" मितिप्रसक्तयोःफलदेवतयोर्मध्ये देवताविषयाणि "देवता वा प्रयो-

* श्रुतप्रकाशिका *

"आम्नायस्य क्रियार्थत्वादि"ति सिद्धपरवाक्यानां तच्छेषत्वं हि सूत्रकारेण कण्ठोक्तं तच्च विरुद्ध्यत एव, अतः शास्त्रभेद इति । नैवं "पदे जुहोति" "आहवनीये जुहोति" "न हिंस्यात् सर्वाभूतानि" "पशुमालभेते"ति वत् । शास्त्रान्तरे "कर्मण्यण्" "आतोऽनुपसर्गे क"इति वच्च उत्सर्गापवादन्यायेन शास्त्रैक्याविरोधात्, सामान्येन सिद्धपरवाक्यानां क्रियाशेषत्वेऽभिहिते सिद्धपरवाक्यविशेषस्य किं विधिशेषित्वं नवेति विचार्य स्वयं पुरुषार्थविरहिणामेव सिद्धपराणां क्रियाशेषत्वं स्वयंपुरुषार्थपर्यवसायिनां तु सिद्धपरवाक्यानां न तच्छेषत्वमिति हि निर्णेतुं युक्तं, यथा होमस्य सामान्येनाहवनीये प्राप्तत्वेपि होमविशेषस्य पदे कर्त्तव्यत्वनिश्चयः, यथा च सामान्यतो हिंसानिषेधेपि हिंसाविशेषस्य कर्त्तव्यतोक्तिः, यथा च सामान्येन कर्मण्युपपदे धातोरणि प्राप्तेऽप्याकारान्ताद्धातोः कप्रत्ययविधिः ।

ङ तत्त्वटीका ङ

जयेदित्यादीनि सूत्राणि यानितानि व्याकुर्मः । देवतोद्देशेन देयन्द्रव्यं देवता न प्रयोजयेत्, कुतः ? कृष्यादिवत्फलसाधनभूतक्रियाया एव प्रयोजनत्वोपपत्तेः, तत्राह "देवता वा प्रयोजयेत् अतिथिवद्भोजनस्य तदर्थत्वात्" ९-१-६ । वाशब्दश्शङ्कानिवर्त्तकः । हविरुद्देश्या देवता फलार्थिनं स्वाराधने प्रयोजयेत्, कुतः ? भोजनस्य तदर्थत्वात्—भोजनस्य हविषस्तत्समर्पणस्य च, तदर्थत्वात्—तच्छेषत्वात् । सम्प्रदानभूता हि देवता प्रधानतया स्वार्थे द्रव्यतत्समर्पणे प्रयुङ्क्ते ।

क्रियाप्रधानवाक्येषु न्यग्भूतापि हि देवता ।
तत्तन्मन्त्रादिसामर्थ्यादार्थप्राधान्यशालिनी ॥ × ॥

नच वाच्यम् विग्रहादिपञ्चकायोगान्नप्रयोक्त्रीदेवतेति, स्मृत्युपचारान्यार्थदर्शनैरबाधितैस्तत्सिद्धेः । अतो यथाविग्रहादिमानतिथिराराध्यः । स्वार्थे स्वाभीष्टमुपचरणं प्रयुङ्क्ते तथा देवतापीति ॥ "अर्थपत्वाच्च" ॥ ९-१-७ ॥ अर्थ्यते प्राप्यते इत्यर्थो विभूतिः, अर्थ्यत इति वा अतस्तदभावादनाराध्यानीप्सितप्रदत्वादप्रयोजिकेति नशङ्क्यम्, परा खलु देवता सर्वस्येष्टे तन्नियुक्ता चापरा यथाधिकारं तत्तद्विभूतीनां ॥ तथापि निरपेक्षा देवता न कुतश्चित्प्रीयते न कञ्चित्प्रीणाति,

* श्रुतप्रकाशिका *

नच तत्र शास्त्रभेदः, तद्वद् देवतानिराकरणे च न तात्पर्यम् । अश्रुतवेदान्तानां कर्मण्यश्रद्धानिराकरणाय कर्मप्राधान्यपरत्वात्तस्य "नहि निन्दा निंद्यं निन्दितुं प्रवर्त्तते, अपि तु निन्दितादितरत् प्रशंसितुमिति" हि नीतिविदः, यद्वा वेदप्रामाण्य—कर्मावश्यकर्त्तव्यतातात्पर्यातिशयात् तत्प्रतिपक्षनिराचिकीर्षयाऽन्वारुह्य-वादो देवतानिरासोक्तिः स्यात्, अभिमततरार्थानादरेणापि हि विपक्षव्युदासो दृश्यते यथा "अभीष्टार्थव्ययेनापि जयति क्षेत्रहारिणम् । लब्धक्षेत्रैर्न दुष्प्रापः स्यादर्थ इति निश्चयात्" एवमभिमततरेश्वरानादरेणापि वेदप्रामाण्यादिसमर्थने पश्चादभिमतसिद्धिरयत्नलभ्येति जैमिनेरभिप्रायः, तत्सिद्धिप्रकारश्च तदुक्तरा-

ॐ तत्त्वटीका ॐ

ततः कथं प्रयोजिकेत्यत्राह "ततश्च तेन सम्बन्धः" ९—१—८ । ततः—नैरपेक्ष्येऽपि नरदेवनीत्यादयौदार्यशालिन्याः परिचर्यमाणायाः प्रसेदुष्यादेवताया एव हेतोः, परिचरतां, स्वाभीष्टफलेन सम्बन्धः स्मृत्युपचारादिभिरेवंसिद्ध इतिपूर्वपक्षः । राद्धान्तस्तु "अपि वाशब्दपूर्वकत्वाद्यज्ञकर्मप्रधानं स्यात्" ॥ ९ ॥ १ ॥ ९ ॥

अत्रापि वेति सार्धाङ्गीकारं पक्षव्यावर्त्तनम् । यद्यपि देवताया विग्रहादिपञ्चकं दुर्निषेधं, द्रव्याद्यपेक्षया सम्प्रदानस्य प्राधान्यं यजेश्च देवताराधनवाचितया यागस्य तादर्थ्यं सिद्धपरवाक्येषु च परावरदेवतयोस्स्वरूपादिकमनन्यार्थमामनामः । तथापि कर्त्तव्योपदेशेषु यज्ञादिरूपं कर्म फलसाधनतया चोदितत्वात्प्रधानं सत्साध्यतया बुद्ध्यारोहेण पुरुषं प्रवर्तयति । कृत्स्नं च देवताक्रियाशेषभूतम् ॥ ननु फलप्रदाया देवताया आराध्यत्वेन प्राधान्यमनुशोश्रयामहे, अत्राह—

"गुणत्वे देवताश्रुतिः" ॥ ९ ॥ १ ॥ १० ॥

हविःप्रदानम्प्रति गुणीभूतां हि देवतामनुशृणुमः । मन्त्रार्थवादोपस्थापितं देवताप्रीतिरूपमपूर्वं चोदितस्य कर्मणः क्षणिकस्य कालान्तरभाविफलद्वारतया उपादीयेत । अतो वास्तवप्राधान्यशालिन्यपि देवताफलकामप्रवर्त्तकशाब्दप्राधान्यक्रियागुणीभूता न प्राधान्येन प्रयोजिकेति । अतिथेस्तर्हि कथं प्रयोजकत्वं इत्थमित्याह-

अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् ॥ ९ ॥ १ ॥ ११ ॥

आतिथ्यं प्रत्यतिथेः प्रधानत्वं प्राप्तम्, अन्यथा हि तदर्थे कर्मणि प्रयोजका-

* श्रुतप्रकाशिका *

त्रिसत्रन्यायाद्यधीन इत्युत्तरत्र व्यक्तीभविष्यति ।

नच तत्सिद्धिमभ्युपगच्छतस्तदनादरवादव्याघातः तस्यान्वारुह्यकृतत्वात् कथमन्वारुह्यवादत्वनिश्चयः ? उच्यते "सम्पत्तेरिति जैमिनिः" "अन्यार्थं तु जैमिनिः" "परं जैमिनिर्मुख्यत्वात्" । ब्राह्मेण जैमिनि" रित्यादिब्रह्मसूत्रैरेव जैमिनेर्ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपगमस्य प्रतिपन्नत्वात् । महाभारते च हयशिरउपाख्यानादिषु भगवद्व्यासोपदेशलब्धपरमात्मतत्त्वज्ञानत्वावगमाच्चेति । अतो विरुद्धेऽर्थे तात्पर्याभावान्नार्थविरोधः । नन्वर्थविरोधो दुष्परिहरः, तथा हि विशेषातिदेशनिरूपणपरे अष्टमाध्याये विकृतिषु प्रकृतिधर्मातिदेशे कर्तव्ये सति कस्मिन् कर्मणि कस्य कर्मणो धर्मातिदेशः प्राप्त इत्यपेक्षायां यस्य कर्मणो येन कर्मणा द्रव्यसाम्यं देवतासाम्यं वा भवति तस्मिंस्तद्धर्मोतिदेष्टव्य इति स्थितं, तत्र यस्य केनचिद् द्रव्यसाम्यं केनचिद्देवतासाम्यं च भवति तस्मिन् द्रव्यसाम्यवत एव कर्मणो धर्मातिदेशः कृतः, न तु देवतासाम्यवत इति द्रव्यप्राधान्यमुक्तं जैमिनिना "द्रव्यदेवतासाम्ये द्रव्यं बलीय" इति ।

* तत्त्वटीका *

भावात्तदभावस्स्यात् ॥ तत्सपर्याविधिरेव तत्प्रयोजक इतिचेत्तत्राह ।

"तस्य प्रतिविधानत्वात्" ॥ ८ ॥ १ ॥ १२ ॥

आतिथ्यकर्मणो हि आतिथ्यगमनप्रतिविधानतयैव चोदना ।

क्रियाप्रयुक्तपुरुष—समाहूता तु देवता<br>
सन्निधत्ते तदिष्टार्थं न ततस्तत्प्रयुक्तता ॥ + ॥<br>
अतिथिस्तु स्वयम्प्राप्तस्स्वाभीष्टं च प्रयोजयेत् ।<br>
तदिष्टानुविधानेन तत्सपर्याथचोदना ॥ + ॥

अतः प्राप्ताप्राप्तविवेकादतिथिप्राधान्योक्तिरिति ॥ यथा चाऽतिथेर्ग्रहादिमत्त्वे तदुपचरणानुष्ठानस्य न कदाचित् क्षतिः, प्रत्युत स्वरूपलाभ एव, एवं देवतायास्तद्वत्त्वेपि, नचाऽत्र तत्प्रतिक्षेपसाफल्यं पश्यामः । गुणीभावसाधनेऽपि किम्फलितमिति चेत् अनिर्धारितवास्तवप्राधान्येनाऽन्येषामपि कर्मश्रद्धासम्बन्धेनमिति ॥

सूत्रेषु तावदेतेषु पूर्वपश्चिमपक्षयोः ।

* श्रुतप्रकाशिका *

न च द्रव्यप्राधान्योक्तेरतिवादत्त्वमनुष्ठानविरोधात् द्रव्यप्राधान्येनह्यनुष्ठानन्दृश्यते, अतो द्रव्यप्राधान्यं वदतो जैमिनेर्देवतानिरासे तात्पर्यमस्तीति । अत्रोच्यते । नाऽत्र द्रव्यदेवतयोः सद्भावासद्भावाभ्यां प्राधान्याप्राधान्ये विवक्षिते, अपि तु विलम्बिताविलम्बितप्रवृत्तिप्रमाणविषयत्वाधीने, द्रव्यं ह्यविलम्बितप्रत्ययगम्यं देवता तु विलम्बितशास्त्रगम्या । विलम्बाविलम्बावेव हि श्रुतिलिङ्गादिषु प्रत्यक्षादिषु च पूर्वोत्तरप्राबल्यदौर्बल्यहेतू ।

ननु हविष्ट्वं शास्त्रैकगम्यमिति न द्रव्यस्यापि प्राधान्यमितिचेत् नैवं चरुपुरोडाशादिकं द्रव्यं हि प्रत्यक्षं हविष्ट्वाख्यधर्ममात्रमेव तत्र शास्त्रगम्यं देवतायास्तु स्वरूपं, श्रेयःसाधनत्वादिधर्मश्चोभयमपि शास्त्रगम्यम् । अतः स्वरूपतो धर्मतश्च विलम्बितमानगम्यत्वाद् देवताया अप्राधान्यं धर्ममात्रस्य शास्त्रगम्यत्वेपि धर्म्यंशेनाविलम्बितमानगम्यत्वाद्धविषः प्राधान्यमतः प्राधान्याप्राधान्ययोः प्रमाणद्वारकत्वेन स्वरूपासद्भावे तात्पर्यं नास्तीति देवतानिरासोक्तिरन्यपरा । एवमर्थान्तराण्यप्यविरोधेन नेतुं शक्यानीति नार्थविरोधः ।

❁ तत्त्वटीका ❁

देवताविग्रहादेर्न प्रतिक्षेपपरसूचनम् ॥ ÷ ॥
शाबरे पूर्वपक्षोक्तदेवताविग्रहादिषु ।
स्वतःप्रामाण्यवेदिभ्यस्त्वदते न निराकृतिः ॥ + ॥
स्मृत्योपचारादन्यार्थदर्शनैश्च स्वभाषितम् ।
न वाङ्मात्रेण निह्नोतुं शक्यते नास्तिकेतरैः ॥ + ॥
अदर्शनकुतर्काभ्यां श्रुतार्थानामपन्हवे ।
चार्वाकादिमतापत्त्या सर्वोपप्लवसम्भवः ॥ + ॥
श्रुतानां विग्रहादीनां कल्प्यत्वोक्तिश्च मोहजा ।
श्रुतशक्त्याद्यभावस्य कल्पने गौरवन्तु नः ॥ × ॥
क्षणिकस्य फलद्वारं किम्भवेदिति चिन्तने ।
द्वारक्लृप्तेर्वरंतत्र श्रुतद्वारपरिग्रहः ॥ × ॥
देवतानां क्रियार्थत्वं कर्मणाञ्च तदर्थता ।

* श्रुतप्रकाशिका *

ननु ब्रह्मसूत्रैरेव जैमिनिपक्षमनूद्य प्रतिक्षेपादर्थविरोधो दुष्परिहरः, तथाहि "फलमत उपपत्ते"रित्यत्रेश्वरस्य फलप्रदत्वोक्त्या "धर्मं जैमिनि"रिति धर्मस्य फलप्रदत्वमनूद्य प्रतिक्षिप्तं न श्रुतत्वोपपत्तिभ्यां कालान्तरभाविफलसाधनमात्रे जैमिन्यभिहिते ताभ्यामेवात्र फलसाधनविशेषसिद्धेरुक्तत्वात् ।

ननु शेषत्वात् पुरुषार्थवादो यथा "अन्येष्विति जैमिनि"रित्यत्र वेदान्तोदितात्मज्ञानस्य कर्मशेषतयाऽऽत्मनां कर्मशेषत्वोक्तिरधिकोपदेशादिति सिद्धान्तेन विरुद्ध्यते ।

न च विकल्पेन निर्वाहः सम्भवति, वस्तुनि विकल्पायोगात् ।

न च जैमिनिना परमतमुपन्यस्तमिति वाच्यं जैमिनिमतत्त्वेन सिद्धान्तिना प्रतिक्षेपायोगात् । नैवम् । विपक्षनिरासार्थस्य जैमिनेरन्वारुह्यवादस्य तथोपन्यासप्रतिक्षेपोपपत्तेः । अन्यथा "परं जैमिनि"रित्यादिसूत्राणां मिथोविरोधः, भारतोक्तिविरोधश्च, जैमिनेरन्वारुह्यवादमजानतान्तदुक्ते तत्त्वबुद्धिः स्यादिति

* तत्त्वटीका *

मुखभेदेन सिद्धत्वान्नामिथो बाधमर्हतः ॥ * ॥
आदित्यादिमतीरङ्गे स्थापयन्बादरायणः ।
देवतानाम्प्रधानत्वमर्थसिद्धमसूत्रयत् ॥ + ॥
नासिद्धदेवतारूपदृष्टिश्चाऽन्यत्र युज्यते ।
नच सर्वत्र निर्बाधे कल्प्यो दृष्टिविधिक्रमः ॥ ÷ ॥
देवतानां तपश्चर्याद्युक्तिश्च न विरुध्यते ।
स्वाधिकेश्वरतोषार्थप्रवृत्तेरुपपत्तितः ॥ + ॥
प्रशासितुश्च घृणया धर्मसंस्थापनार्थिनः ।
तत्तत्कर्मप्रवृत्तिस्स्यात्कर्मवश्यानुसारिणः ॥ ÷ ॥
तिर्यक्स्थावरनिर्जीवतत्प्रतीकगुणक्रियाः ।
अभिमत्यवनुन्धेन देवतास्तदपि श्रुतम् ॥ + ॥
हविर्भेदानुसारेण फलभेदप्रदायिता ।
प्रतिषिद्धः प्रकोपश्च राजादिन्यायतो भवेत् ॥ ÷ ॥

* श्रुतप्रकाशिका *

तन्निवारणाय ब्रह्मसूत्रे तदुपन्यासनिरासौ कृतौ । अतएव "परामर्शं जैमिनि"रित्यत्र नैष्ठिकाद्याश्रमप्रतिक्षेपोऽपि परिहृतः, 'तद्भूतस्ये'त्यत्र नैष्ठिकाद्याश्रमभ्रंशस्य जैमिन्यनभिमतत्वाभिधानात्, न ह्याश्रमानभिमतौ तद्भ्रंशानभिमतिसम्भवः । अतो वीतरागव्यतिरिक्तानामग्निहोत्रादिष्वश्रद्धानिवारणार्थं आश्रमान्तरप्रातिक्षेपः पूर्ववदन्वारुह्यवादः, स च पूर्वमीमांसायामसूत्रितस्तथाऽप्यौडुलोम्यादिमतवदनूद्य निरस्तः ।

न च मधुविद्यायां वस्वाद्यनधिकारोक्तिरधिकारोक्त्या विरुध्यतइति वाच्यम्

७ तत्त्वटीका ७

यदि श्रुत्यनुसारेण स्वभावो हविरादिषु ।
तेनैव तत्तदाराध्यस्वभावस्वीक्रियोचिता ॥ ÷ ॥
मन्त्रार्थवादसिद्धेऽपि यत्र बाधा न दृश्यते ।
तन्मूला स्मृतिरप्यत्र न बाधार्हा स्वमूलवत् ॥ ÷ ॥
पर्य्याये च विशिष्टे च देवताभेदकल्पनम् ।
तत्तच्छब्दोपधानेन तदुद्देश्यत्वसिद्धये ॥ ÷ ॥
अविदित्वा स्वमन्दत्वं नास्तिकैरास्तिकेष्विह ।
यैरजल्प्यत मन्दत्वं शोच्यास्ते सूक्ष्मदर्शिभिः ॥ + ॥
द्रव्यदैवतसामान्ये बलीयो द्रव्यमित्यपि ।
प्रत्यक्षे च परोक्षे च प्रमाणप्रास्थितेर्वशात् ॥ ÷ ॥
द्रव्यास्याऽध्यक्षसिद्धस्य हविष्ट्वं शास्त्रगोचरः ।
देवतायास्स्वरूपं च धर्मत्वञ्चेति भेदतः ॥ * ॥
प्रत्यक्षाद्युपजीवित्वाच्छास्त्रतो धीविलम्बिता ।
ततो हि परदौर्बल्यं श्रुतिलिङ्गादिकेष्वपि ॥ × ॥
द्रव्यदैवतवैषम्यं न सत्यासत्यभावतः ।
दैवतं यदि मिथ्यास्यात् कथम्भेदादिधर्मभाक् ॥ ७ ॥
अर्थोपश्लिष्टशब्दात्मा शब्दमात्रात्मिकाऽपिवा ।
यथाश्रुतिगृहीता वा सत्यैव खलु देवता ॥ ÷ ॥

## मीमांसाशास्त्रम्–“†अथातो धर्मजिज्ञासा” इत्यारभ्य

* श्रुतप्रकाशिका *

अनधिकारोक्तेर्मध्वादिदेवताभ्युपगमचिह्नत्वेन शास्त्रैक्याविरुद्धतया तदुद्घाटनवैयर्थ्याद् “भावं जैमिनि”रित्यादिसूत्रोक्तपक्षाश्च शास्त्रैक्यविरुद्धाः कर्मविचारे तेषामसमर्थनादिति न तत्पर्यनुयोगावकाशः, तस्मान्नार्थविरोधः, कर्तृभेदपरिहारस्तु प्रसिद्धत्वान्नकण्ठोक्तः, अतएव चशब्दसूचितो वा धूर्तस्वामिकपर्दिकर्तृकस्याऽऽपस्तम्बसूत्रव्याख्यानस्य व्याख्येयैक्यादेकप्रबन्धकत्वं हि दृष्टम् पाणिनीयसूत्रपूर्वोत्तरवृत्त्योश्च वामनजयादित्यकर्तृकयोर्व्याख्येयैक्यादेकव्याख्यानत्वं दृष्टं तस्मादुपपन्नमैकशास्त्र्यम् ।

अस्त्वैकशास्त्र्यं कथं पौर्वापर्यनियमः?–इति शङ्कां परिहरन् वृत्तिग्रन्थस्थं “संहित”मिति पदं विवृणोति ।

( मीमांसे )ति क्रमविशेषान्वितमैकशास्त्र्यं संहितमित्यभिप्रेतम् आरभ्यैव-

× तत्त्वटीका ×

मणिमन्त्रौषधाद्यैश्च सिद्धिरुक्ताभ्युपेयते ।
जन्मसिद्धापि साऽधीता किन्न देवेषु गृह्यते ॥ ·। ॥
न वस्तुदेशान्तरयोर्देवदृष्टिविधानवत् ।
इह कल्पयितुं युक्तं स्वरूपविधिसौस्थ्यतः ॥ ·। ॥
रात्रिसत्रादिनीत्या च विध्यपेक्षानुसारतः ।
फलदाः फलभूतत्वादपि सिद्ध्यन्ति देवताः ॥ ·। ॥
इत्थं प्राचीनयागत्वात्क्षिप्तं निर्दैवतं मतम् ।
शेषन्तदुपरीत्यादिसूत्रभाष्ये भविष्यति ॥ ·। ॥

द्रमिडभाष्यकारैरप्युक्तं—अञ्जसैव विश्वसृजो रूपमित्यारभ्य नह्यरूपाया देवताया रूपमुपदिश्यत यथाभूतवादि हि शास्त्र, मिति । नन्वर्थवादानां विधिशेषत्वं पूर्वत्रोक्तं । समन्वयाधिकरणे त्वन्यथा तत्कथमविरोधः । इत्थं । उत्सर्गापवादतः प्रवृत्तेः । दृष्टश्चैतच्छास्त्रान्तरे काण्डान्तरे च– एवमन्यत्राऽपि कुदृष्टिक-

† पूर्वमी० १. अ० १. पा० १, सू०

"† अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" इत्येवमन्तं

* श्रुतप्रकाशिका *

मन्तमिति पौर्वापर्यानियम उक्तः ( सङ्गतिविशेषेणे )ति अत्राभी सङ्गतिविशेषा अभिप्रेताः पाठक्रमश्चेतनानां त्रिवर्गे प्रथमप्रावण्यसम्भवरूपोऽर्थस्वभाव औपनिषदेष्वङ्गाङ्गिभावप्रतिपादकवाक्येषु यज्ञादिकर्मणः पदार्थत्वेन सम्बन्धः कासुचिद्विद्यासु

ҩ तत्त्वटीका ҩ

त्वितो विरोधश्शमयितव्यः ॥ "षट्कभेदवदि" ति कर्मकाण्डे प्रतिबन्दी । "अध्यायभेदवदि" ति । काण्डत्रयेऽपि । चकारोऽत्रानुक्तपादादिभेदसमुच्चये । देवताकाण्डाच्छारीरकस्य पृथक्करणञ्च तत्पृथक्करणप्रतिबन्द्यानिरुद्धम् । अथ भिन्नक्रमत्वभिन्नप्रबन्धत्वव्युदासं वृत्तिसिद्धं व्यनक्ति । (मीमांसाशास्त्रमिति) ( सङ्गतिविशेषेण ) हेतुहेतुमद्भावादिना सम्बन्धेनेत्यर्थः । नच विंशतिलक्षण्यामेकप्रयोजनसाधनत्वेनैकप्रयत्नसाध्यत्वमिति विवरणम् । इदञ्चैकप्रबन्धव्यक्त्यर्थं। विशिष्टक्रमं नियतक्रमं । नहि शास्त्रान्तरवदवसरमात्रादिह क्वापि क्रम इत्याशयः तत्र विशेषः ॥

विचारात्पूर्वमेवाऽत्र प्राप्तमध्ययनं विधेः ।
ततोऽनधीतवेदस्य विचारश्श्रुतिवारितः ॥ × ॥
क्रमो विंशतिलक्षण्या न वैधः किन्तु यौक्तिकः ।
अतो व्युत्क्रमचिन्तायामनौचित्यं प्रकाश्यते ॥ ८ ॥

"आरभ्ये" त्यनेन धर्मजिज्ञासासूत्रे कृत्स्नवेदार्थविचारप्रतिज्ञानूच्यते । धर्मशब्देन सिद्धसाध्यपरावरकृत्स्नधृतिहेतुसङ्ग्रहात् । कर्मभागमात्रप्रतिज्ञाऽपि तत्रैव तन्त्रत, आवृत्त्या वा, सिद्ध्येत् । तावतैव सारे कर्मविचारार्थत्वोक्तिः भागद्वयप्रतिज्ञाभ्यां सामान्यप्रतिज्ञा गम्या । न्यायसूत्रे साधर्म्यवैधर्म्यसमोक्त्या प्रतिधर्मसमोन्नीतिवत् । तदेतत्सर्वं सङ्गतिमालायामुक्तम् । नच वाच्यमाद्यप्रतिज्ञयैव तु कृत्स्नसिद्धौ किं भूयो विशेषप्रतिज्ञयेति । शङ्काविशेषोद्धारादिप्रयोजनवशात् प्राचीमाध्यायेष्विवाऽत्रापि तदुपपत्तेः । नचाऽयमथातोधर्मजिज्ञासेत्यादिरप्रस्तुतार्थः ।

---

† शारीरक मी० ४. अ० ४. पा० २२. सू०

* श्रुतप्रकाशिका *

यज्ञतदुपकरणादीनां दृष्टिविशेषणत्वोक्त्या कर्मब्रह्मविषयोर्दृष्टान्तदार्ष्टान्तिकभावो विद्याकर्मणोरुत्पाद्योत्पादकभावात् तच्छेषभूतविचारयोस्तु तत्क्रमभाक्त्वोपपत्तिर्व्याख्यानभूतमीमांसायां च उत्तरभागस्य पूर्वभागोक्तन्यायसापेक्षत्वं चेति, एवं पौर्वापर्यनियामकसङ्गतिविशेषेण विशिष्टक्रमं-क्रमविशेषवदित्यर्थः ।

ॐ तत्त्वटीका ॐ

यथाऽन्यत्र सङ्गत्या क्रमनियतिस्तथात्रेति तात्पर्यात् । अत्र प्रमाणकस्याऽनिरूप्यतया प्रमाणलक्षणेन प्रथमेनाभावि । कार्त्स्न्येन वेदस्य प्रामाण्ये सिद्धे तदर्थेषु भेदाभावेऽसङ्गत्यादेस्सर्वस्याऽयोगात् मानचिन्तानन्तरं शास्त्रार्थभेदचिन्ताप्रावर्तिष्ट । शास्त्रचिन्तेत्येके । तत्र शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयैः सिद्धे भेदे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिश्शेषलक्षणं प्रवृत्तम् । शेषाणामेव शेषिभिः प्रयोज्यत्वाय चतुर्थे क्रत्वर्थपुरुषार्थजिज्ञासा । विध्यपेक्षारूपोपादानचिन्तेति केचित् । प्रयुक्तेषु श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डैः पञ्चमे क्रमोऽनुक्रान्तः सक्रमे शास्त्रार्थे स्थापिते तत्प्रयोक्ता षष्ठे प्रोक्तः । एवमुपदिष्टे प्रकृतिनिश्चये विकृतावातिदेशस्सामान्यतस्सप्तमे स्थापितः । अष्टमेऽपि तदनुबन्धिविशेषः । अतिदिष्टमन्त्रादीनान्नवमे बहुविध ऊहः । अतिदेशप्राप्तेषु क्वचित्प्रयोजनाभावादन्यतो वा तल्लाभात्प्रतिषेधतो वा दशमे बाधः । उक्तेषु पृथक्प्रयुक्तिशक्तिमदुभयगोचरत्वदेशकालाद्यैक्ये चैकादशे तन्त्रं । द्वादशेऽपि कस्मिंश्चित्प्रयोगमध्यपातिन्यन्यस्मिंस्तत्प्रयोगोपजीविनि प्रसङ्ग इति । तदिदं सञ्जगृहुः--

"धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्तृभिः ।
सातिदेशविशेषो वा बाधतन्त्रप्रसक्तिभिः" ॥ × ॥

एवं तर्कितकर्मणि सङ्कर्षणकाण्डे चतुर्लक्षण्या तत्तत्कर्माराध्यदेवतैव स्वरूपभेदगुणप्रकर्षैर्निराकृष्यत । तत्समाप्तौ च " अन्ते हरौ तद्दर्शनात्" सविष्णुराह हि" "तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते" इतिविचारयिष्यमाणमुपक्षिप्यत इति तत्त्ववृद्धाः । ततोऽन्तिमे काण्डे सद्वारकमद्वारकञ्च यथार्हं द्वादशलक्षण्युक्तसर्वधर्मसमाराध्यमनन्तरचतुर्लक्षण्युपधारितसर्वदैवतशरीरकं परं दैवतं परीचिक्षिपितम् । तत्र सर्वेषां कारणवाक्यानामयोगान्ययोगव्यवच्छेदेन ब्रह्मणि समस्य-

# सङ्गतिविशेषेण विशिष्टक्रमम् । तथाहि-

* श्रुतप्रकाशिका *

ननु भवतु वेदप्रामाण्यसिद्ध्यै प्रथमाध्यायस्य पूर्वभावित्वं द्वितीयाध्यायात् पूर्वं ब्रह्मविचारः किं न स्यादिति तत्र तत्रोक्तैः सङ्गतिविशेषैः षोडशलक्षणानुपूर्वीसिद्धेस्तदनन्तरप्राप्तत्वात् ब्रह्मविचारस्येत्यभिप्रेत्य ( सङ्गतिविशेषेण विशिष्टक्रम )मित्युक्तम् । एवमत्रैकशास्त्र्यं पौर्वापर्यनियमः शास्त्रस्यारम्भणीयत्वं च त्रयं

७ तत्त्वटीका ७

तः प्रथमाध्याये प्रतिपाद्यते । तदुक्तं न्यायसुदर्शने—

" व्युदस्याविषयत्वान्य-विषयत्वे समस्यतः ।
वाक्यानां ब्रह्मणि प्राचाध्यायेनेह प्रदर्शितः " ॥ इति ।

तत्र शङ्कितविरोधोद्धूननं द्वितीयाध्याये । ताभ्यां स्थापिते ब्रह्मण्युत्पत्तिक्रमात्तृतीयचतुर्थाभ्यां साधनफलशोधनमिति विंशत्यध्याय्या विशिष्टक्रमत्वं दिङ्मात्रम् ।

हन्तैवमत्र कथं षोडशचतुष्कपौर्वापर्यं ? व्युत्क्रमेऽपि हि न विरोधः । वेदप्रामाण्यादिकस्तूपजीव्यमपि यथास्थानं शारीरके निबद्धुं शक्यं, तावन्मात्रं वा संश्रुत्यब्रह्मचिन्ता स्यात् । मैवं— अस्ति ह्यनाद्यभ्यस्ते त्रिवर्गे कर्मकृत्प्रथममादोषदर्शनादभिनिविशत इत्यर्थक्रमः । उभयत्र परिमितामितफलापातप्रतीत्यविशेषेऽपि "अर्के चेन्मधुविन्देते" ति न्यायात्कर्मसापेक्षविद्याप्रयासतो वरन्तन्नैरपेक्ष्यनिर्धूत विकल्पतत्समफलकर्मचिन्ताप्रथममिति च । यज्ञादिपदार्थापेक्षश्च तदङ्गकवाक्यार्थधीबोधः । विद्याभेदेषु तत्र तत्र यज्ञतदवयवदृष्टिविधिविमर्शश्च दृष्टिविशेषणनिर्द्धारणापेक्षः । इष्टकचितादिदृष्टान्तधियश्च दार्ष्टान्तिकोपजीव्याः । कर्मब्रह्मप्रचुरस्वाध्यायभागस्याऽनादिसम्प्रदायनियताध्ययनसंस्कारक्रमेण तद्विचारक्रमोऽपि युक्तः । सचाऽत्र मुख्यक्रम एव, कर्मोपासनारूपाङ्गांग्युत्पत्तिक्रनाच्च । तथा चोक्तं न्यायसुदर्शने---

"कर्मविज्ञानयोर्हेतुहेतुमद्भावसम्मतेः ।
प्राग्भावः कर्मणस्सिद्ध्येत् पश्चाद्भावो परस्य च ॥ ॥
तयोश्च क्रमवत्त्वेन तद्विचारौ च तादृशौ ।

प्रथमं तावत् "† स्वाध्यायोऽध्येतव्य" इत्यध्ययनेनैव स्वाध्याय-

* श्रुतप्रकाशिका *

प्रतिज्ञातं। पूर्वोक्तस्य साङ्गसशिरस्काध्ययनस्य प्रमाणं दर्शयन् साधनचतुष्टयसम्पादनस्यानवसरग्रस्ततां च दर्शयन् प्रतिज्ञातार्थत्रयमुपपादयितुमाह ( तथाही )ति ।

प्रतिज्ञातार्थत्रयोपपादनार्थमध्ययनविधिं निरूपयति (प्रथम )मिति ।

ननु वेदप्रामाण्यसमर्थनमिव कर्मविचारसिद्धमध्ययनविधिनिरूपणं किन्नो-

७ तत्त्वटीका ७

मुख्यक्रमनयादेव स्यातां सारस्वताङ्गवत् ॥ " इति ।

यथा "सारस्वतौ भवतः एतद्वै दैव्यम्मधुनमि" त्यत्र युगलोत्पन्ने यागद्वये कस्याङ्गानां प्राथम्यमित्यनिर्णये सरस्वतीयागस्य याज्यानुवाक्याभ्यां प्राथम्ये सिद्धे तत्क्रमेणैव तदङ्गानां प्राथम्यं "मुख्यक्रमेण वाऽङ्गानां तदर्थत्वा" दिति ।

पूर्वकाण्डप्रसिद्धानां न्यायानामिहसङ्ग्रहात् ।
ब्रह्मकाण्डो वृथेत्येतत्प्राच्याध्यायेष्वपि स्मर ॥ + ॥
व्युत्पादनमपूर्वाणामाक्षिप्य स्थापनन्तथा ।
अपवादः क्वचिच्चेति सार्थत्वमिह च स्थितम् ॥ + ॥

ननु यदि " अनावृत्तिश्शब्दादि " त्यन्ता मीमांसा तदा शारीरकस्य विरक्ताधिकारत्वस्वीकारात्तत्र निर्दोषानन्तफलनिश्चयाच्च न स्वर्गादिफलसाधनानुष्ठाता कश्चित्सिध्येत् ? ततश्च काम्यविधीनामननुष्ठानलक्षणाप्रामाण्यं स्यात् ॥ मैवं, मोहाद्विभ्राद्वा यः कर्ममात्रं विचार्यविश्रान्तः यश्चाख्यातिलाभपूजाप्रवचनादिमात्रकामस्त्वध्यन्तार्थं चिन्तयेत् । यो वा पश्चान्नियतिवशान्निवृत्तवैराग्यः, ते श्रुतशारीरका अपि प्रवृत्तिधर्मं न जह्युः ॥

पण्डितोऽप्यातुरः कश्चिदपथ्येषु प्रवर्त्तते ।
निषिद्धेष्वपि किन्नैवं काम्यं प्राज्ञेऽपि सम्भवेत् ॥ + ॥
कथ्यन्ते च महान्तोऽपि कामादुभयभावनाः ।
क्रममुक्तिश्च केषाञ्चित्तत एवाऽभिधीयते ॥ + ॥

† यजुरारण्यके २ . प्र. १५. अ०

# शब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ।

* श्रुतप्रकाशिका *

षजीव्यते ? इति चेत् । न । अर्वाचीनव्याख्यातृभिरर्थज्ञानपर्यन्ततायास्तत्रतत्रोक्तत्वात्, अक्षरराशिग्रहणपर्यन्तत्वं हि भगवद्बादरायणाभिमतम् "अध्ययनमात्रवत" इति हि वक्ष्यते, अतस्तत्र वक्ष्यमाणोऽर्थः शास्त्रारम्भणीयत्वायाऽत्र प्रतिपाद्यते । अध्ययनविधेरक्षरराशिग्रहणमात्रपर्यन्तत्वे निरूपिते शास्त्रस्यारम्भणीयत्वसिद्धिः कृत्स्नविषयत्वनिरूपणेन ऐकशास्त्र्यपौर्वापर्यनियमसिद्धिः । कथमक्षरग्रहणमात्रपरत्व आरम्भणीयत्वम् ? । इत्थम् । अध्ययनविधेरर्थज्ञानपर्यन्तत्वे सत्यर्थज्ञानस्य, "अधीत्य स्नायात्" "आचार्यकुलाद्वेदमधीत्याभिसमावृत्त्ये" ति यज्ञाद्यनुष्ठानशेषत्वेन विनियोगादुपनिषत्सिद्धस्य ब्रह्मज्ञानस्यापि कर्मशेषत्वा-

ঌ तत्त्वटीका ঌ

प्रकृतस्यैकशास्त्रस्य ब्रह्मचिन्तोद्यमस्य च ।
क्रमादेश्च प्रपत्त्यर्थे तथाहीत्यादि भाष्यते ॥ ÷ ॥

तत्र कर्मविचारात्प्रागपि ब्रह्मविचारस्स्यादिति पश्यन् किमध्ययनादपि तस्य पूर्वत्वमिच्छति, उताऽधीतवेदस्य कर्मनिरूपणात्प्राच्यत्वमिति विकल्पं हृदि निधायाऽऽद्यन्निषेधति [ प्रथमामिति ] तावच्छब्दोऽध्ययनानन्तर्यस्य सर्वसम्मतिन्दर्शयतीति विवरणम् । एतेन विचारस्याध्ययनानन्तर्भावित्ववद्व्याख्येयस्यैकाविधिसिद्ध्याध्ययनसंस्कारगोचरनियतक्रमैकप्रबन्धत्व, मध्ययनस्य विधिबलात्कृत्स्नस्वाध्यायविषयत्वं, तत एव तद्विचारस्य तथात्वञ्च, यथावत्कर्मब्रह्मचिन्तकैस्सर्वैर्दुस्त्यजमिति व्यज्यते । अवधारणार्थो वा तावच्छब्दः । तेन चाऽष्टवर्षाद्युपनीतस्याऽनन्तरं शौचाचारशिक्षणपूर्वकेण नियतेनाध्ययनेन शास्त्रान्तरावसरनिरोधात्तन्मूलत्वेन सम्भावनीयसाधनचतुष्टयादिपूर्ववृत्तान्तरनिरासः "स्वाध्यायोध्येतव्य" इति स्वविधिं गृह्णता तत्प्रयुक्तिरित्यभिप्रेता । "अध्ययेनेनाऽक्षरराशिग्रहण"मित्यनेन संस्कारलाभस्सूचितः । एवकार इह नियमस्य फलितत्वं द्योतयति । यद्यप्युपकरणे प्रत्यवायान्निमित्तादृष्टेश्च नित्योऽयमध्यनविधिः, तथापि दृष्टस्य फलस्याऽपरित्याज्यतया तत्स्वीकारार्थाध्ययनादक्षरराशिग्रहणे सत्यन्यस्य ग्रहणादे-

* श्रुतप्रकाशिका *

पत्तेस्तस्य च ज्ञानस्य "आत्मा वा इदं" "ब्रह्म वा इदम्" "अयमात्मा ब्रह्मे"ति त्रय्यन्तस्थब्रह्मशब्दस्यात्मपर्यायत्वेनात्मविषयत्वादात्मज्ञानस्य व्रीह्यादिद्वारा प्रोक्षणादेरिवात्मद्वारा कर्मशेषत्वे सति द्वारभूतव्रीह्यादेरिव द्वारभूतात्मनश्च कर्मशेषत्वं स्यात् ।

न च समुद्रध्यानवदात्मज्ञानस्य दृष्टद्वारा कर्मशेषत्वात् समुद्रवदात्मा न कर्मशेष इति वाच्यम् । कर्मशेषतयाऽवक्लृप्तस्याऽऽत्मनो द्वारभावे सम्भवत्यदृष्टकल्पनायोगात्, समुद्रस्य तु क्रतूपकारकत्वासम्भवेन ह्यदृष्टकल्पनम् । नन्वात्मनः फलप्रदतया शेषत्वमस्त्विति चेत् । न । सम्प्रतिपन्नेनात्मनात्मज्ञानस्य कर्मशेषत्वे निरूढेप्यसम्प्रतिपन्नात्मकल्पनायोगात् । न हि जीवविलक्षण आत्मा सम्प्रतिपन्नः, अतोऽनुष्ठानशेषभूत आत्मा कर्मसु कर्तृभूतो जीव एवेति वेदान्तानां जीवपरत्वेन, तदतिरिक्तेश्वरे प्रमाणाभावादप्रामाणिकेश्वरविचाररूपं शास्त्रमनारम्भणीयं स्यादिति प्राप्नुयात्, अक्षरराशिग्रहणमात्रपर्यन्तत्वे त्वर्थज्ञानस्यानुष्ठानशेषत्वाभावेन कर्मसु कर्तृभूतजीवातिरिक्तात्मप्रतिपादनसम्भवात् प्रामाणिकपरमात्मविचाररूपं शास्त्रमारम्भणीयं स्यादित्यतोऽध्ययनविधिर्निरूप्यते । तत्राऽध्ययनस्य सक्तुहोमवत् प्रधानकर्मत्वं स्वरूपेण विधेयत्वमध्यापनविधिप्रयुक्तत्वमुपनयनस्याऽध्यापनाङ्गत्वं च प्राभाकराभिमतमनादृत्याऽध्ययनस्यावघातवद् गुणकर्मत्वं नियमस्य विधेयत्वमध्ययनस्य स्वविधिप्रयुक्तत्वमुपनयनस्याध्ययनाङ्गत्वं चेति कौमारिलाभिमतमर्थचतुष्टयमुभयानभिमतमक्षरराशिग्रहणमात्रपर्यन्तत्वं च सङ्ग्रहेण प्रतिजानीते ( प्रथममि ) ति । प्रथमं तावत्—प्रथमत एव "यावत्तावच्च साकल्ये ऽवधौ माने ऽवधारण" इति नैघण्टुकाः । प्राथम्यं शास्त्रान्तरश्रवणयोग्याव-

* तत्त्वटीका *

तोर्नात्राऽवकाशः । अध्ययनस्य नियोगार्थत्वं वदतापि ह्यर्थात्पुस्तकपाठादि प्रतिषेध्यं । अत एव लिखितपाठकनिन्दापि । "स्वाध्यायशब्दवाच्ये" त्यादिभिस्त्रिभिस्स्वशाखैकदेशमात्रम्वा शास्त्रान्तरम्वा विचार्यो वेदार्थोवा न स्वाध्यायशब्दवाच्य इतिव्यज्यते । यथा क्रमाऽध्ययनं परम्पराप्राप्तं विध्यनुमतत्रितिभावः । ग्रहणं विधीयते—फलत्वेन बोध्यते । सम्भवदुपायान्तरं फलमिदमुपायविशेषतो

तच्चाध्ययनं किं रूपं ? कथं च कर्त्तव्यम् ? इत्यपेक्षायाम्

* श्रुतप्रकाशिका *

स्थापेक्षया पूर्वभावित्वम् । गर्भाष्टमोपनीतस्य ह्यध्ययनं ततः पूर्वं शास्त्रान्तरपरिश्रमानर्हत्वादध्ययनविधिपरतन्त्रस्य साङ्गाध्ययनानन्तरं कर्मविचारावश्यंभावस्यस्वरससिद्धत्वाच्च, साधनचतुष्टयादिपूर्ववृत्तान्तरानिष्पादनस्यानवसरग्रस्तत्वं प्रथमंतावदित्यनेन फलितम् । लौकिकाक्षरग्रहणव्यावृत्त्यर्थोवेदाख्य--शब्दः, वेदाख्यशब्देन कृत्स्नाध्ययनं च सूचितम् । न हि वेदान्तभागमात्रं स्वाध्यायशब्दवाच्यम् । "अध्ययनेने"ति निर्देशेन गुणकर्मत्वं सूचितं भावार्थस्यान्यनिष्ठत्वप्रतीतेः । यदि प्रधानकर्मत्वमविवक्षिष्यत् तदा हि स्वाध्यायेनाध्यनं संपाद्यमिति वचनव्यक्तिरभविष्यत् । एवकारेण नियमविधित्वं द्योतितं, न तु पुस्तकनिरीक्षणादिनेत्यर्थः । "स्वाध्यायोऽध्येतव्य" इति अध्ययनविधिवाक्योपादानेन स्वविधिप्रयुक्तत्वं सूचितम् । न ह्यध्यापयेदिति वाक्यमुपात्तं, प्राथम्यवचनादध्यनस्योपनयनाङ्गत्वं च फलितं, शास्त्रान्तरपरिश्रमायोग्यगर्भाष्टमवर्षाभिप्रायेण हि प्राथम्यमुक्तम् । अध्ययनस्य च प्राथम्यम"ष्टवर्षंब्राह्मणमुपनयीते"त्युपनयनविषयतयोक्तस्य कालस्य उपनयनद्वाराध्ययनशेषत्वे सत्येव ह्युपपद्यते । एवमर्थपञ्चकं संक्षेपेण प्रतिज्ञातं भवति--अस्मिन्नध्ययनविधिवाक्ये ऽध्ययनस्य प्राथम्यं साङ्गत्वमुपनयनाङ्गत्वं च न प्रतीतम् "उपनयीत तमध्यापयेदि"ति वाक्यान्तरेणाध्ययनस्याध्यापनविधिप्रयुक्तत्वमध्यापनस्योपनयनाङ्गकत्वं च प्रतीयतइति शङ्कायामाह ।

( तच्चे ) ति । चः-- शङ्कानिवृत्तौ । तत् --"स्वाध्यायोऽध्येतव्य" इति

× तत्त्वटीका ×

नियम्यत इत्यर्थः । यत एवकार स्ततोऽन्यत्र हि नियमः । यद्यप्यक्षरग्रहणस्यान्यतोपि शक्यत्वान्न स्वरूपतो नियमः, तथापि जपाद्युपयोगोऽध्ययनगृहीतेनैवेति नियमोपपत्तिः । अर्थज्ञाने नियमम्वदतामप्येवमेव निस्तारः । नन्वध्ययनविधिना स्वाध्यायस्याध्येतव्यत्वमात्रं प्रतीयते न तावता साधनचतुष्टयादिहेतुभूतशास्त्रान्तरावसरविरोधः ततः पश्चादप्यध्ययनोपपत्तेः निरङ्गम्वा, सकृदधीत्य वा, शास्त्रान्तरमभ्यस्यतामित्यत्राऽध्ययनस्वरूपकालाधिकार्य्यादिकं व्यनक्ति ( तदिति ) सर्वसम्म-

१ "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इत्यनेन

* श्रुतप्रकाशिका *

वाक्यप्रतिपादितामित्यर्थः "आद्ये त्वध्ययनेनैव कदाचिदस्ति फलश्रुतिः, धारणे जपयज्ञे च या साप्येवं निवारिते" ति जपादेरप्यध्ययनशब्दवाच्यत्वात्तेषु प्रस्तुताध्ययनस्याध्ययनत्वनिश्चयायाह [ किंरूपमि ] ति । किं सकृदुच्चारणरूपमाहोस्विदसकृदुच्चारणरूपं किं वा स्वतन्त्रोच्चारणरूपमुतपरतन्त्रोच्चारणरूपमित्यर्थः । परतन्त्रासकृदुच्चारणरूपत्वे ह्याद्याध्ययनत्वसिद्धिः । ( कथं ) किमङ्गकमित्यर्थः । इत्यपेक्षायाम [ पेक्षितानि विधीयन्ते ] इत्यन्वयः । प्राथम्यं तन्त्रोच्चारणरूपत्वमुपनयनाङ्गकत्वञ्च दर्शयितुमाह ( अष्टवर्ष ) मिति । अष्टवर्षमित्यनेनप्राथम्यं सिद्धम् उपनयनद्वारा ऽध्ययनशेषत्वात् कालस्य "ब्राह्मणमुपनयीते" ति द्वितीयाश्रुत्या माणवकशेषत्वावगमादुपनयनस्य तद्गताध्ययनाङ्गत्वासिद्धिः, उपनयनस्याकर्त्रभिप्रायसूत्रविहितत्वाच्च नाध्यापनाङ्गत्वसिद्धिः । "अध्यापयेदि" त्यनेन परतन्त्रोच्चारणरूपत्वसिद्धिः ।

"द्वादशाहेन प्रजाकामं याजयेत्" "अन्नाद्यकामं याजयेत्" "निषादस्थपतिं याजयेदि"ति प्रतिपन्नस्य याजनस्येवार्थार्जनाद्यर्थतया रागप्राप्तस्याध्यापनस्याविधेयत्वादध्यापने ऽधिकारिविशेषाश्रवणाच्चाध्ययनस्याध्यापयितृपूर्वकत्वमुच्यते, इत्य-

ॐ तत्त्वटीका ॐ

तनित्यविधिसिद्धमाद्याध्ययनमित्यर्थः, किं रूपं–किं जपादिवत्स्वतन्त्रोच्चारणं, उतानूच्चारणम्, किम्वा ऽपन्यायमूलम् गौडाध्ययनवत्, पारायणवच्चावृतं, उतावधातवच्चावृत्तमित्यर्थः । "रूपशब्देन फलग्रहण"मिति तूलिकाया अपि यावद्ग्रहणमावृत्तिरूपत्वात्तात्पर्यं । कथमिति–इतिकर्तव्यतापरं । अध्यापनार्थशङ्कार्हस्योपबृंहणीयस्या ऽध्ययनार्थतया सम्प्रतिपन्नानामुपबृंहणानाञ्च विषमैकरस्याभावञ्चा ऽभिप्रेत्य अनेनोपदेशैश्चेति विभज्य निर्देशः । "उपाकृत्या ऽधीयते" त्येतत् उपनीतोधीयेतेति श्रुतितात्पर्यक्तृतेस्स्थापकं । उपनीतस्य ह्यध्ययनार्थतयोपाकर्मादि निर्दिश्यते । युक्तः-स्थित–: व्रतादियुक्तो वा, अर्धं पञ्चमं येषान्ते अर्धपञ्चमाः । आदिश-

१ शतपथब्राह्मणम्,

† "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान् ॥"
इत्यादिव्रतनियमविशेषोपदेशैश्चपेक्षितानि विधीयन्ते।

* श्रुतप्रकाशिका *

यमध्यनाङ्गविधिरिति भावः। उपाकर्मादिव्रतनियमाङ्गकत्वं साङ्गत्वं च दर्शयितुमाह (श्रावण्यामि) ति। "अर्द्धपञ्चमान्मासानित्यादी"त्यत्रादिशब्दोपात्तैः "अत उर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु संपठेदि"त्यादिवचनैरङ्गाध्ययनस्य कालो दर्शितः। (व्रत) मुपाकर्मकाण्डव्रतादि (नियमः) "पद्युह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाऽध्येतव्यमि"त्याद्युक्तदेशकालभक्ष्याभक्ष्यादिव्यवस्थारूपः। अध्यापयेदित्यनेन व्रतनियमविशेषोपदेशैश्चे"ति पृथङ्निर्देशः श्रुतित्वस्मृतित्वविभागाद्विप्रतिपन्नत्वसम्प्रतिपन्नत्वविभागाच्च कृतः। उपाकर्मादिव्रतनियमवदुपनयनमप्यध्ययनाङ्गमिति भावः; किं रूपं? कथं च कर्त्तव्यम्? इत्यपेक्षायामेभिरङ्गविधायकवाक्यैरपेक्षितानि विधीयन्ते इत्यर्थः। ननु "अष्टवर्षं ब्राह्मणमि"त्यत्रोपनयनस्याऽध्ययनाङ्गत्वमवगम्यते इत्युक्तं, तदयुक्तं, तस्योपनेयासत्तिद्वाराऽध्येतृसाकाङ्क्षाध्यापनाङ्गत्वं ह्यवगम्यते "उपनीय तु यः शिष्यमि"त्यादिस्मृतिवचनाच्च तदवगम्यते। उच्यते। "ब्राह्मणमुपनयीते"त्यत्र द्वितीयाश्रुत्या उपनयनस्यमाणवकशेषत्वमवगम्यते माणवकशेषमुपनयनम् अध्ययनं च तद्गतं तत्रान्तरङ्गबहिरङ्गन्यायादुपनयनमध्ययनाङ्गमेव। ननु "उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते" इति वचने क्त्वाश्रुत्योपनयनस्याऽध्यापनाङ्गत्वं युक्तम्। अन्तरङ्गत्वं हि वस्तुसामर्थ्यरूपं लिङ्गं ततः क्त्वाश्रुतिर्बलीयसीति चेत् न। अन्तरङ्गत्वं हि प्रत्यक्ष-

* तत्त्वटीका *

ब्देन "अत ऊर्ध्वन्तु छन्दांसि शुक्लेषु नियतः पठेत्। वेदाङ्गानि च सर्वाणि कृष्णपक्षेषु सम्पठे" दित्यादीनि प्रागुक्तसाङ्गाध्ययनानुगुणवचनानि गृह्यन्ते। व्रतविशेषाः

† मनुस्मृति, ४, अ० १५ श्लो.

* श्रुतप्रकाशिका *

श्रुतिसिद्धं, क्त्वाश्रुतिस्तु स्मृतिगतानुवादरूपवचनस्था च, अतोऽस्याः स्मृतिवचनस्थत्वान्मूलश्रुतिसापेक्षत्वम्, अनुवादरूपवचनगतत्वाद्विध्यन्तरसापेक्षत्वमिति विलम्बद्वयमस्ति, श्रुतिलिङ्गादिषु विलम्बितधीहेतुत्वं हि परदौर्बल्यहेतुः, अतो विलम्बद्वयोपहताक्त्वाश्रुतिर्न बलीयसी । किञ्च श्रोत्रियोपाध्यायगुर्वादिनामविधानवत् तत्प्रकरणस्थमिदं वचनमुपनीयाध्यापयितुराचार्यनामविधानपरमिति क्त्वाश्रुतिरुपनयनस्याध्यापनाङ्गत्वे प्रमाणं भवितुमर्हति । किञ्च "स्वरितञितः कर्त्रभिप्राये क्रियाफल" इत्यात्मनेपदे प्राप्तेपि "संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय" इति पुनर्विधानस्याकर्त्रभिप्रायार्थत्वादुपनयनस्य नाध्यापनाङ्गत्वं युक्तम् । "अकर्त्रभिप्रायार्थोयमारम्भ" इति हि तद्वृत्तिकारः ।

नन कर्त्रभिप्रायत्वं कर्त्तर्येव फलस्याभिप्रेतत्वं, तदवधारणनिषेधार्थं पुनर्विधानम्, अतः फलमुभयान्वयि, अतो माणवकद्वारेणाचार्यान्वय्युपनयनफलमित्यध्यापनाङ्गत्वं युक्तमिति चेत् । न । "अग्नीनादधीते"त्यत्र कर्त्रभिप्रायसूत्रविहितेप्यात्मनेपदे फलस्योभयान्वयितया पुनर्विधानस्य नियमनिषेधार्थत्वाभावेन कर्त्रभिप्रायत्वमात्रस्य निषेधार्थत्वात् । अतो नाध्यापनाङ्गत्वम् । कर्त्रभिप्रायशब्देन कर्तृव्यतिरिक्तचेतने फलानन्वयोविवक्षितः अतो न "अग्नीनादधीते"ति व्यभिचारः, पुनर्विधानस्य तन्निवारणार्थत्वे फलस्याचार्येऽप्यन्वयोपपत्तेरध्यापनाङ्गत्वमिति चेत् । न । ऋत्विजो वृणीत इत्यत्र स्वरितेत्यादिसूत्रविहितेऽप्यात्मनेपदे फलस्य कर्तृव्यतिरिक्तचेतनान्वयदर्शनेन पुनर्विधानस्य नियमनिषेधार्थत्वाभावात्, अतः कर्त्रभिप्रायमात्र निषेधार्थं पुनर्विधानमिति नाध्यापनाङ्गमुपनयनम् । ननु क्रियाफलन्नाम क्रियानन्तरभाविफलं, तस्य कर्तर्यन्वितत्त्वं कर्त्रभिप्रायत्वम् । अत आचार्यकस्योपनयनक्रियानन्तरभावित्त्वाभावादव्यवहितफलस्य कर्तृगतत्त्वाभावाच्चात्मनेपदस्याप्राप्तौ अव्यवहितफलस्याकर्त्रभिप्रायत्वेऽप्यात्मनेपदं

× तत्त्वटीका ×

सोपाकृतयः प्राजापत्यसौम्यादयः । नियमविशेषाः शुक्लकृष्णपक्षार्धपञ्चमासादिः विभक्ताङ्गाध्ययनकालभेदविषया, श्शूद्रसमीपे नाध्येतव्यमित्याद्युक्तदेशादिविषयाश्च । ननू 'पनीय तमध्यापये'दिति श्रुत्याऽऽचार्यकर्तव्यताश्रुतौ कथमध्ययनापेक्षितविधिः

* श्रुतप्रकाशिका *

"सम्माननेत्या"दिसूत्रेण विधीयते । अतोऽकर्त्रभिप्रायार्थत्वेपि व्यवहिताचार्यकनिष्पत्त्यर्थतयाऽध्यापनाङ्गत्वमुपनयनस्याविरुद्धमिति । चेत् । नैवम् । "अग्नीनादधीते"त्यत्र स्वरितेतिसूत्रविहितेप्यात्मनेपदे अग्निसंस्कारव्यवहिताग्नित्वापत्तिरूपफलस्य कर्त्रन्वयित्वदर्शनादतोऽकर्त्रभिप्रायार्थं सम्माननेत्यादिसूत्रं फलमात्रस्य कर्त्रन्वयनिवारणार्थं संस्कारविशिष्टोग्निः फलमित्याधानकर्त्तरि न व्यवहितफलान्वय इति चेत् तर्ह्युपनयनसंस्कारविशिष्टमाणवकसिद्धिरेवाव्यवहितं फलमिति, कर्त्रभिप्रायसूत्रेणैवात्मनेपदसिद्धेरकर्त्रभिप्रायसूत्रवैयर्थ्यं स्यात् ।

ॐ तत्त्वटीका ॐ

कथञ्चात्रोपात्तश्रुत्यादेरपि शास्त्रान्तरपरविरोधादिसिद्धिरित्यत्राह [एवमिति] प्रदर्शितश्रुतिस्मृतिसहकृतस्वविधिसिद्धसाङ्गाध्ययनविधानप्रकारेणेत्यर्थः । "अभिजनविद्यासमुदेत"मित्यादिभिराचार्यगुणग्रहणान्नाध्यापनविधिपरत्वं शङ्क्यम् । ऋत्विग्गुणोक्तिन्यायादित्यभिप्रायेण 'सत्सन्तानेत्याद्युक्तिः' । अत्राचारात्मगुणौ समाहितशब्दाभिप्रेतौ । 'वेदविदि'ति विद्यासमुदेतत्वविशदीकरणं । निषिध्यते चायोग्याध्ययनम्, तद्गुणहानौ प्रतिसमाधीयते च । तथा च "तमसो वा एष तमः प्रविशती" त्यादिभिश्शिष्यस्य हानिरुक्ता । "संस्कर्तारमीप्सेत् तस्मिंश्चैव विद्याकर्मान्त" मित्यादिना तद्गुणानाम्माणवकार्थत्वं व्यक्तं । यथाध्यपनविधिवादिनामष्टवर्षत्वादिमाणवकविशेषणमाचार्य्यार्थं तद्वदाचार्यविशेषणम् माणवकार्थमिति प्रतिबन्दीसूचनाय । "व्रतनियमविशेषनियमयुक्तस्ये" त्याद्युदाहृतषष्ठ्यन्तपदाभ्यामधिकारिस्वरूपेतिकर्त्तव्यतयोः सिद्धिः । तेनाऽध्ययनस्याङ्गाध्ययनसाहित्यं शास्त्रान्तरावसरनिरोधकत्वञ्च सिद्धम् । अङ्गाध्ययनस्यापि नियमविशेषत्वा, दष्टवर्षाद्युपनीतस्याध्ययनविध्यवरुद्धत्वाच्च । "आचार्य्योच्चारणानूच्चारण" मित्यनेन स्वतन्त्रोच्चारणं विचारस्याध्ययनशास्त्रार्थानुपदेशशङ्का चाऽपास्यत । उपनयनस्य यथाध्यापनानुगुणप्रत्यासत्तिरस्मिन्मते स्यादिति च भावः । अस्मिन्प्रथमाध्ययनेऽवघातन्यायात् सकृदसकृद्धिस्त्रिरित्यादिविशेषानादरेण यावत्फलमावृत्तेरर्थसिद्धिमभिप्रेत्याह ( अक्षरराशिग्रहणफलमिति ) अनेनाक्षरग्रहणकामस्त्वमधिकारिविशेषणमित्यपि व्यञ्जितम् ।

* श्रुतप्रकाशिका *

यद्येवं व्यववहितमव्यहितं वा फलमात्रकर्त्रभिप्रायसूत्रेण निवार्यते तर्ह्युपनेतुः प्रवृत्तिर्नोपपद्यते यतः "प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्त्तते" इति। नैवम्। उपनयनफलस्य माणवकान्वयित्वेऽप्याचार्याय वरो देय इति विध्यन्तरप्राप्तदक्षिणाफललिप्सया प्रवृत्त्युपपत्तेः।

न चैतेनाकर्त्रभिप्रायत्वविरोधः, असाधारणफलानन्वयविषयत्वादकर्त्रभिप्रायसूत्रस्य। अव्यवहितक्रियाफलस्य कर्तुरभिमतत्त्वं कर्त्रभिप्रायत्वं, तदनभिमतत्वमकर्त्रभिप्रायत्वमित्यप्ययुक्तं, क्रियाफलस्य कर्त्रनभिमतत्वव्याघातात्। आचार्यकनिष्पत्त्युपयोगिनो माणवकसंस्कारस्याचार्यानभिमतत्त्वानुपपत्तेः। अत उपनयनमध्येष्यमाणमाणवकासत्तिमुखेन नाध्यापनाङ्गम्, अपि त्वध्ययनाङ्गमेव। अध्ययनं च नाध्यापनविधिः प्रयुङ्क्ते, "अध्यापयेदि"ति तु "द्वादशाहेन प्रजाकामं याजये"दित्यादिवदित्युक्तम्। यद्यपि प्रजाकाममन्नाद्यकाममितिवत् तत्प्रयोज्यव्यापारस्याध्ययनस्याधिकारिविशेषणं फलं न श्रूयते तथापि स्वाध्यायसिद्धिरधिकारिविशेषणं स्यात्, "स्वाध्यायोऽध्येतव्य" इति स्वाध्यायस्याध्ययनसाध्यत्वावगमात्। यथा "ऽग्नीनादधीते"त्यत्राग्नीनामाधानसाध्यत्वावगमादग्निसिद्धिरधिकारिविशेषणं, तद्वत्।

न च स्वविधिप्रयुक्तत्वेऽध्ययनविधेरनुष्ठात्रभावः। सन्ति हि प्रबुद्धाध्येतारः। तथाह भगवानापस्तम्बः "तस्मिन्नभिजनविद्यासमुदेतं समाहितं संस्कर्त्तारमीप्सेदि"ति तेषु परविधिप्रयुक्तत्वे सत्यध्ययनं नोपपद्यते। अप्रबुद्धविषये तु स्वतन्त्रस्याध्ययनविधेर्माणवकविषयत्वं ज्ञात्वा हितैषिणो माणवकमध्ययनादि कारयन्ति। अतः प्रबुद्धेष्वप्रबुद्धेषु च स्वविधिप्रयुक्तत्वमध्ययनस्य

* तत्त्वटीका *

फलत्वेनाश्रितस्यापि तथात्वं वितुषत्ववत्।
उपयोगश्च यागादौ प्रहणस्यापि दुस्त्यजः॥ ॥
विधितोऽनुज्ञया वार्थज्ञानं फलमिहेच्छता।
फलानुबन्धान्नित्यत्वं प्रहीयेतेतिदुर्वचम्॥ ॥

"ये तु पूर्वपक्षे नित्याध्ययनविधौ विश्वजिन्न्यायात्सर्वाविशिष्टं स्वर्गं फल-

**एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्य्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणा-**

* श्रुतप्रकाशिका *

युक्तम् । परविधिप्रयुक्तत्वे नित्यस्याध्ययनस्य काम्यविधिप्रयुक्तत्वं स्यात्, ततश्चानुष्ठाननियमो न स्यात् । आचार्यककामो ह्यध्यापकः, तस्याचार्यककामनाया अभावेऽध्ययनासिद्धेः । अध्यापकबाहुल्यात्तत्सिद्धिरिति चेत्, न अध्यापकेभ्योऽप्यध्येतृबाहुल्यदर्शनात् । आधानस्योत्तरक्रतुविधिप्रयुक्तत्वेऽपि न काम्यविधिमात्रप्रयुक्तत्वं "वसन्ते वसन्ते ज्योतिषा यजेत" "यावज्जीवमग्निहोत्रं जुहोती"ति नित्यविधिसद्भावादित्येवमाद्यनुसन्धेयम् । अतो यथोक्त एवार्थः । अङ्गविध्युपेतेन प्रधानविधिनाऽङ्गस्वरूपमङ्गिस्वरूपं च कथं प्रतिपन्नमित्यत्राह ।

( एवमि ) ति । एवमङ्गविधिभिः सह प्रधानविधौ निरूपिते इत्यर्थः । सत्स-

— ७ तत्त्वटीका ७

मिति कल्पयन्ति सिद्धान्ते चार्थज्ञानं" तेप्यनेन प्रतिचिक्षिपिरे । अक्षरग्रहणस्य हि दृष्टस्य सुखादन्यस्याप्यर्थज्ञानादेरिव सुखादिपर्यवसानात्फलत्वं युक्तम् । तदेव-"मनूच्चारणमक्षरराशिग्रहणफल" मित्याभ्यां किं रूपमिति बुभुत्सितमाद्याध्ययनभावार्थस्वरूपं प्रदर्शितम् । तथाच विवरणम् । "एकफलावच्छिन्नक्रियाक्षणनिचये हि धातोर्वृत्तिः यथौदनम्पचतीति, इतरथा वर्त्तमाननिर्देशभङ्गप्रसङ्गात्, प्रारब्धापरिसमाप्तो हि वर्त्तमानशब्दार्थः क्षणभङ्गिन्यास्तु क्रियाया धात्वर्थत्वे शब्दप्रयोगात्पूर्वमेव ज्ञातस्य क्रियाक्षणस्य नष्टत्वादुत्तरस्य च भविष्यत्वात्समकालस्याज्ञाततया शब्दाविषयत्वाच्चाक्षुपत्वेऽपि क्षणध्वंसादादिमध्यान्तानिरूपणाच्च न प्रारम्भापरिसमाप्त्योरसिद्धिरित्यतोग्रहणफलावच्छिन्नक्रियाक्षणनिचयेऽध्ययनशब्दस्य वृत्तिरित्याहे" ति । अध्ययनस्याऽऽचार्योपनीतकर्तृकानूच्चारणोक्तिः "उपनीय तमध्यापये" दित्युभाभ्यामाचार्यकर्तृकोपनयनादिपूर्वकत्वं विधीयत इति व्यनक्ति । नन्वध्यापयेदिति वृत्त्युपायनियमार्थं स्यात् । मैवं, अनुपनेतुरपि तदर्थाध्यापनदृष्टेरुपनयनविधानैरर्थक्यात् । नाप्युपनीतमेवाध्यापयेदितिकर्मनियमोऽपि तथाष्टवर्षंब्राह्मणमित्यादेरनपेक्षितवचनत्वप्रसङ्गात् । अन्यार्थमिह तदुपदेशस्त्व-

नूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते ।

* श्रुतप्रकाशिका *

न्तानेत्यादिना "तस्मिन्नभिजनविद्ये" त्यापस्तम्बवचनार्थोऽनुसंहितः । आत्मगुणा अक्रोधादयः । अनेन समाहित-शब्दार्थ उक्तः । वेदविच्छब्देन विद्यासमुदित-शब्दार्थ उक्तः । वेदविदाचार्योपनीतस्येति आचार्यविशेषणमुपनयनद्वारा

७ तत्त्वटीका ७

सङ्गत एव, नचाऽत्रोपनीतानियमश्शंक्यः प्रापकान्तरादृष्टेः । स्मृतिर्दृश्यते इति चेन्न अष्टवर्षाद्युक्तेरनुपयोगादेव । नचात्र वृत्त्युपायद्वयोक्तिः, उपनयनस्य तदुपायत्वेनाऽपरिसंख्यानात् । तथात्वेपि प्रापकाभावेन नियमानुपपत्तिरुक्तैव । अतोध्ययनापेक्षितविधिरेवायं । प्रयोजके चात्र विधिः याजयेदितिवत्स्यात् । अध्यापनमपि हि याजनवद्वृत्त्यर्थतया प्राप्तत्वान्न विधेयम् । तदत्राष्टवर्षो ब्राह्मणस्स्वाध्यायग्रहणकाम उक्तप्रकाराचार्योपनीतस्तदुपगत्या यथोक्तव्रतनियमवानधीयीतेति सोपबृंहणाध्याध्ययनशास्त्रार्थस्थापना । अत एवाध्ययनविधौ नियोज्याश्रवणादन्यप्रयुक्तानुष्ठानत्वक्लृप्तिरयुक्ता । अध्यापनविधावप्यश्रवणाच्च । क्लृप्तेश्चोभयत्राऽविशेषात् । नचेह तत्क्लृप्तिः ब्राह्मणमित्यादेः प्रजाकामादिवद्विभक्तिविपरिणाममात्रेण तत्सिद्धेः । "अतः परं लक्षणं प्रबुद्धमित्यारभ्य भगवन्तमित्यन्तं विप्रोऽधीयी" तेति स्मृत्युनुग्रहाच्च । बालस्य स्वाधिकाराज्ञानान्न स्वविधिप्रयुक्तिरितिचेन्न । निषादस्थपतिन्यायादन्यैस्तदभिज्ञैरनुष्ठानोपपत्तेः। हितैषिण एव हि बालादीनामविदितस्वाधिकाराणां जातकर्मादिसंस्कारानपि स्वयं विदितोपयोगाः कुर्वन्ति । अध्ययने तु बालस्याप्यासप्रेरणादिभिस्साफल्यानुमानात्प्रवृत्तिर्युक्ता । नित्यमध्ययनं काम्यप्रयुक्तमितिवादिनां कथं तत्र नियोगस्य कृत्युद्देश्यत्वलक्षणं । प्रबुद्धानां स्वविधिनाऽबुद्धानामन्यतस्त्विति प्रयुक्तिभेदकेक्लृप्तौ स्यादर्धजरतीयता । "यच्च निस्तीर्णाध्ययनदुःखे माणवके विचारात्पूर्वमध्ययनविधेरधिकारपर्यवसानाय दृष्टमर्थज्ञानं विषयसाध्यप्रयोजनतया स्वीक्रियत" इति तदपि मन्दम् । अध्ययनस्याऽन्यतस्सिद्धौ तदप्रयोजकेन सिध्यता कार्य्येण तस्य प्रयोजनानन्तरक्लृप्तेरयोगात् । नित्यानन्तरवदस्यापि ते नियोगमात्रप्रयोजनत्वोपपत्तेः । दृष्टत्वादन्यदप्यनुज्ञातमिति

* श्रुतप्रकाशिका *

माणवकार्थं, यथा उपनयनस्याध्यापनाङ्गत्वे माणवकविशेषणमाचार्यार्थं तद्वदिति भावः। व्रतनियमविशेषयुक्तस्य व्रतनियमविशेषवदाचार्यविशेषणमपि माणवकार्थमिति भावः। आचार्योच्चारणानूच्चारणमिति परतन्त्रोच्चारणरूपता दर्शिता। अक्षरराशिग्रहणफलमितिपदमसकृदावृत्तिरूपत्वस्याक्षेपकं दर्शयति, यथा "व्रीहीनवहन्ती" त्यत्र दृष्टफललवस्याप्यपरित्याज्यत्वेनाऽवहननस्य वैतुष्यपर्यन्तत्वाद् अश्रुताप्यावृत्तिः सिद्धा, तद्वदत्रापि सामर्थ्यादावृत्तिः सिद्धा। दृष्टप्रयोजनापरित्या-

× तत्त्वटीका ×

चेन्न। आनुषङ्गिकस्य लाभपूजादेरप्यत्र विध्यनुज्ञाततत्वेन स्वीकारप्रसङ्गात्। नच धर्मानुष्ठानोपयुक्ततयाऽर्थज्ञानमेव विधिरनुजानाति नान्यदिति वाच्यम्। धनादेरपि तदुपयुक्तत्वेन तस्याप्यनुमतिप्राप्तेः।

सर्वविध्युपकारित्वं धर्मज्ञानस्य सम्भवेत्।
नैतावता विशेषेण दृष्टमन्यदुपेक्ष्यते ॥ + ॥
धनादेरुपकर्तृत्वं स्वशक्त्यैवेति चेन्मतं।
अर्थज्ञानञ्च तद्वत्स्यान्न विधिभ्रूवशम्पदम् ॥ + ॥
अर्थतस्तदनुज्ञातं शब्दशक्त्यैव भावितम्।
सापेक्षैर्यागदानादिनियोगैरुपजीव्यताम् ॥ + ॥
अपि चैकस्य वैरूप्यं विध्यनुज्ञात्मकत्वतः।
प्रधानगुणकर्मत्वविषये च प्रसज्यते ॥ + ॥

तस्मादध्ययनारम्भवेलायामेव माणवकस्य हिततमाचार्यादयोऽभिसन्धाय परबुद्धेरुपदिश्य वा तत्र प्रवर्तका इति युष्मद्ग्रामेष्वपि वृत्तान्तः न पुनरन्यस्याच्मार्थकम्मया भावनीयमिति बुद्ध्या कश्चित्प्रवर्तमानो दृश्यते। शिक्षयन्तश्च हितैषिणो बालस्यैवागामिफलं व्यपदिशन्ति। छान्दोग्ये च "ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्त"मिति जाबालो गौतममाह। तेनप्रत्युक्तं "समिधं सौम्याहर उपत्वानेष्य"इत्यादि। अतश्शिष्यार्थमेवाचार्यः प्रवर्तते, ततस्तु वरादिकन्तेन प्राप्यमितिसिद्धम्। "अत एव द्रव्यार्जनादिलुब्धाचार्यरागप्रयुक्तमध्यनम्निति यत्कैश्चिदुक्तं, तत्स्वविधिप्रयुक्त्यसम्भवेऽप्यध्यापनविधिप्रयुक्तिस्तावदयुक्तातिस्थाप-

* श्रुतप्रकाशिका *

गेनैव नियमस्य विधेयत्वात्। आचार्योच्चारणानूच्चारणमित्यनेन, वेदविदाचार्योपनीनीतस्येत्यनेन, चाध्ययनस्याध्यापयितृसापेक्षत्वेन परतन्त्रोच्चारणरूपत्वं,स्वविधिप्रयुक्तत्वमुपनयनाङ्गकत्वं चोक्तम् । आचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमित्यनेन 'किंरूप' मित्याकाङ्क्षा शमिता, वेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्त-

* तत्त्वटीका *

यितुं । नहि माणवकस्य प्रयोजनमबोधयित्वातत्प्रवर्तनतन्मूलद्रव्यार्जनसम्भवः । अन्यथा हठात्प्रवृत्तिराचार्यस्य स्यात् । अतस्साङ्गाध्ययनविधौ कण्ठोक्तो विप्रादिस्स्वविहिताभिसन्धिरधिकर्तेति नान्यतः प्रयुक्तिः. एतेनाऽऽचार्यकरणविधिप्रयुक्त्यनङ्गीकारे क्रतुविधिप्रयुक्तेरप्यवश्याश्रयणीयतया तत्तत्फलकामशूद्रादेरप्यध्ययनाधिकारस्स्यादिति कैश्चिदुक्तन्निरस्तम् । आधानवन्नियतकर्तृकेण स्वविधिनैवाऽध्ययनस्य प्रयुक्तेः । अध्ययनविधावधिकाराश्रवणचोद्यमपि वैतुष्यवद्दृष्टस्याक्षरग्रहणस्य फलत्वोक्त्या प्रत्युक्तम् । उपनीयेत्यादिश्रुतिरपि नाऽध्यापनम्विधत्ते । नाप्याचार्यत्वन्तत्फलत्वेनोपादत्ते । अन्यतः प्राप्तविशिष्टाध्यापनानुवादेनाचार्यशब्दव्युत्पादनपरत्वात्. उपाध्यायादिशब्दव्युत्पादनवत् । नह्यत्र तदतिरिक्ततात्पर्यक्लृप्तिहेतुः । नचाचार्यकमेकमन्यादृशं मानाभावात् । निमित्तान्तरादृष्ट्या तत्क्लृप्तिरिति चेन्न । समनियमकोपनयनाध्यापनात्यन्तायोगव्यवच्छेदमेलकस्य निमित्तस्य दृष्टेः । अतएव उपनयनादरुत्तरकालेऽप्युपाध्यायादिनयादाचार्यशब्दप्रयोगोपपत्तिः । पूर्वं त्वनागतापेक्षणस्य दुश्शकतया निमित्तज्ञानसन्देहाभ्यामप्रयोगः । अपि च स्मृतेरत्र शब्दव्युत्पादनमात्रपरत्वे वृद्धव्यवहार एव मूलन्दृष्टं, आचार्यकरणविध्यर्थत्वे त्वलौकिकार्थश्रुतिमूलत्वं कल्प्यं क्लृप्तकल्प्यविरोधे क्लृप्तमेवग्राह्यम् । त्वादिश्रुतिश्चात्र दर्शपूर्णमासाभ्यामिष्ट्वेत्यादिवदसङ्गत्वेपि सूत्रोक्तसमानकर्तृकत्वादिसाधर्म्यमात्रेण घटते ॥ ननु, समानकर्तृकस्वारस्यात् बाधकाभावाच्चैकप्रयोगितयाऽङ्गाङ्गित्वसिद्धिस्स्यात्— तन्न—

त्वाश्रुतेः स्मृतिसंस्थत्वादनुवादतयापि च ।

श्रुतिस्थं लिङ्गमेवात्र बलीयो ह्यविलम्बतः ॥ ७ ॥

ब्राह्मणमिंतिमाणवकैकसंस्कारतया श्रुतमुपनयनं प्रयोज्यप्रयोजकव्यापारतया

* श्रुतप्रकाशिका *

स्येत्यनेन कथं च कर्त्तव्यमित्यपेक्षा पूरिता, अक्षरराशिग्रहणफलमित्यनेन स्वाध्यायग्रहणकामत्वमध्ययनाधिकारिविशेषणमित्यपि सूचितम् । "सक्तून् जुहोती" त्यत्र पुरुषस्य सक्तुहोमजन्यादृष्टभाक्त्वात्—सक्तुहोमो यथा पुरुषसंस्कारः तद्वदध्यनस्य पुरुषसंस्कारत्वेऽस्याक्षरराशिग्रहणफलत्वन्नस्यात्, अपूर्वसिध्यर्थतया स्वा

* तत्त्वटीका *

ऽध्ययनाध्यापनयोर्द्वयोर्फलवतोस्सन्निधावपि कर्मस्थतयाऽन्तरङ्गलिङ्गादुपनीतगताध्यापनाङ्गमेव । अन्यार्थत्वे तु प्रणाड्या स्यात् । एवं श्रौतलिङ्गतोध्ययनेविनियुक्तस्याध्यापनाङ्गत्वक्लृप्तौ विनियुक्तविनियोगविरोधः । नहि स्मृतिस्था त्वाश्रुतिश्श्रौतं लिङ्गं बाधितुं क्षमा । स्मृतिस्स्वमूलमनूक्तिः पुरोक्तिमपेक्षत इति विलम्बद्वयेन प्रतिरोधात् । ननु स्वरितेत्यादिसूत्रविहितात्मनेपदात् उपनयनमुपनेतृगताध्यापनाङ्गं स्यात् । न स्यात्—सम्माननादिसूत्रविहितत्वात् ॥ अकर्त्रभिप्रायार्थोयमारम्भ इति शाब्दाः । कर्त्तर्य्येव फलान्वयः कर्त्रभिप्रायत्वम् अकर्त्रभिप्रायत्वन्तु नियमाभाव इति चेन्न । आदधीतेत्यत्र स्वरितेत्यादिसूत्रोक्तात्मनेपदेऽपि फलस्योभयान्वयात् ॥ * ॥ ॥ * ॥ न च क्रियाफलस्य चेतनद्वयेनाऽनन्वयस्तत् ॥ "जायापती अग्निमादधीयाता" मित्यत्रापि तद्दृष्टेः । कर्त्तृव्यतिरिक्तचेतनेऽनन्वयस्तदित्यपि निरस्तम्— प्रामाणिकदृष्ट्या सर्वेष्वेव शास्त्रार्थेषु अकर्त्तर्य्याराध्ये फलश्रुतेराराधनादिष्वात्मनेपदलोपप्रसङ्गात् । अभिचरन्यजेतेत्यादौ भ्रातृव्येऽपि तदुचितफलसम्मतेश्च । ऋत्विजो वृणीतेत्यत्र च वरणीयेष्वपि फलं सिद्धम् । अव्यवहितफलस्य क्रियाफलशब्देन विवक्षितत्वात्तस्य कर्त्रन्वयः, कर्त्रभिप्रायत्वं, सम्माननादिसूत्रन्तु व्यवहितफलस्य कर्त्रन्वयार्थं स्यादित्येतदपि दत्तोत्तरम्, अधीतेत्यादावेव व्यभिचारात् । अस्ति ह्यग्निसंस्कारव्यवहितमाधातर्याहिताग्नित्वं फलं । ननु आगामिनित्यकाम्यादियागोपजीव्यसँस्कृताग्निसिद्धिरेवाऽऽधातुः फलमिति न व्यवहितफलान्वयः, मैवं—अत्राप्युपनयसंस्कृताध्येतृसिद्धिरेवोपनेतुः फलमिति सम्मानादिसूत्रवैयर्थ्यप्रसङ्गात् । अव्यवहितफलस्य कर्त्रभिमतानभिमतत्वाभ्यां सूत्रद्वयस्य साफल्यमितिचेन्न. आचार्यकार्थिनोऽप्युपनेतुरुपनेयसँस्कारानभिमत्ययोगात् । अतः कर्त्रन्वयसिद्ध्यर्थमेवाऽत्राऽऽत्मनेपदम् । एवमध्याप-

अध्ययनञ्च स्वाध्यायसंस्कारः १ "स्वाध्यायोध्येतव्य" इति

* श्रुतप्रकाशिका *

ध्यायसिद्ध्यर्थत्वाभावात्-ततश्चाक्षरराशिग्रहणफलत्वाभावेनावृत्त्यसिद्धेःसकृदुच्चारणरूपमेवाध्ययनंस्यादित्याशंक्याह(अध्ययनं चे)त्युपनयनाङ्गकत्ववत् स्वविधिप्रयुक्तत्ववदिदंचोपपादनीयमिति चार्थः । स्वाध्यायसंस्कारः। न तु सक्तुहोमवदपूर्वविषयतया पुरुषसंस्कार इत्यर्थः, कुत इत्यत्राह (स्वाध्याय) इति तव्यप्रत्ययात् कर्मत्वागमः स्वाध्यायस्य हि कर्मत्वावगमः, न पुरुषस्यकर्त्तुः क्रिययाप्तुमिष्टतमत्वं हि कर्मत्वम् अतोऽध्ययनं स्वाध्यायसंस्कारो न तु पुरुषस्येत्यर्थः निर्वर्त्यादेरपि साधारणंकर्मत्वं कथंसंस्कारत्वे हेतुतयोच्यत इत्यत्र निर्वर्त्यत्वविकार्यत्वानुपपत्तिमभिप्रेत्य स्वाध्यायस्येतिपुनः कीर्तनं। वस्तुसामर्थ्यसाचिवकर्मत्वावगमः संस्कार्यत्वे हेतुरितिभावः। फलान्तरेसंभवति प्राप्यत्वमात्रपर्यवसानंचायुक्तं। ननु न कर्मत्ववागममात्रात्संस्कार्यत्वं 'सक्तून्जुहोति' सुवर्णं भार्य'मित्यत्र सक्तुसुवर्णयोः संस्कार्यत्वाभावादिति शङ्कायां

छ तत्त्वटीका छ

येदित्यनेनापि न फलस्य कर्तृगामित्वं । तदेवं न विध्यन्तरप्रयुक्तमध्ययनं । विचारश्च किमध्ययनविधिना प्रयुज्यते, उताऽध्यापकविधिना ? न प्रथमः, विपयफलानुज्ञया निरस्तत्वात् । न द्वितीयः, यावच्छ्रुतानतिक्रमणात् ।

स्वाध्यायञ्चाहयित्वा हि गुरुणापि विरम्यताम् ।
दयादिप्रेरितत्वे तु प्रागप्येवमिति स्थितिः ॥ + ॥
अतो गुरुमते कृत्स्नमीमांसेव न सिध्यति ।
इति मत्वा विधूतं तत्प्रकृतस्थापनार्थिभिः ॥ + ॥

यद्यप्येवमक्षरग्रहणावधिशास्त्रान्तरावसरो निरुद्धः, तथापि, गृहीताक्षरस्यासौ स्यादिति शङ्कायामुत्तरत्रापि तन्निरोधार्थमध्ययनस्य नियोगविषयत्वपक्षप्रतिक्षेपेण प्राक् सूचितं स्वाध्यायसंस्कारत्वं व्यनक्ति ( अध्ययनञ्चे ) ति, चशब्दानिवृत्त्यर्थः, यद्वा भिन्नक्रमः सकृदुच्चारणत्वादिना सह संस्काररूपत्वस्य समुच्चयार्थः "संस्कारः पुंस एवेष्टो मन्त्रेण प्रोक्षणादिभि" रिति वदद्भिरध्ययनसंस्कारोऽपि

---

१ यजुरारण्यके. २ प्र० १५ अनु० ॥

**स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्।**

* श्रुतप्रकाशिका *

संस्कारस्वरूपंशोधयति[संस्कारोही] ति। हिनामाभ्यां प्रसिद्धिः प्रतियोग्यभ्युपगमश्च सूच्यते। अपिचेतित्वदनेकाव्ययतुल्यरूप एकशब्दो वा। यद्यपि सत उत्कर्षाधानं संस्कारइति भूतभाव्युपयोगिसंस्कारानुगतलक्षणं, तथापि स्वाध्यायस्य भूतोपयोगित्वासंभवात् भाव्युपयोगिसंस्कारलक्षणमत्रोक्तं, संस्कारलक्षणानुपपत्त्या "सक्तून् जुहोती" त्यादिषु प्रत्ययस्वारस्यावगतमपि कर्मत्वं भग्नमिति भावः। अत्र तु

७ तत्त्वटीका ७

कर्तुरेवेति स्वीकृतः, तेन विवक्षितासिद्धिरिति शङ्कां निवर्तयितुमाह ( स्वाध्याय ) इति। उक्तञ्च बृहट्टीकायां " संस्कारगणनायाञ्च युक्तैवाक्षरसंस्क्रिया। स्वाध्यायो हि स्फुटं कर्म साक्षात् संस्क्रियते हि स " इति )

पुरुषातिशयादानं प्रोक्षणाद्यैश्च ये विदुः।
तेऽपि संस्कारकर्मत्वं तत्र तत्र न तत्यजुः॥ ७॥
तत्तत्कर्मक्रियाजन्यः संस्कारः पुरुषाश्रयः।
तत्तत्सहकृतं कार्यं करोतीत्यवधारणात्॥ ८॥

अध्ययनस्य स्वाध्यायसंस्कारत्वे कर्मत्वं हेतुरिति न वैयधिकरण्यम्। अयंभावः—अत्र हि तव्यप्रत्ययस्यार्थान्तरन्न घटते, ततश्च द्वितीयाश्रुतेस्तव्यादेर्वा कर्मार्थत्वे विशेषाभावात्कारकाणां क्रियार्थत्वेऽपि द्रव्यनिष्ठस्य भावार्थस्य द्रव्यार्थत्वादवहन्त्यादिनयोऽत्र युक्त इति, सिद्धं चावहन्त्यादेस्तत्तद्द्रव्यस्य संस्कारत्वं, भेदलक्षणे "तानि द्वैधं गुणप्रधानभूतानि" इति। स्वाध्यास्येत्यनेन निर्वर्त्यत्वाद्यनुपपत्तिस्सूचिता, न खल्वसौ निर्वर्त्यः—अनादिसिद्धकर्मत्वात्। यथा पूर्वोच्चारणे वाक्यनिर्माणव्यवहाराभावाच्च। नापि विकार्यः, दुग्धदध्यादिवदन्यथाभावादृष्टेः। नापि प्राप्यत्वमात्ररूपः, उपयोगान्तरवत्वे तदयोगात्। अतः परिशेषसहकृतकर्मत्वावगतिस्संस्कारवत्वे हेतुरिति। ननु कर्मत्वावगमेपि भृत्यादिभिरविनयुक्तस्याऽद्रव्यस्य स्वाध्यायस्य कथं संस्कार्यत्वमित्यत्राह ( संस्कार )

संस्कार्यत्वञ्च स्वाध्यायस्य युक्तम्, धर्मार्थकाममोक्षरूप-

* श्रुतप्रकाशिका *

न तथानुपपन्नमित्याह (संस्कार्यत्वं चे) ति। चः शङ्कानिवृत्तौ। कुत इत्यत्राह। (धर्मार्थे) ति। पुरुषार्थचतुष्टयतत्साधनेत्यनेन पूर्वोक्तव्याख्येयैकत्वाय प्रयोजनवदर्थावबोधनमनुगतमिति दर्शितं भवति, पुरुषार्थपरत्वं वानुगतं, धर्मादिषु हि पुरुषार्थत्वमनुगतं, इष्टतत्साधनयोरुभयोरपि पुरुषार्थत्वात्। यद्यप्यर्थ-

तत्त्वटीका

इति, हिः प्रसिद्धौ—नामशब्दः परसम्मति पर्य्यन्ते तत्प्रकर्षे। स्वाध्यायसम्भावितभाव्युपयोगिसंस्काराभिप्रायेणाऽत्र "कार्यान्तरयोग्यता" करणोक्तिः। यद्वा कस्यचित् सतोऽतिशयाधानं संस्कारइतिलक्षणमत्र विवक्षितं, ततश्च भूतोपयोगिन्यपि तदनुगुणोपयोगविवक्षयाऽत्र कार्यान्तरयोग्यताशब्दः कथञ्चिद्योज्यः। प्रहृता अपि परिधयः तेनैव रूपेण भूतोपकाररूपकार्यान्तरयोग्याश्श्रूयन्ते। अयं भावः—न तावदविनियुक्तत्वादसंस्कार्यत्वं विनियोगाभावेऽप्युपयोगादृष्टयैव संस्कार्यत्वसम्भवात्। अस्ति च "ऋग्वेदेन होता करोती' त्यादिभिः सामान्यतो विशेषतश्च विनियोगः नाप्यद्रव्यत्वादसंस्कार्यत्वं—यथोक्ताध्ययनगृहीतत्वे विरोधाभावात्, प्रहणविषयत्वादेश्च गुणादावपि सर्वसम्मतेः। चोदितक्रियासाध्यस्येश्वरानुग्रहरूपस्याऽतिशयस्य स्वाध्यायाधारत्वाभावेऽप्यध्ययनप्राप्तयाऽऽराध्यबुद्धिसङ्गृहीतेन तेनैव यथार्होत्तरक्रियायाश्शास्त्रतो नियमान्नातिप्रसङ्गः। व्रीह्यादिष्वपि प्रोक्षणादिभिरतीन्द्रियातिशयो भवतु वा, मा वा, उक्तन्यायस्सार्वत्रिक इति॥ ननु "सक्तूञ्जुहोति" सुवर्णं भार्यं, मित्यादिषु निर्वर्त्यत्वादिराहितकर्मत्वावगमेऽपि भावार्थस्य न द्रव्यार्थता, तथा "स्वाध्यायमधीयीत, स्वाध्यायोऽध्येतव्य" इत्यादिजपविधावपि कर्मत्वावगतिरविशिष्टा अतस्तत्रानैकान्त्यं, तत्रापि वा संस्कार्यत्वप्रसङ्ग इत्यत्राह (संस्कार्यत्वमिति) अयं भावः, सक्त्वादीनां भूतभाव्युपयोगसम्भवाज्जपादेश्च गृहीताक्षरविषयत्वावश्यंभावा, दनेकसंस्कारक्लृप्तौ गौरवात्, जपादिसंस्कारसाध्योपयोगान्तरदर्शनात्, फलश्रवणाच्च, तत्र संस्कारपरित्यागः, नन्विह तथा स्यात् तथाप्यवगतकर्मत्वस्य निर्बाधत्वादिति। तत्रैव

# पुरुषार्थचतुष्टयतत्साधनावबोधित्वात् ।

* श्रुतप्रकाशिका *

कामतदुपायेषु केचिल्लोकसिद्धाः, तथापि धनेशसुरेशादिविभूतिरूपातिशयितार्थ-कामतत्साधनानां, लोकसिद्धस्य पशुपुत्रान्नादेश्चित्रादिसाध्यस्य च लौकिकप्रमाणा-गोचरत्त्वात्। पुरुषार्थचतुष्टयस्य वेदवेद्यत्वोक्तिर्युक्ता । अवबोधित्वात्,—अनुष्ठा-नौपयिकबोधजनकत्वादिति भावः । अर्थावबोधकत्त्वस्य हुमादावव्याप्तत्वादाह

छ तत्त्वटीका छ

न्यायसुदर्शनम् "आद्याध्यनमिच्छामस्संस्कारं कर्मतामितेः । स्वाध्यायस्योपयोगित्वा-त् फलाश्रवणतोऽपि च ।जपादेरपि संस्कारकर्मतेष्येत चेत्तदा । आद्यन्तसर्वस्वा-ध्यायानुपयोगादसंस्कृतिः ॥ सर्वत्र कर्मताबाधः स्वाध्यायस्य प्रसज्यते । तेन संस्कार आद्यं स्यादपरे त्वर्थकर्माणि ॥ अर्थवादिकमेवाऽत्र फलं स्याद्रात्रिसत्रवत् । अत्राऽनीप्सितकर्मत्वं स्वाध्यायस्येप्यते बुधैः ॥ आद्ये त्वीप्सितकर्मत्वं तदर्थैव क्रिया मता । जपादेरपि संस्कारकर्मत्वे सर्वसंस्कारसाध्यस्वाध्यायस्याऽर्थावबोध एव भाव्युपयोगः स्यात् । तस्य चानाधिकृतकर्मभागे हुमादिषु च वैयर्थ्यात्सर्वाण्य-ध्ययनान्यर्थकर्माणि स्युः, तदा स्वाध्यायस्य कर्मताभङ्गस्स्यात् । तस्मादाद्याध्यन-मेकमेव सँकार इति, ॥ नन्वत्राऽप्युपयोगादर्शदनादयुक्तिरसिद्धा, संस्कारत्वादे-वोपयोगक्लृप्तावन्योन्याश्रयणात् । आहुश्च "संस्कारविधयश्च न संस्कार्यं विनि-युङ्क्ते प्रमाणान्तरावसितोपयोगस्य संस्कारपर्य्यवसायात्तु संस्कारविधिर्न संस्कार्यस्य कार्यं कल्पयति" इति तत्राह ( धर्मार्थेति ) उपयोगादर्शनाद्धि सक्त्वादौ कर्म-श्रुतिबाधः । स्वाध्यायस्य तु भाविदृष्टादृष्टविविधप्रयोजनदर्शनात्सक्त्वादिवन्नासं-स्कार्यत्वं युक्तमिति भावः ॥ अत्र पुरुषार्थचतुष्टयस्य वेदवेद्यत्ववचनं सर्वभागा-नुवृत्तप्रयोजनसामान्यदर्शनेन कृत्स्नस्य मीमांसितव्यत्वख्यापनार्थं, बाह्यागमोक्तानां तेषामश्रद्धेयत्वार्थञ्च । अर्थकामतदुपायानां केषाञ्चिल्लोकसिद्धत्वेऽपि त्रैलोक्य-विभवादिरूपयोरर्थकामयोस्तत्साधनानाञ्च वेदवेद्यत्वं युक्तं । लौकिकार्थकामयो-रपि कारीर्यादिषूपायेषु शास्त्रव्यापारः सिद्धः । धर्मस्तु द्रव्यात्मना प्रत्यक्षोपि धृतिसाधनत्वेन शास्त्रग्राह्यः । यथाहुः " श्रेयस्साधनता ह्येषां नित्यं वेदात्प्रतीयते।

# जापादिना स्वरूपेणापि तत्साधनत्वाच्च ।

* श्रुतप्रकाशिका *

( जपादिने ) ति । ( स्वरूपेणापि ) अर्थज्ञानानुष्ठानाभ्यामृते जप्यमानेनाऽक्षरमात्रेणापीत्यर्थः । आदिशब्दादध्यापनग्रहणम् । अनुष्ठानानुगुणं ज्ञानं, जपादि, चाध्ययनसंस्कृतेन स्वाध्यायेनैवेत्युक्तं भवति । यद्वा पुरुषार्थतत्सधनावबोधित्वेन

७ तत्त्वटीका ७

ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः" इति ॥ मोक्षश्च नास्मदादिप्रत्यक्षः— आत्मा कदाचित्समस्तविशेशगुणशून्यः असिद्धः शेषगुणवत्वाद्धटवदित्यादीनान्तु विपक्षे बाधकाभावान्नानुमानत्वं । मुक्तिपरशास्त्रोपजीविनेन विपक्षे बाधकोक्तौ चानुमाननैष्फल्यम्— निरतिशयानन्दब्रह्मानुभवात्मनि तु मोक्षहेतुप्रवृत्तेर्न प्रसङ्गः । तद्विपरीतसाधने त्वागमबाधः । अपि च जीवः कदाचित्समस्तविशेषगुणशून्यो न् भवति आत्मत्वादीश्वरवदित्यपि वक्तुं शक्यम् । अत्रार्थस्येव धर्मस्यापि समीहितसाधनतया पुमर्थस्य सतो धर्मविशेषस्साधनम्—अतस्सोपि तत्साधनशब्दोक्तः मन्त्रार्थवादयोरपि यथार्हं चतुर्वर्गबोधकत्वं तद्बोधकोपकारकत्वञ्च ग्राह्यम् ।

श्येनेषु वज्रप्रभृतिष्वपि साधनचोदना ।
इष्टस्यारातिभङ्गादेरुपायांशोपदेशतः ॥ * ॥
घोरापायान्तरेभ्यश्च लभ्येताऽत्र निवारणम् ।
लघुनिष्कृतिनिस्तार्य्यं ह्यभिचारं प्रचक्षते ॥ * ॥
किञ्चानभिचरन्षट्सुपतेदित्यपि शिष्यते ।
तेन धर्मोपयोक्तत्वमाततायिपथे विदुः ॥ * ॥

नन्वलौकिकपुरुर्थादिबोधकत्वं स्मृत्यादावप्यस्ति—अतोऽन्यसाध्ये प्रयोजने किं वेदस्य संस्कारेण । अर्थबोधश्च हुमादौ नास्ति । पुरुषभेदेनाऽनधिगताचिकीर्षितभागयोगश्च सन्नप्यसावनुष्ठानपर्यन्तत्वाभावान्नोपयोगी स्यात्. तदिह स्वाध्यायस्यान्यलभ्योपयोगत्वादध्ययनस्य कृत्स्नस्वाध्यायसंस्कारत्वायोगादेकदेशसंस्कारस्याऽशब्दत्वाच्च "ध्येतव्य" इत्यस्य संस्कारविधित्वाभावे नियोगार्थस्वपक्ष एव प्राप्त इत्यत आह ( जपादिनेति ) आदिशब्देन धारणङ्गृह्यते । स्वरूपेणापि न

**एवमध्ययनविधिर्मन्त्रवन्नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति ।**

* श्रुतप्रकाशिका *

सह तत्साधनत्वं च—शब्देन समुच्चीयते । तत्साधनत्वं द्विधा-जपादिना, भ्रियमाणेन स्वरूपेण, चेति । अतोऽवान्तरसमुच्चेतव्यसमुच्चयपरोऽपि—शब्दः ।

एवं नियमविधित्वं चोपपादितं भवति । अर्थज्ञानपर्यन्तत्त्वं किंशब्दस्वारस्यादभ्युपगम्यते? उतार्थानुपपत्त्या ? इतिविकल्पमभिप्रेत्य तत्र शब्दस्वारस्यं प्रतिवदन्नध्ययनविधिनिरूपणमुपसंहरति ( एवमि ) ति । ( मन्त्रवदि ) ति ।

ॐ तत्त्वटीका ॐ

केवलमर्थज्ञानद्वारेणेत्यर्थः । यद्वा—अध्यापनमादिशब्दग्राह्यम् । तदा स्वरूपेणापि—धृतस्वरूपमात्रेण चेतियावत् । "ऋग्वेदं धारयन्विप्र" इति स्मृतेः । अयं भावः—अध्ययनगृहीतस्वाध्यायसाध्यमेव ज्ञानं विधिभिरुपजीव्यं—उपबृंहणानान्तु न स्वातन्त्र्येण धर्मादिसाधनत्वं. अस्ति च श्रुतिः "वेदाभ्यासेन सततं सत्येनतपसैव च । अद्रोहेण च भूतानां जातिं स्मरति पौर्विकीम्" । इत्यादिप्रसिद्धमनन्यसाध्यं जपादिप्रयोजनं—तेनैवाऽर्थकानधिकृताचिकीर्षितभागेष्वपि संस्कार्यत्वोपपत्तिः—जपविधिश्च निरर्थकोच्चारणविषयेऽपि स्वाध्यायस्यार्थपरतान्न बाधते सर्वविधिबाधेन स्वव्याघातप्रसक्तेरिति । नचोभयार्थत्वे विनियुक्तविनियोगविरोधः—एकेनैव रूपेणानेकार्थत्वाभावात् । तथा च न्यायसुदर्शनम् । "स्वरूपेण जपाद्यर्थस्स्वशक्त्याऽर्थावबोधकः । रूपभेदाद्विरोधो न यथाग्नेर्दाहभासयोः" इति. तदिहाऽध्ययनसंस्कृताद्वेदादनन्तप्रयोजनसम्भवेन तद्विचारमन्तरेणाऽन्यत्र शास्त्राभ्यासे कः प्रयस्येदिति तात्पर्यं ॥ नन्वेवं विदितोपयोगे साध्येऽत्रार्थज्ञानमपि विधिफलतया स्वीकार्यं; अविदितोपयोगेन त्वक्षरग्रहणमपि न फलत्वेन प्रतिपत्तुंशक्यं. अतोऽनुष्ठानं प्रत्यव्यवहितोपयुक्तमर्थज्ञानमपि ग्रहणवदध्ययनविधेर्दृष्टं फलमस्त्विति शङ्कां प्रकृतोपसंहारव्याजेन प्रतिक्षिपति. ( एवमिति ) विधेयस्वरूपफलादिनिरूपणप्रकारेणेत्यर्थः, मन्त्रवत्त्वं नियमवत्त्वं चानुच्चारणस्य तत्फले गृहीतावुपचरितम्,—मन्त्राः काण्डव्रताद्यङ्गभूताः अध्ययनदशाजप्याश्च शन्नोमित्र

* श्रुतप्रकाशिका *

पृथङ्निर्देशो व्रतान्तर्भावेन तदनन्तर्भावेन वाध्ययनोपकारकमन्त्राभिप्रायः । अस्ति हि शन्नोमित्रादिमन्त्राणां व्रताननुप्रवेशेनापि जपमात्रेणोपकारकत्वं, नियमाः पूर्वोक्ताः । यद्वा यथा बालस्य उपनयनकाले सन्ध्योपासनादिकाले च विधीयमानमुच्चारणं नियमवदक्षरपठनमेव नार्थधीसंपादनम् । नहि बालानां मन्त्रार्थावबोधसम्भवः,तद्वदिति । ( अक्षरराशिग्रहणे ) ति । सनियमकोच्चारणमध्ययन-

* तत्त्वटीका *

इत्याद्याः । नियमाः । प्रागुक्ताः, "एवं मन्त्रवदि" त्येतत् दृष्टान्तोक्तिरित्येके, यथा मन्त्रे चोद्यमानमध्ययनमक्षरग्रहणमात्रपर्य्यवसायीति स्वीक्रियते तथेहापीति ॥ "अपरे तु यथोपनयनदशोच्चारणीयेषूपनीतमात्रस्य समिधाधानादिमन्त्रेषुच तथेहापीति वेदितव्य"मिति ॥ "हुमादिवदित्यन्ये"विषहरणमन्त्रविशेषवदिति"च । मात्रचा, पर्यवसानशब्देन चाऽक्षरग्रहणात् पश्चात् पूर्वं च विधिविश्रान्तिर्निषिध्यते । अयंभावः अध्ययनशब्दस्य न तावदर्थज्ञानवाचकत्वं, अव्युत्पत्तेः, किञ्चिदधीत्य ब्राह्मण इत्यादौ च तस्यार्थपरत्वसम्भवाच्च । विधिविषयमध्ययनं प्रत्यव्यवहितसाध्यमभिव्याप्तमवर्जनीयञ्च फलन्दृश्यते—तदन्यस्यापि तत्फलत्वक्लृप्तौ गौरवंस्यात्—व्यवहितसाध्यस्यापि फलत्वक्लृप्तौ ज्ञानवत्तत्साध्यस्यानुष्ठानस्यापि तत्क्लृप्तिप्रसङ्गः, उत्तरविध्यव्यवहितापेक्षितत्वमपि ग्रहणज्ञानयोस्समम्" । यदि चार्थज्ञानं कर्मविषयतयाऽऽम्नातं, तदा त्वव्यापिनि व्यवहितेपि तस्मिन् संप्रत्ययस्स्यात्, नत्वेदस्ति—अतोर्थधियः उपयोगितयैव स्वीकार्या इति ॥ ननु समन्वयाधिकरणन्यायादर्थज्ञानस्यैव स्वतःप्रयोजनतया फलत्वक्लृप्तिर्युक्ता मैवं-निरतिशयानन्दब्रह्मप्रतिपादकभागमात्रे तदुक्तिः—अत्र तु कृत्स्नाध्ययनफलविमर्शात्, विरूपक्लृप्त्ययोगाच्च । ननु वृद्धवाक्यानि शृणिवत्यादौ वाक्यश्रवणविधेरर्थधीपर्य्यन्तत्वं लोके दृष्टमिति चेन्न वृत्तादिवन्मार्गलक्षणभूतस्य तस्य कस्यचिद्वाक्यस्य श्रोतव्यत्वोपदेशे तात्पर्य्यात्. तदभावस्यापि दृष्टेः—किञ्च, क्वचिद्वाक्यश्रवणोपदेशस्यार्थपरत्वमगत्या, इह न तथा—यथाश्रुते बाधाभावात्—नच वाक्यश्रवणवत्तदनूच्चारणमर्थज्ञानार्थं युक्तं—आहत्य स्वयं प्रयोगानुगुणाक्षरग्रहणार्थयतैव लोकेदृष्टा । ननु "ये ह वा अविदितार्षेयच्छन्दो दैवतेन मन्त्रेण" त्यादिश्रुतिभिः, अविदित्वा ऋषिं छन्दः, यद-

* श्रुतप्रकाशिका *

शब्दस्य मुख्योर्थः, वेदानां किंचिदधीत्य ब्राह्मणः, एकांशाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचानः, कल्पाध्यायी ऋषिः,कल्पसूत्रप्रवचनाध्यायी भ्रूण इत्यादिप्रयोगात्। नहि स्वशाखैकदेशाध्यायिनोऽर्थज्ञानसंभवः, अङ्गाध्ययनस्य पृथगुपादानेन तद्विरहे अर्थज्ञानप्रसङ्गाभावात्। स्वाध्यायशब्दश्च नार्थज्ञानवाची, अपि तु स्वशाखामात्रवाचीति तत्कर्मत्वं स्वध्यायस्यैव युक्तं, न त्वर्थज्ञानस्य। अध्ययनस्य प्रयोजनाकाङ्क्षायां दृष्टे संभवत्यदृष्टकल्पनायोगात्। अक्षरग्रहणस्याऽऽसन्नत्वाद्धर्मादिष्वनुगतत्वाच्च तत्स्वीकारो युक्तः। व्यवहितत्त्वादसार्वत्रिकत्त्वाच्च नार्थज्ञानमित्यभिप्रायः। सकृदुच्चारणावधिकत्त्वव्यावृत्त्यर्थमक्षरग्रहणे पर्यवसानमुक्तम्। मात्रचा विधिव्यापारस्यार्थज्ञानपर्यन्तत्वव्युदासः पर्यवस्यतीति। यथा "ऽग्नीनादधीते" ति वाक्यमाधानमात्रपरं न तूत्तरक्रतुविनियोगपरं, यथा च कारीर्या वृष्टि-

* तत्त्वटीका *

धीतमित्यादिस्मृतिभिश्च विपर्यये दोषोक्त्याऽर्थज्ञानमवश्यसम्पाद्यत्वेन स्थापितं– तदभावेऽध्ययनस्य नैष्फल्यम्, तत्सद्भावे सर्वपुरुषार्थावाप्तिः, चोद्यते "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थं। योर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मे" ति– तस्माद्वैधो वेदार्थविचारः– मैवम्, यथा रागप्राप्तस्य ऋतुगमनादेरकरणे दोषः, विधिवत्करणे सन्तत्यादिलाभश्च फलत्वेन स्मर्यते, एवमिहापि स्यात्– विधिवत्समाप्ताध्ययनानुवादेन चार्थज्ञानाभावे दोषंवदन्ति वाक्यानि नार्थधीपर्यन्तमध्ययनं विधातुं क्षमन्ते–तस्मा– "देतानि मन्त्रे मन्त्रे विद्यादि" त्येतत्तु प्रयोगकाले प्रतिमन्त्रं प्रज्ञातऋष्याद्यनुस्मरणपरं, अत एवाविदितार्षेयत्वादिनिषेधश्च तावन्मात्रविषयः। अतो "यदधीतं, स्थाणुरयं, यश्च मीमांसतेऽध्वर" मित्यादिभिरर्थज्ञानप्रशंसया स्वतः प्रवृत्तिरुत्तभ्यते। एतैश्चाऽर्थज्ञानस्यावश्यापेक्षितत्वेन विधावपि नाध्ययनविधेस्तत्पर्य्यन्तत्वं कल्प्यं– नैरपेक्ष्या, दन्यतः प्राप्तविधेरौदासीन्याच्च। तावत्पर्यन्तधावनेपि स्वतःपुरुषार्थापर्यवसानाच्च। यत्तु "कैश्चित्प्रत्यवस्थीयते—अध्ययनविधेरर्थज्ञानपर्यन्तत्वादाचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाऽभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदि" त्यादिश्रुतिभि-

**अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात् ॥**

* श्रुतप्रकाशिका *

कामो यजेत" इतिवाक्यं वृष्टिसिद्धिपर्यन्तकर्मविशेषपरं न तु वृष्ट्युपरितनोपयोगपरं, तथेति भावः । एवं शब्दस्वारस्यादर्थज्ञानपर्यन्तत्वं निरस्तम् । अथाऽर्थानुपपत्तिं परिहरति—त्रिधा चाऽनुपपत्तिशङ्का ।विधेरक्षरग्रहणमात्रपरत्वे ग्रहणशेषतया विनियुक्तस्य स्वाध्यायस्यार्थपरत्वे प्रमाणाभावादविवक्षितार्थत्वं स्यात् मीमांसायाः प्रवर्त्तकाभावादनारम्भणीयत्वं स्यात्, अक्षरराशिग्रहणमात्रस्य दुःखरूपतया विधेः प्रयोजनपर्यवसानं न स्यादिति । एतच्छङ्कात्रयनिराकरणमुखेनाध्ययनविधेरर्थज्ञानपर्यन्ततां, तन्निमित्तां ब्रह्मविचारानारम्भशङ्कां च व्युदस्यन् वेदाख्यैकप्रबन्धव्याख्यानरूपतया धर्मब्रह्मविचारयोरैकशास्त्र्यमपि दर्शयति ।

(अध्ययनगृहीतस्ये) ति । इह साङ्गाध्ययनं विवक्षितम् अधीतसाङ्गसशिरस्कवेदस्य । ननु च साङ्गवेदाध्ययनादिति पूर्वापरानुगुण्यात् तेन हि प्रयोजनवदर्थोपा-

ॐ तत्त्वटीका ॐ

रधीत्य स्नायादित्यादिस्मृतिभि "श्चात्मरूपार्थज्ञानस्यापि कर्मार्थतया तत्कर्त्तृसंस्कारत्वेन विनियोगात् "द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः,सोन्वेष्टव्यः सविजिज्ञासितव्यः" इति जिज्ञास्यतयोक्तस्याऽऽत्मनोऽवहन्तव्यव्रीहिवत्स्वरसावगतसंस्कार्यत्वाभावेन कर्मशेषत्वसिद्ध्या "तत्त्वमसि" "अयमात्मा ब्रह्मे" त्यादिभिः कर्मवश्यस्यैव ब्रह्मत्वोक्तेः विश्वकर्तृत्वस्य च कर्मद्वारोपपत्तेः क्लृप्तगृहीनेर्न्यायत्वाज्जीवस्य कर्मसु कर्तृतया प्राप्तस्य तदर्थं संस्कारार्हत्वाच्च, जीवपरे वेदान्ते सति तदतिरिक्तेश्वरविषयशास्त्रासम्भवात् कस्यैकशास्त्र्यम्, क्रमश्च. कल्प्यत इति—"तदप्यक्षरग्रहणमात्रपर्य्यवसानभाषणात् प्रत्युक्तं । सूत्रकारोप्येतदेव चोद्यं "तद्भूतो विधाना" दित्यनूद्य "अध्यनमात्रवत" इति परिहरिष्यति । अध्ययनविधेरर्थज्ञानपर्य्यन्तत्वेऽप्य-धीत्या" भिसमावृत्ये" त्यादिभिर्नार्थज्ञानस्य कर्मशेषत्वेन विनियोगः—क्त्वाश्रुतेः समानकर्तृत्वादिमात्रे विश्रमात्—तथा विनियोगेऽपि कर्मानुष्ठनोपयुक्तार्थज्ञानादन्य-देवोपासानात्मकं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्—उपास्यश्चात्मा जीवातिरिक्तः

* श्रुतप्रकाशिका *

तप्रतीतसिद्धिः । अर्थाः— यज्ञोपासनादयः, ते स्वर्गमोक्षादिप्रयोजनवन्तः, प्रयोजनवदर्थ— शब्देन काकदन्तवत्परीक्ष्यत्वशङ्काव्युदासः । ( प्रयोजनवदर्थावबोधित्वदर्शना ) दित्यनेन विधेः परम्परया पुरुषार्थपर्यवसायित्वमुक्तं भवति । अध्ययनस्य साक्षात्प्रयोजनमक्षरराशिग्रहणमित्युक्तम् अध्ययनगृहीतस्येति पदेन । अयमर्थः । किं साक्षात्पुरुषार्थपर्यवसायित्वं विधेर्विवक्षितम् ? उत परम्परया ? साक्षात्प्रयोजनपर्यवसायित्वं विधेरर्थज्ञानपर्यन्तत्वेऽपि नोपपद्यते, अनुष्ठानापूर्वद्वारा स्वर्गस्यैव प्रयोजनत्वात्, अध्ययनविधेः स्वर्गपर्यन्तत्वानभ्युपगमाच्चापरम्परया चेद् अस्मत्पक्षेऽपि सम्भवति ( स्वभावत ) इति, शब्दस्य बोधकत्वशक्तिस्वाभाव्यादित्यर्थः । व्युत्पन्नपदपदार्थं प्रति शब्दस्यार्थावबोधकत्वं स्वाभाविकमिति लोकसिद्धम् । एवकारो विधिनैरपेक्ष्यपरः, अन्यत्र विनियोगस्तु न स्वाभाविकं

卐 तत्त्वटीका 卐

श्रुत्यैव सिद्धः—नतु कल्प्यः—जीवब्रह्मसामानाधिकरण्यञ्च चिद्ब्रह्मसामानाधिकरण्यवदैक्यविरोधादन्यार्थं । तिष्ठतु च तथाविधज्ञानविधानं—तथाऽपि न विरोधः—कर्त्तुरिवाराध्यस्यापि कर्मार्थत्वेन विचार्यत्वात्तस्य च कर्मवश्यादन्यत्वेन श्रुतिद्धित्वात्तद्विचारार्थकाण्डान्तरादिसिद्धेः । यद्यप्यर्थज्ञानस्यानुष्ठानशेषत्वेऽपि यथांशं परब्रह्मोपासनशेषत्वमपि स्यादित्युत्तरं प्राप्तं—तथापि—अर्थज्ञानपर्यन्ततामूले चोद्ये प्रथमपर्वस्थोद्भटापराधोपेक्षायोगादन्वारुह्यवादमनादृत्य मूलच्छेद एवाऽत्र कर्त्तव्य इत्यभिप्रायेण सूत्रभाष्ययोर्मात्रशब्दः । ननु अध्ययनविधावक्षरग्रहणपर्यवसितेऽन्यार्थतयैवाऽधीतस्य स्वाध्यायस्य प्रतीतोऽप्यर्थस्तात्पर्य्यविषयत्वायोगादविचार्यः, ततो निरर्थको वेदः—अध्ययनविधिश्च न पुरुषार्थपर्यन्तः—निर्विषयतया, "अधीत्य स्नाया" दिति स्मृतिनिरुद्धावसरतया च मीमांसापि नारभ्येत कुतस्तदैक्यादितिस्यादिति शङ्कामपनुदन्नेकविषयतया वेदाख्यैकव्याख्येयव्याख्यानात्मकशास्त्रैक्यमपि दर्शयन्मीमांसारम्भमात्रञ्च सूचयति ( अध्ययनेति ) अत्र स्वाध्यायनिर्णयविचाररूपाधीतवेदशब्दैर्मीमांसाया विषयफलस्वरूपाधिकार्यैक्यव्यञ्जनं-गृहीतस्येत्यनेन विधिव्यापारस्य विश्रमोक्तिः प्रयोजनवदर्थदर्शनोक्तिस्तु पुरुषार्थपर्य्यवसानज्ञापनार्था । स्वभावत एव-विधिव्यापारमनपेक्ष्येत्यर्थः, व्युत्पन्नपदपदा-

## गृहीतात्स्वाध्यायादवगम्यमानान् प्रयोजनवतो

* श्रुतप्रकाशिका *

शब्दस्यार्थपरत्वं निरुणद्धि जपविधिवत् "याजयित्वा प्रतिगृह्य वाऽनश्नन् त्रिस्वाध्यायं वेदमधीयीत त्रिरात्रंवा साबित्रीं" वेदमेव जपेन्नित्यमि" त्यादिविधानं हि न वेदस्यार्थपरत्वं निवारयति । स्वाध्यायः स्वतोऽर्थबोधकश्चेत् किं मीमांसयेत्यत्राह ॥

( गृहीतादि ) ति । गृहीतात्–गृहीतमात्रात्, अध्यनगृहीतस्येत्युक्तेः, तेन

७ तत्त्वटीका ७

र्थादेरितिशेषः— अयं भावः—

ग्रहणार्थमुपात्तोपि स्वाध्यायो वन्हिवत्स्वयम् ।
प्रकाशयति यत्तत्र स्वतो मानमबाधतः ॥ * ॥
जपादध्ययनं श्रौतं- तत्तत्फलसमन्वितम् ।
निरुन्धे शब्दसामर्थ्यं ग्रहणार्थन्तु किं पुनः ॥ * ॥
विनियोगविशेषेण वेदेर्थपरतां क्षिपन् ।
विनियोगार्थधीबाधात्स्वव्याघातेन बाधितः ॥ * ॥
विवक्षितार्थैव नवा स्यादध्ययनचोदना ।
आद्ये व्याहतिरन्त्ये तु पूर्वपक्षस्य नोत्थितिः ॥ * ॥
अर्थज्ञानफलत्वेन मानत्वञ्चात्र दुर्भणम् ।
तत्फलत्वे हि तन्मानं तन्मानत्वे च तत्विति ॥ ७ ॥
स्वीकरोत्यर्थपरतां नियोगार्थोपि चेद्विधिः ।
संस्कारार्थोपि तद्वत्स्यात् स्वसिद्ध्यैत्सुक्यनामवत् ॥ ७ ॥

इति ॥ वेदः— निरपेक्षवेदकः नतु पुम्वाक्यवन्मूलीभूतमानान्तरमपेक्ष्येत्यर्थः, अत एव न मूलदोषविचारशङ्कया विचारस्तम्भनमिति भावः । प्रयोजनमत्र— चतुर्वर्गः– तद्वन्तोऽर्थास्तदुपायाः कर्मोपासनारूपाः । अवबोधित्वमिह निर्णयजननानुगुणत्वं दुरपह्नवं । न च दृष्टेऽनुपपन्नन्नामेत्यभिप्रायेण दर्शनादित्युक्तं ॥ स्वत एव बोधकत्वेऽपि साध्याभावान्न मीमांस्यमित्यत्राह ( गृहीता-

# ऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफल-

* श्रुतप्रकाशिका *

मीमांसाख्येतिकर्तव्यताराहित्यं विवक्षितम्, आपातप्रतीतेः संशयविपर्ययसहत्वात्तन्निराकरणाय मीमांसेति भावः । अध्ययनगृहीतस्येत्यादिना वेदस्य बोधकत्वस्वभावत्वमुक्तं, तत्र प्रयोजनवदर्थशब्दः परम्परया पुरुषार्थपर्यवसानज्ञापनाय, उपरि तन्निमित्तापातप्रतीतिजनकतायाः सहकारिवैकल्यनिबन्धनत्वम् । नहि वेदस्यापातप्रतीतिजनकत्वं स्वभावः, प्रमितिजनकत्वस्वभावत्वात्. मीमांसाख्यपरिकरशून्यस्य तदभावो न श्रुतेः प्रमितिजनकत्वस्वभावविरोधी । यथा आलोकादिसहकारिविरहे रूपाद्यनुपलम्भश्चक्षुरादीनां रूपादिसाक्षात्कारजनकत्वस्य स्वाभाविकत्वं न विहन्ति तद्वद्, आपातप्रतीतावपि प्रयोजनवत्त्वेन प्रतीतिरस्तीति दर्शयितुं पुनः प्रयोजनवदर्थ—शब्दः, प्रयोजनवदर्थापातप्रतीतिर्हि तन्निर्णयरागं जनयति । नहि निष्प्रयोजनकाकदन्ताद्यापातप्रतीतिस्तन्निर्णयरागं जनयति । आपाततोऽवगम्यमानान् दृष्ट्वेत्यन्वयः । अर्थानामवगम्यमानत्वं दृष्ट्वेत्यर्थः ।

* तत्त्वटीका *

दिति ) "अर्थानापाततोऽवगम्यमानान्" इति तत्कालविशेषणतयाऽन्वयः— आपातधीरेव दृष्टा, अतस्संशयादिनिरासः साध्य इत्यत्राशयः । पूर्वः प्रयोजनवदर्थशब्दः काकदन्तोक्तिव्यावृत्त्या श्रुतिप्रामाण्यार्थः— उत्तरस्त्वापातधियस्स्वविषयविचाराजननेन प्रेरकत्वज्ञापकः—

प्रतीतमप्रतीतं वा न मीमांस्येत किञ्चन ।
इतिचोद्यमपि क्षिप्तमापातज्ञाततोक्तितः ॥ ६ ॥

यदि "शब्दस्वभावादापातधीः" तर्हि अव्युत्पन्नानामपि स्यात्— नचात्र व्युत्पत्तिमतामेव तद्विधिरस्ति अतोऽक्षेष्वप्यङ्गिवदक्षरग्रहणान्ते विधौ तदसम्भवात् विध्येकरूप्ये चाङ्गाध्ययनस्याऽर्थज्ञानपर्यन्तत्वे विशेषहेत्वभावात्— अत्र ब्रूमः—

यस्य सँस्कृतभाषैव बाल्यात्प्रभृतिशीलिता ।
तदा तु तस्य सा तत्र स्यादापातमतिस्स्वयम् ॥ ७ ॥
निरङ्गाध्ययनेऽप्येवं साङ्गाधीतौ तु किं पुनः ।

## वेदवाक्यविचाररूपमीमांसाश्रवणेऽधीतवेदः पुरुषः

* श्रुतप्रकाशिका *

स्वात्मनो बुद्ध्युत्पत्तिं दृष्ट्वेतिवत्. प्रयोजनवदर्थापातप्रतीतेः स्वानुभवसिद्धत्त्वान्न तदपह्नवः शक्य इति भावः. व्याकरणादिफलस्वरूपविलक्षणे मीमांसाफलस्वरूपे दर्शयति ।

( तत्स्वरूपे ) ति । स्वरूपविशेषाः—श्राङ्गिनः, प्रकारविशेषाः— अङ्गानि, पूर्वपक्षोक्तस्वरूपप्रकारतः सिद्धान्तितत्स्वरूपप्रकारयोर्वैषम्यं विशेष— शब्देन विवक्षितम् । प्रयोजनवदर्थ—स्वाध्याय--वेदमीमांसा—शब्दाः पूर्वोत्तरभागसाधारणाः ( स्वयमेव ) न तु विधिना. तदुपपादकमधीतवेदः पुरुष इति पदद्वयम् । ( अधीतवेद ) इत्यध्ययनविधिव्यापारस्यानुष्ठितांशे पर्यवसितत्वान्मीमांसायां तस्याप्रवर्त्तकत्वं द्योतितं, चेतनत्वात् फलवदर्थापातप्रतीत्या स्वयं प्रवर्त्तत इति पुरुष—

❀ तत्त्वटीका ❀

वेदार्थापातधीवृद्धिमङ्गार्थापातधीर्दिशेत् ॥ ❀ ॥
हितैषिवाक्यजातञ्च केचिदापातसम्विदम् ।
प्राप्नुवन्तो विचारे हि प्रवर्त्तन्ते मनीषिणः ॥ ❀ ॥
केचित्त्वङ्ग्युपकारार्हरूपेणाङ्गान्तरग्रहे ।
सार्थज्ञानत्वमाचख्युर्दृष्टार्थत्वन्तु लध्विति ॥ ❀ ॥

अस्त्वेवमापातधीः तदतिरिक्तमपि ज्ञानं विद्यास्थानान्तरैरेव साध्यतामित्यत्रोत्तरं ( तत्स्वरूपेत्यादि ) पूर्वपक्षोक्तात् व्यावृत्तरूपावधारणमिहान्यैरसाध्यं फलमितिभावः " वेदवाक्यविचाररूपे " त्यनेन विद्यास्थानान्तरव्यावृत्तमीमांसाशरीरव्यञ्जनं । मीमांसाया विचाररूपत्वोक्तिस्तदभेदोपचारात् " विचारशब्दस्य करणव्युत्पत्त्या वा । विधिविषये कृत्यशेषं नास्तीत्यभिप्रायेणाऽधीतवेदत्वोक्तिः ॥ " आपातधीमत्वा" दिति, हेत्वभिप्राया च । पुरुष इति हेतुगर्भं प्रयोजनार्थित्वादिति । स्वयमेव—विधिनिरपेक्षस्वेच्छयेत्यर्थः ।

आपातस्योपयुक्तार्थे भाते तन्निर्णयार्थिनः ।
तदुपाये प्रवृत्तस्य विधानं ह्यनपेक्षितम् ॥ ❀ ॥

स्वयमेव प्रवर्त्तते ।

* श्रुतप्रकाशिका *

शब्दस्याभिप्रायः । नन्वक्षरराशिग्रहणपर्यन्तत्वपक्षे रागतः प्रवृत्तिर्नोपपद्यते "वेदाङ्गानि समस्तानि कृष्णपक्षेषु सम्पठेत्" "निष्कारणः षडङ्गो वेदोऽध्येयः" "वेदमध्यापयेद्द्विजः" "सकल्पं सरहस्यं च' त्यादिविहिताङ्गाध्ययनस्याप्यक्षरग्रहणपर्यन्ततया व्याकरणादेरर्थावबोधाभावात् प्रकृतिप्रत्ययादिज्ञानाभावेनापातप्रतीत्यभावात् । मैवम् । व्याकरणादीनां वेदाङ्गत्वादकिंचित्करस्याङ्गत्वायोगात् । दृष्टकिंचित्कारे सम्भवति तत्प्रहाणेन चादृष्टपरिकल्पनायोगात्-पदाद्यवबोधरूपदृष्टकिंचित्कार एव स्वीकार्य इत्यङ्गत्वान्यथानुपपत्त्यैव व्याकरणाद्यर्थावगमसिद्धेः, प्रयोजनवदर्थापातप्रतीतिसिद्ध्या मीमांसारम्भोपपत्तेः । 'अधीतवेदः पुरुषः स्वयमेव प्रवर्त्तत' इत्यनेन "अथातो धर्मजिज्ञासे" ति सूत्रमप्यर्थाद् व्याख्यातं भवति । विधेरक्षरराशिग्रहणपर्यन्तत्वे प्रवर्त्तकाभावात्, स्वाध्यायस्यार्थपरत्वे प्रमाणाभावाच्च, मीमांसा नारम्भणीयेति पूर्वः पक्षः । साङ्गाध्ययनानन्तरं शब्दस्य स्वतोऽर्थावबोधित्वदर्शनात् प्रवर्त्तकान्तराभावेपि रागात्प्रवृत्त्युपपत्ते, रारम्भणीयेति सिद्धान्त इति ।

ननु कर्मविचारस्य रागप्राप्तत्वे "ऽधीत्य स्नायादि" ति समावर्तनस्मृतिर्बाधिका स्यात्' वैधत्वे स्मृतेरपि श्रुतेर्बलीयस्त्वात् स्मृतिरवकाशप्रदा स्यात् । नैवम्. अध्ययनविधेरक्षरराशिग्रहणपर्यन्तत्वार्थज्ञानपर्यन्तत्वयोःकिमभिप्रेत्येतदुक्तं. यद्यर्थज्ञानपर्यन्तत्वं तर्ह्यधीत्य स्नायादिति स्मृतिगताध्ययनशब्दस्य तत्तुल्यार्थत्वान्न विरोधः । यद्यक्षरराशिग्रहणपर्यन्तत्वं ततोऽपि तुल्यार्थत्वान्न विरोधः । किंच, विरोधे सत्यपि प्रत्यक्षश्रुतिरप्यस्ति यथा छान्दोग्ये "आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे" इत्यादिः. ततश्च स्मृतिवच-

७ तत्त्वटीका ७

स्वेष्टनिश्चयहेतुत्वमन्वयव्यतिरेकतः ।
सिद्धमेव विचारस्य तत्रापि ह्यफलो विधिः ॥ ७ ॥
सम्प्रेक्ष्य निधिरत्नादींस्तद्यथार्थनिरूपणे ।

* श्रुतप्रकाशिका *

नोपेता स्नानश्रुतिर्बलीयसी. तस्माद् श्रुतिस्मृतिवचनयोः प्राबल्यदौर्बल्यकथनं निरर्थकम् । नन्वेवं श्रुत्यापि रागतः प्रवृत्तिर्बाध्यत इति चेत् । न । समावृत्तस्यापि रागतः श्रवणोपपत्तेः । नन्वध्ययनानन्तरभावित्वे समावर्त्तनस्य तत्पूर्वकगृहस्थकर्मानुष्ठानानवरुद्धश्रवणावसरालाभान्मीमांसाऽनारम्भः प्रसज्यते । नैवम् । समावृत्तस्यापि श्रोतुः श्रावयितुरिवावसरसम्भवात् । आचार्यस्य ह्यध्यापनं विहितं. न तु गृहस्थस्य श्रवणमिति चेन्न, अध्यापनस्य याजनप्रतिग्रहवद्रागप्राप्तत्वात्, रागप्राप्तमपि "प्रतिग्रहादिना धनमर्जयेदि" त्यादिशास्त्रानुमतमध्यापनमिति चेत् श्रवणमपि शास्त्रानुमतम् अनिषिद्धत्वाद्यज्ञानुष्ठानोपयुक्तत्वाच्च । .... .... ....

ननु "सम्वत्सरे सम्वत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेत् भूयः श्रुतिमिच्छन्नि" ति श्वेतकेतुरित्यारभ्य 'तच्छास्त्रैर्विप्रतिषिद्धं निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते " अग्निहोत्रमतिथय " इत्यादिना श्रवणं गृहस्थस्य निषिद्धमितिचेन्न— साकल्येन मासद्वयं गुरुकुलवासस्यानुष्ठानोपरोधित्वेन तस्यैव निषिद्धत्वात् । 'निवेशे हि वृत्ते नैयमिकानि श्रूयन्ते "अग्निहोत्रमतिथय" इति

७ तत्त्वटीका ७

अपरप्रेरिता एव प्रवर्त्तन्ते तदर्थिनः ॥ ७ ॥
अतो न विधिसिद्धोऽत्र विचारस्तत्क्रमोऽपि वा ।
अन्यथा दोषदृष्ट्यैव द्वितीयस्योपपत्तितः ।

" स्वयंप्रवृत्तावप्याचार्यनैरपेक्ष्यव्युदासाय श्रवणतदाश्रयणे प्रवृत्तिः । अकरणे तर्ह्यदोषः स्यात्. तन्न—— तदधीननिश्चयतत्सापेक्षहितप्रवृत्त्यादीनामभावस्यैव दोषत्वात् तदभिप्रायेण ह्येतदप्युच्यते—

अधीत्य वेदांस्साङ्गांस्तु यो विचारमपेक्षते ।
स्वप्रयासञ्च विस्मृत्य प्रभृष्टस्स्यात् प्रयोजनात् ॥ ७ ॥ " इति,

नन्वेवं विचारस्य वैधत्वेऽधीत्य स्नायादित्यादिविधिनिरुद्धावसरः कथं मीमांसताम् ? दुःखात्मकगुरुकुलवासान्निवृत्तेः स्वतः प्राप्तत्वादानन्तर्यमेव ह्यत्र विधेयं । मैवं—— सनियमकसमावृत्तियुक्तस्नानरूपसंस्कार एव ह्यत्र विधीयते अन्यथा निवृत्त्यानन्तर्यस्यापि स्वतः प्राप्तत्वादविधेयत्वं स्यात् । किञ्च विचारस्य

* श्रुतप्रकाशिका *

मुच्यते. आचार्यस्याप्यनुष्ठानानुपरोधेन श्रावणस्य हि शास्त्रानुमतत्वम्. अतोऽनुष्ठानानुपरोधोपरोधप्रयुक्तानुमत्यननुमतिविषयत्वं श्रावणस्य, श्रवणस्य, च तुल्यम्. अत एव हि युधिष्ठिरादीनां गार्हस्थ्यनिष्ठानामपि भीष्मादिभ्यः श्रवणं भारतादिषु प्रतिपाद्यते। यद्यपि श्रावणकाल एव श्रवणकालः, तथापि श्रोतुरुदकाहरणकाष्ठसम्पादनादिभिरनुष्ठानोपरोध इति चेन्न । अध्ययनविधिप्रयुक्तस्योदकाहरणादेस्तन्निवृत्त्या निवृत्तत्वात् । वित्तख्यात्यादिप्रयोजनान्तरस्पृहया, शिष्यस्नेहेन, च गुरोः श्रावणमुपपद्यते. श्रावयितुर्ज्ञातार्थत्वादनुष्ठानमुपपद्यते । श्रोतुरज्ञातार्थत्वान्नेति चेन्न । उपनयनप्रभृत्यनुष्ठानवद्धितैषिवचनादनुष्ठानोपपत्तेः । तर्हि हितैषिवाक्यमेव स्यात्- किमर्थं मीमांसाश्रवणमिति चेत्. हितैषिवचनस्य प्रमाणमूलत्वनिश्चयार्थं, प्रष्टॄणामपरेषां स्वयमुपपादनार्थं च, हितैषिवचनादनुष्ठानसम्भवे शूद्रादीनामप्यनुष्ठानप्रसङ्गः इति चेन्न। "न शूद्राय मतिं दद्यात्" "न चास्योपदिशेद्धर्मन्नचास्य व्रतमादिशेदि" त्यादिनिषेधवचनसद्भावात्. नहि यज्ञादिकं ब्राह्मणाश्शूद्रायोपदिशन्ति. न च शुश्रूषादिरहितशूद्रविशेषविषयत्वेनेदृशनिषेधवच-

७ तत्त्वटीका ७

वैधत्वेऽपि कथमवसरः; श्रुत्या स्मृतेर्बाधादितिचेन्न, श्रुतावप्यधीत्याभिसमावृत्येत्युक्तेः । तत्र समानकर्तृकत्वपूर्वकालत्वमात्रपरतयाऽऽनन्तर्य्ये तात्पर्यन्नास्तीति चेत्? स्मृतावपि किन्न तथा स्यात्। न च श्रुतावध्ययनशब्दोर्थज्ञानपर्यन्तः, स एव स्मृतावक्षरग्रहणपर्यन्त इति ।नियन्तुं शक्यं । "यदधीतमित्यादिवत्स्यादिति चेन्न, विरोधाविरोधाभ्यां विशेषात् । अस्तु तर्हि श्रुतिस्मृत्योर्द्वयोरप्यर्थज्ञानपर्यन्ताध्ययनानुवादः, तथा सति स्नानविधिर्वैधस्य विचारस्याऽवसरन्न विरुन्ध्यादिति चेत्? तर्हि रागप्राप्तस्याऽपि स्वोपयुक्तद्रव्यार्जनादेरिव श्रवणावसरं न विरुन्ध्यादेव ।

ज्ञात्वाऽनुष्ठानमिच्छन्तस्स्नानादिविधयस्स्वतः ।
प्राचीमेव स्वविषयां मीमांसां परिगृह्णते ॥ ७ ॥
किञ्चात्र मानभेदाङ्गक्रमकर्त्राद्यवेदिनः ।
न स्नानविधिमप्येकं यथावद्वेदितुं क्षमाः ॥ ७ ॥

* श्रुतप्रकाशिका *

नानां सङ्कोचः कार्यः- संकोचकाभावात्- नार्हं शूद्रस्य यज्ञाद्यर्हत्वविषयं वचनान्तरं दृश्यते । किंच यजमानेन कृत्स्नवेदस्य, मन्त्रविशेषाणां, च जप्यतावचनात्तेषामध्ययनलभ्यत्वा, दध्ययनस्योपनयनसापेक्षत्वादुपनयनस्य त्रैवर्णिकाऽधिकारत्वा, न शूद्राद्यधिकारप्रसङ्गः । ननूपनयनविधिस्त्रैवर्णिकाध्ययनविषयतया नेतुं शक्यते अतः शूद्रस्याध्ययनमुपनयननिरपेक्षमिति तस्य यजमानाद्युच्चारणसम्भव इति चेत् न । "तस्माच्छूद्रसमीपे नाध्येतव्यमि" ति " अथ ह्यस्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद" इत्यादिना शूद्रस्य वेदश्रवणादेर्निषिद्धत्वाद्, अध्ययनं चेदुपनयनाङ्गकं तत् त्रैवर्णिकाधिकारमेवेति न तत्र शूद्राद्यधिकार इति मन्त्रविशेषोच्चारणमुपपत्तेः । न हितैषिवचनाच्छूद्रादेः क्रत्वनुष्ठानप्रसङ्ग इति नापशूद्राधिकरणविरोधः । किंच यथा "यावज्जीवमग्निहोत्रं जुहोती" त्यादिविधिः "न स्वाङ्गं स्वव्यवधायकमि" ति न्यायात् स्वोपयोगिनोऽप्यर्थार्जनादेरागप्राप्तस्याप्यवसरप्रदः, तथाऽनुष्ठानोपयोगिमीमांसाश्रवणस्य समावर्त्तनविधिरवकाशप्रदः स्यात्. क्त्वाप्रत्ययस्य च समानकर्तृकत्वपूर्वकालीनत्व-

७ तत्त्वटीका ७

अगत्याऽध्ययनादौ प्रागविचार्य प्रवर्त्तते ।<br>
स्नाने तु गतिसद्भावान्न स्यादगतिका गतिः ॥ * ॥<br>
अनुज्ञातश्च सर्वत्र न स्वाङ्गं व्यवधायकम् ॥ ७ ॥<br>
अतो मीमांसया नात्र व्यवधानं विरोधकृत् ॥ ७ ॥

यद्वा— अध्ययनस्नाननैरन्तर्येऽपि न विरोधः । अविचारितधर्माणामुत्तरानुष्ठानासिद्धिप्रसङ्गाद्विरोध इति चेन्न, स्नातस्यापि यावद्विचारं हितकामैर्ब्रह्मचारिण इवानुष्ठानोपपत्तेः । न च हितैषिवाक्यादनुष्ठानेऽप्यपशूद्रनयविरोधः, तत्तदुचितधर्मेषु हितैषिभिः प्रवर्त्तनात्, "नचाऽस्योपदिशेद्धर्म" मित्यादि निषेधदृष्टेश्च । अन्यथाप्यनुष्ठानसिद्धौ मीमांसाश्रवणन्निरर्थकं स्यादितिचेन्न; वैपरीत्यशङ्कायाम्मूलजिज्ञासया, परनैरपेक्ष्यप्रवचनख्यात्यादिश्रद्धया, च तदुपपत्तेः । एवमेव पूर्वेषामुत्तरेषामपीत्यविच्छेदसिद्धिः । कश्चिदालस्यात्पित्रादीनेव सर्वदा प्रमाणयेदिति चेत् ? ततः किं, अनलसैरन्यैश्शास्त्रश्रवणोपपत्तेः । स्नातस्य श्रव-

* श्रुतप्रकाशिका *

मात्रमर्थः, न त्वानन्तर्यम्। नन्वानन्तर्यमेव विधेयन्न चेद्विधिवैयर्थ्यं दुःखात्मकगुरुकुलवासनिवृत्तेः स्वतः प्राप्तत्वादिति चेत्। न। आनन्तर्यपरत्वेपि विधिवैयर्थ्यात् तच्च गुरुकुलवासस्य दुःखात्मकत्वादेव। अतः सनियमसंस्कारविशेष एव स्नानमिति तद्विधेयं नत्वानन्तर्यं तस्मादधीत्येति क्त्वाश्रुतेर्न विरोधः तस्मात्स्वयमेव प्रवर्त्तते। .... .... .... .... ....

ननु "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वाऽऽपद्यते प्रवामीयते पापीयान् भवति। यातयामान्यस्य छन्दांसि भवन्ति। अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति। श्रेयांश्च भवति अयातयामान्यस्य छन्दांसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यादि" ति श्रुत्या "अविदित्वा ऋषिं छन्दो दैवतं योगमेव च योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु स" इति स्मृत्युपबृंहितयार्थज्ञानविधानं फलितम्। मन्त्रे प्रतिपाद्यदेवताज्ञानस्यात्र विहितत्त्वात्तुल्यन्यायतया दैवतंशब्दस्य मन्त्रप्रकाश्यानुष्ठेयार्थप्रकाशनार्थतयाच विध्यादिभागार्थज्ञानस्यापि विधेयत्वापत्तेः। योगो मन्त्राणां

❀ तत्त्वटीका ❀

णतो गुर्वर्थव्यापारैः स्वधर्मोपरोधः स्यादिति चेन्न, अध्ययनविधिप्रयुक्तानान्तेषान्निवृत्तेः। यथोक्तं न्यायसुदर्शने—

अक्षरग्रहणोपायनियमार्थो ह्ययम्विधिः।
तद्गृहावधिकाधर्मस्थितिरप्यब्रवीत्स्मृतिः॥ ❀॥
अधीताद्वेदतः पश्चादर्थज्ञानं स्वतो भवेत्।
तत्तु नाध्ययनस्यापि धर्माणाञ्च प्रयोजकम्॥ ❀॥ इति।

किमर्थन्तर्हि मीमांसामाचार्यः श्रावयेत्? लाभाद्यर्थं वा, धर्मस्थं वा,॥ गृहस्थधर्मोपरुद्धस्य कः श्रोतुमवसरः, कोवाचार्यस्य प्रवक्तुं,। तस्य वृत्त्यर्थिनोस्ति द्रव्यार्जनकालइति चेत्? तर्हि विध्यनुज्ञातदृष्टार्थप्रवृत्त्यन्तरवच्छ्रवणस्यापि स्यात्। इतिहासाद्यर्थतया च ग्रहिणोप्यस्ति कश्चिद्विचारकालः। तथाच वेदोपबृंहणैस्तैः स्वसाध्यानुगुणत्वेन मीमांसाप्युपादीयेत। वेदाभ्यासं चैवं विभजन्ते—

"वेदस्वीकरणम्पूर्वं विचारोभ्यसनंजपः।

* श्रुतप्रकाशिका *

विनियोगः तज्ज्ञानस्य ब्राह्मणभागार्थज्ञानसापेक्षत्वाच्चेति चेत् । न. प्रतिग्रहर्तुसम्वेशनादेरिव रागप्राप्तत्वनिवृत्तेः । नहि "ब्राह्मणः प्रतिग्रहादिना धनमर्जयेत्, ऋतावुपेयादि" ति वचनं रागतः प्राप्तिंप्रतिग्रहादेर्निरुणद्धि ।

किंचानेनैव वाक्येनार्थज्ञानं विहितमित्यध्ययनविधेरर्थज्ञानपर्यन्तत्वं नाश्रयणीयं, यथा क्रतूनां विध्यन्तरसिद्धत्वादाधानविधेरुत्तरक्रतुविधिपर्यन्तत्वं नाऽऽश्रीयते तद्वत् । न चेदं वेदवाक्यमध्ययनस्यार्थधीपर्यन्तत्त्वमवगमयति, नच स्वयमर्थज्ञानं विधत्ते, अर्थज्ञानस्याऽन्यतः सिद्धत्वात् । अत्र मन्त्रमात्रस्य ऋष्यादिविज्ञानविधानप्रतीतेश्च । ततश्च वेदस्य साङ्गतयाऽध्येतव्यत्वं सिध्येत् न त्वर्थज्ञानं, छन्दोदैवतादिज्ञानस्य छन्दःकल्पव्याकरणनिरुक्तादिसापेक्षत्वान्मीमांसानपेक्षत्वाच्च । विनियोगविषयसन्देहे सति मीमांसापेक्षा स्यादिति चेत्. तर्हि सन्देहापाकरणाय रागतः प्रवृत्तिः स्यात् "यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" इतीदमपि वचनं नार्थज्ञानपर्यन्तत्वमध्ययनविधेरवगमयति । "अधीतमविज्ञात" त्यित्रैवाध्ययनार्थज्ञानयोः पृथङ्निर्देशात् रागप्राप्तस्य विधातुमशक्यत्वाच्च । "वेदानां किंचिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, अङ्गाध्याय्यनूचान,, इत्यादयः कल्पसूत्रप्रयोगाश्च अध्ययनादर्थज्ञानं पृथग्भूतम-

* तत्त्वटीका *

तद्दानं चैव शिष्येभ्यो वेदाभ्यासोपि पञ्चधा ॥ ,, इति ।

कुलक्रमागतधनादेर्दैवादागतधनादेर्वा कस्यचित्तदार्जनकालोप्यपेक्षितश्रवणस्य कालः । गृहस्थादयश्चाऽविचारितवर्णादिधर्मास्तत्तद्धर्मश्रोतारः श्रुतिस्मृतिषु दृश्यन्ते । गृहस्थस्याप्यतिशयितविद्यार्थप्रत्यब्दं द्वौ द्वौ मासौ गुरुकुलवासश्च केनचिदनुज्ञातः, यथाऽनूद्यते-" निवेशे वृत्ते सम्वत्सरे सम्वत्सरे द्वौ द्वौ मासौ समाहित आचार्यकुले वसेद्भूयः श्रुतिमिच्छन्निति श्वेतकेतुः" एतेन ह्यहं योगेन भूयः पूर्वस्मात् कालाच्छ्रुतमकुर्वीत,, इति ।

नन्वत्र "तच्छास्त्रैर्विप्रतिषिद्धं निवेशे हि वृत्ते नैयमकानि श्रूयन्ते अग्निहोत्रमतिथयश्चे" त्यादिनाऽऽपस्तम्बः स्वमतमाह । सत्यं, तेनापि तदा मासद्वयं निरन्तरगुरुकुलवासमात्रन्निषिध्यते न तु प्रवक्तृवच्छ्रोतुस्सिद्धान्विचारावसरः

**तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा**

* श्रुतप्रकाशिका *

वगमयन्ति । अतःश्रवणस्य दुःखरूपत्वेन तन्द्रालुतया वा, अर्थार्जनाद्यन्यपरतया वा, यो न शृणोति तत्प्ररोचनार्थमिदं "यदधीतमि" त्यादिवचनम् । यथा "अक्षैर्मा दीव्यः, कृषिमुत्कृषस्व, वित्ते रमस्व, बहु मन्यमान" इति वाक्यं तन्द्रालुप्ररोचनार्थं, प्ररोचनया हि प्रवृत्तिरुत्कटा स्यात्. नह्येतावता कृषेरर्थार्जनस्य च रागप्राप्तत्वभङ्गेन सर्वत्र वैधत्वमेव स्यात्तद्वदिदमपि वचनं श्रवणस्य रागप्राप्तत्वं न विहन्ति । तस्माद्रागत एव प्रवर्त्तते । एवमन्यतः प्रवृत्तौ सम्भवन्त्यां शब्दशक्त्युल्लङ्घनेन मीमांसाश्रवणस्य विधेयत्वकल्पनमयुक्तम्., ऐकशास्त्र्यं रागतः प्रवृत्तिश्चास्तु कथं पौर्वापर्यनियमस्तत्राह ( तत्रे ) ति ।

तत्र—वेदे ( कर्मविधिस्वरूपे निरूपित—इति ) कर्मभागस्य वेदोपक्रमत्वादधीतक्रमेणैव निरूपणं प्राप्तमिति कर्मविचारस्य पूर्वभावित्वमितिभावः ।

७ तत्त्वटीका ७

क्षिप्यते ॥ अस्त्यध्ययनानन्तरं विचारः, नच रागतः कृत्स्नविषयश्च, तथापि—

अवैधत्वे विचारस्य क्रमस्य च यथारुचि ।
अप्रवृत्तेः प्रवृत्तेश्च प्राप्तौ तत्रेति भाष्यते ॥ ७ ॥
दुस्त्यजत्वाद्विचारस्य यौगपद्यविरोधतः ।
व्युत्क्रमे दोषदृष्ट्या च क्रमस्सौत्रो ह्यसाविति ॥ ७ ॥

तत्र— वेदे— मीमांसायां वा, स्वेच्छातः प्रवृत्तौ सत्यामिति वार्थः । कर्मविधेरिह काम्यकर्मचोदना काम्यानुष्ठानं वा, अविशेषाद्वा नित्यादेरपि सङ्ग्रहः । स्वरूपशब्देन त्यक्तफलस्य परविद्याङ्गविनियोगो न चिन्तित इति ह्युच्यते । नहि साधनलक्षणे शोध्यः । तन्निरूपणे ह्यनन्तस्थिरफलपर्यन्तत्वं बुध्येत । यद्वा केवलकर्मणामल्पास्थिरफलत्वस्य क्वचिदमीमांसितत्वेऽपीति भावः । निरूपितइत्यनेन कर्मनिरूपणस्य वृत्तत्वावश्यम्भावोऽभिप्रेतः । प्रपञ्चितञ्चैतत्तात्पर्यतूलिकायाम्-

तत्रेदन्नियतं कर्म नैव शक्यमुपेक्षितुम् ।
तद्धि सर्वास्ववस्थासु पुमांसमनुवर्त्तते ॥ * ॥

अध्ययनगृहीतस्वाध्यायोपनिषद्वाक्येषु चामृतत्वरूपानन्त-

* श्रुतप्रकाशिका *

ननु नहि कर्मणामल्पास्थिरफलत्वमनन्तस्थिरफलत्वञ्च पूर्वपक्षसिद्धान्तरूपेण क्वचिन्निरूपितंतत्कथमल्पास्थिरफलत्वावगतिरित्यत्राह ( स्वरूपे निरूपिते ) इति । केवलं कर्मविधिस्वरूपमेव निरूपितम् अल्पास्थिरफलत्वज्ञानमावृत्तिविधानादिना फलितमिति भावः । यद्वा कर्मविधिस्वरूपन्निरूपितं न त्वाराध्यपरदेवतेति भावः । तदाराधनत्वेन कृते ह्यनन्तस्थिरफलत्वसिद्धि : ।

( अध्ययनगृहीतस्वाध्याये ) ति । अध्ययनस्य कृत्स्नस्वाध्यायविषयत्वादुपनिषदश्च स्वाध्यायशब्दान्तर्गतत्वादितिभावः । एकदेश—शब्देनैकप्रबन्धांशत्वं सूचितम् साधारणवेदशब्दनिर्दिष्टशब्दराशावनन्यपरं प्रदेशं पृथङ्निर्दिशत्युपनिषच्छब्देन, वेदान्त—शब्देन विचारपौर्वापर्यनियमहेतुर्दर्शितः । मीमांसा—शब्दोक्ते व्याख्याने प्रदेशभेदं विशिनष्टि शारीरकशब्देन "अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेने" त्याद्युक्तानुषङ्गिकाल्पास्थिरफलव्यावृत्त्यर्थममृतत्व-

७ तत्त्वटीका ७

बुभुक्षुर्वा मुमुक्षुर्वा यो यो गृह्येत पूरुषः ।
तस्य सर्वस्य बहुना कर्मणानुगमोस्ति हि ॥ * ॥
नित्यं नैमित्तिकं कर्म प्रतिषिद्धं च सर्वदा ।
सर्वैरपि परीक्ष्यं हि प्रत्यवायजिहासया ॥ ७ ॥
न ये विभ्यति दुःखेभ्यस्ते माकार्षुर्विचारणाम् ।
इतरेषामियत्कर्म विचार्यमिति तु स्फुटम् ॥ ७ ॥
कर्म्यन्तु कर्मभोगाय विनापि ब्रह्मणा क्षमन् ।
न कर्मणा विना ब्रह्म मोक्षसामर्थ्यमश्नुते ॥ ७ ॥
सर्वापेक्षा च यज्ञादिश्रुते" रितिहि वक्ष्यते ।
वेदैकदेशचिन्तापि प्रोक्ता कृत्स्नप्रयोजिका ॥ ७ ॥
तस्मादवश्यचिन्त्यत्वे कर्मैवाग्रे विचार्यते" इति ।

कर्मणामल्पास्थिरफलत्वं दृष्ट्वा——तत्तद्वाक्यैरेवार्थतो विशदं निश्चित्येत्यर्थः ।

स्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तविचाररूपशारी-

* श्रुतप्रकाशिका *

रूप–शब्दाः, आनुषङ्गिकाणामल्पास्थिरत्वेपि प्रधानफलस्यानन्तस्थिरफलत्वे-नापातप्रतीतिरस्तीत्यर्थः । कर्ममीमांसासंस्कृतमनस्कत्वादत्राप्यानुषङ्गिकं प्रधान-फलं च संभवतीति श्रोतुः प्रतीयत एव। .... .... .... ....

ननु फलत्वादिदमप्यनित्यमिति बुद्धिः स्यात्. नैवं. विपक्षे बाधकाभावात्, यथा भौमसुखात् स्वर्गादिसुखविलक्षणं प्रतिपन्नं. तत्रापि परस्परवैलक्षण्यं देश-कालस्वरूपभेदात् प्रतिपन्नं. तथैव तस्मादपि विलक्षणं सुखं सम्भवतीत्यतीव राग-जननायाऽस्यापि प्रतीतिः स्यात् (अधिकरोति) अधिकारी भवति, एवं कर्मविचारकृ-देवाधिकारी भवति. नतु साधनचतुष्टयवानित्यभिप्रायः। एवमैकशास्त्र्य–क्रम–नि-यमारम्भणीयत्वान्युपपादितानि । कैर्वेदान्तवाक्यैरारम्भणीयत्वौपयिकापातप्रतीति-रित्यत्राह (तथाचे) ति यथासूत्रं व्याख्यातं तथेत्यर्थः, चशङ्कानिवृत्तौ प्रसिद्धौ

* तत्त्वटीका *

ज्योतिष्टोमाग्निहोत्रादिस्वरूपनिरूपणे हि यथोपायं गुरुलघुस्वर्गभेदक्लृप्तिस्स्यात्। ज्योतिष्टोमाग्निष्टोम– इत्यनेन ज्योतिष्टोमस्याग्निष्टोमरूपत्वे निश्चिते च तत्साध्य-स्य स्वर्गस्य "यावदग्निष्टोमेनाप्नोती" त्यादिना देशकालादिपरिच्छेदनिश्चयः । तत्रावृत्तिविधिरप्यनावृत्तस्य फलाल्पत्वे लिङ्गम् । नित्यकर्मणामपि कस्मिंश्चिद-धिकारिणि "प्राजापत्यं ब्राह्मणाना" मित्यादिभिर्वर्णाश्रमभेदेन फलतारतम्यं स्मर्यते । वैश्वदेववरुणप्रघासादीनाञ्चातुर्मास्यानां स्वरूपेऽवगते हि "सैषा-वैश्वदेवस्य मात्रा एतद्वा एतेषामवमतमतो वा उत्तराणि श्रेयांसि भवन्ती" ति वैश्वदेवादेर्मितफलत्वदर्शनात् "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृत" मित्यत्र चिरोपभोग्यत्वमात्रे तात्पर्यग्रहः । यद्यप्यक्षयफलत्वमिदं विद्याङ्गत्वेन परम्परया नेतुं शक्यं, तथाप्यत्र तद्विवक्षाविरहान्न तथा नीयते । एवं परिमितफलसोमहवि ष्कर्मस्वरूपनिश्चये सत्येव "अपामसोम' मित्यादावमृतत्वस्य "आभूतसंप्लवं स्था-नममृतत्व" मित्यादिस्मृत्या नियमः । स्वर्गस्वाराज्यादिफलभेदसाधककर्मस्व-रूपभेदसिद्धौ च तत्र स्वर्गशब्दोक्तस्याल्पत्वसिद्धिः । "यं यं क्रतुमधीत" इत्या-

रकमीमांसायामधिकरोति । तथा च वेदान्तवाक्यानि

* श्रुतप्रकाशिका *

वा. केवल-शब्देन ज्ञानाङ्गकर्मव्यावृत्तिः ।

ननु कर्मविचारेण निर्णीतेऽपि कर्मफलत्तयिष्णुत्वे पुनश्चाल्पास्थिरफलत्व-

छ तत्त्वटीका छ

दिषु च फलतारतम्यक्लृप्तिर्गुरुलघुकर्मस्वरूपनिश्चयादेव । उत्पत्तिनाशवदा-राध्यप्रीणनकर्मस्वरूपनिश्चयाच्च तत्साध्यस्य तत्सायुज्यादेरस्थिरत्वदृष्टिरिति ॥ तदेवं निरस्तप्रतिबन्धब्रह्मविचारार्थस्य शारीरकस्य विद्यास्थानान्तरव्यावृत्तस्वरूपफलाभ्यां मीमांसैकदेशत्वव्यक्त्यर्थं, निर्णेतव्यविशेषसिद्ध्यर्थञ्च, "पुनरध्ययने" त्यादिकमुक्तम् । अत्राऽमृतत्वशब्देन त्रय्यन्तप्रधानवेद्यफलोक्तिः, तेनार्वाचीनानामानुषङ्गिकानन्वत्वादीनां, सङ्गत्यन्तरघटितदृष्टिविध्यादिफलानां, व्यवच्छेदः । कर्मभोगोक्तममृतत्वमापेक्षिकं, इदन्तु बाधादर्शनान्निर्णीतांशसम्वादि वेदान्तैकदेशोपष्टम्भाच्च, न प्राच्यवदिति प्रत्याधीतप्रायमित्यभिप्रायेण "अनन्तस्थिरफलापातप्रतीते" रित्युक्तम् । नह्यत्र फलत्वाद्यनुमानैरल्पास्थिरत्वादिक्लृप्तिश्शक्या, अतिप्रसङ्गादिति । अनवच्छेदादिह सर्वशरीरश्शारीरः, तमधिकृत्य प्रवृत्तं शारीरकं । वक्ष्यति ह्यानन्दमयाधिकरणे- "स एव निरुपाधिकः शारीर आत्मा, अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तै" रभिधीयते इति । सैव मीमांसेति शारीरकमीमांसा- तस्यां, अधिकरोति- स्वार्थबुद्ध्या तत्रोद्युक्तो भवति, न तु पूर्ववृत्तान्तरादधिकरोतीत्यर्थः । ब्रह्मविचारानन्तर्य्ये युक्तिसिद्धे तद्विषयशास्त्रानन्तर्य्यमपि सिद्ध्येदितिभावः ॥

ग्रहणं च फलत्वं च सार्थता च स्वतः श्रुतेः ।
रागात्कृत्स्नविचारश्चेत्यपूर्वमिह भाषितम् ॥

ननु कर्मफलाल्पत्वादौ लिङ्गमात्रं दृष्टं, यथाश्रुतविरुद्धप्रत्ययदार्ढ्याय प्रातिरपि वक्तव्या, कर्मस्वरूपनिरूपणमात्र स्वयं प्रवृत्तेः प्रतिबन्धशान्त्यर्थं, हेतुस्त्वनन्तस्थिरफलापातप्रतीतिरेव, सा कुतस्त्येत्यत्राह (तथेति) उक्तप्रकारेणास्य

केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति [1]"तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवात्र पुण्यचितो लोकः क्षीयते" [2]"अन्तवदेवास्य तद्भवति"

* श्रुतप्रकाशिका *

प्रतीतिजनकवाक्यानि किमर्थमुदाह्रियन्ते. अनन्तस्थिरफलापातप्रतीतिजनकान्येव वाक्यान्युदाहर्तव्यानि । उच्यते । अधिगतकर्मणः पुरुषस्य हि निर्णीतार्थसंवादिवाक्यदर्शनात् कर्मफलास्थिरत्ववद् ब्रह्मज्ञानफलाक्षयित्वस्य प्रामाणिकत्वं सम्भवतीति श्रद्धास्थिरीकरणार्थं (तद्यथे) ति । लोक्यतइति–लोकः फलम् । "अन्तवदेवास्य तद्भवतीत्य"नेन ज्ञानविधुरकर्मणोऽनेककालानुष्ठितस्य बहुविधस्यापि क्षयित्वमुक्तं भवति "यो ह वा एतदक्षरं गार्ग्यविदित्वास्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणी" त्येतद्वाक्यपूर्वकत्वात्तस्य वाक्यस्य. अन्तवदित्युक्ते क्रियास्वरूपस्यान्तवत्त्वं लोकसिद्धतयाऽनुपदेश्यमिति फलस्यैवान्तवत्त्वमर्थसिद्धं स्फुटकिर्तुं पूर्वं तद्यथे ति वाक्योपादानं, सांसारिकफलस्याऽध्रुवत्वं स्यात्- कर्मभिरेव

* तत्त्वटीका *

सूत्रस्याप्यैदमर्थ्यं यथा स्यात्तथेत्यर्थः । चोवधारणे । अत्र क्षयित्वोक्तिरक्षयित्वोक्तिश्चाऽल्पत्वादेरुपलक्षिका । निश्चितसम्वादेन निश्चितेऽर्थान्तरेपि श्रद्धासम्वृद्ध्यै पूर्वं "तद्यथे" त्यादिवाक्योदाहृतिः । लोको– लोक्यः, भोग्यः । देवशरीरत्वे त्विहामुत्रेत्याभ्यामनन्वयः । कर्मचितः— लौकिककर्मलब्धः । "पुण्यचित" इत्यविशेषोक्त्या निवृत्तिधर्मसाध्यस्यापि क्षयित्वभ्रमन्निवारयितुमाह (अन्तवदिति) उपात्तवाक्यैकार्थ्यात्, क्रियास्वरूपान्तवत्वस्याऽनपेक्षितवचनत्वाच्च, फलद्वाराऽत्रान्तवत्वोक्तिः "यो वा एतदक्षरं गार्गि! विदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राणी" ति पूर्ववाक्यात्, "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माँल्लोकात्प्रैति स कृपणः" इत्युत्तरवाक्याच्च, अन्तवदित्यस्य ब्रह्मवेदनरहितकर्मविषयत्वसिद्धौ, पुण्यचितः, इत्यत्रोत्तरेषु च तद्विषयत्वं सुग-

१ छान्दोग्य. ८. प्रपाठके. १. खण्डे. ६ वा. ॥ २ बृहदारण्यके. ५. अध्याये ८. ब्राह्मणे. १०. वा.

[1]"नह्यध्रुवैः प्राप्यते" [2]"प्लवा ह्येते अदृढा यज्ञरूपाः"
[3]"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्

* श्रुतप्रकाशिका *

ध्रुवं फलं संपाद्यतामिति शङ्काव्युदासाय उपादत्ते ( न ह्यध्रुवैः प्राप्यते ) इति, ध्रुवं तदिति वाक्यखण्डः । तदुपपादकत्वेन प्रतीयमानं वाक्यान्तरमुदाहरति (प्लवा ह्येते अदृढा यज्ञरूपा" इति । संसारपारं तारयितुन्नालं मध्ये भंगुरत्वादित्यर्थः । सूत्रयोजनानुगुणतरं कर्मणामल्पास्थिरफलत्वं, ब्रह्मोपासनस्यानन्ताक्षयफलत्वं, च दर्शयद्वाक्यमुपादत्ते (परीक्ष्य लोकानि) ति । अस्मिन्वाक्ये न्यायसिद्धार्थानुवादेन गुरूपसत्तिर्विधीयते । कर्मचितान्—कर्मसञ्चितान् कर्मसंपाद्यान् परीक्ष्य—मीमांसान्यायैर्निरूप्य । ब्राह्मणः— अधीतसाङ्गसशिरस्कवेदः, य इत्यध्याहार्यं, स इत्युत्तरत्र श्रवणात् । अकृतः—नित्यः । अत्र पुरुषो विशेष्यः, लिङ्गवशाद् अक्षरं पुरुषमित्यनन्तरोक्तेश्च । कृतेन— कर्मणा नास्ति— न सिध्यति इतिकरणं द्रष्टव्यम् इति यो निर्वेदमयात् सः तद्विज्ञानार्थं गुरुमेवाभिगच्छेत् । एवकारेण नियमविधित्वं गम्यते । समित्पाणिः—नरिक्तपाणिः "रिक्तपाणिस्तु नोपेयाद्राजानं दैवतं गुरु-

* तत्त्वटीका *

मम् । ज्ञानराहितकर्मसु स्वर्गस्वाराज्यादिफलभेदवत् केषुचिन्नित्यफलभेदसम्भवात्, 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोम' इति श्रवणाच्चात्रोपात्तं वाक्यं प्रायिकविषयं स्यादित्यत्राह ( नहीति ) अध्रुवैः— अध्रुवफलसाधनतया चोदितैरित्यर्थः । "ध्रुवं तदि" तिवाक्यखण्डान्वयान्नित्यफलार्थत्वाभावः ख्याप्यते ॥ पुनरावृत्तिनियमवतः सर्वकर्मनिर्मूलनत्वायोगेन ध्रुवफलसाधनत्वाभावं दृढयति ( प्लवा इति ) अदृढाः— तमसः पारं गमयितुमक्षमाः । "अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापयन्ति" इति ह्यत्र वाक्यशेषः । अथ सूत्रार्थानुगुणं कर्मणां नित्यफलसाधनत्वाभावनिश्चयश्च निर्वेदहेतुत्वं, ब्रह्मज्ञानस्यानन्तफलत्वञ्च समुच्चित्य वदद्वाक्यमाह ( परीक्ष्येति ) इयं श्रुतिस्सारे

१. कठे. २. वल्ल्यां. १०. वा. ॥ २. मुण्डकोपनिषदि. १. मुण्डके. २. ख. ७. वा. ॥
३ मुण्ड. उ. १. मुण्ड. २ ख. १२. १३. वा. ॥

नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठं तस्मै स विद्वानुपसन्नाय सम्यक् प्रशांतचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं

* श्रुतप्रकाशिका *

मि'' ति हि स्मर्यते। श्रोत्रियं— श्रुतवेदान्तं, ब्रह्मनिष्ठं,— ब्रह्मसाक्षात्कारवन्तं, श्रुतवेदान्तोऽपि रुचिभेदादब्रह्मनिष्ठो नोपगन्तव्य इति भावः। अभिगच्छेदित्यन्वयः. शमः बाह्येन्द्रियनियमनरूपः प्रशान्तचित्तायेत्यन्तःकरणनियमनस्योक्ततया पारिशेष्यात्। एतेन श्रवणोपयुक्तमवधानं विवक्षितं. न तूपासनोपयुक्तात्यन्तेन्द्रियजयादिः। तस्मै स विद्वान् प्रोवाचेत्यन्वयः। ''येने'' ति निर्देशो विज्ञानाभिप्रायः। तद्विज्ञानार्थमिति हि प्रकृतं· सामान्यतः कारणाभिप्रायो वा. लिङ्गव्यत्ययो वा; अक्षरं स्वरूपेणाविकारं, सत्यं—गुणतोऽप्यविकारम्' आभ्यामचिज्जीवव्यावृत्तिः। तां ब्रह्मविद्यां प्रोवाच प्रब्रूयादित्यर्थः. इति वेदान्तसारे व्याख्यातम्। ''छन्दसि लुङ्लङ्लिट'' इति लिट्।

ननु ''प्रशान्तचित्ताय शमान्विताये'' ति शमादेः पूर्ववृत्तत्वं प्रतीयते। न श्रवणोपयोग्यवधानमात्रस्य विवक्षितत्वात्। नात्रोपासनाङ्गभूतात्यन्तविषयवैतृष्ण्यं विवक्षितं, तद्धि 'शमदमाद्युपेतः स्यादि' ति निरूपयिष्यते। अतो निरूप्यसंपाद्यैस्तैर्निरूपणात् प्रागेव विशिष्टत्वमनुपपन्नं, श्रुतिश्च शास्त्रजन्यज्ञानवतः पुरुषस्य तदुत्तरभाविशमाद्यङ्गकमुपासनं दर्शयति। ''तस्मादेवंविच्छान्तो दान्त

छ तत्त्वटीका छ

व्याख्याता— ब्राह्मणः— वेदाभ्यासरतः कर्मचितान्— कर्मणा सम्पादितान्। लोकान्— आराध्य क्षयित्वेन क्षयस्वभावान्, कर्ममीमांसया, परीक्ष्य, अकृतः— नित्यः परमपुरुषः, कृतेन— कर्मणा, नास्ति न सम्पद्यते इति यो निर्वेदमायात् स तद्विज्ञानार्थं सद्गुरुमेवाभिगच्छेत् समित्पाणिः, श्रोत्रियं— वेदान्तवेदिनं, ब्रह्मनिष्ठं— साक्षात्कृतपरमपुरुषस्वरूपं, स च गुरुः, सम्यगुपसन्नाय तस्मै, येन विद्याविशेषेण तमक्षरं सत्यं परमपुरुषं विद्यात्, तां ब्रह्मविद्यां, प्रोवाच प्रब्रूयादित्य-

प्रोवाच तां तत्त्वतो ब्रह्मविद्या"मिति। प्रोवाच-प्रब्रूयादित्यर्थः।

---

*श्रुतप्रकाशिका *

उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदि"ति. अत्र ह्येवं विदिति शास्त्रजन्यज्ञानवत्त्वमुक्तं, भूत्वा पश्येदित्युपासनस्य शमाद्यङ्गकत्वं स्थापितम्। केवलानन्तस्थिरफलपरवाक्यान्युदाहरति (ब्रह्मविदि) ति।

* तत्त्वटीका *

र्थः। स गुरुमेवाभिगच्छेत् तस्मै विद्वान् प्रोवाचेत्यन्वयादप्राप्तत्वाच्च । विधावपि लिटो विधानात्। 'छन्दसि लुङ्लङ्लिट' इतीति । न्यायसिद्धानुवादांशे जातिवाचिनोऽपि ब्राह्मणशब्दस्य प्रकृतकर्मपरीक्षणौपयिकसाङ्गाध्येतृसमर्पणेनाजहल्लक्षणया त्रैवर्णिकविषयत्वार्थं "वेदाभ्यासरत" इत्युक्तं । ब्रह्म अणतीत्यपि ब्राह्मणशब्दं निब्रुवन्ति । आराधयक्षयित्वेनेति— सुकृतविनाशोपलक्षणं । कर्ममीमांसयेत्यर्थलभ्योक्तिः । अकृतशब्दस्य पुँल्लिङ्गतानुरोधाद्वाक्यशेषशक्त्या, च । परमपुरुषो विशेष्यो दर्शितः । अत्र नास्तिशब्देनाकृतस्य स्वरूपनिषेधायोगात्, कर्मणेत्यनेन चानन्वयादुत्पत्तिनिषेधस्यानपेक्षितत्वान्न सम्पद्यत इत्युक्तं । कृतशब्दस्य भावार्थव्यक्त्यै कर्मणेति प्रतिपदं । तद्विज्ञानार्थं— आपातधीस्थस्याकृतस्य तस्य विशदबोधायेत्यर्थः । समित्पाणित्वमिह ब्रह्मविद्याश्रवणार्थोपनयनान्तरव्यञ्जनार्थमिति केचित् । उक्तं हि छान्दोग्ये— जाबालं प्रति गौतमेन "नैतदब्राह्मणो विवेक्तुमर्हति समिधं सोम्याहर उप त्वा नेष्य" इति । "अन्ये त्वाहुः" अनुपनीते जाबाले युक्तमुपनयनं— अन्यत्र तु समित्पाणित्वोक्तिररिक्तपाणित्वोपलक्षणार्था. दृश्यते हि वैश्वानरविद्यायां "ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् वानुपनीयैवैतदुवाच" इति । प्रजापतिवाक्ये चैकस्यैवेन्द्रस्य बहुषु प्रश्नेषु "समित्पाणिः पुनरेयायेत्यावर्त्तते" नहि तत्र बहुवारमुपनयनं दृष्टमिष्टं वा. सूत्रकारश्च "संस्कारपरामर्शादि"त्येतावन्मात्रं वक्ष्यतीति। 'एकां शाखामधीत्य श्रोत्रिय' इत्युक्तस्याधीतस्वाध्यायमात्रस्य प्रकृतानुपकारतया "वेदान्तवेदिन" मिति । श्रोत्रियशब्दस्यात्राकामहतश्रोत्रियपरत्वं दर्शितम्। स्फुटप्रवचनक्षमत्व, मद्दृष्टत उपकारतमत्वं, च ब्रह्मनिष्ठशब्दाभिप्रेतमित्याह "साक्षात्कृतपरमपुरुषस्वरूप" मिति प्रशान्तचिन्तायेत्यु-

[1]"ब्रह्मविदाप्नोति परम्" [2]"न पुनर्मृत्यवे तदेकं पश्यति"

* श्रुतप्रकाशिका *

अत्रानुवाके "यतो वाचो निवर्त्तन्त" इति श्रवणादनन्तस्थिरफलत्वसिद्धिः। प्राप्यस्य ब्रह्मणोऽनन्तस्थिरत्वेऽपि प्राप्तेः कादाचित्कत्वशङ्काव्यावृत्त्यर्थमपुनर्निवृत्तिमाह (न पुनरि) ति। यद्वा विद्ययानन्तस्थिरफलरूपब्रह्मप्राप्तिमाह 'ब्रह्मविदि' ति। विद्यया ब्रह्मप्राप्तेः प्रतिबन्धनिवृत्तिपूर्वकत्वमाह "न पुनरि" ति। मृत्युः–प्रमादः, मोहो वा "मोहो मृत्युः संमतो यः कवीनां, प्रमादं वै मृत्युमहं ब्रवीमी" त्युभयत्र मृत्युशब्दव्यपदेशात्। प्रमादो यथाऽवस्थितात्मस्वरूपस्याज्ञानं,

* तत्त्वटीका *

क्तत्वाच्छमोत्र बाह्यकरणव्यापारान्तरनिवृत्तिः–शमदमाविह श्रवणोपयिकावधानार्थौ "तस्मादेवंविच्छान्तो दान्त" इत्यादौ तु श्रवणतो विदितार्थस्य विद्यार्थौ। येनेत्यत्र लिङ्गव्यत्ययस्य क्लिष्टत्वात् सामान्योपक्रमत्वं द्योतयति "विद्याविशेषणे" ति तथा च प्रयुञ्जते "अत्र बाधकमभवत् क्षणभङ्गो वा बाह्यार्थभङ्गो वे" त्यादि। स्वरूपतः स्वभावतश्च विकारं निवर्त्तयद्भ्यामक्षरसत्यपदाभ्यां प्रधानक्षेत्रज्ञव्यवच्छेद इत्यभिप्रायेणाह "परमपुरुषमिति" संशयविपर्ययार्हवचनम्, अपूर्णवचनञ्च, क्षेप्तुं 'तत्त्वतः' इति विशेषणं "आचार्योऽप्यनाचार्यो भवति श्रुतात्परिहरमाण" इति स्मरन्ति। वृत्तार्थकथनभ्रमनिरासायाह "प्रब्रूयादिति" अभिगच्छेदित्युपक्रमप्रतीतविधिबाधेन व्यत्ययानुसरणं क्लिष्टम् अतः प्रोवाचेत्यस्य भूतपरत्वेनानन्वय इत्यभिप्रायेणाह "स गुरुमेवेति" नियमविधित्वमवधारणेन व्यञ्जितम्। प्रोवाचेत्यस्य विधिपरत्वे हेत्वन्तरमाह "अप्राप्तत्वादिति" यद्यपि लाभाद्यपेक्षया कस्यचिद्रागतः प्रवृत्तिः? तथा सति तन्निरपेक्षस्य गुरोः सच्छिष्यविषये धर्मार्थमेवेदं विधीयत इति न विरोधः। लिटो लिङर्थत्वस्य विशेषतोऽनुशिष्टत्वमप्याह "विद्यावपीति"। ब्रह्मज्ञानस्य परशब्दानिर्दिष्टब्रह्मप्रापकतया प्राकरणिकनित्यनिरतिशयानन्दप्रापकत्वमभिप्रेत्याह (ब्रह्मविदिति) ब्रह्मप्राप्तस्यापि स्वर्गादिन्यायात् "इमाँल्लोकानि" त्यादिभिश्च पुनरावृत्तिशङ्कां परिहर्तुमाह (न पुन-

१ तैत्तिरिये. आनन्द. २- अ. १. अनु. १. वा. ॥ २ .

१"न पश्यो मृत्युं पश्यति" २"स स्वराड् भवति"

* श्रुतप्रकाशिका *

मोहः-भ्रान्तिज्ञानं, दिङ्मोह इत्यादिव्यपदेशात् । न मृत्युनिवृत्तिमात्रमेव, तत्कार्यमपि निवर्तत इत्याह (न पश्यो मृत्युं पश्यती)ति । अस्य वाक्यस्योपरि "न रोगं नोत दुःखतामि" ति हि श्रूयते । न पुनरित्यादिवाक्यं ब्रह्मणि दृष्टे मृत्युप्रमुखनिवृत्तिरिति ज्ञापनार्थम्. न पश्यो मृत्युमित्यत्रापि पश्यशब्दस्य ब्रह्मदर्शीत्यर्थः । तदेकं पश्यतीत्यनन्तरोदाहृतवाक्ये विषयस्य दर्शितत्वात् "सस्वराड् भवती" ति कर्मवश्यो न भवतीत्यर्थः । 'स्वराट् स्वतन्त्रो विज्ञेय' इति नैघण्टुकाः । तमेवंविद्वानिति वाक्येन निर्विशेषचिन्मात्रज्ञानदेवतान्तरोपास-

* तत्त्वटीका *

रिति) मृत्युरिह मरणं 'मोहो मृत्युस्सम्मतो यः कवीना, मित्याद्युक्तं वा । पाप्मनां निश्शेषत्वये मृत्यूपलक्षितं सर्वमनिष्टं न स्यात् लोकानुसरणं चेच्छ मितिभावः । तदेकदर्शनमिहोपायः, फलं वा, । " न प्रेत्य सञ्ज्ञास्तीति विद्याप्रकरणस्थवाक्येन मुक्तस्य ज्ञानलोपशङ्कान्निवर्त्तयन्मृत्युतत्कार्यनिवृत्तिश्च व्यनक्ति ( न पश्य इति ) मुक्तस्य तदातनपरदुःखप्राक्तनस्वदुःखदर्शनेन तयोः स्वाश्रितत्ववर्त्तमानत्वाभावान्न तं प्रति प्रतिकूलत्वं, एवं हि बन्धदशायामपि दृष्टं । तत्र तु परदुःखदुःखित्वं गतानुशोचनञ्च कर्मोपाधिकमेव "न रोगन्नोत दुःखतां, सर्वं ह पश्यः पश्यती" त्यादिना विशेषेण दृश्यमानेष्वपि स्वप्रातिकूल्यदर्शनन्नास्तीति हि स्थाप्यते । पश्योऽत्र तदेकं पश्यतीति समानप्रकरणाद्ब्रह्मदर्शी जीवः । पश्यतीति व्युत्पत्त्या परमात्मन्यपि. "पश्यःपश्यति, पश्यन्त" मित्यादिप्रयोगदृष्टेः । ब्रह्मात्मकतया सर्वस्य दर्शनात्तदेकदर्शनसर्वदर्शनयोर्न विरोधः ॥ न केवलं निर्व्यापारसार्वज्ञ्यमात्रम्, "अन्यराजानस्ते क्षय्यलोकाभवन्ति" इत्याम्नातकर्ममूलानीश्वरपारतन्त्र्यनिवृत्त्या स्वच्छन्दवृत्तिश्च स्यादित्यभिप्रेत्याह ( स स्वराडिति ) अत एवेश्वरपारतन्त्र्यस्थितावपि "स्वराड् स्वतन्त्र" इति नैघण्टुकोक्तिर्न विरुध्यते । अमृतत्वस्योपायान्तरनिषेधश्रुत्या कर्मसाध्यामृतत्वोक्तेरन्यपरत्वं द्रढयति (तमेवेति) तत्र च गुण-

१ छान्दोग्ये. ७. प्र. २६. ख. २. वा. ॥ २. छा. उ. ७. २५. ख. २. प्र. वा. ॥

[1]"तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते [2]"पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" इत्यादीनि ॥ ❀ ❀ ❀ ॥ ननु च साङ्गवेदाध्ययनादेव

* श्रुतप्रकाशिका *

नाद्युपायान्तरव्यावृत्तिसिद्धिः । पुरुषोत्तमोपासनस्यैवोपायतयोक्तत्वात्. तदुपासनरूपज्ञानं च नात्मैक्यविषयम्. अपि तु पृथक्त्वविषयमिति दर्शयति ( पृथगात्मानमि ) ति । मत्वा— ज्ञात्वा, ततः— पृथक्त्वज्ञानात्. तेन जुष्टः—— प्रीतिविषयीकृतः अनुगृहीतो ऽमृतत्वमेतीत्यर्थः । इत्यादीनि वेदान्तवाक्यानीति पूर्वेणान्वयः । उदाहृतस्पष्टार्थवाक्यमात्रतृप्तः कश्चिच्चोदयति ( ननुचे ) ति । पूर्वत्र चोद्यान्तराणां कण्ठोक्त्यभावेपि परिहारकण्ठोक्त्या तान्यभिप्रेतानि,

❀ तत्त्वटीका ❀

विभूतिविशिष्टमहापुरुषपरामर्शाज्जीवस्यैवं निर्विशेषस्वरूपधिया, पुरुषान्तरधिया वा, मुक्तिः स्यादिति परेष्टं निरस्तम् ॥ ऐक्यभेदाभेदबुद्ध्योरमृतहेतुत्वं श्रुत्यैव क्षिप्तमित्याह ( पृथगिति ) ततः—उपासनरूपात्पृथक्त्वमननादित्यर्थः । तेन जुष्टः—प्रेरकेण प्रीतिविषयीकृतः । अनेन स्थिरस्य परानुग्रहस्यैव फलद्वारतोक्तिः । "धातुः प्रसादा" दिति च श्रूयते ॥ नन्वत्रात्मानं प्रेरितारं चेति न समुच्चित्य मननमुक्तम् अतोऽन्यज्ञानस्यापि मोक्षहेतुत्वं भाति ? न तावता प्रेरकप्राधान्यमपह्नियते। 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' आवृत्तचक्षुरमृतत्वमिच्छन्नि" त्याद्यपि परविद्याङ्गजीवदर्शनपरम् ॥ आदिशब्दो"भूयसां स्याद्बलीयस्त्व" मितिन्यायेन वाक्यान्तरैरप्युक्तदृढीकरणार्थः । अथैभिरेव वाक्यैरपेक्षितज्ञप्तिं,यथारुचि विचारप्रवृत्तिसम्भवं च मन्वानः कश्चिद्ब्रह्मविचारस्य कर्मविचारानपेक्षत्वं चोदयति ( नन्विति ) चकार उद्ग्रन्थैरपि प्रत्युक्तिव्यञ्जितैः पूर्वचोद्यैस्समुच्चयार्थः । आद्य एवकारो विचारनैरपेक्ष्यपरः । द्वितीयस्तु ज्ञानानुत्पत्तिनिरासार्थः । (मुमुक्षुः) प्राग्भवीयपुण्यमहिमक्षीणकाम्यरुचिरित्याशयः । ( किमर्था )·न दृष्टार्था अन्यथापि मुमुक्षुत्वस्य' ब्रह्मविचारस्य च सम्भवात् । नाप्यदृष्टार्था अवैधत्वादितिभावः । अत्र

१ पुरुषसूक्ते. २०. वा. ॥ २ श्वेताश्वेतरे. अ. ६. वा. ॥

कर्मणां स्वर्गादि फलत्वम्, स्वर्गादीनां च क्षयित्वं ब्रह्मोपासनस्यामृतत्वफलत्वञ्च ज्ञायत एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्त्ततामु; किमर्था धर्मविचारापेक्षा ? एवं तर्हि शारीरकमीमांसायामपि न प्रवर्त्तताम्. साङ्गाध्ययनादेव कृत्स्नस्य ज्ञातत्वात्। सत्यम्· आपात-

* श्रुतप्रकाशिका *

अतश्चशब्देन तैरर्थसिद्धैः सह समुच्चयो युक्तः ।(साङ्गेति) कर्मज्ञानपूर्ववृत्तत्ववादिनापि साङ्गाध्ययनस्यापेक्षितत्वं स्वीकृतमिति तदधिकव्युदासार्थ एवकारः। अध्ययनस्य साङ्गत्वादङ्गानां चार्थज्ञानहेतुत्वान्मीमांसानिरपेक्षं स्वर्गादेरेव केवलकर्मफलत्वं, स्वर्गादेश्च क्षयित्वं, ब्रह्मोपासनस्याक्षयफलत्वं च ज्ञायत इत्यर्थः। ब्रह्मोपासनस्येत्यादिग्रन्थो दृष्टान्ताभिप्रायः । ज्ञायत एवेत्येवकारो ज्ञातृत्वसंप्रतिपत्तिसूचकः। ज्ञानसामग्री हि सिद्धेति भावः। ततः किं ? मित्यत्राह (अनन्तरमिति) कर्मणोऽल्पास्थिरफलत्वज्ञानेन मुमुक्षासिद्ध्यर्थं हि कर्मविचारः, तन्निरपेक्षमेवाल्पास्थिरफलत्वज्ञानान्मुमुक्षासिद्धेः ब्रह्मजिज्ञासैव कर्त्तव्या, धर्मविचारे प्रयोजनाभावादित्यर्थः। परिहरति– (एवमिति) एवं तर्हि उदाहृतवाक्यमात्रतृप्तोसि चेत्। (कृत्स्नस्येति) ब्रह्मणोपीति भावः । वेदान्तवाक्यान्यपि स्फुटार्थानि ह्यस्माभिरुदाहृतानि, तेषामर्थोऽपि मीमांसानपेक्षं ज्ञायते. अतोऽनन्तस्थिरफलज्ञानायनब्रह्मविचारः कर्त्तव्य इत्यर्थः । सत्यमित्यर्द्धाङ्गीकारे.आपातप्रतीतावभ्युपगमः, ब्रह्मविचारनैरपेक्ष्येऽनभ्युपगमः (आपाते) ति। अपातप्रतीतिः-अज्ञाननिवृत्तिमात्रेण संशयविपर्ययसह

* तत्त्वटीका *

प्रतिबन्द्या प्रतिवक्ति (एवन्तर्हीति) धीमात्रतुष्ट्या त्यक्तकर्मविचारश्चेदित्यर्थः। एवं न प्रवर्त्ततामिति वान्वयः। अपिशब्दाभिप्रेतं हेतुं विवृणोति (साङ्गेति) त्वदुक्तादेवेत्यवधारणाभिप्रायः । कृत्स्नस्य ब्रह्मतदुपास्यादेरत्रापातधीश्चेदिष्टप्रसङ्गः। न तया विचार्यत्वाभावः। निर्णयस्त्वमीमांसिते कथं स्यादिति मत्वा चोदकः पुनराह (सत्यमिति) अङ्गीकृतमर्थं व्यनक्ति (आपाते ति)तावतापि न्यायैरनिर्णी-

प्रतीतिर्विद्यत एव, तथापि न्यायानुगृहीतस्य वाक्यस्यार्थनिश्चायकत्वदापातप्रतीतोप्यर्थः संशयविपर्ययौ नातिवर्त्तते; अतस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्त्तव्य इति चेत्; तथैव धर्मविचारोपि कर्त्तव्य

* श्रुतप्रकाशिका *

ज्ञानम्। संशयविपर्ययौ च कारणवाक्यगतसद्ब्रह्मात्माकाशप्राणवैश्वानरादिशब्दैस्र्थतत्त्वस्य दुर्निश्चयत्वात् "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" "असद्वा इदमग्र आसीदि" त्यादिभिरात्मानित्यत्वादेः प्रतीतेः "अन्नवानन्नादो भवति महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेने" त्यादिनाऽल्पास्थिरफलत्वावगमाच्च स्याताम्; अतः साङ्गाध्ययनमात्रेण तयोरनतिवृत्तेस्तद्व्युदासस्य न्यायानुगृहीतवाक्यफलत्वाच्च ब्रह्मविचारः कर्त्तव्य इति चेदित्यर्थः। भवान्—अनुदाहृतवाक्यान्तरपर्यालोचनायामपि प्रवृत्तस्त्वमिति भावः। (तथैव) एतया दृष्ट्या अत्रापि संशयविपर्ययनिरासस्यापेक्षितत्वं जानन्ननुदाहृतवाक्यानि पश्येदित्यर्थः। "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "पूर्णाहुत्या सर्वान् कामानवाप्नोति, सर्वान् लोकान् पशुबन्धयाज्यभिजयति" "अपाम सोमममृता अभूम, अनन्तं ह वा अपारमक्षय्यं लोकं जयति. योऽग्निं नाचिकेतं चिनुते 'नास्येष्टापूर्ते क्षीयेते। योऽग्निन्नाचिकेतं चिनुते" इत्यादीनि हि. 'अमृतत्वं भजन्ते, सोऽश्नुते सर्वान् कामान्, इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्नि" त्यादि ब्रह्मवेद-

* तत्त्वटीका *

ततया "अन्नमस्तीत्यादि" भिरल्पास्थिरफलधीरसकृत्, अव्याकृताकाशप्राणादिकारणत्वसंशयः, 'तान्येवानुविनश्यती' त्यादिभिरात्मनाशभ्रमश्च, न निवर्तेतेत्यभिप्रायेणाह (तथापीति) अनिस्तीर्णप्रतिबन्दिरीतिपश्यन्तत्फलत्वेनोत्तरमाह (तथैवेति) (भवान्) कचिदप्यापातधीमात्रादतृप्तो वाक्यान्तराण्यपि निर्दिधारयिषुस्त्वमितिभावः। अत्र हि कर्मभागेपि "अनन्तं ह वा अपारमक्षय्यं लोकं जयति योग्निं नाचिकेतं चिनुत"इत्यादिभिरापाततोऽनन्तस्थिरफलधीरस्ति,

इति पश्यतु भवान् ॥ ❀ ॥

॥ लघुपूर्वपक्षः ॥

ननु च ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्तव्यम् । न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः,

* श्रुतप्रकाशिका *

नफलवाक्यैस्तुल्यानि वाक्यानि दृश्यन्ते । अत औपनिषदवाक्येष्विवानुदाहृतवाक्येषु संशयविपर्ययबाहुल्यात्तन्निरासाय कर्मविचारः कर्तव्य इत्यर्थः । एवं फलद्वारा हानाय कर्मज्ञानापेक्षा दर्शिता ।

अथ स्वरूपेणोपादानाय च नियमेन कर्मज्ञानापेक्षाऽस्तीति दर्शयितुं मुमुक्षोः कर्मणो नियमेनापेक्षितत्वलक्षणं परपक्षमुपक्षिपति "ननु चे" ति । नियमेनापेक्षितत्वस्य विवक्षितेतरगामित्वव्युदासार्थः प्रथम एवकारः, द्वितीयस्तु नियमेनानपेक्षितस्य पूर्ववृत्तत्वनिवृत्त्यर्थः, ततः किमित्यत्राह "न धर्मे" ति । कुत इत्यत्राह "अधीते" ति । ये ब्रह्मविद्याधिकारिणस्तेषां सर्वेषामवश्यापेक्षितं हि नियमेनापेक्षितं, वेदान्तमात्राध्यायिनस्तु तत्रैवापातप्रतीतिर्बुभुत्सा च स्यात्; तस्य कर्मविषयापातप्रतीत्यभावात् न कर्मविचारस्य नियमेनापेक्षेत्यर्थः । यद्वा अधीतकृत्स्नवेदस्यापि जन्मान्तरसुकृतवशाद्वेदान्तवाक्य एव बुभुत्सा जायते चेत्तस्य न कर्मविचारापेक्षेति, तदा "अधीतवेदान्त-

७ तत्त्वटीका ७

ब्रह्मज्ञानफलश्चानुविनाशादिश्रुत्याऽऽत्यन्तिकप्रलयत्वस्मृत्या, चानर्थरूपमिव भाति; अतस्स्वरसवृत्त्या प्रथमातिक्रमे कारणाभावात्कर्मविचारनैरपेक्ष्यहेतुर्नास्ति, तदिदमभिप्रेत्योक्तं सारे– "अधीतवेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमत्वाद्वेदानां कर्मविचारः प्रथमं कर्तव्य इत्यथातो धर्मजिज्ञासेत्युक्त" मिति ॥

अथ विद्यापेक्षितमेव तत्त्वविवेकादिकं विचारापेक्षितमिति भ्राम्यन् कर्मणश्च विद्याविरुद्धतया तद्विचारवृत्तत्वायोगं मन्वानो गूढाभिप्रायः परश्चोदयति ( नन्विति ) यदेवेति स्वाभिमतचतुष्कव्यतिरिक्तनैरपेक्ष्यपरम्, तस्य परम्परयोपयोगेपि विचारजन्मनि तन्नियमेनास्तीतिव्यक्त्यै नियमशब्दः । नियतापेक्षितचतुष्कव्यतिरिक्तस्यापि न सूत्रसूच्यत्वमित्यभिप्रायेण तदेवेत्युक्तम् । तदिहानपेक्षितमेव त्वदुक्त

अधीतवेदान्तस्यानधिगतकर्मणोपि वेदान्तवाक्यार्थ-विचारोपपत्तेः । कर्माङ्गाश्रयाण्युद्गीथाद्युपासनान्य-

* श्रुतप्रकाशिका *

स्ये"ति पदमयोगव्यवच्छेदपरं, नान्ययोगव्यवच्छेदपरं, कृत्स्नवेदाध्ययनादपेक्षितवेदान्तभागोप्यधीत एवेत्यर्थः। एवं हानार्थमपि कर्मणो ज्ञातव्यत्वं निषिद्धम्. उपादानार्थमपि न ज्ञातव्यमित्युपपादयितुं वेदान्तमात्रबुभुत्सादेरपि कर्मविचारापेक्षां शङ्कते 'कर्माङ्गेति' । एकस्य साम्नः पञ्च भागाः सन्ति, ते प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्याः। एते भागाभक्ति शब्दाभिधेयाः। तासु पञ्चसु भक्तिषु प्रस्तावो हिङ्कारपूर्वङ्गीयते, उद्गीथः प्रणवपूर्वङ्गीयते, तत्र पञ्चविधसामोपासनं क्वचिद्विधीयते "लोकेषु पञ्चविधं सामोपासीते" ति, क्वचित्सामावयवेषु पञ्चस्वेकैकावयवोपासनं विधीयते, तत्रोद्गीथावयवभूतप्रणवोपासनं विधीयते "ओमित्येतदक्षरमुद्गीथमुपासीते" ति कर्माङ्गाश्रयाणि— कर्माङ्गभूतोद्गीथादिविषयाणि, अनधिगतकर्मण उद्गीथाद्युपासनचिन्तनं न शक्यं कर्तुमिति प्रतिज्ञा । कर्माङ्गाश्रयाणीति हेतुगर्भविशेषणम् । कर्माङ्गोद्गीथाद्याश्रयाण्युपासनानीत्युक्ते सति हेतावुद्गीथशब्दस्य वैयर्थ्यं स्यात्, उपासनमात्रस्य च पक्षीकारः प्रतीयते, अतो यथोक्तैव वचनव्यक्तिर्युक्ता । अनधिगते कर्मण्युद्गीथादिविषयोपासनाचिन्ताया अशक्यत्वात् कर्मविचारोपेक्षित-

ॐ तत्त्वटीका ॐ

मित्याह ( न धर्मेति ) स्वेष्टमपेक्षितांशं सूचयितुमाह ( अधीतवेदान्तस्येति ) अपयुत्याध्ययने मानाभावे स्वापादितवेदान्तमात्राध्यायिन इत्यर्थः । तस्य हि न कर्मण्यापातधीः, नतरां बुभुत्सा, नतमां विचार इति नियमभङ्गः । यद्वा कृत्स्नाध्येतुरपि स्वापेक्षितांशस्याप्यधीततया, सुकृतविशेषमृदितकषायतया च, ब्रह्मविचारस्य शक्यत्वदधीतत्वमात्रेण हानार्थमपि न कर्मणश्चिन्त्यत्वमपीतिभावः । एतेन धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति ब्रह्मज्ञानवादिभाष्योक्तमनूदितम्मन्तव्यम् । सिद्धान्तिसम्मतां प्रधानयुक्तिमप्रधानीकृत्य तत्तद्दृष्टिविधीनां साक्षाद्ब्रह्मविद्यापेक्षितत्वं प्रकल्प्य वा, कर्मविचारवृत्तत्वं शङ्कते ( कर्मेति ) "उद्गीथाद्युपासनानि" इति पक्षोक्तिः । अनधिगतकर्मणोशक्यचिन्तनत्वं साध्यार्थः ।

त्रैव चिन्त्यन्ते, तदनधिगतकर्मणो न शक्यं कर्त्तुमिति चेत्; अनभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन् शास्त्रे अनाद्यविद्याकृतविविधभेददर्शनानि—

* श्रुतप्रकाशिका *

इतिचेदित्यर्थः । सोपालम्भं परिहरति । (अनभिज्ञ) इति । शास्त्रे प्रधानतया प्रतिपाद्यं ज्ञानमित्यत्राह— अस्मिन्निति । भेदः— ज्ञातृज्ञेयज्ञानरूपः, वैविध्यम् तद्वान्तरभिदा बाहुल्यम्, एवं विविधभेददर्शनस्य हेतुरविद्या।

७ तत्त्वटीका ७

"कर्माङ्गाश्रयाणि" इति हेत्वंशपरम् । आश्रयशब्द इह विषयार्थः, प्रणयनाश्रयगोदोहनादिवदुद्गीथादिकमङ्गमाश्रित्य प्रविशत उपासनस्य फलान्तरार्थतया कर्मसंगतत्वसूचनपरश्च, आदिशब्देन उद्गीथैकदेशप्रणवस्य पञ्चविधसामादेश्च ग्रहणम्। (अत्रैव) न तु कर्मकाण्डे चिन्तितानीति भावः। "अनधिगतकर्मण,, इत्यनेन कर्मतदङ्गरूपपदार्थानवगमे वाक्यार्थस्य दुर्ग्रहत्वं सूच्यते।

ननु "अव्युत्पन्नपदोपेतवाक्यार्थप्रत्यभिज्ञानमुपमान' मिति कैश्चिदुक्तम्, अन्यैरनङ्गीकारात्तत्तथा न। अथापि प्रकृताविरोधं ब्रूमः। नहि ते गोसदृशो गवय इत्यादिवाक्ये गवयत्वादिविशिष्टः पिण्डः पदार्थतया ऽन्वेतीत्याहुः, किन्तु गोसादृश्यवान् गवयशब्दवाच्य इत्येतावति तात्पर्य्यात् गवयशब्दादयस्तु पदेन बोधितास्तत्रान्वीयेरन् इति ॥ ननु चाद्यव्युत्पत्तिदशायामविदितपदवाक्यभेदस्य वाक्यार्थधीरस्ति, ततः किम्? तत्र हि प्रत्यक्षादिसिद्धे विशिष्टार्थेऽनुमानतो वाक्यस्य बोधकत्वग्रहः, नतु व्युत्पित्सोस्तत्र वाक्यार्थधीः, तदत्र कर्मणि विचारिते तदन्तर्गतोद्गीथादिधीः, ततस्तद्विषयोपास्तिधीस्स्यात्. न ह्यत्र कर्मासङ्गेपूद्गीथादिषूपास्तिर्विधीयते. गोदोहनादिवद्गुणफलाधिकारत्वादिति भावः । उक्तमशक्यत्वं दुष्परिहरं सञ्ज्ञाय धार्ष्ट्यात्स्वकपोलकल्पितप्रकारेण समाधित्सुरुपालभते (अनभिज्ञ) इति। शारीकस्य खल्विदं शास्त्रम्. अत आत्मविज्ञानप्रधानमिति भावः। शरीरमेव शरीरकं तत्र निवासी शारीरको जीवात्मेति वाचस्पतिः । तद्विज्ञानप्राधान्यं विवृणोति (अस्मिन्निति) शुद्धस्य विद्यान्वये हेत्वनुपयोगमुपरोद्धुमनादि-

मित्तजन्मजरामरणादिसांसारिकदुःखसागरनिमग्नस्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणायात्मैकत्वविज्ञानं

* श्रुतप्रकाशिका *

तस्याः को हेतुरित्यनवस्थापरिहारार्थमनादिशब्दः । एवमविद्याकृतभेददर्शननिमित्तकं जन्मजरामरणादिकमेव सांसारिकदुःखम् आदिशब्देन नरकगर्भवासादिग्रहणम् । संसारः- प्रकृतिसम्बन्धः-तत्प्रभवं सांसारिकम्, तन्निरसनीयत्वाय दुःखरूपत्वोक्तिः । सागरशब्दस्तदानन्त्यपरः । "निमग्नस्येति" । दुःखनिवृत्त्युपायापेक्षाहेतुतयोक्तमधिकारिस्वरूपमुक्तम् । प्रयोजनमाह— । ( निखिले ) ति । मिथ्या-

* तत्त्वटीका *

शब्दः । मतभेदादविद्यायास्स्वरूपतः प्रवाहतो वानादित्वम्, प्रवाहपक्षेऽनवस्था बीजाङ्कुरादिनयनिरूढेत्याकूतम् (भेदः) अहमिदं जानामीति ज्ञात्रादिरूपः । स प्रत्येकमवान्तरभेदैर्विविधः, तस्य मिथ्यात्वं व्यङ्क्तुमविद्याकृतत्वोक्तिः, तद्दर्शनं वा तत्कृतमित्युच्यते, तदध्यस्तमित्यर्थः । भेददर्शनं निमित्तं येषामिति विग्रहः । निर्विकारस्य जन्मादिकम् आत्मभ्रान्तिविषयदेहधर्मारोपात्, आदिशब्देन निरयादिग्रहः । तैर्दुःखं साङ्ख्यवन्मृषावादिनां तादृशोऽन्तःकरणविकारः । मिथ्यात्वेपि प्रतिकूलतया जिहासितव्यत्वाय जन्मादिषु वा दुःखत्वोक्तिः, । तद्भ्रान्तिप्रवाहाविच्छेदव्यक्त्यै सांसारिकशब्दः । अनात्मभिरात्मानमेकीकृत्य पुनःपुनस्संसरणं हि संसारः, मोघप्रयत्नत्वपरो निमग्नत्वोपचारः, उन्निमङ्क्षार्थश्च । मिथ्याज्ञानमिहात्मनि भेदग्रहः, अनिर्वाच्यरूपमज्ञानं वा । अज्ञानतत्प्रतिभासयोस्तत्कार्यप्रतिभासप्रवाहस्य च मिथ्यार्थत्वात्तत्त्वधीमात्रेण बाध्यत्वे किमत्र कर्मणेति भावः । चन्द्रद्वित्वादिधीर्हि तदैक्यधीबाध्या तद्वदिहेत्यभिप्रायेणाऽऽत्मैकत्वविज्ञानत्वोक्तिः—

अशुद्धस्य प्रसिद्धत्वाच्छुद्धस्यावाच्यभावतः ।
अज्ञातन्त्वन्तदोरैक्यं ख्याप्यमित्यत्र मन्यते ॥ * ॥
स्वाध्यायस्य हि कार्त्स्न्येन मानत्वे सत्यपि स्वतः ।
नापाद्ये नानुपाद्ये च नापपाद्ये च मानता ॥ * ॥

प्रतिपिपादयिषितम् । अस्य हि भेदावलम्बिकर्मज्ञानं क्वोपयुज्यते ? प्रत्युत विरुद्धमेव । उद्गीथादिविचारस्तु

* श्रुतप्रकाशिका *

ज्ञानं—भ्रान्तिज्ञानम्, "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापाया" दिति प्रयोगात्, भ्रान्तिज्ञानं च भेददर्शनम्। यद्वा मिथ्याभूतमज्ञानं मिथ्याज्ञानम्, ज्ञाननिवर्त्यत्वाय मिथ्याशब्दः तस्य निबर्हणाय, तन्निबर्हणमेव मोक्ष इत्यभिप्रायः। तत्साधनं किं? मित्यत्राह (आत्मैकत्वविज्ञान) मिति। सर्पभ्रमस्य रज्जुयाथात्म्यज्ञानं हि निवर्त्तकम् न तु कर्मविशेषः, एवं भेददर्शनस्याविद्याकृतत्वादैक्यज्ञानमेव तन्निवर्त्तकमिति तत्रैव तात्पर्यं वेदान्तवाक्यानामित्यर्थः । ततः किमित्यत्राह— (अस्य ही) ति । (क्वोपयुज्यते)न कुत्रचित्, ज्ञानस्य स्वरूपोत्पत्तौ तत्फलोत्पत्तौ ज्ञानोत्पत्तिसाधनानुग्रहे वा नोपयुज्यत इत्यर्थः । न केवलमुपयोगाभावः, प्रतिकूलफलत्वमप्याह— (प्रत्युते) ति। द्वैतवासनाजनकत्वादित्यभिप्रायः।

तथाप्युपनिषत्स्वधीतत्वाद् ब्रह्ममीमांसायां निरूप्यमाणत्वाच्चोद्गीथाद्युपासनं ब्रह्म-

❀ तत्त्वटीका ❀

अविचारितबुद्ध्यादिव्युदासार्थो विज्ञानशब्दः, एवमिहाधिकारिप्रयोजनसाधनानि ज्ञापितानि । प्रतिपिपादयिषितं— प्रदातुं, प्रापयितुं वेष्टं, शब्दजन्यज्ञानादेव ह्यपवर्गः । यद्वा, आत्मैक्यज्ञानमवैधमपि मोक्षसाधनतया शारीरके प्रतिपाद्यम्, तस्य प्रधानतात्पर्यविषयत्वाय सन्प्रयोगः ॥ ततः किम् प्रकृतस्य ? तत्राह (अस्येति) हिशब्दोऽनुपयोगस्थैर्यार्थः । "भेदावलम्बी" ति विरोधपरम् । कर्मज्ञानमिह विचाररूपं. तत्फलरूपं वेत्यन्त् स्वरूपोत्पत्तौ कार्ये वेति विवरिष्यते । तच्च तत्साधनानुग्राहकस्याप्युपलक्षणम् । द्वैतवासनाहेतुतयाऽत्यन्तहेयत्वाय वैपरीत्यं प्रथयति (प्रत्युतेति) अंशतो वा, फलसङ्गादिगुणतो वा निर्वैरत्वं दुर्वचमित्यभिप्रायेणाह (विरुद्धमेवेति) उक्तञ्च नैष्कर्म्यसिद्धौ—

"अयथावस्त्वविद्या स्याद्विद्या तस्याविरोधिनी ।
समुच्चयस्तयोरेवं रविशार्वरयोरिव ॥" इति ।
"तमोङ्गत्वं यथा भानोरग्नेरशीताङ्गता यथा ।

**कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते, स तु न साक्षात्सङ्गतः, अतो यत्प्रधानं शास्त्रं तदपेक्षितमेव पूर्ववृत्तं किमपि वक्तव्यम् ॥**

---

* श्रुतप्रकाशिका *

विद्यापेक्षितमित्युद्गीथादिविचारः साक्षात्सङ्गत इत्यत्राह- ( उद्गीथादा ) ति । तर्हि कथमुपनिषत्स्वध्ययनं ब्रह्मविचारे तद्विचारश्चेत्यत्राह— ( ज्ञानरूपत्वाविशेषादि ) ति । ज्ञानस्वरूपत्वसाम्यात् बुद्धिस्थतया कृतः, न तु प्रधानर्थोपयोगित्वादित्यर्थः । ततः किमित्यत्राह "स त्वि" ति । तुशब्दद्वयं शङ्काद्वयव्यावर्त्तकम् । प्रधानप्रतिपाद्योपयुक्तस्यैव पूर्ववृत्तत्वं निगमयति । ( अत ) इति । ( किमपि ) कर्मविचारादन्यदिति भावः । प्रधानार्थोपयोगित्वेन सङ्गतिः साक्षात्सङ्गतिः । येन केनाप्याकारेण साम्याद्बुद्धिस्थत्वं प्रसङ्गात्सङ्गतिः । अतः प्रासङ्गिकोद्गीथाद्युपासनचिन्तापेक्षितस्य प्रधानार्थविरुद्धस्य कर्मविचारस्य न पूर्ववृत्तता युक्ता, अपि तु प्रधानप्रतिपाद्यात्मैकत्वविज्ञानापेक्षितमेव किमपि पूर्ववृत्तं वक्तुं युक्तमित्युक्तं भवति ॥

ॐ तत्त्वटीका ॐ

वारिणश्चोष्णता यद्वज्ज्ञानस्यैवं क्रियाङ्गता ॥ इति च ।

यदि कर्मविरुद्धं, तर्हि तदङ्गाश्रयोपासनचिन्ताप्यत्र विरुद्धत्वान्न सङ्गच्छते, कर्मचिन्तायामेव तु निविशतामित्यत्राह—उद्गीथादीति । इहोद्गीथाद्युपासनं लक्ष्यते, तत्स्वरूपस्यात्रामीमांसितव्यत्वाद्गुणफलसम्बन्धमपन्हुत्य तद्विचारस्य कर्मशेषत्वोक्तिः, फलान्तरार्थत्वेऽपि न परविद्याङ्गत्वमिति च भावः । यद्वा, शिष्यत इति शेषः ॥ कर्मविचारैः परिशिष्ट इत्यर्थः । अत्र । विचार्यमाणानामुद्गीथाद्युपासनानां ज्ञानरूपत्वं विवक्षितम्, न तु तद्विचारस्य अतिप्रसङ्गात्, इहैव—विरुद्धशास्त्र एवेत्यर्थः । ननु साजात्याधीनप्रत्यासत्त्यापि समुद्रध्यानवत् प्रधानस्यानुपयुक्तं विरुद्धं च न चिन्त्यम्. अतः परविद्याप्रकरणे पाठात्, विचारणाच्चाश्रमादिवत्, गत्यादिवच्च तदुपयुक्तत्वं कल्प्यमित्यत्राह (स इति) तुशब्दश्शङ्कानिवर्त्तकः यद्यपि साक्षात्प्रधानोपयुक्ततया वा न सङ्गतिः, तथापि ज्ञानरूपत्वसाम्यात्तदन्वितस्य वीर्य्यवत्तरत्वोक्त्या चाऽपरिच्छिन्नफलत्वशङ्कोदयमपाकृत्य धूमादिमार्गवत्

बाढम्; तदपेक्षितं च कर्मविज्ञानमेव,कर्मसमुच्चिताज्ज्ञा-

*श्रुतप्रकाशिका *

अत्र भास्करीयाः प्रत्यवतिष्ठन्ते (बाढ) मिति । बाढमित्यर्द्धाङ्गीकारे । यत्प्रधानं शास्त्रं, तदपेक्षितमेव पूर्ववृत्तमित्येतावन्मात्रविषयोऽङ्गीकारः तदपेक्षितं चेति प्रतिज्ञा, त्वया यदनपेक्षितमित्युक्तं तदेवापेक्षितमित्येवकाराभिप्रायः । कुत इत्यत्राह- ( कर्मसमुच्चितादिति ) समुच्चितशब्दः साहित्यमात्रपरः, न समुच्चयपरः । 'अस्मद्विद्या आत्मविद्या चे' ति समुच्चित्योपदेशादित्यत्र समुच्चितशब्दवत् कर्मज्ञानाभ्यामिति न निर्दिष्टम्, अपि तु कर्मसमुच्चिताज्ज्ञानादिति विशेषणविशेष्यभावेन निर्दिष्टम्, अतो ज्ञानप्राधान्यमवगम्यते, कर्माङ्गकाज्ज्ञानादित्यर्थः । श्रुतिश्च "यज्ञेन दानेन" इत्यादिर्विव-

* तत्त्वटीका *

जिज्ञासादार्ढ्यमुत्पादयितुमिह तच्चिन्तेति भावः । तर्ह्यत्यन्तानुपयोगाभावात्तदुपयुक्तमपि पूर्ववृत्तमस्तु, तत्राह ( अतइति ) यत्प्रधानम्—यदुपपादनप्रधानम् । एवकारेण प्रासङ्गिकापेक्षितमपि प्रधानस्यानुपयुक्तं विरुद्धं च व्यावर्त्यते, प्रधानापेक्षितानुक्तिश्च न युक्ता. अप्रधानापेक्षितस्य च वृत्तत्वे वक्तव्ये दूष्यमतविचारादेरपि तथात्वप्रसङ्ग इति भावः । किमपि—त्वदुक्तात्कर्मविचाराद्विलक्षणम् ॥ .... .... ....

अत्र भास्करादिमतस्थो वा सिद्धान्ती वा सर्वविमर्शी पार्श्वस्थो वा, परोक्तेस्तात्पर्य्यविषयांशानङ्गीकारेण प्रतिवक्ति ( बाढमिति ) भास्करोक्तमत्र हेतुग्रन्थतस्साध्यतश्च प्रत्यभिज्ञायते, अनङ्गीकृतमर्थं विशिंषन्ननिष्टञ्च क्षिपति (तदिति) एवकारोऽन्यनैरपेक्ष्यं, प्रसङ्गापेक्षितस्यैव प्राधान्येनाप्यपेक्षितत्वं विरोधाभावञ्च व्यनक्ति । प्रधानोत्पत्त्यादावनुपयुक्तस्य विचारः कथं तद्विचारापेक्षित इत्यत्राह ( कर्मेति ) अयं भावः, अक्रमधुलाभशङ्कामतिक्रम्य यथाविधि कर्मसमुच्चिते ज्ञाने प्रवृत्तिः केवल कर्मणामनन्तफलसाधनत्वाभावनिश्चयपूर्विकेति । एतेन ' अधीतवेदान्तस्येति' प्रागुक्तं प्रत्युक्तम् । इह भास्करमते श्रुतिः "तमेतं वेदानुवचनेने" त्यादिः । समुच्चितत्वञ्चात्र "सह युक्ते प्रधान" इतितृतीयाश्रुत्या गुणप्रधानतया सम्बन्धः, गुणत्वञ्च प्रयाजादिवत् । प्रकृतानुपयोगात्तिरोधानेन समुच्चयोक्तिः- यादवप्रकाशमते "सर्वापेक्षा" इतिसूत्रमङ्गाङ्गिभावपरम् । "सहकारित्वेन चे" ति सूत्रन्तु समुच्च-

नादपवर्गश्रुतेः। वक्ष्यति च[1] "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। अपेक्षिते च कर्मण्यज्ञाते केन समुच्चयः

* श्रुतप्रकाशिका *

क्षिता। कर्मणोविद्याङ्गत्वे सूत्रकाराभिमतिं दर्शयति (वक्ष्यति चेति) चः प्रतिपादकसमुच्चये,अङ्गतया कर्मणोनुष्ठानमपेक्षितमस्तु,तज्ज्ञानस्य कथं पूर्वभावित्वम् कर्मज्ञानं ब्रह्मविचारपाश्चात्यं किं न स्यात्? इत्यत्राह- (अपेक्षितेचेति) प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकत्वेनाङ्गतयापेक्षा विवक्षिता। तृतीयस्य चतुर्थपादे समावृत्ताकृतदारमृतदारादीनामाश्रमविशेषवर्त्तिनां च ब्रह्मविद्यानिष्ठानां कर्मस्वनुष्ठेयाननुष्ठेयविभागस्य निरूपयिष्यमाणत्वमभिप्रेत्योक्तं (केन समुच्चयः केन नेतीति) यद्वा नित्यनैमित्तिकयोः समुच्चयः न तु काम्यनिषिद्धयोरिति विभागो न ज्ञायत इत्यर्थः। अयमर्थः- पदार्थज्ञानपूर्वकं हि वाक्यार्थज्ञानम् "यज्ञेन दानेन" इत्यादिवाक्ये यज्ञादिकर्मणां पदार्थभूतत्वाद्वाक्यार्थज्ञानस्य च पदार्थज्ञानपूर्वकत्वाद्यज्ञादिकर्मविचारस्य पूर्वभावित्वम्. नहि "व्रीहीनवहन्ती" त्यादिवाक्यार्थज्ञानं व्रीह्यादिपदार्थज्ञानेन विनोपपद्यते, पदार्थसंसर्गरूपत्वाद्वाक्यार्थस्य। ननु, गामानयेत्यादिवाक्याद्व्युत्पत्तौ गवानयनादिरूपं वाक्यार्थं पूर्वं प्रतिप-

 छ तत्त्वटीका छ

यार्थम्, तत्र तु "विद्याञ्चाविद्याञ्चे" त्यादिका श्रुतिः। समुच्चितत्वन्तु विशदज्ञानोत्पत्तेः पूर्वं तदुपपादकतया कर्मणां ज्ञानाङ्गत्वेन, पश्चात्तु मृत्युतरणब्रह्मप्राप्तिरूपफलभेदात्समत्वेन सिद्धान्ते तु सन्निपत्योपकारकत्वविवक्षया समुच्चयशब्दः। स्वरूपेण कर्मणोऽपेक्षितत्वे सूत्रकृत्सम्मतिमप्याह (वक्ष्यतीति) न ह्यस्मिन् सूत्रे साध्यत्वेन विविदिषोपात्ता. येन तदर्थेयमपेक्षोक्तिस्स्यात् विद्या तु प्रकरणसिद्धा अतो "विविदिषन्ती" त्यत्र न विविदिषा विवक्षितेति भावः। चकारः क्वचिन्मते सिद्धान्ते च प्रतिपादकं समुच्चिनोति। मतान्तरे तु प्रतिपाद्यमप्रधानत्वं समत्वेन सह सङ्घटयति, अस्तु ज्ञानस्यानुष्ठाने यथामतं कर्मापेक्ष्यम् तद्विचारे तु किं कर्मविचारेणेत्यत्र दत्तोत्तरत्वेपि युक्तिवैभवादुत्तरान्तरमाह (अपेक्षिते चेति)

१– शारीरकमी. ३- अ. ४- पा.६ सू.॥

* श्रुतप्रकाशिका *

धावापोद्वापमुखेन पश्चात्पदार्थप्रतिपत्तेर्न पदार्थधीपूर्वकत्वनियमो वाक्यार्थज्ञानस्य । उच्यते,—व्युत्पन्नाच्छब्दादर्थप्रतिपत्तौ सर्वत्र पदार्थज्ञानपूर्वकमेव वाक्यार्थज्ञानं, व्युत्पत्तिदशायां तु प्रमाणान्तरेण शब्दान्तरेण वा वाक्यार्थावगमः पूर्वं स्यात्, न तु तस्मादेव शब्दात्, तस्यागृहीतसम्बन्धत्वेन बोधकत्वायोगात्, व्युत्पत्तावपि न वाक्यार्थधियः पूर्वभावनियमः । अम्बाताततमातुलादिपदानां पदान्तरासंसृष्टानामेव प्रथमव्युत्पत्तिदर्शनात्, अस्य शब्दस्यायमर्थ इति व्युत्पत्तौ वाक्यार्थज्ञानस्य पूर्वभावाभावाच्च । न चास्मिन्नेव वाक्ये यज्ञादिशब्दव्युत्पत्तिसंभवः, विविदिषानिष्पत्तिरूपवाक्यार्थस्याप्रत्यक्षत्वेन गवानयनादाविव व्युत्पत्त्यनुपपत्तेः, अतः पदार्थज्ञानपूर्वकं वाक्यार्थज्ञानमित्युक्तम्. बाढमित्यादिकं सिद्धान्तिनश्चोद्यपरमिति च व्याख्यातृभिर्व्याख्यातम्, तदानीमपि पदार्थवाक्यार्थभावः क्रमविशेषहेतुतया विवक्षितः । किञ्च, अपेक्षिते चेत्यङ्गतयापेक्षितत्वस्य विवक्षितत्वात् कर्मणां च ज्ञानोत्पादकतया तदङ्गत्वादुत्पादकोत्पाद्ययोः पौर्वापर्यनियमाद्विचारविषययोः कर्मज्ञानयोः पूर्वापरभावेन तच्छेषभूतयोर्विचारयोरपि तत्क्रमभाक्त्वं न्याय्यमिति चाभिप्रायः । शेषभूतस्य शेषिक्रमानुरोधित्वं हि न्यायसिद्धम्, यथा—"सारस्वतौ होमौ भवत" इति युगपदुत्पन्नयोरपि सारस्वतहोमयोर्याज्यापुरोनुवा-

* तत्त्वटीका *

यथामतं—यथाधिकारमपेक्षिते । केन समुच्चयः—साधनलक्षणसमर्थयिष्यमाणस्वाधिकारानुगुणनित्यनैमित्तिकवर्गेण । केन— निबन्धककाम्येन, स्वाधिकारनिषिद्धेन चेत्यर्थः । अयंभावः—अनुष्ठानदशायां समुच्चेतव्यस्य तथा फलनिर्णयाय विमर्शदशायामपि बुद्ध्यारोहं अवश्यंभावी; अतः पदार्थभूतकर्मविचारपूर्वकस्तदन्वितविद्याविधिवाक्यार्थविचारः ततश्च विषयफलविशेषाविच्छिन्नब्रह्मोपासनचिन्तनस्य कर्मचिन्तासापेक्षतया कृत्स्नस्य शारीरकचतुरध्याय्यर्थविचारस्य कर्मविचारः प्राग्भावीति । तदिह कर्मनिरूपणस्य फलान्तरार्थकर्मपरिहारः, फलं विद्यानुबन्धेन कर्मस्वरूपमात्रोपादानं चेति न मोघप्रवृत्तित्वम्, नापि विरोधः । यद्यपि विद्यापेक्षितो यज्ञादिपदार्थस्साधनलक्षणे स्वयमिह सूत्रकृता चिन्तयितुं शक्यः, तथापि कृत्स्नवेदार्थनिश्चायके मीमांसाशास्त्रे कामाधिकारस्यापि क्वचिच्चिन्त्यत्वा-

# केन नेति विभागो न शक्यते ज्ञातुम्, अतस्तदेव पूर्व-वृत्तम् ॥

---

* श्रुतप्रकाशिका *

क्यामन्त्रानुसारेण सरस्वतीयागस्य पूर्वभावे सरस्वद्यागस्य च पश्चाद्भावे च प्राप्ते तदङ्गानामपि तेनैव क्रमेणानुष्ठानं निर्णीतम् । दृष्टान्ते दार्ष्टान्तिके च, शेषिणोः क्रमनिश्चायकहेतुवैषम्यमेव, तयोः क्रमे निश्चिते शेषस्य शेषिक्रमानुरोधित्वं तत्र चात्र च तुल्यम् । एवञ्चोपासनस्यैव विचारं प्रति शेषित्वात् तृतीयलक्षणे कृतस्योपासनचिन्तनस्यैव कर्मविचारापेक्षया पश्चाद्भाव इति न वाच्यम्—विद्याविषयतत्फलचिन्तनस्यापि तदपेक्षितत्वेन कृत्स्नाया अपि ब्रह्ममीमांसायाः कर्मविचारपश्चाद्भावप्राप्तेः । निगमयति (अत इति) बाढमित्यादेः सिद्धान्तिचोद्यपरत्वादपि भास्करमतपरत्वमुचितम् । "कर्मसमुच्चिताज्ज्ञानादपवर्गश्रुते" रित्यस्य ग्रन्थस्य भास्करीयभाष्ये श्रूयमाणत्वात्, अङ्गभावस्य तदभ्युपगतत्वेन तद्विषयसूत्रोपादानाविरोधाच्च शब्दतोऽर्थतश्च प्रत्यभिज्ञानात्, सिद्धान्तिचोद्यस्यापि तदन्तर्भावाच्च भास्करपक्षं यादवप्रकाशपक्षं चोपजीव्य "बाढ" मित्यादिना पार्श्वस्थश्चोदयतीति च निर्वाहः साम्प्रदायिकः । तत्रैवं योजना;—कर्मसमुच्चितादिति समसमुच्चयो विवक्षितः, कर्मसमुच्चिताज्ज्ञानादिति विशेषणविशेष्यभावेन निर्देशो ज्ञानस्य मोक्षोपायत्वप्रसिद्धिप्राचुर्यनिबन्धनः, श्रुतिश्च "विद्यांचाविद्यांचे" त्यादिः । अस्मिन्वाक्ये मृत्युशब्दः उपेयप्राप्तिविरोधिकर्मवाची, प्रतिबन्धनिवृत्तिर्ब्रह्मप्राप्तिश्चेति साध्यद्वयं, क्रमेण कर्म ज्ञानंचेति साधनद्वयमपि हि यादवप्रकाशैरभ्युपगतम्; अतो "विद्यां चाविद्यां चे" ति वाक्ये पूर्वखण्डः साधनद्वित्वपरः,

❀ तत्त्वटीका ❀

दत्र प्राक्चिन्तिते कर्मस्वरूपे लाघवाद्विनियोगपृथक्त्वमात्रस्थापनं युक्तम्, तापत्रयपूर्ववृत्तत्वमतेऽपि विषमत्वेन समत्वेन च कर्मणस्समुच्चेतव्यत्वादन्ततः कर्मविचारपूर्ववृत्तत्वं दुस्त्यजमित्यभिप्रायेण मतचतुष्टयेऽपि फलितमाह (अत इति) कर्मपरामर्शी तच्छब्दस्तच्चिन्तनं लक्षयति, दूरस्थमपि कर्मविज्ञानंवा परामृशति । अवधारणम्—विरोधाभावद्योतकम् ॥ .... .... .... .... ....

# नैतद्युक्तम्, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञाना-

* श्रुतप्रकाशिका *

उत्तरखण्डस्तु साध्यद्वित्वपर इति तेषां निर्वाहः 'वक्ष्यति चेति' चशब्दः प्रतिपाद्यसमुच्चये अङ्गभावं च वक्ष्यतीत्यर्थः । ज्ञानोत्पत्तेः पश्चात्कर्मणो ब्रह्मप्राप्तिप्रतिबन्धनिवर्त्तकत्वं, ज्ञानोत्पत्तेः पूर्वं कर्मणो ज्ञानोत्पादकतया तदङ्गत्वमपि हि तदभ्युपगतम् । अङ्गभावपरसूत्रमुपादत्ते "सर्वापेक्षेति" सर्वापेक्षेतिसूत्रमङ्गाङ्गिभावपरम्, "सहकारित्वेन चेति" सूत्रं समसमुच्चयप्रतिपादकमिति हि तेषां प्रक्रिया; अङ्गभावे समुच्चये च श्रुतिवाक्ये सूत्रे चोदाहर्त्तव्येऽपि ग्रन्थलाघवार्थं समुच्चये श्रुतिरङ्गभावे सूत्रं चोदाहृतम्, अङ्गभावप्रतिपादकवाक्यविषयसूत्रोपादानेन भास्करमतं चावलम्बितं भवति, एवमुभयथा कर्मणोऽपेक्षा दर्शिता । ततः किम्? इत्यत्राह— 'अपेक्षितेचेति' समप्रधानतया अङ्गतया चापेक्षित इत्यर्थः । अन्यत्सर्वं पूर्ववत् । यद्यपि यादवप्रकाशमते कर्मविचारस्य पूर्ववृत्तत्वमनभिमतम्, तथापि समुच्चयेनाङ्गतया च कर्मणोपेक्षितत्वस्य तदुपपादितत्वात्तावन्मात्रमुपजीव्य पार्श्वस्थेन मतद्वयावलम्बिचोदयित्रा पूर्ववृत्तत्वापादनमुखेन चोदितमिति न निगमनग्रन्थविरोधः । समुच्चयशब्दस्य प्रधानतयान्वये स्वारस्यादङ्गत्वपरसूत्रोपादानात्तदनन्तरं साध्यद्वित्वस्य साधनद्वित्वस्य च निराकरिष्यमाणत्वाच्च मतद्वयावलम्बनेन चोदितमिति पूर्वाचार्यैर्निर्वाहः कृतः ॥

अत्र प्रतिवदति (नैतद्युक्तमिति) हानार्थं कर्मणां ज्ञातव्यत्वं प्रागेव प्रतिक्षिप्तम्, वेदान्तमात्राध्यायिनः कर्मविषयापातप्रतीत्यभावेन कर्मनैरपेक्ष्यवचनात्, सुकृतवशाद्वेदान्तमात्रबुभुत्सावतः कर्मज्ञानानपेक्षावचनाच्च । अत्रोपादानार्थं कर्मणो ज्ञातव्यत्वं निराचिकीर्षुः समसमुच्चयेनाङ्गभावेन च द्विविधेऽप्युपादाने समसमुच्चयार्थमुपादानं प्रथमं निराकर्तुं साधनद्वित्वं साध्यद्वित्वं च वाक्यद्वयेन

☙ तत्त्वटीका ☙

अत्रात्यन्तनैष्कर्म्यवादी प्रतिवक्ति (नैतद्युक्तमिति) श्रुतिप्रतीतमप्ययुक्तं त्याज्यम्, अन्यथाऽतिप्रसङ्गादिति भावः । कुत इत्यत्र समुच्चयवादिकल्पितं साधनद्वित्वं तावन्निरस्यति (सकलेति) भास्करसिद्धान्ति-

देवाविद्यानिवृत्तेः; अविद्यानिवृत्तिरेव हि मोक्षः । वर्णा-

* श्रुतप्रकाशिका *

प्रतिक्षिपति (सकलविशेषे) त्यादिना । यथा बाढमित्यादिग्रन्थो भास्करमतेन सिद्धान्तमतेन वा चोद्यपरः, तदानीं पूर्वपक्षे सम्भावितसमस्तप्रकारेण कर्मणोऽपेक्षां प्रतिक्षेप्तुकामः किं त्वया समसमुच्चयो विवक्षितः, उताङ्गभावः ? इति विकल्पमभिप्रेत्य प्रथमं समुच्चयपक्षं प्रतिक्षिपतीति निर्वाह्यम् । सकलविशेषाः- सजातीयविजातीयस्वगतव्यावृत्त्यन्वयरूपविशेषाः, तेषां प्रत्यनीकं- सर्पाद्याकाराणां रज्जुत्वमिव तेषां निवर्त्तकमिति भावः । (चिन्मात्र) मिति मात्रचा ज्ञातृत्वज्ञेयत्वव्यावृत्तिः । यद्वा, सकलविशेषप्रत्यनीकशब्देन विजातीयसजातीयभेदप्रत्यनीकत्वं, चिन्मात्रमिति. मात्रचा स्वगतभेदशून्यत्वं च विवक्षितम्, प्रत्यनीकशब्देन नित्यानर्हत्वं विवक्षितम् । न हि शुक्तिशकलं कदाचिद्रजतत्वसम्बन्धार्हं, नित्यानर्हत्वादेव हि शुक्तिज्ञानस्य रजतत्वनिवर्त्तकत्वम् (ब्रह्मविज्ञानादेवाविद्यानिवृत्तेरिति) रज्जुत्वज्ञानादेव हि सर्पत्वनिवृत्तिः, न तु कर्मणेति भावः । एवं साधनद्वित्वं निरस्तम् । कथं साधनद्वित्वव्युदासः. साध्यद्वित्वं हि विद्यत इति शङ्कायां साध्यद्वित्वं व्युदस्यति (अविद्यानिवृत्तिरेव हि मोक्ष) इति । ब्रह्मणो नित्यप्राप्तत्वात् प्रतिबन्धनिवृत्तिरेव साध्या

❀ तत्त्वटीका ❀

पक्षयोरिह संप्रतिपन्नस्थापनार्थं, स्वकल्पितविकल्पकोटिनिष्कर्षणार्थं वा ब्रह्मेत्याद्युक्तम् । विशेषाः भेदाः—सजातीयविजातीयस्वगताः । स्वगतभेदो हि श्रुतोऽप्याविद्यैरुपासनविधिभिः कल्प्यत इत्यभिप्रायेण सकलशब्दः । प्रत्यनीकत्वमिह शुक्त्यादिवदारोप्यात्यन्ताभावाश्रयत्वं तत्स्वरूपत्वं वा स्वगोचरज्ञानेन स्वाध्यस्तनिवर्त्तकत्वं च, ईदृशस्य मानानर्हस्य शून्यत्वं परिहर्तुं चिच्छब्दः, चिद्रूपतया स्वप्रकाशस्य मानान्तरापेक्षया च द्वैतप्रसङ्गः, असद्व्यावृत्त्या च भ्रमाधिष्ठानत्वसिद्धिः, मात्रचा चिच्छब्दोत्थापितज्ञातृज्ञेयादिसम्बन्धशङ्काव्युदासः । प्रत्यनीकत्वमप्यन्ततः कल्पितमनतिरिक्तं वेति च भावः । ब्रह्मशब्देन 'ब्रह्म वेदे' त्यादिसूचनम् । विज्ञानात्—श्रवणाद्यनुगृहीतवाक्यजन्यप्रत्यक्षात् । अवधारणेनाधिष्ठानयाथात्म्यज्ञानस्यासत्यनिवर्तने कर्मनैरपेक्ष्यं व्यज्यते । "तमेव विदित्वे"

**श्रमविशेषसाध्यसाधनेतिकर्त्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेः कथमिव**

* श्रुतप्रकाशिका *

न तत्प्राप्तिः । हिशब्दस्यायमभिप्रायः,- या प्रतिबन्धनिवृत्तिः कर्मसाध्यत्वेन त्वयोक्ता सैव ज्ञानसाध्या श्रुतिस्मृतिसूत्रैरभिहिता "तमेव विदित्वातिमृत्युमेति" "ज्ञात्वा देवं मुच्यते सर्वपाशैः" । पाशैरिति पाठान्तरम् । "निचाय्य तं मृत्युमुखात् प्रमुच्यते "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "एवमेवंविदि पापं कर्म न श्लिष्यते" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" "तदधिगम उत्तरपूर्वाघयो" रित्यादिभिः, तस्माद्वाक्यद्वयेन न साध्यसाधनद्वित्वमस्तीत्युक्तं भवति । अविद्यानिवृत्तिरेव मोक्षोऽस्तु, ततः किं कर्मनैरपेक्ष्यस्य ? इत्यत्राह (वर्णाश्रमेति) अनेन पदेन पूर्वोक्तं कर्मणो भेदावलम्बित्वं विवृतं भवति । आदिशब्देन निषिद्धानि, प्रायश्चित्तकर्माणि च विवक्ष्यन्ते । अनन्तशब्देन वर्णादीनां बाहुल्यम् । विकल्पो भेदः । (सकलभेददर्शननिवृत्तिरूपाज्ञाननिवृत्तेरिति) मूलाज्ञाननिवृत्तेः फलं हि भेददर्शननिवृत्तिः, अतो भेददर्शननिवृत्तिरज्ञाननिवृत्त्यन्तर्गतेत्यर्थः । (कथमिव साधनं) न कथञ्चिदपीति यावत् । "न हि वचनविरोधे न्यायः प्रभवतीति"

* तत्त्वटीका *

त्यादिभिः प्रतिबन्धकमृत्युतरणस्यापि ज्ञानैकसाध्यत्वोक्तेः "अविद्यया मृत्युं तीर्त्वे" त्येतन्न मोक्षस्य कर्मसाध्यत्वार्थमिति. अत्राविद्यया मृत्युं प्राप्य स्थित इति तु योजना । साधनद्वित्वनिदानतयेष्टं साध्यद्वित्वमप्यत्र नास्तीत्याह (अविद्यानिवृत्तिरिति) एवकारः कण्ठचामीकरनयात्प्राप्तेरसाध्यत्वं व्यनक्ति, हिशब्दस्तु मुक्तेर्ज्ञानमात्रसाध्यतया श्रुतिस्मृतिसूत्रप्रसिद्धत्वं मोक्षशब्दस्वारस्यं च बोधयति । ज्ञानकार्ये कर्मणोऽनुपयोगं, सर्वथा विरोधञ्च प्रागुक्तं विवृणोति (वर्णेति) आदिशब्देन निमित्तगुणादेर्वर्णाद्यवान्तरभेदस्य च संग्रहः, अनन्तशब्दो व्यक्त्यानन्त्यं बाहुल्यं वा विवक्षति । विकल्पो- भेदः तत्क्रमो वा । श्रमपक्षे त्वास्पदशब्दो विषयार्थः, निवृत्तेरात्यन्तिकत्वव्यक्त्यै सकलशब्दः । कारणनिवृत्तेः, कार्यनिवृत्त्यभेदोपचारेण तद्रूपत्वोक्तिः, तन्निरूप्यत्वाद्वा । अविद्य-

साधनं भवेत्? श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरोधित्वं, ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति [1]"अन्तवदेवास्य तद्भवति" [2]"तद्यथेह कर्मचितो लोकः

* श्रुतप्रकाशिका *

नियमात्। श्रुतिसिद्धं कर्मणोपेक्षितत्वं न बाध्यमिति शङ्कायामुक्तोपपत्तेः श्रुत्यानुकूल्यं दर्शयति (श्रुतयश्चेति) न केवलोपपत्तिः तदनुग्राह्यमप्यस्तीति चशब्दस्य भावः। पूर्वं भेदावलम्बितया विरोध उक्तः, अत्र तु फलानित्यतया विरोधश्च युक्त्यन्तरत्वेन दर्शितः। (अनित्यफलत्वेनेति) नित्यफलस्य मोक्षस्य कथमनित्यफलदं कर्म साधनमित्यर्थः। श्रुतय इत्येकस्मादनेकवाक्यानां प्राबल्यं विवक्षितम्। दर्शयन्तीत्यनेनास्फुटार्थात् स्फुटार्थानाम् "अन्तवदेवास्ये" ति कर्मसाध्यत्वे मोक्षस्यानित्यत्वं. नित्यत्वे कर्मणस्तत्साधनत्वं वा न स्यात्. कर्मणोन्तवत्फलत्वनियमादिति भावः। अनेन वाक्येन कर्मणामनित्यत्वमुक्तम्। (तद्यथे) त्यनेन कर्मक्षयस्य फलद्वारकत्वमुक्तम्। पूर्ववाक्यमनेककालानुष्ठितसकल-

७ तत्त्वटीका ७

यैव हि भेदधीः, अतस्तया तन्निवृत्त्या च तत्सदसद्भावौ निरूप्यौ। कथमिव- न कथञ्चित्। अत्यन्तासम्भावितं कर्मणामविद्यानिवर्तकत्वं प्रत्युत तदनुवृत्त्या संसारप्रापकत्वमेव स्यादिति भावः। ननु, कथं वचनविरुद्धे न्यायस्स्यात्, युक्तिंविरोधाद्भीतस्य च ते श्रुतिविरोधापत्तिरित्यत्राह (श्रुतय इति) युक्तेरनुग्राह्यमप्यस्तीति चकाराभिप्रायः। स्वरूपतो विरुद्धत्वं यौक्तिकं प्रागुक्तम्, फलतस्तु श्रौतमिहोच्यते, अनित्यमेव हि कर्मफलम् नित्यस्तु मोक्ष इति. (ज्ञानस्यैव) न तु कर्मभिस्समुच्चितस्य विकल्पितस्य अनुगृहीतस्य चेत्यर्थः। युक्त्यनुगुणस्येति वा (दर्शयन्ती) त्युक्त्या स्पष्टस्य तर्केणानुसन्धानमप्यधिकम् अस्फुटार्थश्रुत्यन्तरं च दुर्बलमिति सूच्यते। 'अविदित्वे' त्यस्य मोक्षसाधनवित्तिरोहितो हि कर्म करोतीति तात्पर्यं मत्वाऽऽह (अन्तवदिति) बहूनां चिरकालानुष्ठितानामपि कर्मणामनित्यफलसाधनत्वमित्यवधारणाभिप्रायः। तद्यथेत्यादौ पुण्यशब्दो

१ बृ- उ. ५.— अ. ८. ब्रा. १०. वा. ॥ २ – छा. उ. ८. प्र. १. ख. ६. वा ॥

क्षीयते । एवमेवामुत्र पुण्यचितो लोकः क्षीयते" [1]"ब्रह्मविदाप्नोति परम्" [2]" ब्रह्म वेद ब्रह्मैव भवति" [3]"तमेव विदित्वातिमृत्युमेति" इत्याद्याः ॥

*श्रुतप्रकाशिका*

कर्मणामन्तवत्त्वज्ञापनार्थम् "अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि र्षसहस्राणि 'अन्तवदेवास्य तद्भवति' इति हि श्रूयते ,तत एव कर्मनैरपेक्ष्यवादे अस्य वाक्यस्य प्रथमत उपादानम्. ब्रह्मविदाप्नोतीति ज्ञानस्य मोक्षसाधनत्वमुक्तम् । प्राप्यप्राप्तृभेदनिषेधार्थं "ब्रह्म वेद ब्रह्मैव भवती" त्युपात्तम् । "तमेवे" ति प्रतिबन्धनिवृत्तेर्ज्ञानफलत्वं ज्ञापितम् । ज्ञानव्यतिरिक्तस्य कर्मादेरुपायत्वनिषेधश्चानेन सिद्धः "नान्यः पन्था" इति ह्यनन्तरवाक्यम्; एवं ज्ञानस्यैव मोक्षोपायत्वपरतर्कानुगृहीतस्पष्टार्थानेकवाक्योपादानेन "विद्यां चाविद्यां चे"तिसमसमुच्चयपरत्वेन परोक्ता श्रुतिश्चातदर्थेत्युक्तं भवति । तस्या एकत्वादस्फुटार्थत्वादतर्कोपेतत्वाच्च श्रुत्यन्तरविरोधेन वर्णनीयत्वात्, एवं ज्ञानस्यैव मोक्षोपायत्वे प्रमाणतया श्रुतय उपपत्तयश्च दर्शिताः । .... .... .... .... ....

७ तत्त्वटीका ७

न सङ्कोचार्ह इत्याकूतम् । ब्रह्मविदाप्नोतीति वाक्येऽप्यवधिः कर्मसमुच्चयश्च न श्रुत इति ज्ञानस्य नैरपेक्ष्यसिद्धिः । नन्वत्राऽपि वेद्यत्ववेदितृत्वप्राप्यत्वप्रापकत्वैर्भेदधीरस्तीत्यत्राह (ब्रह्मवेदेति) अनेन नित्यं ब्रह्मभूतस्य भ्रान्तिसिद्धाब्रह्मत्वनिवर्तके वाक्ये कर्मकर्तव्योपदेशः काल्पनिक इति ख्याप्यते, न केवलं कर्मसमुच्चयस्याश्रुतत्वं, प्रतिबन्धनिवृत्तेर्ज्ञानमात्रनिवर्त्यत्वकण्ठोक्तेर्बाधश्चास्तीत्यभिप्रायेणाऽऽह (तमेवेति) वेद्यावधारणमप्यत्र वेदनस्य नैरपेक्ष्यमभिप्रैति। सनत्सुजातवाक्यान्मृत्युरिहाविद्या, आदिशब्देन "किमर्था वयं यक्ष्यामहे" "न कमणा न प्रजये" त्यादिसङ्ग्रहः ।

१– तै. उ. आन. २. अ. १. अनु. १. वा ॥ २– मुण्ड. उ. ३- मुण्ड. २. खण्ड. ९ वा.
३– श्वे. उ. ३. अ. ८. वा. ॥

## यदपि चेदमुक्तम्,— यज्ञादिकर्मापेक्षा विद्येति, तद्वस्तुविरोधाच्छ्रुत्यन्तरपर्यालोचनया चान्तःकरणनैर्म-

* श्रुतप्रकाशिका *

अथ यज्ञादिश्रुतेः कर्मापेक्षितत्वपरतां व्युदस्यति (यदपिचे) त्यादिना। सिद्धान्ति-भास्कर-यादवप्रकाशानां त्रयाणामपि कर्माभिमतमितीदृशं प्राधान्यं सूचयत्यपिशब्दः, समुच्चयपरवाक्यस्य श्रुत्यन्तरानुगुण्येन निर्वाहे सति यज्ञादिश्रुतिश्च निर्वाह्येति समुच्चयाभिप्रायश्चशब्दः, अपिचेत्यखण्डोऽयंशब्दो वा, तदानीमप्युक्तप्रकारेण समुच्चयपरः। यदुक्तं 'यज्ञादिकर्मापेक्षा विद्या' इति, अनया वचनव्यक्त्या समुच्चयेन विद्यापेक्षितं यत्कर्मोक्तमित्यर्थः। वस्तुविरोधः-द्वैतवासनाजनकत्वमनित्यफलवत्त्वम् श्रुत्यन्तरपर्यालोचना- सन्प्रत्यार्थनिरूपणम्। चः समुच्चये। विविदिषोत्पत्तावुपयोगप्रकारमाह (अन्तःकरणेति) न फलोत्पत्तौ- न मोक्षोत्पत्तौ। "यज्ञेन दानेन तपसानाशकेन ब्राह्मणा विविदिषन्ति" इति हि श्रुतिः, न तु मुच्यन्त इति भावः।

* तत्त्वटीका *

एतास्सयुक्तिका बह्व्यः स्फुटार्थाः प्रतिरुन्धते।
अन्यामनुपपन्नार्थामव्यक्तविषयां श्रुतिम्॥ * ॥

विषमसमुच्चयद्वये सिद्धान्ते च श्रुतिसूत्राभ्यामुक्तमपेक्षितत्वमनुवक्ति (यदिति) अपिरत्र गर्हार्थः। यथाभिमानं पक्षत्रयपरिग्रहप्रयुक्तप्राधान्यपरो वा चः। प्रतिक्षिप्तश्रुत्यन्तरोक्तसमुच्चये स्वेष्टश्रुत्यादेर्दुर्वारत्वादत्र तात्पर्यान्तरक्लृप्त्योत्तरमाह (तदिति) (यज्ञादिकर्मापेक्षा विद्येति) स्वरूपोत्पत्तौ, फलोत्पत्तौ वा ऽपेक्षितत्वेन यत्कर्मोक्तं तदित्यर्थः। उक्तिमात्रपरामर्शे तु न फलोत्पत्तौ कर्मोपयुज्यते इत्येवंप्रकारेण तत्परिहर्त्तव्यमिति योऽयम्। उक्तार्थगोचरश्रुतिसूत्रपरामर्शे तु "अविद्यया मृत्युं तीर्त्वा" इत्यादिवत् अर्थान्तरकल्पनानर्हमपीत्यपिशब्दार्थः, अध्याहारश्च प्राग्वत्। (वस्तुविरोधात्) भेदवासनासंवर्द्धकतयाऽन्तवत्फलतया, चात्मद्वैतज्ञानस्य, तत्फलस्य च विरुद्धत्वादित्यर्थः। यद्वा, द्वैताद्वैतवासनयोस्तत्फलभूतबन्धमोक्षयोश्च वस्तुनोर्मिथोमिथः प्रातिभटयादिति। अधीतस्य सन्प्रत्ययस्य वैयर्थ्ययुक्तमित्यभिप्रायेण "श्रुत्यन्तरपर्यालोचनया" इत्युक्तम्। (अन्तःकरणनैर्मल्य-

# ल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते; न फलोत्पत्तौ, "विविदिषन्तीति श्रवणात् विविदिषायां जातायां

* श्रुतप्रकाशिका *

अक्षरपर्यालोचना कथमित्यत्राह ( विविदिषन्तीति श्रवणादि ति ) एवं च यज्ञादिश्रुतिपर्यालोचनया च ज्ञानकर्मणोः समुच्चयः प्रत्युक्तः, न फलोत्पत्ता-विति फलशब्दस्य मोक्षे स्वारस्यादेवं योजना कृता । यद्वा, यज्ञादिकर्मापेक्षाविद्येति वचोभङ्ग्याङ्गतयापेक्षितं यत्कर्मोक्तमित्यर्थः । न फलोत्पत्तौ— न वेदनोत्पत्तावि-त्यर्थः । विविदिषापेक्षया हि फलं वेदनम्, अन्यत्सर्वं पूर्ववत् । अस्यां योजनायां यज्ञा-दिकर्मापेक्षाविद्येति निर्देशस्वारस्यमस्ति, अङ्गाङ्गिभावसूत्रस्मारकत्वादस्य निर्देशस्य । अथवा, यज्ञादीति प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तिदशायामनुग्राहकत-याङ्गं यत्कर्मोक्तं तन्नोपयुक्तमित्यर्थः । न फलोत्पत्तौ-नमोक्षोत्पत्तौ । करणभूतविद्यानु-ग्राहकत्वेन नोपयुक्तमित्यर्थः । अस्यां योजनायामङ्गाङ्गिभावसूत्रस्मारकनिर्देशस्य फलो-त्पत्ताविति निर्देशस्य च स्वारस्यमस्ति विविदिषन्तीत्युक्तिरसिना जिघांसतीति वदिति यज्ञादेर्वेदनोपयोगित्वं स्यादिति शङ्कायां वेदनोत्पत्तौ हेतुत्वं कर्मण इतिकर्तव्यतात्वं करणत्वं चानुपपन्नमित्याह ( विविदिषाया ) मित्यादिना वाक्य-द्वयेन । तत्र शमादिभिः सह समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वं प्रथमं व्युदस्यति

७ तत्त्वटीका ७

द्वारेणेति ) इदं तावत्सिद्धान्तिनोऽप्यभिमतम् । तथोत्तरत्राप्युपयुज्यतामित्यत्राह ( न फलेति ) फलशब्द इह शास्त्रफलं ज्ञानं तत्साध्यमोक्षं च सामान्यतो ब्रूते । विद्याया अपि हि फलत्वम् वदन्ति "ब्रह्मावगतिर्हि पुरुषार्थः निश्शेषसंसारबीजा-विद्याद्यनर्थनिर्बहणादि" ति । वित्तिमोक्षायाः कर्मोपयोगे श्रुत्यक्षरविरोधं व्यनक्ति ( विविदिषन्तीति ) नहि वदन्तीति श्रूयते, न चापमृज्यन्त इति । ननु श्रुतत्वा-द्विविदिषासाधनत्वं यदि; तर्हि "क्रियावानेष ब्रह्मविदां वरिष्ठ" इत्यादिश्रुत्या विविदिषायाः पश्चाद्वेदनसाधनत्वमपि स्यात्तत्राह ( विविदिषायामिति ) कर्मणां शमादीनां च विद्यार्थतया श्रुतत्वाविशेषेपि श्रुत्यैव व्यवहिताव्यवहितहेतुत्वेन व्यव-स्थापनमित्यभिप्रायेण (जाताया) मित्युक्तम् । ( शमादीनामेव ) इत्यवधार-

# ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाह ।

* श्रुतप्रकाशिका *

विविदिषायामित्यादिवाक्येन । एवकारद्वयेन कर्मणः समुच्चयो विकल्पश्च व्युदस्यते, शमादीनामिन्द्रियव्यापारोपरतिरूपत्वेन यज्ञादिकर्मणस्तत्प्रवृत्तिरूपत्वेनान्योन्यविरोधित्वान्न समुच्चय उपपद्यत इत्यभिप्रायेण शमादीनामेवेत्युक्तम् । तुल्यबलयोर्हि विकल्पः ( भूत्वात्मानं पश्येदिति ) शमादीनामात्मदर्शनं प्रति साक्षात्साधनत्वस्य न्यायनैरपेक्ष्येण शीघ्रं प्रतिपन्नतया बलीयस्त्वात् । विविदिषन्तीति यज्ञादेरिच्छासाधनत्वेन स्वरसतः प्रतिपन्नत्वेपि स्वारस्यभङ्गेनासिना जिघांसतीत्यादिदृष्टान्तपर्यालोचनरूपन्यायसापेक्षतया कर्मणो विद्यासाधनत्वस्य विलम्बेन प्रतिपन्नतया दुर्बलत्वाच्च न विकल्प इत्यभिप्रायेणाह ( श्रुतिरेवाहेति ) । तथापि विविदिषापेक्षितत्वात् कर्म च ज्ञानोपयोगि, तत्कथमेतत्त्यज्येत,

* तत्त्वटीका *

णेन तेषां कर्मनिवृत्तिरूपतया कर्मसमुच्चयानर्हत्वं व्यज्यते । उत्पत्तिशिष्टशमदमादिगुणावरोधे हि न कर्मणां ज्ञाने विनियोगश्शक्यः, किं पुनर्विरुद्धगुणावरोधे "क्रियावा" नित्यादि वाक्यन्तु कर्मणां स्तावकं नविनियोजकम् ॥ ७ ॥ यद्वा "यज्ञेने" त्यादौ च वेदनसहयोगलक्षणतृतीयाक्लृप्तिर्न समीचीना । अतः कर्मणां वित्त्यर्थविनियोगासिद्धौ न तादर्थ्येन सत्त्वशुद्धिलक्षणद्वारक्लृप्तिः, विविदिषायान्तु विनियोगात्तत्क्लृप्तिर्युक्तेति भावः । कर्मण इव शमादेर्न द्वारसापेक्षत्वमित्यभिप्रायेण (अन्तरङ्गोपायता) मित्युक्तिः, अतोपि शमादिभिः कर्मणस्समुच्चयक्लृप्त्यनर्हतां श्रुतिरेवाह, नतु बहिष्ठयुक्त्या, श्रुतेर्लिङ्गादिभिर्वा साध्यत इत्यर्थः । यद्वा श्रुत्या हि कर्मापेक्षत्वशङ्का. श्रुतिरेव तद्विरुद्धत्वं वक्ति, अविशिष्टञ्च श्रुतित्वमनयोः, युक्त्यनुग्रहात्तु बलीयस्त्वमस्याः, 'विविदिषन्ती' त्यत्र वेदनलक्षणा च पदान्तरविमर्शापेक्षिणी वाक्यकक्ष्यानिवेशाद्विप्रकृष्टा, श्रुतिस्तु प्रथमकक्ष्यायां स्थितेति भावः ।

समुच्चयवदेवात्र विकल्पोऽपि न कर्मणः ।
शमाद्यैरव्यवहितैरसाम्यादिति मन्यते ॥ ७ ॥

[1]"शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" इति ॥

तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेष-

* श्रुतप्रकाशिका *

शमादिरुपादीयते ? इति शङ्कायां कर्मणः शमादिवैषम्यमाह— अन्तरङ्गोपायतामिति । 'भूत्वा पश्येत्' इत्यन्तरङ्गत्वं स्पष्टम् । विविदिषायाः पूर्वं हि कर्मोपयोगः, शमादि तु पश्चादप्युपयुज्यत इत्यभिप्रेत्य 'जाताया' मित्युक्तम् ॥

ज्ञानं प्रति कर्मणः करणत्वमपि नास्तीत्याह (तदेवमिति) करणत्वं सम्भवतीत्याशङ्कय निरस्यते, न त्वभ्युपगतत्वात्. विशुद्धं मनो हि करणं "मनसा तु विशुद्धेन" इति श्रुतेः । तत्—उक्तेभ्यो हेतुभ्यः । एवम्- समुच्चयेन विकल्पेन चेतिकर्तव्यतात्वेऽनुपपन्ने. स्वर्गादिसाधनस्य कर्मणो विविदिषासाधनत्वानुपपत्तिपरि-

७ तत्त्वटीका ७

भूत्वेत्युक्त्या श्रुतेरेषां साक्षादङ्गत्वमीयते ।
हित्वा विविदिषादीनां कल्प्यमन्यत्तु कर्मणः ॥ ७ ॥

शान्तः— विषयदोषदृष्ट्या काम्यादिषु निवृत्तबाह्याक्षः । 'मनसो दमनं दम' इति दान्ति स्मर्यते । 'मनसो विजयश्शमः- विजितस्य तस्य तत्त्वविषयनियोगयोग्यता दमः' इति वाचस्पतिः । उपरतः- देहयात्रायामपि यदृच्छालाभसन्तुष्ट्या नातिप्रवृत्तः । तितिक्षुः— दुर्निवाराणि द्वंद्वानीतिशेषः । समाहितः— ब्रह्मण्येकाग्रधीः । आत्मनि- शरीरे । अवधारणमासक्त्यतिशयपरम्. राहोश्शिर इतिवद्वा भेदक्लृप्त्या "आत्मन्येवात्मान" मित्युच्यते, नहि वस्तुतः स्वस्मादन्योऽन्यत्र वा मृग्य इति भावः । पश्येदित्यनेनाप्रत्यक्षभ्रमस्य तादृशमेव बाधकमिति सूच्यते । .... .... .... .... ....

यदि न कर्मणा धीः, केन तर्हि स्यात् ? विद्योत्पत्तौ चानपेक्षितमपि कर्म "स खल्वेवं वर्त्तयन्" इत्यादिश्रुतिबलाद्विद्यया विकल्पतः समुच्चयतः प्रधानतया अनुग्राहकत्वेन वा मुक्तावपेक्ष्यतामित्यत्राह ( तादिति ) स्वरूपफलविरोधादित्यर्थः ।

१– बृ. उ. ६. अ. ४. ब्रा. २३. वा. ॥

**कर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्याम्[1] "सदेव**

* श्रुतप्रकाशिका *

द्वारायानभिसंहितफलशब्दः। विविदिषाया अपि तत्साध्यत्वेन फलत्वात्तस्या अनभिसंहितत्वव्यावृत्त्यर्थं (फलविशेषे) त्युक्तम्। विविदिषासिद्ध्यर्थमिदानीमप्यनुष्ठानाय कर्मज्ञानापेक्षाशङ्काव्यावृत्त्यर्थं (जन्मान्तर) शब्दः। 'अनेकजन्मसंसिद्ध' इति वचनादिदानीमप्यनुष्ठेयमित्याशङ्कापरिहारार्थः (शत) शब्दः। कार्यकल्प्यं हि कारणम्, इदानीं विविदिषोत्पत्त्यदर्शनेन जन्मान्तरशतानुष्ठानं कल्पनीयमितिभावः। तेन कर्मणा मृदितकषायस्य- नष्टपापस्य। "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः" 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति हि स्मृतिः। एवं विविदिषोत्पत्तौ सत्यां ज्ञानो-

ॐ तत्त्वटीका ॐ

एवं— यज्ञादीनां तृतीयाश्रुत्या विविदिषायां विनियुक्तानां विद्यासाधनत्वासम्भवप्रकारेणेति यावत्। .... .... .... .... ....

जन्मान्तरशतेत्यादि क्वचित्तादृशसम्भवे।
अस्मिन् जन्मनि धर्माणामनाम्नाणाय भाषितम् ॥ ॐ ॥
अतो विविदिषार्थत्वं नास्मिन् जन्मनि कर्मणः।
विचारवृत्तता सूत्रे वक्तव्येत्यभिमन्यते ॥ ॐ ॥

ननु फलतो बन्धकं कर्म कथं विविदिषासाधनमपि स्यादित्यत्राह (अनभिसंहितफलेति) .... .... .... .... ....

अनिष्टोपि भवेद्दण्डः प्रतिषिद्धेषु लोकवत्।
काम्येषु तु फलं तद्वद्विनियोगानुसारतः ॥ ॐ ॥

चित्तशुद्ध्यादिव्यवच्छेदाय विशेषशब्दः "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इत्यादिस्मृतिवाक्यं श्रौतविनियोगबाधाद्व्यवधानसहमित्यभिप्रायेणोक्तम् (मृदितकषायस्य विविदिषोत्पत्तौ सत्यामिति) कषायः—कल्मषम्, रागादिश्च। नात्र कर्मणामव्यवधानेन प्रमाजनकत्वं, प्रमाणेष्वनन्तर्भावात्. अतो निर्विशेषब्रह्मात्मैक्यधीस्तत्त्वावेदकवाक्यजन्येत्यभिप्रायेण तादृशवाक्योपादानम्, तत्र कारणत्वेन लक्ष्यत्वाद्ब्रह्मणः प्रथमं कारणवाक्यमाह (सदेवेति) अवधारणाभ्या-

१– छा. उ. ६. प्र. २. ख. १. वा. ॥

सोम्येदमग्र आसीत् एकमेवाद्वितीयम्" [1]"सत्यं ज्ञानमनन्तं ब्रह्म [2]"निष्कलं निष्क्रियं शान्तम्" [3]"अयमात्मा ब्रह्म" [4]" तत्त्वमसि " इत्यादिवाक्यजन्यज्ञानादविद्या

* श्रुतप्रकाशिका *

त्पत्तिकरणमाह (सदेवेति) सदेवेत्यादिकारणवाक्यम् "सत्यं ज्ञान" मिति शोधकवाक्यम्, सत्यज्ञानादिवाक्यफलितव्यावृत्तिविशदीकरणाय (निष्कल) मित्यादि वाक्यमुपात्तम् ( अयमात्मा ब्रह्म ) इत्यैक्यवाक्यम् । उपक्रमादिषड्विधतात्पर्यलिङ्गोपेतमैक्यवाक्यं दर्शयति ( तत्त्वमसीति ) अस्मिन् वाक्ये ब्रह्मणा जीवविशेषस्यैक्यं श्रुतम्, "श्रुतमैक्यं सर्वात्मना" मिति ज्ञापनार्थमयमात्मा ब्रह्मेति वाक्यम् । इत्यादिवाक्यं ज्ञानोत्पत्तौ करणं, न कर्मेत्यर्थः । वाक्यजन्यज्ञानमविद्यानिवर्त्तकं

⁂ तत्त्वटीका ⁂

मद्वितीयपदेन, चौचित्याद्विजातीयसजातीयस्वगतभेदनिरासः, षड्विधतात्पर्य्यलिङ्गोपेतसद्विद्याबलाद्गुणोक्तिमत्कारणवाक्यानि स्तुत्यादिपराणि वेतिभावः । सद्विद्योक्तमोक्षणादिकमपि बाध्यमित्याभिप्रायेण शोधकैरपि निर्विशेषत्वमाह ( सत्यमिति ) अनृतजडपरिच्छिन्नत्वव्यावृत्तिरिहाभिप्रेता । सत्यादिवाक्यस्य व्यावृत्तिपरत्वव्यक्त्यै शाब्दं विशेषनिषेधमाह ( निष्कलमिति ) निरंशमिति यावत् । निष्क्रियम्— निष्पन्दं, निर्व्यापारं वा । शान्तम्— वस्तुतष्षड्भिर्भावविकारैरूर्मिभिश्च त्यक्तम् । सर्वजीवोद्देशेन तद्व्यापकतया ब्रह्मैक्यविधिमाह (अयमिति) सद्विद्यायामप्याप्ततमेन पित्रा पुत्रं प्रति तात्पर्य्यभूम्नाम्नातविधिं वक्ति (तत्त्वमिति) आदिशब्देन "आत्मा वा इदमेक एवाग्र आसीत्, आनन्दो ब्रह्म, यत्तदद्रेश्यमग्राह्यम्, तद्योऽहं सोऽसौ " इत्यादिसङ्ग्रहः । वाक्यादेव जन्म यस्य तत् वाक्यजन्म, तस्मात् ज्ञानात्, प्रत्यक्षरूपादिति शेषः । तत एव अविद्या निवर्तते, राजत्वोपदेशेन व्याधत्वादिभ्रमनिवृत्तिवदिति भावः ।

ज्ञानादेवेति निर्धारः कर्मणो मुक्तिसाधने ।

१– तै. उ. आन. २- अ. १. अनु. १. वा ॥ २– श्वे. उ. ६. अ. १९. वा. ॥
३– बृ. उ. ६. अ. ४.ब्रा. ५. वा ॥ ४– छा. उ. ६-प्र. ८. ख. ७. वा. ॥

निवर्त्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि । श्रवणं नाम—वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिन आचार्यान्न्याययुक्तार्थग्रहणम् । एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव युक्तमिति हेतुतः प्रतिष्ठापनं मननम् । एतद्विरोध्यनादिभेदवासनानिरसनायास्यैवार्थस्यानवरतभावना

---

* श्रुतप्रकाशिका *

चेत् श्रवणादिपूर्वकध्यानविधिवैयर्थ्यमित्याशङ्क्याह (वाक्यार्थेति) । चः शङ्काव्यावर्त्तकः। तेषां स्वरूपमाह (श्रवणं नामेति) प्रतिपादकानि—निष्पादनक्षमाणि । वाक्यजन्यज्ञानादिति युक्तम् । एतद्विरोधि—आत्मैकत्वविद्याविरोधि। श्रवणादीन्येवं-

७ तत्त्वटीका ७

समुच्चयविकल्पाङ्गप्रधानत्वापनुत्तये ॥ ७ ॥

स खल्वित्यादिकमन्यपरम्, ध्याननियोगजन्यज्ञानपक्षन्तु दूषयिष्यति । नन्वदृष्टस्य सर्वकार्यहेतुतया कर्मणो वाक्यसहकारित्वादविधेयज्ञानान्मुक्तिरिति पक्षे श्रवणमननपूर्वकध्यानविधेस्त्रयाणां वा विधीनां वैयर्थ्यं च स्यादित्यत्राह (वाक्यार्थेति)अदृष्टं हि दृष्टोपनायकं तत्सिद्धेश्श्रवणादिभिश्शमादिभिश्च वाक्यं चरितार्थम्, ततो विश्वबाधकज्ञानोत्पत्तौ दृष्टोपकारितया श्रवणादित्रयसाफल्यमित्याशयः । ननु, नित्यनिर्विशेषस्वप्रकाशे शास्त्रवैयर्थ्यम्, ब्रह्मवदित्यादिषु कर्मकर्त्रादिभेदोक्तिविरोधः, ऐक्यतत्त्वदर्शी च न शिष्यं पश्येत्, भेदभ्रमोपेतश्च कथं वाक्यं श्रावयेदित्यत्राह (श्रवणमिति) अत्रेत्युपस्कार्यं तत्त्वदर्शिन इत्यपि स्वाभीष्टविशेषाभिप्रायम्। प्रतिपादकानि-प्रदायकानि, उत्पादकानीति वा । कर्ममीमांसा ह्यविद्वदर्थो कर्तव्यस्थापिका, ब्रह्ममीमांसा तु तत्त्वबोधोत्पादनेन सर्वकर्त्तव्यनिवृत्तिकेति विशेषः । आपातधीव्यावृत्त्या मीमांसाफलव्यञ्जनाय न्याययुक्तत्वोक्तिः, वस्तुतोत्र न्याययुक्तत्वं स्वरूपत एव ग्रहणमिति केचित्. भेदभ्रमनिवर्तकधीहेतुतया शास्त्रादेस्सफलत्वम् अविद्याभेदानुवादेन तन्निषेधे तात्पर्यादविरोधः, ऐक्यदर्शिनोऽपि

निदिध्यासनम् । †श्रवणादिभिर्निरस्तसमस्तभेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्त्तयतीत्येवंरूपस्य श्रवणस्यावश्यापेक्षितमेव पूर्ववृत्तं ×वक्तव्यम् । तच्च नित्या-

*श्रुतप्रकाशिका*

रूपाणि यानि स्युः, कथमेषां वाक्यार्थज्ञानोपयोगः ? इत्यत आह (श्रवणादिभिरिति) वाक्यार्थज्ञानोत्पत्तिविरोधिनिरसनमुपयोग इत्यर्थः । इति—उक्तहेतोः, ज्ञानकर्मसमुच्चयाङ्गाङ्गिभावानुपपत्तिहेतुभ्य इत्यर्थः । एवंरूपस्य बन्धनिवृत्तौ कर्मनिरपेक्ष-वाक्यार्थज्ञानोपक्रमभूतस्य, न तु प्रासङ्गिकार्थस्य । अवश्यापेक्षितम् — नियमेनापेक्षितम् । अपेक्षितं च किमित्यत आह (तच्चेति) कुत एतदपेक्षितमित्यत्राह (अनेन

* तत्त्वटीका *

बाधितानुवृत्तेराचार्यत्वाभिमानेन श्रावकत्वमितिभावः । न्याययुक्तग्रहणे किं पुनर्मननेनेत्यत आह (एवमिति) स्वात्मनि—स्वचित्ते । हेतुतः प्रतिष्ठापनम्- संशयादेरपुनरङ्कुरत्वाय युक्तिसंस्कारपाटिम्ना दृढावस्थापनमित्यर्थः । ननु ताभ्यामेव विपरीतविस्रम्भो निवर्तेत. अन्यथा तद्वैफल्यात् किमत्र ध्यानेन ? इत्यत्राह (एतदिति) एतदुपकृतवाक्यजन्याद्वैतसाक्षात्कारविरोधिनीनां भेदवासनानां निरासकतया ध्यानं सफलमिति भावः । श्रूयते च "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः" इति ॥ स्यादेतत्,— ध्यानपर्यन्तोपकारेण शास्त्रे कृतकृत्ये योगबलान्निवर्तकधीः, अन्यथा चक्रकं स्यादित्यत्राह (श्रवणादिभिरिति) निवृत्ते हि प्रतिबन्धे हेतूनां यथावत् कार्यकरत्वम्, हेत्वन्तरान्वेषणे तु गौरवम् अतो वाक्यत एव वैशद्यवती निवर्त्तकधीः, श्रवणात्पूर्वमिव श्रवणतोऽप्यविशदधीरेव. तदुपजीवनेन मननादिक्रमेण ज्ञानान्तरस्य साध्यत्वान्न चक्रकमिति भावः । इतिहेतौ । एतेषु पर्वसु कथञ्चिदपि कर्मनैरपेक्ष्यादित्यर्थः । एवंरूपस्य कर्म—निरपेक्षनिवर्त्तकज्ञानमूलकारणस्येति यावत् । साधारणानियतानुपयुक्तानां व्यावृत्त्यै श्रवणस्यावश्यापेक्षितमिति पदत्रयम् । तादृशं त्वदिष्टं किमित्यत्र हार्दमुद्गिरति (तदिति) "नास्त्यकृतः कृतेन, शान्तो दान्तः, येनाहं नामृतास्यां

†— एवं, इत्यधिकं क्वचित् पुस्तके दृश्यते ॥ ×— किमपि, इत्यधिकं क्वचित्पुस्तके दृश्यते ॥

नित्यवस्तुविवेकः, शमदमादिसाधनसम्पत्, इहामुत्र फलभोगविरागः, मुमुक्षुत्वं चेत्येतत्साधनचतुष्टयम् । अनेन विना जिज्ञासानुपपत्तेः, अर्थस्वभावादेवेदमेव

* श्रुतप्रकाशिका *

विनेति) जिज्ञासानुपपत्तेः—विचारानुपपत्तेः । अनुपपत्तिमुपपादयति (अर्थस्वभावादिति) कथमर्थस्वभावः ? इत्थम्— नित्यानित्यवस्तुविवेकादनित्यसांसारिकफलभोगविरागो नित्यपुरुषार्थेच्छा च स्यात्ततः श्रवणादौ प्रवृत्तिः, मनोवधानहेतुतया तदुपयोगिनी शमादिसम्पत्तिरिति. अर्थस्वभावादेव— पूर्वप्रकृतादेवेत्येवकाराभिप्रायः । ज्ञानस्यैवोपायत्वं कर्मणोऽनपेक्षितत्वं चार्थस्वभावाद्धि पूर्वमुक्तम् । यद्वा 'अनेन विना जिज्ञासानुपपत्ते' रिति शमाद्यर्थस्वभावादित्यर्थः । शमादि, पूर्ववृत्तमस्तु, कर्म च पूर्ववृत्तं स्यादित्यत आह (अर्थस्वभावादेवेति) येनार्थस्वभावेन शमादेः पूर्ववृत्तत्वं, तेनैवार्थस्वभावेनान्यस्य पूर्ववृत्तत्वनिषेध इति प्रथमस्यैवकारस्य भावः । पूर्ववृत्तान्तरस्य व्यावृत्त्यर्थं द्वितीय एवकारः । अत्रार्थस्वभावशब्देन शमाद्यर्थस्वभाव उक्तः, ज्ञानार्थस्वभावः कर्मार्थस्वभावश्चाभिप्रेतः, ज्ञानस्य कर्मनिरपेक्षोपायत्वस्वभावात् कर्मणो भेदावलम्बित्वेन विरुद्धस्वभावत्वाच्च शमादेर्निवृत्तिरूपत्वेन प्रवृत्तिरूपकर्मविरोधिस्वभावत्वाच्च साधनचतुष्टयमेव पूर्ववृत्तम्; न त्वन्यदित्युक्तं

छ तत्त्वटीका छ

किमहं तेन कुर्याम्, तन्मा भगवान् शोकस्य पारं तारयतु" इत्यादिभिरेतच्चतुष्टयसिद्धिः । अस्यावश्यापेक्षितत्वं कुतस्तत्राह (अनेनेति) अनित्यजिहासा नित्योपादित्सा च तद्विवेकतः, तत्पूर्वको विचारस्तु स्वरूपफलयोश्चित्तविक्षेपनिवर्तकशमाद्यपेक्षः, अन्यविरागश्च शमाद्यर्थः । एतेषां न कर्मविचारवद्व्यभिचारो व्यवधानं वा एतदन्यतमवैकल्येपि त्याज्योपादेयजिहासोपादित्सयोरसिद्धेरुक्तप्रकारश्रवणं न सिद्ध्येदिति भावः । कर्मविचारोपि विवेकोपयोगाद्वृत्तत्वेन न वक्तव्य इत्यत्राह (अर्थेति) शमादेः कर्मनिवृत्तिरूपत्वं, कर्मणोऽनुपयुक्तविरुद्धत्वे, तत्त्वज्ञानस्याध्यस्तनिवर्तनेऽन्यनिरपेक्षत्वञ्चार्थस्वभावः, ज्ञानस्यैवापेक्षितत्वे साधनचतुष्कस्य पूर्ववृत्तत्वे च यो हेतुस्तस्मादेवेत्यवधारणम्, एवं वाक्यद्वयेन चतु-

पूर्ववृत्तमिति ज्ञायते ॥

एतदुक्तं भवति—ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपार-

* श्रुतप्रकाशिका *

भवति। (इदमेव पूर्ववृत्तमिति ज्ञायते इति) इदमेवशब्दावयोगान्ययोगव्यवच्छेद-परौ। इदंशब्दो हि साधनचतुष्टयपूर्ववृत्तत्वपरः, एवकारः कर्मव्युदासपरः, शमाद्यर्थ-स्वभावात्तदयोगव्यवच्छेदः। तस्माज्ज्ञानकर्मणोरर्थस्वभावाच्चान्ययोगव्यवच्छेदः।

सकलविशेषप्रत्यनीकं ब्रह्म चेत् कथं संसारप्रवृत्तिः? कथं वाक्यार्थज्ञानादेवा-विद्यानिवृत्तिः? अन्तःकरणस्य केन वा मालिन्यम्? कथं कर्मणा नैर्मल्यम्? ते चायोगान्ययोगव्यवच्छेदहेतुभूता अर्थस्वभावाः कथमिति शङ्कायामुक्तार्थं सङ्कलय्य दर्शयन् शङ्काश्च परिहरति (एतदुक्तमिति) ब्रह्मस्वरूपाच्छादिकाशब्देन सकल-विशेषप्रत्यनीकत्वेपि स्वरूपतिरोधानाद्भेददर्शनं सम्भवतीत्युक्तम्। भेदः- ज्ञातृ-ज्ञेयादिः। अपारमार्थिकं भेददर्शनमेव बन्धमूलं, न कर्मेत्यर्थः। कर्मापि भ्रान्ति-

* तत्त्वटीका *

ष्कस्यायोगान्ययोगव्यवच्छेदावुक्तौ ॥ .... .... ....

नन्वज्ञानादिप्रत्यनीकस्वमात्रप्रकाशे नित्यमुक्ते ब्रह्मणि कथमविद्यातिरोधान-भेददर्शन- बन्ध- तन्निवृत्ति—निवर्तकादीनां सम्भवः? कर्मकृतस्य बन्धस्य निष्कृति-नयात् कर्मविशेष एव निवर्त्तकस्स्यात्. निवर्त्तकज्ञानञ्च "ततो ज्ञानं प्रवर्त्तते" इति स्मरणात् कर्मसाध्यम्, कथञ्च बन्धकस्वभावस्य कर्मणः क्वचिन्मुमुक्षोपयोगः अन्तःकरणस्य कुतः कीदृङ्मालिन्यम्, कुतश्च कीदृङ्नैर्मल्यम्? कर्मणश्च प्रमाण-तन्त्रं ज्ञानं प्रतीव विषयानुकूल्यधीनिघ्नां विविदिषां प्रत्यपि कारणत्वं न दृष्टम्. निवृत्तिधर्मस्य मोक्षहेतुत्वाभावे तद्वाक्यवैयर्थ्यप्रसङ्ग इत्यादिशङ्काशङ्कूनुद्धरन् कण्ठो-क्तिमाभिप्रायिकञ्च सङ्कलय्य दर्शयति (एतदिति) .... ....

प्रपञ्चितस्य सङ्क्षेपः सङ्क्षिप्तस्य प्रपञ्चनम्।
एतदुक्तंभवतिना समाधिर्व्याकुलस्य च ॥ ७ ॥

आच्छादकत्वोक्त्या भावरूपत्वं सूच्यते. तत एव तदुपहितस्योपादानत्वसम्भवः, अविद्यया मनागवच्छिन्नत्वाद्ब्रह्मण अध्यासाद्युपपत्तिः। स्वप्नदृष्टपुरुषान्तरादिभेद-

मार्थिकं भेददर्शनमेव बन्धमूलम्। बन्धश्चापारमार्थिकः स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्त्यते। निवर्त्तकं च ज्ञानं तत्त्वमस्यादिवाक्यजन्यम्। तस्यैतस्य

* श्रुतप्रकाशिका *

मूलकमिति भावः। यद्वा, अपारमार्थिकं भेददर्शनमेव, न सत्यभूतं किंचिदपीति भावः। तथा सति हि कर्मापेक्षा, बन्धः- जन्मजरामरणादिः। (बन्धश्चापारमार्थिक इति) अविद्यामूलापारमार्थिकभेददर्शनकार्यत्वादिति भावः। ततः किं कर्मनैरपेक्ष्यस्येत्यत्राह (स चेति) (अपारमार्थिकत्वादेवेति) पूर्वोक्तादेवापारमार्थ्यात् कर्मनैरपेक्ष्यसिद्धिरित्येवकाराभिप्रायः। (ज्ञानेनैव) न कर्मणेत्यर्थः। नह्यपरमार्थसर्पनिवृत्तेरज्जुज्ञानेन विना वैनतेयोपासनकर्मापेक्षा। एवं समसमुच्चयः प्रत्युक्तः ज्ञानं प्रत्यपि कर्मणो न साधनत्वमित्याह (निवर्त्तकं चेति) निवर्त्तकबोधः प्रमाणजन्य इति यावत्। प्रमाणजन्यशुक्तिज्ञानं हि रजतनिवर्त्तकम्। अत्र शमादेरितिकर्त्तव्यतात्वेन कर्मण इतिकर्त्तव्यतात्वमपि विरोधान्नेत्यभिप्रेतम्। ततः

* तत्त्वटीका *

दर्शनसाम्यसूचनायापारमार्थिकशब्दः। (भेददर्शनमेव) इत्यत्र देहात्मैक्यबुद्धावपि कर्तृत्वभोक्तृत्वदेवत्वमनुष्यत्वादिभेददर्शनमन्तर्नीयते, तेन देहातिरिक्तज्ञानमेवालं किमकर्तृत्वादिविशेषितब्रह्मज्ञानेनेति च शङ्का निरस्ता। कर्मणोपि न स्वयं बन्धकत्वं दृष्टोपनायकसाधारणनिमित्तत्वात्; अतो भेदभ्रमसिद्धस्य कर्मणोप्यपारमार्थिकत्वाद्भेदभ्रमद्वारेणैव बन्धकत्वाच्चात्र ज्ञानेतरनिवर्त्त्यं सत्यं न किमपि बन्धकमस्तीत्यवधारणाभिप्रायः। ननु असत्यात्सत्यसिद्धिस्त्वन्मतेऽस्तीत्यत्राह (बन्धश्चेति) बन्धस्याबाधितत्वे हि सत्यत्वासत्यत्वशङ्का, ब्रह्मणो नित्यमुक्तत्वविरोधश्चेति भावः। निष्कृतिन्यायपरिहारायाह (सचेति) सत्कर्मणा पापनिवृत्तिश्च भ्रान्तिसिद्धा, अतो मूलभूताविद्याप्रतिबन्धपर्यन्तं कृत्स्नमन्त्रनिरपेक्षरज्जुसर्पनयात् कर्मनिरपेक्षाद्वैतबुद्ध्यैव बाध्यमित्यभिप्रायेण (ज्ञानैनेव) इत्युक्तम्। मोक्षसाधनस्य कर्मसमुच्चयाभावेऽपि स्मृतिवशात्तदुत्पादकस्यादित्राह (निवर्त्तकमिति) अयं भावः,—विगीतं प्रमाणजन्यं निवर्त्तकज्ञानत्वात् अविगीतवत्. न कर्मजन्यमिति

**वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा कर्मणो नोपयोगः, विविदिषायामेव तु कर्मणामुपयोगः । स च पापमूलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवती-**

* श्रुतप्रकाशिका *

किमित्यत्राह ( तस्येति ) तस्य—कर्मनिरपेक्षस्य । एतस्य—अद्वैतविषयस्य । तदेतच्छब्दयोः प्रस्तुतवाचित्वाविशेषेपि दूरस्थान्तिकस्थविशेषणविशिष्टपरामर्शित्वं ह्युचितम् । अद्वैतविषयत्वे हेतुमाह ( वाक्यजन्यस्येति ) तत्त्वमस्यादिवाक्यजन्यत्वादद्वैतविषयत्वमित्यर्थः । कार्ये— मोक्षे । तर्हि कुत्रोपयोगः ? इत्यत्राह (विविदिषायामिति ) तुशब्देन करणेतिकर्तव्यतात्वव्युदासः । उपयोगः कथम् ? इत्यत्राह (स चेति ) पापमूलेत्यादिना अन्तःकरणनैर्मल्यद्वारेणेति पूर्वोक्तं विवृतं भवति । रजस्तमोनिबर्हणादिकं नास्मिन् वाक्ये श्रुतमित्यत्राह ( इतीममिति )

छ तत्त्वटीका छ

वा साध्यम्. स्मृतिस्त्वन्यपरा । परिशेषाद्वाक्यहेतुकत्वं [ स्वोक्त ] युक्तिबलादिति. परोक्तः कर्मोपयोगः प्रमाणशून्य इत्यभिप्रायेणाह ( तस्यैतस्येति ) तस्य-अद्वैतगोचरस्य कर्मव्यतिरिक्तकरणतदनुग्राहकवतः । एतस्य— स्वविषयविरुद्धबाधे स्वयमेव समर्थस्य । अन्वयव्यतिरेकवतः कारणान्तरव्यपोहाय वाक्यजन्यत्वोक्तिः । "यज्ञेन विविदिषन्ती"ति श्रुतेर्यज्ञादीनां विनियोगपृथक्त्वेन पृथक् फलत्वोपपत्तिरिति ख्यापयति ( विविदिषायामिति ) यथाश्रुतायामित्यवधारणाभिप्रायः । तत्राप्यव्यवहितहेतुत्वं तुशब्देन व्यावर्त्यते । असिना जिघांसतीत्यादौ क्लिष्टगतिर्बाधसिद्धा । अथ मनोमालिन्यादिकं विवृणोति ( स चेति ) धर्मस्य पापनिवृत्त्यादिसाध्यान्तरं विहितम्, श्रद्धायास्सत्त्वरूपसाध्यान्तरञ्च शास्त्रसिद्धम्, सत्त्वस्य ज्ञानसाधनत्वोक्तिश्च परम्परया स्यात् । पापमूलरजस्तमोविवृद्धिर्मनोमालिन्यम्. धर्मेण तदपनुत्त्या सत्त्वशुद्धिर्नैर्मल्यम्—

कर्मभिश्शुद्धचित्तस्य तत्त्वे स्यादनुकूलधीः ।
निर्णीनीषा ततस्तस्मिन् कर्मजैवं भवेदिति ॥ ७ ॥

अत्र प्रथम इतिर्हेतौ । सोपबृंहणश्रुतिस्वारस्यानुगुणनिर्वाहादित्यर्थः ( इमं )

तीममुपयोगमभिप्रेत्य "ब्राह्मणा विविदिषन्ति" इत्युक्तमिति ॥ अतः कर्मज्ञानस्यानुपयोगादुक्तमेव साधन-

*श्रुतप्रकाशिका*

अभिप्रेत्यशब्देन शङ्कापरिहारः, इतिर्हेतौ । वस्तुविरोधादितिकर्त्तव्यतात्वकरणत्वाद्यनुपपत्तिहेतुभ्य इत्यर्थः । इमम् उपयोगम्, रजस्तमोनिबर्हणसत्त्वविवर्द्धनरूपं परम्परयोपयोगमित्यर्थः । विविदिषन्तीत्युक्तमित्येतदुक्तं भवतीत्यन्वयः । प्रकृतमुपसंहरति (अतः कर्मज्ञानस्येति) अतः हानार्थमुपादानार्थं च कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः । अत्र व्याख्यातृभिरुक्तौ सङ्ग्रहश्लोकौ—

"विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात् ।
ज्ञानमात्रस्य हेतुत्वश्रुतेः सामर्थ्यतोऽपि च ॥ ७ ॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः
श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका" ॥ इति ॥

विरोधादिति कर्मणामनित्यफलतया भेदवासनाजनकतया च विरोधो विवक्षितः । सामर्थ्यत इति ज्ञानस्य मिथ्यार्थनिवर्त्तकत्वे कर्मनिरपेक्षत्वरूपं वस्तुसामर्थ्यं

७ तत्त्वटीका ७

विविदिषोत्पत्तावपि त्रिचतुरकक्ष्याव्यवहितामिति यावत् । अभिप्रेत्य—शाब्दत्वाभावेपि श्रुत्यन्तरेण स्मृत्वा, च स्वीकृत्य ईदृशोपयोगान्निवृत्तिधर्मविधेश्च साफल्यमितिभावः ।

अत्रोपायशोधने वक्तव्यशेषं न किञ्चिदित्यभिप्रायेण निगमयति (अत इति) उपादातुं हातुं वा ज्ञानतद्विचाराभ्यां कर्मतद्विचारयोरनपेक्षणादित्यर्थः ।

अत्राऽयं सङ्ग्रहस्तूलिकास्थः—

"विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात् ।
ज्ञानमात्रस्य हेतुत्वश्रुतेस्सामर्थ्यतोपि च ॥ ७ ॥
शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चयः ।
श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका ॥" इति ।

विरोधात्— स्वरूपतः फलतश्चेति शेषः । अप्रमाणत्वात्— कर्मणां ज्ञानतत्फलयोस्साधनत्वे प्रमाणशून्यत्वात्, यद्वा— प्रमाणत्वाभावात् । सामर्थ्यतः—

चतुष्टयं पूर्ववृत्तमिति वक्तव्यम् ॥ ● ॥

—( लघुसिद्धान्तः )—

अत्रोच्यते—यदुक्तमविद्यानिवृत्तिरेव मोक्षः, सा च

* श्रुतप्रकाशिका *

विंवक्षितम् । .... .... .... .... ....



राद्धान्तमारभते ( अत्रोच्यत इति ) अस्मिन् पूर्वपक्षे सिद्धान्त उच्यत इत्यर्थः । पूर्वपक्षोक्तेष्वर्थेष्वविरुद्धांशमभ्युपगमेन प्रतिवदति ( यदुक्तमिति ) अविद्यानिवृत्तिः— प्रतिबन्धनिवृत्तिः, साध्यसाधनद्वित्वनिरासोऽभिमत इत्यर्थः । यः प्रतिबन्धनिरासः कर्मसाध्य उक्तः तस्य "तमेव विदित्वातिमृत्युमेती" त्यादिषु ज्ञानसाध्यत्वमुक्तम्, ब्रह्मप्राप्तिस्तु स्वतःसिद्धा । एवकाराभ्यां साध्यान्तरं साधनान्तरं च व्यावर्त्यते । यद्यप्यनिष्टनिवृत्तिरिष्टप्राप्तिश्च द्वयमस्ति, तथापीष्टतमब्रह्मप्राप्तेः स्वतःसिद्धायाः पृथगुपायसाध्यत्वाभावात् प्रतिबन्धनिवृत्तिरेव साध्या, स्वत एव सर्वसाक्षात्कारक्षमं ज्ञानं प्रतिबन्धके निवृत्ते सति ब्रह्मस्व-

* तत्त्वटीका *

मिथ्याभूतभेदे ज्ञानमात्रस्य पर्याप्तत्वात् । धीकर्मसमुच्चयः— मतत्रयोक्तप्रकारः । उन्निद्रत्वम्— प्रतिबन्धनिवृत्त्या पुष्कलत्वम् । .... .... .... ....



अविरोधविहीनत्वात् ख्यातत्वादुपपन्नवत् ।
पक्षेऽस्मिन् दूषणं वाच्यमत्रोच्यत इतीर्यते ॥

इह तावत् साध्यसाधनद्वित्वनिरासं विरुद्धांशभङ्गाय ( यदुक्त ) मित्यादिना सामान्यतोऽनुमन्यते, अविद्यातन्निवृत्तिब्रह्मतद्विज्ञानेषु तत्तत्प्रकारविशेषतो विमतिरस्त्येव । स्वमते ह्यविद्यानिवृत्तिर्नाम— स्वाभाविकधीप्रसरप्रतिबन्धकस्य कर्मणोऽत्यन्तोच्छेदः, स च भावान्तररूपः । .... .... .... ....

"प्रतिबन्धनिवृत्त्यंशोऽनिष्टभङ्ग इहोदितः ।
धीविकासस्स्वतस्सिद्धत्यन्निष्टप्राप्तिर्विवेचकैः ॥"

ब्रह्मविज्ञानादेव भवति, इति। तदभ्युपगम्यते। अविद्या-निवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम्—किं वाक्याद्वाक्यार्थज्ञानमात्रम्,उत तन्मूलमुपासनात्मकं ज्ञानम् ? इति । न तावद्वाक्यजन्यं

* श्रुतप्रकाशिका *

रूपरूपगुणविभवादिकं सर्वं साक्षात्करोति । यथा,—सेतौ भग्ने जलं स्वयमेव गच्छति न केन चिन्नेतव्यं तद्वत्, यथाश्मानयने मार्गसमीकरणतत्प्रापणे उभे अपि पृथग्यत्नसाध्ये न तथेत्यर्थः । यद्वा, भावान्तरस्यैवाभावत्वादविद्यानिवृत्तिरेव ब्रह्मप्राप्तिरित्यर्थः। साध्यसाधनद्वित्वनिरासोऽभ्युपेतश्चेत् विप्रतिपत्तिविषयः क इत्यत्राह (अविद्येति) साधनस्वरूपविशेषे विप्रतिपत्तिरित्यर्थः। (किंरूपम्) किं कर्माङ्गत्वानर्हं भवदुक्तं ज्ञानम्. उत कर्माङ्गकत्वार्हमस्मदुक्तं ज्ञानमित्यर्थः । किंरूपमित्यभिप्रेतं विवृणोति (किमिति) किं वाक्यादित्यादिना परमतं स्वमतं च वदति, न तु परमतविकल्पः । प्रथमं परपक्षप्रतिक्षेपः क्रियते, स्वपक्षस्थापनं तु पश्चादित्याभिप्रेत्याह (न तावदिति) न तु दूष्यशिरसोरन्यतरदूषणं क्रियते, कुत इत्यत्राह

७ तत्त्वटीका ७

अतो नावधारणविरोधः, ब्रह्मतद्विज्ञाने च परमार्थब्रह्माकारे न वयं तद्विज्ञानस्य कारणत्वाभावं कर्मसमुच्चितत्वं फले तत्सहकृतत्वं वाभ्युपगच्छाम इत्यभिप्रायेण (ब्रह्मविज्ञानादेवे) त्युक्तम्। अभ्युपगम्यते चेत् ।किं दूष्यमित्यत्र निवर्तकज्ञानप्रकारे तद्विगानमाह—(अविद्येति) विधित्सितम्——स्वमते साधनतया चोदयितुमिष्टम्, परमते तु उत्पादयिषितम्। एवं तत्रोक्तं विभजते (किंरूपमिति) किं कर्मनिरपेक्षतया, उत कर्माङ्गतया, अस्मदुक्तमित्यर्थः। विवेचनीयम्—अन्यतरनिरासेन कोट्यन्तरतया वा परिशेषणीयमितियावत्। सङ्कलितं विविङ्क्ते—(किमिति) वाक्यार्थगोचरस्मृतिरूपविधेयव्यावृत्त्यै (वाक्यात्) इत्युक्तिः। इन्द्रियसम्बन्धाद्वाक्यतरतत्स्वरूपधीस्स्यात् पुत्राद्यनुमा च, तद्व्यवच्छित्त्यै वाक्यार्थग्रहणम्। ध्यानादिद्वारनैरपेक्ष्यं मात्रचोक्तम्, परस्य वाक्यार्थज्ञानं जीवपरयोरैक्यधीः, स्वस्य तु प्रकारप्रकारित्वबुद्धिः, अतस्तन्मूलोक्तिराविरुद्धा, मननादिव्यावृत्त्यर्थ-

## ज्ञानम्, तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः,

* श्रुतप्रकाशिका *

(तस्येति) (विधानमन्तरेणापीति) प्रमाणज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रं कर्त्तुमकर्तुमन्यथाकर्तुं चाशक्यत्वात्, अतः पुरुषतन्त्रत्वाभावान्न तद्विधेयमिति तैरेवोक्तमिति भावः। वाक्यादेव—ब्रह्मस्वरूपपरवाक्यादेव। व्युत्पत्तिमन्तं पुरुषं प्रति न्यायानुगृहीतस्य वाक्यस्यार्थबोधकत्वं स्वतःसिद्धं, न तु विध्यधीनं तच्छ्रवणे पुरुषस्य प्रवृत्तिश्च रागादेवेत्युपपादितम्। यद्यपि न रागात्, तथाप्यध्ययनविधिरेवाधीतकृत्स्नवेदवाक्यविचारे प्रवर्तक इति "प्रज्ञां कुर्वीत" त्यादिविधिर्निरर्थक एव। न च प्रमाणज्ञानस्य श्रेयःसाधनत्वमलौकिकमिति तद्रूप्येण तस्य विधेयत्वं शुक्तिरूप्यादिभ्रमनिवर्त्तकज्ञानस्येव बन्धनिवर्त्तकज्ञानस्य दृष्टार्थत्वाभ्युपगमात्; अतो विधिवैयर्थ्यम्। तेनासकृदावृत्तसाक्षात्कारभक्तिरूपत्वयावज्जीवानुष्ठेयत्वपराणां "यावन्न विमोक्ष्ये अथ संपत्स्ये" इत्यादीनां मुक्तेः शरीरपातानन्तरभावित्वपराणां नाडीविशेषनिष्क्रमणवादिनीनां मार्गपराणां चानेकश्रुतीनां नैरर्थक्यं प्रसज्येतेति।

* तत्त्वटीका *

मुपासनत्वोक्तिः। परेष्टं दूषयति (न तावदिति) तिष्ठतु पक्षान्तरम् इदन्तु नैवेत्यर्थः। परकल्पितपश्चिमवाक्यार्थस्यासम्भवं वदयन् सर्वसम्मतप्रथमवाक्यार्थज्ञानस्योपायत्वे 'द्रष्टव्य, इत्यादिविधिवैयर्थ्यप्रसङ्गं विधित्सितपदसूचितमुद्घाटयति (तस्येति) विधेश्शब्दजन्यज्ञाने निर्व्यापारत्वं परैरेवोक्तम्. प्रमाणज्ञानं वस्तुतन्त्रं न पुरुषतन्त्रं कर्त्तुमकर्त्तुमन्यथाकर्त्तुं चाशक्यत्वादित्युक्तेरित्याशयः। वाक्यात्- स्वरूपपरवाक्यादितियावत्। एवकारो विधिनैरपेक्ष्यम्, बाध्यवासनायाः प्रतिबन्धकत्वायोगञ्च व्यनक्ति। सिद्धेः—उत्पत्तेः। न तावदिह वाक्यजन्यं ज्ञानं तत एव वाक्याद्वेद्यं, संसर्गतया संसृष्टतया वा प्रवेशाभावात्। नापि 'प्रज्ञां कुर्वीत' इत्यादिवाक्यान्तरैः, सिद्धस्याविधेयत्वात्। साधनत्वेन बोधनं चानपेक्षितम्, अदृष्टार्थत्वानभ्युपगमात्. कल्पितबाधे च सामर्थ्यतस्साधनत्वावगतेः, अतो विधिवैयर्थ्यमित्याशयः। ननु, विद्धयनुसारित्वान्न विधित्वमितिचेत्; तथापि तादृशाम्नानवैयर्थ्यं दुरतिक्रमम्। विधिवैयर्थ्योक्तिराप्रयाणानुष्ठेयविधेयाकारवर्गवादिनां ब्रह्मनाडीनिष्क-

तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च। न च वाच्यम्-भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्त्तकं ज्ञानं

---

* श्रुतप्रकाशिका *

एवमनेकश्रुतिविरोधस्य प्रदर्शनार्थं तस्य विधानमन्तरेणापीत्युक्तम्। अथ प्रत्यक्षविरोधं दर्शयति (तावन्मात्रेणेति) तावदंशस्ततोधिकेप्यस्तीति तद्व्यावृत्त्यर्थं तावन्मात्रेणेत्युक्तम्। बहुशास्त्रविरोधप्रत्यक्षविरोधरूपमिदं दूषणद्वयं वदता भगवताचापस्तम्बेनापि वाक्यार्थज्ञानमात्रस्य मोक्षसाधनत्वं निरस्तम् "यथा बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धं बुद्धेचेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत एतेन परं व्याख्यात" मिति। शास्त्रैरिति बहुवचनेन पूर्वोदाहृतानेकश्रुतिविरोधोऽभिप्रेतः। विप्रतिषेधोधिकबलेन प्रतिषेधः, न तु प्रकरणसमवत् तुल्यबलेन प्रतिषेधः, बहुशास्त्रविरोधः प्रबलतरः "भूयसां स्यात् बलीयस्त्वमि"तिन्यायाभिप्रायेण विप्रतिषिद्धमित्युक्तम्। यत्तु परैरस्य दूषणस्य प्रतिवचनं द्वेधा कृतं तदनुभाष्य दूषयति (न च वाच्यमिति) वाक्यं ज्ञानोत्पत्तिमिदानीं न जनयतीति कश्चिन्निर्वाहः तमाह (भेदेति) इदानीं ज्ञानोत्पत्तिर्दृश्यत इति चेत् तत्परिहारा-

* तत्त्वटीका *

मणदेवयानगत्यादिवादिनाञ्च शास्त्राणां वैयर्थ्यमुपलक्षयति, तत्र प्रत्यक्षविरोधमप्याह— (तावन्मात्रेणेति) न ह्युत्पन्नं ज्ञानमविद्यानिवर्त्तनेऽन्यदपेक्ष्यं विलम्बेत, यतोऽनुपलब्धिरबाधिका स्यात्, सा च परस्परयोः प्रत्यक्षानुमानसिद्धा. प्रत्यक्षमविरुद्धञ्च न शास्त्रवेद्यम्, न च तादृशविज्ञानमात्रादविद्यानिवृत्तिः, अन्वयव्यतिरेकसिद्धेरिति भावः। अत्रैवमापस्तम्बेन शास्त्रविरोध उक्तः। "बुद्धेक्षेमप्रापणम्" [२- ९- २१- १४] "तच्छास्त्रैर्विप्रतिषिद्धम्" [२– ९– २१– १५] इति। विशेषण प्रतिषिद्धमित्यर्थः। नहि तुल्यबलविरोधोऽत्र घटते, प्रत्यक्षविरोधश्चोक्तः। "बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत" [२- ९- २१- १६] "एतेन परं व्याख्यातम्" [२– ९– २१- १७] इति श्रुतिप्रत्यक्षविरोधयोः द्विधोत्तरमनूद्य निषेधति— (न चेति) न्यायोपेतश्रवणे पश्चादिव प्रागपि कथं ज्ञानानुपपत्तिरित्यत्रोक्तम् (भेदवासनायामिति) प्रतिबन्धकवासनानिरासे

न जनयति, जातेपि सर्वस्य सहसैव भेदज्ञानानि-

* श्रुतप्रकाशिका *

याह ( अविद्यानिवर्त्तकमिति ) पश्चादपि वाक्यादेवाविद्यानिवर्त्तकविशदज्ञानोत्पत्तिश्चेदिदानीमेव जनयत्वित्यत्राह ( भेदवासनायामिति ) प्रतिबन्धकाभावश्च सामग्र्यन्तर्भूतः, अतः सामग्रीवैकल्यात् ज्ञानमनुत्पन्नम्, ध्यानादिविधयः प्रतिबन्धकनिरासौपयिका इति भावः । अनेन शास्त्रप्रत्यक्षविरोधौ परिहृतौ भवतः, सनकादीनां ज्ञानाधिकत्वेन श्रुतिस्मृतिप्रसिद्धानामपि ज्ञानानुदयोऽनुपपन्न इति शङ्कायां निर्वाहान्तरमाह ( जातेपीति ) अविद्याया एकत्वात्, प्रपञ्चप्रतिभासस्यैकस्य

ॐ तत्त्वटीका ॐ

विधीनामुपयोगः, दिग्भ्रमादयो ह्युपदेशलिङ्गाभ्यामनिवृत्ताः कदाचित् कुतश्चिद्वासनाविच्छेदे निवर्त्यन्ते, तद्वदिहेति भावः । दृश्यमानपरोक्षहानव्यावृत्त्यर्थं ज्ञानमविद्याया निवर्त्तकामित्युक्तम् । ( जनयति ) इत्यनेनाविद्यानिवृत्त्यनुपलब्धिविरोधोपि परिहृतः ॥

अत्रैवमद्वैतसम्प्रदायरहस्यम्— आपातिकन्तु ज्ञानमविद्यां न निवर्त्तयति, अनिश्चयात्मकत्वात् । विचारजन्यातु धीः परोक्षाध्यवसायरूपभेदसत्यत्वभ्रमजनकमविद्यांशं निवर्त्तयति, तथाप्यपरोक्षानादिभ्रमोपचिता तद्वासना तादृशं भ्रममाधत्ते, तदवष्टम्भोऽविद्यांशस्त्वद्वैतसाक्षात्कारेण निवर्त्यते. निवृत्तेपि तस्मिन् प्रारब्धकार्यकर्मावष्टम्भः कश्चिदविद्यांशोऽनुवर्त्तते, तादृशां जीवन्मुक्तिमाहुः सोप्यंशोऽन्तिमाद्भोगसम्वेदनादात्मसम्वेदनाद्वा निवर्त्तते. ईदृशाविद्यांशभेदाभिप्रायेण "इन्द्रो मायाभिः पुरुरूपईयते" इत्युच्यते । उक्तक्रमेण मायांशानां निवृत्तिमभिप्रेत्य "भूयश्चान्ते विश्वमायानिवृत्तिः" 'विमुक्तश्च विमुच्यते, इतिश्रुतिराह इति । तत्र द्वितीयांश इहाविद्याया इत्युक्तः । अथ परोक्षरूपस्यैव ज्ञानस्य निवर्त्तकत्वमन्वारुह्यापि प्रत्यक्षविरोधं परिहरति ( जातेपीति ) यद्वा सर्वविदां सनकादीनामनुत्पन्नसाक्षात्कारत्वमविद्यावत्त्वञ्च न युक्तम् उत्पन्नसाक्षात्काराणान्तु शिष्यादिप्रतिभासायोगादुपदेष्टृत्वादिकं न स्यात्, नहि तत्र परोक्षज्ञानमात्रं वोपदेष्टा 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' ' इति विशेषणात्, अत उभयतः पाशारज्जु-

वृत्तिर्न दोषाय; चन्द्रैकत्वे ज्ञातेपि द्विचन्द्रज्ञानानिवृत्तिवत् । अनिवृत्तमपि छिन्नमूलत्वेन न बन्धाय भवति,

* श्रुतप्रकाशिका *

भ्रमाणः स्वप्नरूपत्वाच्च ( सर्वस्ये ) त्युक्तम् । ( न दोषाय ) अनिवर्त्तकत्वं दोषाय न भवति । ज्ञानोदयेपि भ्रमानिवृत्तौ दृष्टान्तं दर्शयति ( चन्द्रैकत्वे ) इति अनिवृत्तं चेद् भेददर्शनं बन्धकं स्यात् इत्यत आह ( अनिवृत्तमपीति ) ( छिन्नमूलत्वेन ) छिन्नाविद्याख्यमूलत्वेन अकार्यकरम् । यथा, दग्धः पटः पूर्वसंनिवेशेन प्रतीय-

* तत्त्वटीका *

रित्यत्र तृतीया विद्यांशस्थितिदशानुसारेण प्रतिवक्ति ( जातेपीति ) । यस्यैकैव ब्रह्माविद्या एक एव च जीवः तस्यैकाविद्यानिवृत्तौ क्वापि जीवपदास्पभेदभ्रमानुवृत्तिर्बन्धमुक्तिव्यवस्था च न स्यादिति चोद्यानुवादसूचनाय अन्तःकरणभेदोपाधिकाभिव्यक्तिविकल्पानुसारेण सर्वस्येत्युक्तम् । सहसैवेत्येतन्निवृत्त्या योज्यम् । अविद्यांशान्तरावष्टम्भप्रवृत्तफलकर्मावसाने हि सर्वभेदभ्रमनिवृत्तिरिति भावः । ( न दोषाय ) अविद्यानिवृत्तौ भ्रमोपि निवर्त्तेत अकारणकार्यायोगात्. अतो रागादिदृष्ट्या भ्रमानुवृत्तेरविद्यापि न निवर्त्तेतेति ज्ञानस्य निवर्त्तकत्वाभावप्रसक्त्यै न स्यात्. अबाधितस्याप्यनुवृत्तिसम्भवादितिभावः । स्वेष्टं लोकदृष्ट्या प्रत्याययति ( चन्द्रेति ) अङ्गुल्युपष्टम्भादिमतश्चन्द्रैकत्वे वाक्यतो ज्ञातेपीति भाष्यम्, इदं निदर्शनमन्वारुह्य वादे सुगमम्, अन्यत्र तु निवर्त्तकज्ञानस्य प्रत्यक्षत्वं निगृह्य नेतव्यं प्रत्यक्षचन्द्रद्वित्वभ्रमे बाधिते पुनस्तदनुवृत्त्ययोगात् ।

यद्वा प्राच्यामुपष्टम्भाद्भ्रमे प्रत्यक्षबाधिते ।
पुनरङ्गुल्युपष्टम्भाद्भ्रमावृत्तिर्न दृश्यते ॥ * ॥
अविद्याजनिता भ्रान्तिर्वाक्यजाध्यक्षबाधिता ।
युक्ता तदनुवृत्तिर्हि भूयस्संस्कारशेषतः ॥ * ॥

ननु. तत्त्वदर्शनात्प्रागपि भेदज्ञानमेव बन्धमूलम्. पश्चादपि तदनुवृत्तौ रागाद्यनुवृत्त्या बन्धानिवृत्तिस्स्यात्. नहि कारणनिवृत्त्या कार्यं स्वकार्याय घटते. मन्यसे चाविद्याशेषानुवृत्तिमित्यत्राह ( अनिवृत्तमिति ) अपिर्विरोधद्योतकः । मूलच्छेदात्

इति । सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः, सत्याम् अपि विपरीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधक

* श्रुतप्रकाशिका *

मानोप्याच्छादनादिकार्यायोग्यः क्रमेण विनश्येत्, यथा कुलालभ्रमितं चक्रं भ्रामयितृव्यापारोपरमेपि पूर्ववेगवशात् कञ्चित्कालं स्वयमेव भ्रमत् क्रमेणोपरमते तद्वदिति भावः । अत्रेति करणस्य न वाच्यमित्यनेनान्वयः । प्रथमं ज्ञानानुत्पत्तिं दूषयति ( सत्यामिति ) न्यायानुगृहीतवाक्यमेव सामग्री. प्रतिबन्धिकाभेद-वासनास्तीति चेत्तत्राह ( सत्यामपीति ) निवर्त्या वासना निवर्त्तकोत्पत्तिप्रति-बन्धिका न भवतीत्यर्थः । आदिशब्दादिन्द्रियं गृह्यते, यथा—चिरतरतिमिरवासित-गुहायां प्रदीपो न नोत्पद्यते तस्मिन् दीपिते सद्य एव तमो विनश्येत्, यथा

छ तत्त्वटीका छ

खण्डितलतान्यायेन क्रमाद्विनश्येत्. न पुनः प्ररोहेत् । स्वविषयसत्यत्ववासनारू-षितं हि भेदज्ञानं, रागादिहेतुः प्रतिमायोषिदादिषु तथाभावादित्यभिप्रायेण छिन्न-मूलत्वोक्तिः दग्धपटचक्रभ्रमादिन्यायोऽत्राभिप्रेतः । अत्र ज्ञानं न जनयती-त्युक्तं तावन्निरस्यति ( सत्यामिति ) व्युत्पन्नपदमाकाङ्क्षादिविमर्शोपेतं वाक्यमपे-क्षणीयान्तररहितमित्यभिप्रायेण सामग्रीशब्दः । अन्यथातिप्रसङ्ग इति भावः । ननु, अप्रतिबन्धोपि सामग्रीतिन्यायाद्भेदवासनैव स्वनिवृत्तिरूपकारणाभावात्मा सामग्री वैकल्यं स्यात्. यद्वा, पुष्कलाया अपि सामग्र्याश्शक्त्यपरिहारेण प्रतिबन्धिकेत्यत्रा-ह— सत्यामपीति । अयंभावः,— यदि विपरीतवासनैव प्रतिबन्धः प्रतिबन्धिका वा स्यात् । तदा अनिरस्तसंस्कारे रज्जुसर्पादिभ्रमे कदाचिदपि बाधकधीर्नोदियात्, उदिते चासाविति प्रसङ्गतद्व्यभिचाराभ्यां व्यतिरेकव्यभिचारदर्शनेन विरुद्धवासनानि-वृत्तिरत्र हेतुः, रज्जुसर्पवासनानिवृत्तावपि हि नायं सर्प इत्याप्तवाक्येन दण्डसङ्घ-ट्टनादिनिरूपितेन निश्चेष्टत्वादिलिङ्गेन च परोक्षं बाधकज्ञानं न जायते चन्द्रभेद-वासनानुसृतावप्यङ्गुल्युपष्टम्भादिदोषापगमे चन्द्रैक्यप्रत्यक्षधीरपि भवति. नच वाक्यादपरोक्षबुद्ध्युत्पत्तौ विरुद्धवासनानिवृत्तिरपेक्षितेति वाच्यम्;— अविशिष्टश-क्तेर्वाक्यस्य परोक्षधीजननेपि तदपेक्षाप्रसङ्गात् । अभेदवासनया भेदवासनानिवृत्ति

ज्ञानोत्पत्तिदर्शनात् । सत्यपि वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्त्तेत इति भवता न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारूप-

* श्रुतप्रकाशिका *

कचिद्देशे सर्प इति वाक्याच्चिरं भ्रमितोपि पुरुषो न तत्र सर्प इत्याप्तोपदेशाज्जानाति, यथा च वनं न दग्धमिति श्रुत्वा चिरं भ्रान्तस्य पश्चात्तत्र गत्वाङ्गारादिलिङ्गदर्शनेन दग्धमिति ज्ञानं जायते, यथा चिरं सर्पत्वेन वासिते वस्तुनि समीपगमनानन्तरमिन्द्रियव्यापारेण रज्जुज्ञानं सहसैव जायते तद्वदित्यभिप्रायेणाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनादित्युक्तम् । वेदान्तवाक्यं हि दार्ष्टान्तिकम्, अत आप्तोपदेशस्य प्रथमोपादानम् अथ द्वितीयनिर्वाहकमनूद्य निरस्यति ( सत्यपीति ) ( मात्रया ) अल्पमित्यर्थः । ( भवता ) ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्ववादिनेति भावः । भवतेति सूचितमर्थं विवृणोति ( भेदेति ) वासनाया अपि मिथ्यात्वाविशेषात्तस्या अपि ज्ञानेन निवृत्तत्वमवश्याश्रयणीयमिति भावः । किं ज्ञानोत्पत्तावपि वासना न निवर्त्तेत्युच्यते, उत तन्निवृत्तावपि निर्हेतुकं भेददर्शनं

७ तत्त्वटीका ७

वदतश्चक्रकं च स्यात् । अभेदाध्यवसाये तद्भावना, तया भेदवासनानिवृत्तिः । तत एवाभेदाध्यवसाय इति । अध्यवसाये वासनानिवृत्तिरनपेक्षितेति चेत्, साक्षात्कारेपि नापेक्ष्येत अविशेषात् । दशमान्वेषिणश्च दशमाभाववासनास्थितावपि दशमस्त्वमित्युपदेशेन प्रत्यक्षधीजननं च त्वयैवोक्तम्. 'तत्त्वमसि' 'दशमस्त्वमसि' इत्यनयोर्वाक्ययोरपरोक्षात्मविषयत्वञ्च समानं त्वमेवात्थ इति । अथ प्रत्यक्षविरोधं परिजिहीर्षतो बाधितानुवृत्तेरसम्भवमभिप्रेत्याह ( सत्यपीति ) ( मात्रया ) नतु कार्त्स्न्येन. आत्मभेदसत्यत्वाध्यवसायादेर्निवृत्तत्वाद्बाह्येषु भेदधियः किञ्चिदवस्थितत्वादिति भावः । भवतेत्यशक्यता हेतुगर्भम्, नहि ब्रह्मव्यतिरिक्तं किञ्चित् सत्यमिच्छसीति भावः । हेतुं विवृणोति ( भेदेति ) सामग्रीशब्द इह प्रारब्धकर्मावष्टम्भ पौष्कल्यसूचकः । अविद्याविनाशे कर्मवासना च कथं तिष्ठेत् ? नहि मृगतृष्णिकानिवृत्तौ तदीयतरङ्गाद्यनुवृत्तिः, अत उपदेष्टृत्वाद्यनुपपत्तिश्च स्यादिति भावः ।

त्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात्, ज्ञानोत्पत्तावपि मिथ्या-रूपायास्तस्या अनिवृत्तौ निवर्त्तकान्तराभावात् कदा-

* श्रुतप्रकाशिका *

भवति ? इति शङ्काद्वयं हृदि निधाय प्रथमां परिहरति ( ज्ञानोत्पत्तावपीति ) ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्यात्वाद्वासनापि ज्ञानैकनिवर्त्त्या, नोचेन्निवर्त्तका-न्तरमपि ज्ञानत्वाविशेषान्न निवर्त्तयेदित्यर्थः । स्वयमेव वासना नश्यतीति चेत् तदयुक्तम् । स्वयमेवेति बाधकज्ञाननैरपेक्ष्यस्य विवक्षितत्वे वासनाया नश्यन्त्या अपि सत्यत्वप्रसङ्गात्. स्वयमेव नश्यतीति स्वेनैव स्वविनाशकरणं विवक्षितं चेद्व्याघातः । फलोपान्त्यकारणनाशादिनाश्यत्वेपि सत्यत्वप्रसङ्गोऽवर्जनीय एव. कर्मशब्दादिषु तथैव वैशेषिकैर्वर्णितत्वात् तेषां च पारमार्थ्यदर्शनात् । किंच स्वप्नार्थोत्पत्त्यादिवद्

* तत्त्वटीका *

ननु, मिथ्यात्वाविशेषेप्येकाधिष्ठानेषु भिन्नाधिष्ठानेषु च भ्रमेषु किञ्चिदेव केनचिद्बा-ध्येत. तद्वत् स्यादित्यत्रोक्तम् ( ज्ञानोत्पत्त्यैवेति ) सद्व्यतिरिक्तं सर्वं मिथ्येति बाधकधीः, ईदृशज्ञानोत्पत्तौ च वासनास्थितिस्ते विरुद्धा. नच वासनावान्तरभेदा-द्गतिः, मिथ्यात्वानपायात्. नहि रज्जुरित्यवगते सर्पाद्यन्यतमधीरनुवर्त्तते । किञ्च, निरस्तायामेव भेदवासनायां बाधकोत्पत्तिं वदतस्ते तदुत्पत्तौ कथं सा तिष्ठेत्? स्थिता काचित्केन निवर्त्त्येत यदि ज्ञानान्तरेण, तन्न,— अविशेषात्, अथ भोगक्षयात् । तर्हि ज्ञानबाध्यत्वाभावात् सत्या स्यात्, एवं कर्मापि अद्वैत-साक्षात्कारेपि वासनानिवृत्तावनिर्मोक्षप्रसङ्गमभिप्रेत्याह— ( ज्ञानोत्पत्ताविति ) ज्ञानैकनिवर्त्त्यत्वाय मिथ्यारूपत्वोक्तिः, निवर्त्तकान्तराभावात्सत्यत्वप्रसङ्गभीतैर्ज्ञाने-तरबाध्यत्वस्यानभ्युपगमात्. स्वकल्पितान्तिमभोगसंवेदनादिज्ञानशतावगमेपि तेषां पूर्वज्ञानवन्निवर्त्तकत्वायोगादिति भावः । ( अस्याः ) मूलविद्याबाधकप्रबल-ज्ञानेनापि दुर्बाधाया इत्यर्थः । अहेतुकविनाशस्तु न क्वापि नैगमिकैरिष्यते, तदभ्युपगमेपि तेषां पूर्वज्ञानवासनाविनाशादेर्भ्रान्तिसिद्धत्वेन नित्यं भ्रमानुवृत्त्या पुनरपि वासनासन्ततेरनिवार्यत्वमभिप्रेत्य ( कदाचिदपी ) त्युक्तम् । नहि वासना-निवृत्तिस्वतस्स्वरूपम्, साध्यत्वात् । अतिरिक्ता च न सत्या, अद्वैतप्रसङ्गात् । अभाव-

चिदपि नास्यावासनाया निवृत्तिः । वासनाकार्यं भेद-ज्ञानं छिन्नमूलमथ चानुवर्त्तेत इति बालिशभाषितम् । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः

---

*श्रुतप्रकाशिका*

वासनायां मिथ्यात्वे तदुत्पत्तिस्थिती अपि मिथ्याभूते इति तद्विनाशोपि मिथ्याभूतः, अतो विनाशविषयभ्रमः पुनस्तिष्ठतीति निश्शेषभ्रमनिवृत्तिर्न स्यात् । अथ द्वितीयां शङ्कां परिहरति ( वासनेति ) छिन्नमूलम्— छिन्नवासनाख्यमूलम् । ( बालिशभाषितमिति ) अकारणकार्योत्पत्तिप्रसङ्ग इत्यर्थः । यद्यकारणं भेददर्शनं भवति तर्हि मुक्तिरपि ज्ञाननिरपेक्षा स्यात्, श्रवणादिभिर्विना वाक्यार्थज्ञानं स्यात्. अविद्यया विना जगद्भ्रमश्च स्यात्, अधिष्ठानेन विना अविद्यापि कार्यकरी स्यादिति भावः । ननु तर्हि कथं सत्यपि बाधकज्ञाने चन्द्रद्वित्वानिवृत्तिरित्याह ( द्विचन्द्रेति ) तुशब्दो विवक्षितार्थवैषम्यपरः । बाधक सन्निधावपि— तज्ज्ञान सन्निधावपि । तिमिरादिदोषस्य पारमार्थ्यात् ज्ञानाबाध्यत्वा दितिभावः । तत्पारमार्थ्यं

* तत्त्वटीका *

सत्यत्वेपि सदद्वैतं सिद्धमिति चेन्न क्वचिद्भेदसत्यत्वेऽन्यत्राप्यविशेषात् भावान्त-रसत्यत्वेपि तद्वदेव ब्रह्माद्वैतानपायाच्चेति ( अनिवृत्तमपी )त्यादिनोक्तम् । स्वव्या-घातेनोपालभते ( वासनेति ) स्वोक्तिविरोधानभिज्ञः किमन्यद्वेत्स्यतीत्यभिप्रायेण बालिशत्वोक्तिः । अयंभावः,—छिन्नमूलमित्यत्र किं मूलशब्देनाविद्या विवक्षिता, उत भेदवासना? आद्ये मूलभूताविद्याच्छेदे तत्समानबाधकस्य संस्कारस्यापि बाधा-द्भेदभ्रमो दुर्वच इत्युक्तम् । द्वितीये कथं वासनोच्छेदे तत्कार्यं सन्तन्येत ? हेत्वभा-वेपि क्वचित्कार्यं स्यात् तदा स्वपरमतसाधारणैस्स्वाभिमतैश्चाविद्यादिभिर्विनापि तानितानि कार्याणि स्युः अतो नेदं यौक्तिकवाक्य मिति। बाधितानुवृत्तौ परोक्तो दृष्टान्तश्छिन्नमूलत्वाभावादसमंजस इत्याह ( द्विचन्द्रेति ) तिमिरादिदोषस्य सत्यतया बाधकधीशतैरप्यबाध्यत्वात्त्वया तस्य व्यावहारिकसत्यत्वेनाभ्युपगमात्, असत्य-त्वेपि चन्द्रैकत्वज्ञानस्य तदधिष्ठानगोचरत्वाभावेन तद्बाधकत्वायोगाच्चेति भावः। यथा तत्र दृष्टान्ते भयादिनिवृत्त्या बाधकसाफल्यं न तथा त्वदिष्टे स्यादिति सूचयन्

# परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् मिथ्याज्ञानानिवृत्तिरविरुद्धा । प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्त्तते । अपि च भेदवासना-

* श्रुतप्रकाशिका *

व्यावहारिकतयापि परेणाभ्युपगन्तव्यम्, अन्यथा आप्तोपदेशानन्तरं रज्जुसर्पव्यवहारोच्छेदवद्दोषो मिथ्येति वचनानन्तरं दोषनिवृत्त्या चन्द्रद्वित्वादिव्यवहारोच्छेदप्रसङ्गात् अतो दोषस्य विद्यमानत्वाद् भेदभ्रमस्य समूलत्वम्; अनेन बाधकसन्निधौ बाध्यसद्भावः कारणकार्योत्पत्तिश्चेति दूषणद्वयं दृष्टान्ते परिहृतं भवति । परमते तु दूषणद्वयं तिष्ठत्येव, तर्ह्याप्तोपदेशादि वैयर्थ्यमित्यत्राह ( प्रबलेति ) रज्जुसर्पभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिः फलत्वेनोक्ता । आदिशब्दात् पलायनादि गृह्यते, द्विचन्द्रज्ञाने च स्वस्यादुष्टकरणत्वभ्रान्तिनिवृत्तिरौषधादिप्रवृत्तिश्च फलम्; ऐन्द्रजालिकभ्रमादिषु भ्रमहेतोः प्राबल्याद्वस्तुतो भ्रमत्वेप्यसत्यविषयत्वनिश्चयप्रतिबन्धः स्यादिति तद्व्यावृत्त्यर्थः प्रबलप्रमाणशब्दः ( निवर्त्तत इति ) प्रतिभासे विद्यमानेपि विषयसत्यत्वाभावनिश्चयद्वारा भयादिनिवृत्तिहेतुराप्तोपदेश इत्यर्थः । यद्वा, यथावदर्थस्वरूपापरोक्ष्यप्रवृत्तिद्वारा भयादिनिवृत्तिहेतु-

छ तत्त्वटीका छ

यत् न बन्धायेत्युक्तं निरस्यति ( प्रबलेति ) प्रमितप्रामाण्यप्रमाणबाधितत्वादित्यर्थः । अत एवात्र कुहकोत्पादितभयादिव्यावृत्तिः, त्वत्पक्षे तु बाध्यबाधकयोर्द्वयोरपि दोषोत्थत्वेन ज्ञातत्वान्न बाधफलसिद्धिः, लोके बाधितानुवृत्तेरन्यतरविस्रम्भफलहीनस्य यथावन्निरूपणार्थप्रवृत्तिहेतुत्वं च बाधकस्य फलमित्याशयः । सर्पादिभ्रमापेक्षया भयादिकार्योक्तिः, आदिशब्देन विस्मयादि[illegible]णम्; एवं भयाद्यनुत्पादकत्वमभिप्रेत्य न्यायतत्त्वे "बाधितानुवृत्तिदशा[illegible]न किञ्चित्करत्वादुदासीनम्" इत्युक्तम् । तुशब्देन परोक्ताद्वैषम्यं द्योत्यते, न ह्यत्र नाशकसामग्र्यां सत्यां नाश्यसद्भावः, नच हेत्वभावे कार्योदय इति । ननु भयाद्यपि क्षणिकत्वाद् भ्रमवन्न बाधकविनाश्यम्. उत्तरभयानुत्पत्तिश्च भ्रमान्तरानुत्पत्तिवत् प्राक् सिद्धैव, तर्हि बाधतः कथं भयादिनिवृत्तिर्भाष्यते ? उच्यते,—बाधके सति सामग्रीवैकल्याद्भयान्तरा-

निरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वा-

---

* श्रुतप्रकाशिका *

रित्यर्थः । तुशब्दः शङ्काव्यावर्त्तकः । ज्ञानानुत्पत्तिपक्षस्य बहुभिमतत्वात् सिंहावलोकितकेन तं दूषयति ( अपिचेति ) नायं सर्पो रज्जुरितिवददृष्टद्वारा हि भेदनिरासः, अदृष्टमुखेन चेद् भेदसत्यत्वप्रसङ्गात्; अतो भूयस्या भेदवासनाया अल्पीयस्या अद्वैतवासनया निरासोऽनुपपन्न इत्यर्थः । नन्वदृष्टद्वारा निवर्त्यत्वे निवर्त्यस्य सत्यत्वं नानिष्टम्, । ध्याननिवर्त्यसर्पवद्व्यवहारदशायां वासनायाः सत्यत्वाभ्युपगमात; उत्पन्ने तु ज्ञाने तदुत्पत्तिस्थितिविनाशाश्च बाधिताः स्युरिति । नैवम्; ध्याननिवर्त्यसर्पस्यानित्यत्वमेव, न कदाचिदपि बाध्यत्वं सिद्धमिति, तद्वदेवादृष्टनिवर्त्यवासनाया अपि वास्तवसत्यत्वप्रसङ्गात् । नन्वैक्यभावनारूपं निदिध्यासनं प्रतिबन्धनिवर्त्तकं चेदुक्तदोषः स्यात्, तत्तु न प्रतिबन्धनिवृत्त्यै. किन्तु वाक्यार्थज्ञानोदयसहकारीति । नैवम्,- स्मृतिरूपस्य निदिध्यासनस्यानुभवसापेक्षतया

ঔ तत्त्वटीका ঔ

नुत्पत्त्यनुवृत्तिमपेक्ष्य भयादिनिवृत्तिभाषणमिति । जातेपीति- पक्षस्य मन्दत्वव्यक्त्यै सिंहावलोकितेन बहुव्याख्यातृसम्मतायां ज्ञानानुत्पत्तौ दूषणान्तरमाह- ( अपिचेति ) ( कदाचिदपि ) ध्यानात्प्रागिव पश्चादपीत्यर्थः । कल्पकोटिसहस्रध्यानेपीति भावः । ननु यज्ञादिभिः परिमितैरेवानाद्युपचितापरिमितकल्मषनिवर्हणेन ज्ञानोत्पत्तिमिच्छतामिव श्रवणादिभिर्वासनानिरासेन ज्ञानोत्पत्तिः स्यादित्यत्राह ( भेदवासनाया इति ) न ह्यत्र सकृत्स्मृतोपीत्यादिन्यायः, अदृष्टद्वारा निवर्तकत्वे निवर्त्यसत्यत्वप्रसङ्गात्, नच मन्त्रनिवर्त्यवद्व्यावहारिकसत्यत्वाददृष्टनिवर्त्योपपत्तिः, तद्वदेव प्रपञ्चस्यापि तदुपपत्तौ बाधकधीगवेषणवैयर्थ्यात्. स्वरूपत एव निवर्त्तकत्वे तु तादृशशक्तिवैचित्र्ये प्रमाणाभावेन भूयस्त्वादेर्बलाबलप्रयोजकत्वात् । नच भावना स्वरूपत एव वाक्यस्य सहकारिणी. परोक्षानुभव इवापरोक्षानुभवेपि तदन्वयव्यतिरेकादृष्टेः, अदृष्टद्वारा सहकारित्वस्यानभ्युपगमात् ।

दनया तन्निरासानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सि-

* श्रुतप्रकाशिका *

तस्य वाक्यार्थज्ञानजननसहकारित्वायोगात् । ननु यद्यपि परोक्षानुभवस्य ध्यानमनुपकारकं, तथापि निदिध्यासनसहकृतं वाक्यमपरोक्षधीहेतुः स्यात् । नैवम्, निदिध्यासनसहकृतत्वेपि शाब्दत्वादेवापरोक्षधीहेतुत्वायोगात् ज्योतिष्टोमवाक्यवत्. एवं शास्त्रप्रत्यक्षविरोधात्तदविरोधनिर्वाहानुपपत्त्या च वाक्यार्थज्ञानमात्रस्य निवर्त्तकत्वासंभवात् पारिशेष्याद् वाक्यार्थज्ञानादन्यदेव मुक्त्युपायज्ञानं विधित्सितमित्याह ( अत इति ) न केवलं पारिशेष्यम् । तदनुग्राह्याः श्रुतयश्च सन्तीत्याह ॥

ॐ तत्त्वटीका ॐ

अभ्युपगमे तु वाक्यमनपेक्ष्य तस्यैव मनस्सहकारिणस्साक्षात्कारजनकत्वोपपत्तेः । अतः कथञ्चिदपि न वाक्याद्बाधकप्रत्यक्षोदय इत्याशयः । किमित्यादिना प्राग्विकल्पिते मतद्वये दूषितस्य दूषणान्तराण्यवधारणेन सूचयन् स्वमतपरिशेषन्तावदाह ( अत इति ) वाक्यजन्यज्ञानस्य विधेयत्वनिवर्त्तकत्वादेर्युक्तिप्रत्यक्षविरुद्धत्वादित्यर्थः । ( वाक्यार्थज्ञानादन्यदेवेति ) अयंभावः,— वाक्यार्थज्ञानमात्रस्योपायविधाने स्वतस्तत्प्रवृत्तौ दुस्तरं चक्रकम्· नहि ब्रह्मस्वरूपं तत्त्वज्ञानं चाविदित्वा तज्ज्ञानकामना स्यात् । तद्रहितस्य च न तदर्थोपायविधिप्रवृत्ती स्तः, न चोपायानुष्ठानमन्तरेण ब्रह्मधीसिद्धिरिति । ननु स्वाध्यायेऽध्ययनवद्धितैषिप्रेरणया प्रवृत्तिरस्तु । नैवम्,— हितैषिभिरपि निर्विशेषचिन्मात्रब्रह्मज्ञानं सम्पादयेत्युपदेष्टव्यम्. तदा ह्येवंविधब्रह्मधीसदसद्भावयोस्तदुपायानुष्ठानं न स्यात्. अस्मत्पक्षे तु यह्वाकारविशिष्टे ब्रह्मण्यावृत्तिनैरन्तर्यादिविशिष्टकालान्तरभाव्यतिशयितज्ञानार्थप्रवृत्तौ यथालोकं न विरोधः । लोकसिद्धप्रक्रियानभ्युपगमे स्वप्रवृत्त्यादिविरोधस्स्यात्. नच नित्यप्रत्यक्षनिर्विशेषवस्तुवादिनस्तव तु वाक्यतोऽन्यतो वा तद्विषयातिशयितधीश्शक्येति । ननु मोक्षोपायविधित्सितत्वोक्तिरयुक्ता. विधिशब्दानामिह पुरुषार्थभूतवाक्यजन्यज्ञानानुवादनिष्ठत्वात्. ध्यानादेस्तु तदर्थतया चोदनात्, न चान्यानुपपत्तिमात्रात्तदन्यत्सर्वमुपपद्यते. विविधानि च ज्ञानानि स्मृतिदर्शनादिश-

तम्। तथा च श्रुतयः [1]"विज्ञाय प्रज्ञां कुर्वीत" [2]"अनुविद्य विजानाति" [3]"ओमित्येवात्मानं ध्यायथ" [4]"निचाय्य तं मृत्युमुखात्प्रमुच्यते" [5]"आत्मानमेव लोकमुपासीत" [6]"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [7]"सोऽन्वेष्टव्यः स विजिज्ञासितव्यः"

* श्रुतप्रकाशिका *

( तथाचेति ) विज्ञायेत्यादिवाक्यद्वये ज्ञानसामान्यशब्दः वाक्यद्वयोपादानं च उपसर्गभेदेपि विधिप्रत्ययान्तत्वतद्राहित्ययोश्चार्थभेदो नास्तीति ज्ञापनार्थम्। ( ध्यायथेति ) विशेषशब्दः । ( निचाय्येति ) ध्यानस्य प्रत्यक्षसमानाकारता दर्शिता । "चायृ दर्शने" इति हि धातुः । ( उपासीत ) इत्यनेन ज्ञानस्योपासनशब्दवाच्यत्वं सिद्धम्। ( अन्वेष्टव्य ) इति मननशिरस्कश्रवणोक्तिः । निदिध्यासितव्यः— विजिज्ञासितव्य इत्युपादानेन सनन्तत्वेपीष्यमाणज्ञानपरं वाक्यमिति दर्शितम् । सनन्तपदद्वयस्योपादानं सामान्यविशेषशब्दत्वात् । ( इत्येवमाद्या इति ) इतिशब्द उपात्तश्रुतिवाक्यस्वरूपमात्रपरः, एवंशब्दः सनन्तत्वविधिप्रत्ययान्तत्वतद्राहित्योपसर्गभेदादिप्रकारपरः । .... .... .... ....

ॐ तत्त्वटीका ॐ

शब्दैर्व्यपदिश्यन्त इत्यत्राह ( तथाचेति ) यथा वाक्यजन्यज्ञानादन्यो मोक्षोपायो द्रष्टव्य इत्यादिभिर्विधित्सितः, न च ध्यानाद्यनेकशब्दोपात्तोप्येकतया सिद्ध्येत्तथैवेत्यर्थः। चः पारिशेष्येण सहसमुच्चयार्थो वा। अत्र वेदनादिशब्दानां ध्यानादिशब्दोक्तविशेषपरतामुपसर्गभेदसन्विधिप्रत्ययसदसद्भावैरर्थभेदाभावंच व्यंक्तुमीदृशबहुवाक्योपादानम्, उपात्तवाक्यप्रकारवैचित्र्यपर इतिशब्दः, तेषां विधिपरत्वसाम्यार्थ एवंशब्दः अनुपात्तेषु न्यायसंचारार्थमाद्योक्तिः । प्रज्ञां कुर्वीत, विजानातीत्यादौ न वाक्यार्थज्ञानादन्यत्वं भातीत्यत्र 'छागो वा मन्त्रवर्णात्, इतिन्याय-

१– बृ. उ. ६. अ. ४. ब्रा. २१. वा. ॥
२– छा. उ. ८. प्र. १२. ख. ६. वा. ॥
३– मुण्ड. उ. २. मुण्ड. २. मु. ६. वा. ॥
४– कठ. उ. १. अ. ३. वल्ली. १५. वा. ॥
५– बृ. उ. ३. अ. ४. ब्रा. १५ वा. ॥
६– बृ. उ. ६. अ. ५. ब्रा. ६. वा ॥
७– छा. उ. ८. प्र. ७. ख. १. वा. ॥

**इत्येवमाद्याः। अत्र निदिध्यासितव्यः इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीत" इत्येवमादिभिर्वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् 'अनु-**

* श्रुतप्रकाशिका *

उदाहृतवाक्येषु ज्ञानसामान्यवाचिपदानां विशेषाकाङ्क्षायां वाक्यार्थज्ञानस्वरूपो विशेषः पर्यवसानभूमिः स्यादिति शङ्कानिवृत्त्यर्थमाह (अत्रेति) अत्र—उपात्तेषु वाक्येषु। इत्येवमादिभिर्ध्यानं विधीयत इत्यन्वयः। (निदिध्यासितव्य इत्यादिनेति) आदिशब्देन सन्‌रहितज्ञानविशेषवाचिवाक्यान्तरं विवक्षितम् ऐकार्थ्यं च सर्वशाखाप्रत्ययन्यायात्, सह्यनुक्ताकांक्षितस्वीकारफलः, तत्र 'ध्रागोवा मन्त्रवर्णादिति' न्यायात् सामान्यवाचिशब्दानां विशेषपर्यवसानम्। "अनुविद्य विजानाति" "विज्ञाय प्रज्ञां कुर्वीते" त्यत्र केन पदेन वाक्यार्थज्ञानमनूद्यते? केन वा ध्यानं विधीयते? इत्यपेक्षायामाह (अनुविद्य विज्ञायेत्यनूद्येति) अनुवादः किमर्थः? इत्यत्राह (ध्यानोपकारकत्वादिति) प्रज्ञां कुर्वीत विजानातीति वाक्य-

* तत्त्वटीका *

मभिप्रेत्याह (अत्रेति) श्रुतेषु तेषु वाक्येष्वित्यर्थः। निर्द्धारणे सप्तमी। ऐकार्थ्यमिहैकप्रयोजनत्वमेकविषयत्वं वा, तच्चात्र शाखान्तरपुरस्कारेण सामान्यविशेषन्यायसिद्धम्. प्रथमेनाथशब्देन ध्यायथेत्यादेः, द्वितीयेन विजिज्ञासितव्य इत्यादेश्च ग्रहणम्, अनुवादे तात्पर्यसिद्धयर्थम् अनुवाद्यस्य विधेयान्वयार्थं च ध्यानोपकारकत्वोक्तिः, तच्च ध्येयोपस्थापकत्वम्। नन्वत्रानुविद्येत्यादौ दध्नेत्यादिवद्गुणविधिस्तु सद्गुणकर्मश्रवणे हि वाक्यं गुणपरमिति नीतिविदः। विशिष्टविधौ गौरवात् कर्ममात्रविधौ गुणश्रुतिवैयर्थ्यात्. कर्मपदन्तु विधेयस्य गुणस्याश्रयसमर्पणे सार्थकं स्यादिति। मैवम्;—होमवदिह ज्ञानार्थस्य प्राप्तत्वे ह्यनूद्य गुणो विधीयेत, तदसंगत्या विशिष्टविधिरस्त्विति शङ्कानिरासार्थमनूद्येत्युक्तम्। अयं भावः,—क्त्वान्तस्याख्यातान्तस्य चैकार्थ्ये पौर्वापर्यविरोधः, कस्य च केन वैशिष्ट्यम्. सजातीयाभ्यासे तु ज्ञानमभ्यसेदित्येवालम् उपसर्गभेदश्च विफलस्स्यात् भिन्नार्थत्वे विजानातीत्यादेरप्राप्तविषयस्य ध्यानवत् पश्चात् पठितस्य पश्चाद्भाविनि विधेये ध्याने विश्रा-

विद्य' 'विज्ञाय' इत्यनूद्य 'प्रज्ञां कुर्वीत' 'विजानाती' ति ध्यानं विधीयते । श्रोतव्य इति चानुवादः– स्वाध्या-

*श्रुतप्रकाशिका*

द्वयोपादानस्य पूर्वोक्तमेव फलम् । एवं स्मृतिष्वपि सामान्यशब्दः सति विशेषोपस्थापके तत्पर्यवसितो दृष्टः ।

"निषिद्धभक्षणं जैह्म्यमुत्कर्षेण वचोऽनृतम् ।
रजस्वलामुखास्वादः सुरापानसमानि तु ॥"

इत्यत्र निषिद्धसामान्यस्य भक्षणसामान्यं पातित्यहेतुरवगतम् ।

"छत्राकं विड्वराहं च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः" ।

इत्यत्र निषिद्धविशेषस्य भक्षणविशेषः पातित्यहेतुर्दृष्टः । अत्र पूर्वग्रन्थश्चरमग्रन्थार्थे पर्यवस्यति । भवतु सामान्यशब्दो विशेषपर्यवसायी, अत्र तु ज्ञानसामान्यवाचिशब्दः श्रोतव्य इति श्रवणरूपज्ञानविशेषे पर्यवस्यत्वित्यत्राह । (श्रोतव्य इति चेति) चः शङ्कानिवृत्तौ समुच्चये वा, विज्ञायानुविद्येतिवदयं चानुवाद इत्यर्थः । तत्सङ्क्षेपेणोपपादयति (स्वाध्यायस्येति) आपातप्रतीत्या स्वतः प्राप्तिः

❀ तत्त्वटीका ❀

न्तिर्न्याय्या, वाक्यार्थधीस्तु प्राप्तत्वान्न विधेयो गुणः. तत एव न तदर्थं श्रवणादि. तत्प्रधानध्यानविधानस्य युक्ततमत्वाच्च न चान्यत् किमपि ज्ञानमिह गुणत्वेन विधेयतया शङ्कनीयम् । यदि तु विजानातीत्यादेः वाक्यार्थज्ञाने विश्रमः तदा अनुविद्येत्यादेर्न विधेयमनुत्पाद्यं वा ज्ञानान्तरं दृश्यते, न च ध्यानं तद्गुणतया विधेयम्. परोक्षं प्रत्यक्षं वा वाक्यार्थज्ञानं प्रति तत्साधनत्वासम्भवस्य दर्शितत्वादिति । स्थानैक्याद्विधिप्रत्ययरहितेऽपि विधिपरत्वव्यक्त्यै बुद्धिस्थक्रमेण प्रज्ञां कुर्वीतेत्यस्य पूर्वं पाठः ध्यानस्य, निचाय्येत्याद्युक्तवैशिष्ट्यविशिष्टत्वादुपास्युक्तप्रकर्षविशिष्टत्वाच्चोपसर्गद्वयसाफल्यम् । अनुवादयोरप्युपसर्गद्वयमनुवाद्यस्याभ्यासं स्पाष्ट्यं च व्यनक्ति (अनुविद्य विज्ञायेति) विज्ञानस्य निदिध्यासितव्य इति स्थाने पाठाच्छ्रावणानन्तरभाविमननविषयान्वेषणशब्दानन्तरपाठाच्च विजिज्ञासितव्य इत्येतन्नि-

यस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्तन्निर्णयाय स्वयमेव श्रवणे प्रवर्त्तते— इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य 'मन्तव्य' इति चानुवादः, तस्माद्ध्यानमेव विधीयते ।

* श्रुतप्रकाशिका *

श्रवणस्य स्यात्, मननस्य तादृशहेतुत्वाभावात्तत्र पर्यवसानमस्त्वित्यत्राह (श्रवणप्रतिष्ठार्थत्वादिति) चः पूर्ववत् (तस्माद्ध्यानमेवेति) न तु वाक्यार्थज्ञानमित्यर्थः । ननु श्रोतव्य इति पुस्तकनिरीक्षणादिव्यावृत्त्यर्थो विधिः किं न स्यात्? नैवम्— वेदान्तवाक्यानामपि पुस्तकनिरीक्षणादिव्युदासस्याध्ययनविधिसिद्धत्वात्, ब्रह्ममीमांसाया विलेखनपठनादेरप्रतिषिद्धत्वात्, गुरूपसत्तौ श्रवणशब्दस्य मुख्यार्थत्वाभावात्तस्याश्चात्राविहितत्वेपि "गुरुमेवाभिगच्छेदि" तिवाक्यान्तरसिद्धत्वाच्च । ननु, न्यायोपेतवाक्यमात्रानवगम्यकेवलोपदेशगम्यार्थविशेषश्रवणं श्रोतव्य इति

छ तत्त्वटीका छ

दिध्यासनस्थानापन्नम् उपायविषयविज्ञानवेदनादिसामान्यशब्दानां तव्यप्रत्ययान्तोक्तश्रवणरूपज्ञानविशेषे विश्रमः किं न स्यादित्यत्राह । (श्रोतव्य इति) कथमात्रहेतुकस्तव्यप्रत्ययबाध इत्यत्राह (स्वाध्यायस्येति) अयं भावः,— श्रुतेरर्थपरत्वाभावाद्वा विचारस्य प्रवर्तकत्वाभावाद्वा तदवसराभावाद्वा मीमांसा नारभ्येति शङ्का निरस्ता । श्रोतव्य इत्यस्य च गुर्वभिगमनादौ शब्दशक्तिर्नास्ति । अतो निर्णयार्थव्यापारपरत्वे प्राप्तार्थत्वमिति । नन्वस्ति विधेयमारम्भणसंशीलनरूपमननम्, तच्च मन्तव्य इति विवक्षितुं युक्तम्. तत्र वेदनादीनां विश्रान्तिस्स्यादित्यत्राह (श्रवणेति) अप्रतिष्ठितस्य ध्यानानुपकारित्वात्तत्प्रतिष्ठापकतया कांक्षितं तदनन्तरपठितं यौक्तिकं मननम्. अतस्तदपि रागाद्यनुवृत्त्या प्राप्तत्वादनुवाद्यमेवेति भावः । एतेन श्रवणादित्रिकं दर्शनसाधनतया विधीयत इति कैश्चिदुक्तस्य युक्तिविरोधः ख्यापितः । ननु श्रोतव्यो मन्तव्य इत्येताभ्यामुपदेशैकगम्यार्थश्रवणमात्रं विधेयमस्तु, आहुश्च केचित् 'सांख्ययोगोपदेशः श्रवणादिक' मिति । अत्राह (तस्मादिति) प्राप्ताप्राप्तविवेकात् तत्सिद्धाद्वा परिशेषादि-

* श्रुतप्रकाशिका *

विधेयमिति चेन्न,— मननपूर्वभावितयाऽस्य श्रवणस्य न्यायानुगृहीतवाक्यजन्यज्ञानरूपत्वावगमात् शब्दस्वारस्याच्च । न च मन्तव्य इत्यालम्बनसंशीलनरूपमननविधिरिति वाच्यम्;— श्रवणशब्दस्य न्यायोपेतवाक्यजन्यज्ञान इव मन्तव्यशब्दस्य तत्प्रतिष्ठापने प्रसिद्धिप्राचुर्यात्तस्य चापवादाभावात्, उभयोरप्राप्तार्थद्वयविधायित्वे वाक्यभेदप्रसङ्गात्, सति गत्यन्तरे विशिष्टविधानाश्रयणस्यान्याय्यत्वाच्च, विधिर्हि पदावगतेष्वर्थेष्वेकत्रोपक्षीणशक्तिर्लाघवाय तदितरेषु स्वतोऽनुवादमपेक्षमाणः प्रापकाभावाद्विशिष्टे तात्पर्यं भजते, अत्र त्वनुवादसम्भवान्न विशिष्टविषयत्वकल्पनं युक्तम्, तस्मादनुवादः, अनेन श्रवणशब्दस्य यादवमिश्रोक्तनिर्वाहो निरस्तः । अत्र द्रष्टव्यशब्द उपायोपेयदशासाधारणत्वादुपरि नियामकस्फुटार्थवाक्यान्तरेण सह व्याख्यास्यते । ननु न साधारणत्वं द्रष्टव्य इति- तव्यतादर्शनस्य विधेयत्वप्रतीतेः, फलस्य चाविधेयत्वात् । उच्यते, निदिध्यासनवद्दर्शनस्य, च विधाने वाक्यभेदप्रसङ्गात्, निश्चितानुवादश्रवणमननसाहचर्याच्च विधित्वनिश्चयप्रतिबन्धादुपास्यदर्शनरूपत्वविषयप्रमाणादर्शने विशिष्टविधित्वाश्रयणायोगात्. "मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके परात्परं पुरिशयं पुरुषमीक्षते"

७ तत्त्वटीका ७

त्यर्थः । एवकारः श्रवणमननयोर्ज्ञानमात्रस्य सन्प्रत्ययवाच्येच्छायाश्च व्यवच्छेदार्थः । द्रष्टव्य इत्यस्यापि ध्यानविशेषणवादितया पृथग्विधितात्पर्यव्युदासार्थो वा । अयंभावः, श्रोतव्यो मन्तव्य इत्यनयोरवैधप्रसिद्धोपकारकत्वसम्भवे तद्विपरीतक्लृप्तेरयुक्तत्वाच्छ्रोतव्य इत्यादेः श्रवणादिचतुष्टयविधिपरत्वे वाक्यभेदापत्तेरत्र विकल्पस्याष्टदोषदुष्टतया गुरुलघुविषतया चात्यन्तासम्भवात् क्रमभाव्युपकारस्य श्रवणादेस्समाधिरूपाङ्गिना समुच्चयासम्भवाद्विशिष्टविधेर्गत्यन्तराभावनियतत्वाद्ध्यानस्य दर्शनरूपतायाः श्रुत्यन्तरानुसारेण साधयिष्यमाणत्वादत एव निपूर्वस्यपि ध्यायतेरिह पदान्तरस्फुटोपात्तदर्शनरूपतावैशिष्ट्योक्तावुदासीनत्वाद्द्रष्टव्य इत्यस्यानुवादसमभिव्याहारेपि स्वरसावगतविधिपरत्वप्रहाणेन फलानुवादपरत्वकल्पनानुपपत्तेः 'श्रोतव्यः श्रुतिवाक्येभ्य' इत्यादिश्लोकेपि श्रवणादित्रिकस्य क्रमाद्दर्शनहेतुत्वमात्रोक्तौ साध्यस्यापि विधेयत्वे विरोधाभावाच्च रागप्राप्तश्रवणादिपूर्वकं विधिपदान्त-

वक्ष्यति च [1]"आवृत्तिरसकृदुपदेशात्" इति। तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात् [2]"मनो-

* श्रुतप्रकाशिका *

इत्यादिभिः फलदशायां दर्शनस्य प्रामाणिकत्वाच्च श्रोतव्य इतिवत्तव्यदर्थमनादृत्य फलसमर्पकत्वं द्रष्टव्यशब्दस्य शङ्कितुं युक्तमिति. अत उपरिष्टाद्व्याख्येयत्वम् । अथोपासनस्य विधित्सितत्वद्रढिम्ने सूत्रकारोक्तिं दर्शयति ( वक्ष्यति चेति ) तादृशसूत्रासम्भवव्युदासाय सूत्रमुपादत्ते ( आवृत्तिरिति ) उपासनशब्दाश्रवणात् सूत्रस्य तत्परत्वमस्फुटमिति तस्यार्थमाह ( तदिदमिति ) आवृत्तिद्वयत्रयव्यावृत्त्यर्थमसकृदिति सौत्रं पदम्। कस्यावृत्तिः ? इत्यपेक्षायामाह ( तदिदं वेदनमिति ) तदिदं तृतीयाध्यायावसाने एवं मुक्तिफलानियमस्तदवस्थावधृतेरिति प्रस्तुतं मोक्षफलं ज्ञानमित्यर्थः । यद्वा, प्रज्ञां कुर्वीतेत्यादिसामान्यशब्दोक्तं वेदनमसकृदावृत्तिरूपमुपासनमित्यर्थः । ( अवगम्यत ) इत्यन्तेनावृत्तिरसकृदिति सूत्रांशो व्याख्यातः, उपदेशादिति पदं व्याचष्टे ( विद्युपास्योरिति ) स्थलत्रयमुदाहरति ( मन इति )

* तत्त्वटीका *

रोपात्तदर्शनाकारविशेषितध्यानमेवात्र विधेयमिति । एवं वेदनादिशब्दानां स्वोक्तविशेषविधिविश्रमानभ्युपगमे सूत्रविरोधमपि सूचयति ( वक्ष्यति चेति ) चिन्तनार्थो हि ध्यायतिरेकविषयमसकृदावृत्तं ज्ञानं वक्ति, अतो ध्यानविषय उपदिष्टं वेदनं ध्यानमेवेति प्रकृतसिद्धिः । तथोपास्तिरपि 'तस्मिन् यदन्तस्तदुपासितव्यम्' इत्यादिभिरुपात्तः, अतो यज्ञादिसापेक्षत्वानुगुणमुपदेशादित्यनेनैव संगृहीतम्। प्राक् प्रतिज्ञातमुपासनाख्यविशेषे वेदनादिसामान्यशब्दानां विश्रममाह ( तदिति ) तत्तदुक्त्यावनिर्द्धारितविशेषमिदम् । गुरुतरध्यानादिसाध्यसाधनतया विधानाद्विशेषदृष्टौ तदेकतापत्त्यर्हं तद्धेतुं व्यनक्ति ( अपवर्गोपायतया विधित्सितमिति ) ( उपासनमित्यवगम्यत इति ) तुल्यप्रकरणस्थोपासिसमानविषयवेदनादिशब्दनिर्दिष्टत्वादिति भावः । 'उपदेशात्' इति सूत्रितमेकप्रकरणस्थविशेषमन्यमपि हेतुमाह

१- शारीर. ४. अ- १. पा. १. सू. ॥ २- छा. उ. ३- प्र. १८. ख. १. वा ॥

ब्रह्मेत्युपासीत" इत्यत्र "भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद [1]"न स वेद अकृत्स्नो ह्येष आत्मेत्येवोपासीत" [2]"यस्तद्वेद यत्स वेद स मयैतदुक्तः" इत्यत्र- [3]"अनु म एतां भगवो देवतां

* श्रुतप्रकाशिका *

मनो ब्रह्मेति वाक्यं 'रात्रीरुपेया' दितिवत् 'प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ती' त्यत्र य एता रात्रीरिति सत्रानुवादवत् य एवं वेदेति पूर्वविहितोपासनस्य फलार्थमनुवादः । वितरणविक्रमादिहेतुभेदात् कीर्त्तियशसोर्भेदः । मनो ब्रह्मेत्युपासीतेत्यादिप्रकरणे यस्तद्वेदेत्यादिप्रकरणे च वेदनोपासनवाचिशब्दयोर्विप्रकर्षात् प्रकरणैकत्वज्ञापनायात्रेत्युक्तम् ( अनु म ) इति यां देवतामुपास्से एतां देवतामनुशाधि, अनुपूर्वः शासिर्विविच्य ज्ञापनार्थः, विविच्य ज्ञापयेत्यर्थः, । "व्यवहिताश्चे" ति सूत्रेण छन्दस्युपसर्गाणां व्यवहितप्रयोगः । न स वेदेत्यत्र सन्निकर्षादत्र-

छ तत्त्वटीका छ

( विद्युपास्योरिति ) मन इत्यादावुपासिरादौ विदिरन्ते । यस्तदित्यत्र तु तद्विपरीतम्, 'तन्न स वेदेत्यत्र तूभयत उपास्तिः 'अथ योऽन्यां देवतामुपास्त' इत्युपक्रमात् मिथस्तत्स्थानापत्तिरिह व्यतिकरः । नन्वतः 'मनो ब्रह्मेति' दृष्टिविधिः, अन्यच्च वाक्यद्वयं विद्याविशेषस्थम् ।

एकत्र शब्दवृत्तिर्या स्थिता सान्यत्र संचरेत् ।
तत्तुल्ये ऽपीत्यभिप्रेत्य दर्शनादिति भाष्यते ॥ छ ॥

य एवं वेदेति न शास्त्रार्थवेदनमात्रोक्तिः । विहितस्याकांक्षितफलमनिर्दिश्याविहितान्यानुवादेन तत्फलोक्तेरयुक्तेः । ननु भूमविद्योपक्रमे ' स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथा कामचारो भवति, इति फलविशेष उक्तः, तेनैव नैराकांक्ष्यं स्यात् । मैवम्,—तृतीयप्रपाठकस्थस्यास्योपासनप्रकरणभेदात् पुनः

१- बृ- उ. ३- अ. ४- ब्रा. ७. वा ॥ -३ छा. उ. ४. प्र. २. ख. २. वा ॥
२- छा. उ. ४. प्र. १- ख. ४. वा ॥

शाधि यां देवतामुपास्से" इति ॥ .... .... ....

* श्रुतप्रकाशिका *

शब्दाप्रयोगः । न स वेदेत्यस्य "अथ योऽन्यां देवतामुपास्त" इत्येतद्वाक्यपूर्वकत्वादुपक्रमोपसंहारयोरुपासनशब्दः, मध्ये वेदनशब्दः, इदं च पूर्वस्मिन्वाक्ये उपक्रमोपसंहारदर्शनादित्येतेनाभिप्रेतम् । यस्तद्वेद तस्य ब्रह्मणो वेदिता यो रैकः, यत्स वेद- तस्य रैकस्य वेद्यं यद्ब्रह्म, स वेदिता रैक एतद्वेद्यं च उभयं तव मयोक्तमित्यर्थः । सामान्यविशेषन्यायेन प्रकरणान्तरोक्तज्ञानसामान्यवाचिशब्दानां प्रकरणान्तरोक्तविशेषे पर्यवसायित्वं पूर्वमेव स्वयमेव हि भाष्यकारेण दर्शितम् । सूत्रव्याख्याने त्वेकैकप्रकरणे व्यतिकरेणोपक्रमोपसंहारदर्शनमुपदेशादिति पदस्यार्थत्वेनोक्तम् । उभयत्रोभयं हेतुत्वेन वाच्यम्, तथाप्यविस्तरार्थमेकैकमुक्तम्; अत एव हि चतुर्थाध्याये उभयमपि हेतुत्वेन वक्ष्यते । तदिदमित्यादिकं सूत्रव्याख्यानम् । अन्यथा तदिदमपवर्गोपायतया विविदिषितं वेदनमिति नोच्येत, किन्तु ध्यानमुपासनमित्येवोच्येत, इतरथा शृङ्खलितोक्तिप्रकरणानौचित्यात्; पश्चादपि ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपमिति पूर्वप्रकृतध्यानशब्देन निर्देशात्. पूर्वग्रन्थे ध्यानस्योपासन-

ꣳ तत्त्वटीका ꣳ

श्रुतिवैयर्थ्याच्च विधेयान्तरत्वे सिद्धे सन्निहितफलेनैव समन्वयोपपत्तेः, अतोऽस्मिन्नर्थवादे विदिनोपासनमनूद्य तत्फलविधिर्युक्तः । रात्रिसत्रन्यायश्चात्राभिप्रेतः । दानादिजन्या प्रथा कीर्त्तिः, पराक्रमजन्यन्तु यशः, कीर्त्या यशसा च भाति. ब्रह्मवर्चसेन तपतीति योज्यम् । मध्यमवाक्येऽत्रेत्यनुक्तिरासन्नत्वात् । यस्तदित्यादौ यस्तद्ब्रह्म वेद यच्च ब्रह्म स वेद स वेदिता रैकः तद्वेद्यमेतद्ब्रह्म चेति द्वितयं तवोक्तमित्यर्थः । 'गामश्वं पुरुषं जगदि' त्यादिष्विव चकारानुक्तिनपुंसकमभिव्याहारादुक्तमिति विवरणमूहनीयम् । वेद्यं प्रति स वेदितृत्वेनोक्त इति वा नेयम्, अथवा यत् स रैको वेद तदेवान्यो यो वेद एवं सर्वं तदभिसमेति यत् किञ्चित् प्रजाः साधु कुर्वन्तीति पूर्वत्रान्वयः । (स मयैतदुक्तः) इत्यत्र एतदिति क्रियाविशेषणम्, स मयैव मुक्त इत्यर्थः । अस्यां व्याख्यायां प्रकरणानुगुण्याद्वैशिष्ट्येन भवितव्यमिति जानश्रुतेस्सूच्यते । अनुशाधि—विविच्य ज्ञापयेति यावत् ।

**ध्यानं च-तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्। [1]"ध्रुवास्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः"**

* श्रुतप्रकाशिका *

रूपत्वं विवक्षितं चेत् पश्चादुपासनमविच्छिन्नस्मृतिसन्तानरूपमित्युपासनशब्देनोच्येत । एवं प्रकृतसूत्रार्थे ऽवधृते पूर्वप्रकृतस्य ध्यानस्य ध्रुवानुस्मृतित्वमुपपादयति (ध्यानं चेति) वेदनस्यासकृदावृत्तिं वदतः सूत्रकारस्यायं भावः;– यथा ज्ञानसामान्यवाचिनां शब्दानां विशेषपर्यवसायित्वेनासकृदावृत्तिरूपज्ञानपरत्वं सिद्धम्, एवं विशेषान्तरोपस्थापकेषु सत्सु तद्विशेषपर्यवसायित्वं न्याय्यमिति । तस्मात्सूत्रकारेण कण्ठोक्तां ज्ञानस्यासकृदावृत्तिरूपतामुपपाद्य तेनाभिप्रेतं श्रुत्यन्तरोपस्थापितं विशेषान्तरमाह— ध्यानं चेति । अनेन ग्रन्थेनासकृदावृत्तेर्व्यवहितत्वशङ्कानिरासार्थं विजातीयप्रत्ययान्तराव्यवहितत्वमुक्तम्। अत्र विच्छिन्नाविच्छिन्नस्मृतिसन्ततिसाधारणो ध्यानशब्दश्चेत्, ध्यानं चेत्यादिना विशेषान्तरे पर्यवसानमुक्तं भवति, ध्यानशब्दस्याविच्छिन्नस्मृतिसन्तत्यसाधारणत्वे ध्यानशब्दो व्याख्यातो भवति । अविच्छिन्नस्मृतिसन्ततित्वे वचनमाह (ध्रुवेति) स्मृतेर्ध्रुवत्वं नाम- विजातीयप्रत्य-

ཀ तत्त्वटीका ཀ

एवं वेदनस्य प्रस्तुतध्यानोपासनशब्दवाच्यत्वमित्युक्तम्, नतु ध्यानस्योपासनत्वमिहोच्यते 'वेदनमुपासनमित्यवगम्यते विद्युपास्यो' रित्यादिभाषणात्, वेदनमुपासनं स्यादिति प्रदर्शयिष्यमाणवाक्यसंवादाच्च. ध्यानोपासनशब्दयोरेकविषयत्वं, ध्यानस्य प्रतिकूलध्यानाद्व्यावृत्तिश्चेहार्थादेव सिद्ध्यतः, यदि ध्यानमिहोपासनत्वेन शब्दतो विशेष्यते तदा ध्यानस्य पुनराकारान्तरोक्तौ शृङ्खला भज्येत । ननु ध्यानशब्दश्चिन्तामात्रवाची व्यवहितस्मृतिसन्तानेपि स्यात्। स्मृतिमात्रे च क्वचित् प्रयुज्यते, सूत्रे च ध्यानोपासनशब्दाभ्यामसकृदावृत्तिमात्रमुक्तमित्यत्र तदभिप्रेतं श्रौतनैरन्तर्यरूपविशेषमाह (ध्यानं चेति) यावज्जीवाग्निहोत्रनयाद्वा स्वरूपेण चिरकालस्थायितया वा ध्रुवत्वं स्यादिति शङ्कानिरासाय सदृष्टान्तस्सन्तानशब्दः, एवं विच्छिन्नाविच्छिन्नवेदनासाधारणस्य ध्यानस्य विशेषे विश्रम उक्तः; अविच्छिन्ना-

१- छा. उ. ७ प्र. २६- ख. २- वा ॥

इति ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृति-

* श्रुतप्रकाशिका *

यान्तराव्यवहितसन्ततित्वम्, स्मृतिव्यक्तीनां क्षणिकत्वात्। (अपवर्गोपायत्वश्रवणादिति) तत्रापवर्गोपायभूतवेदनस्यासकृदावृत्तिरुक्ता। अत्रापि तदुपायत्वप्रत्यभिज्ञानात्तस्यैवाविच्छिन्नसन्ततिरूपत्वं विवक्षितमिति भावः। तस्याः दर्शनरूपत्वमुच्यते (सा चेति) न केवलं विषयैक्यतः साम्यम्, अपित्वापरोक्ष्येणापीत्याकार-

* तत्त्वटीका *

साधारण्यं वा स्थापितम्, स्वस्थाने चैतत् सूत्रयिष्यति "ध्यानाच्च' अचलत्वं चापेक्ष्य" इति। उपासनशब्दस्याविच्छिन्नविषयत्ववत् ध्यानशब्दस्याप्यविच्छिन्नविषयत्वमिह स्थाप्यत इति तूलिका। उक्तं श्रुत्योपपादयति (ध्रुवेति) स्मृतेर्ध्रुवत्वम्- विसदृशबुद्धिव्यवधानरहितप्रवाहत्वम्। 'तद्रूपप्रत्यये चैका सन्ततिश्चान्य निस्पृहा' इत्यादिना तथोक्तेः। यद्यपि 'नानाशब्दादिभेदा' दित्यत्र फलसंयोगैक्यमात्रान्न विद्यैक्यमिति वक्ष्यते, ध्यानत्वोपासनत्वध्रुवत्वादयश्च विशेषा विद्यान्तरपठिताः। तथापि साधारणानां वेदनादिशब्दानां विशेषविषयत्वाभावे फले च तारतम्यरहिते गुरुलघूपायभेदविधिदौस्थ्यं गुरुलघुविकल्पायोगलक्षणं च। वस्तुसामर्थ्यं प्रकरणाद्बलीयः अतस्स्मृतेर्ध्रुवत्वम्. इदमेकत्र श्रुतमपि सर्वासु विद्यासु योज्यमित्यभिप्रायेण (अपवर्गोपायत्वश्रवणा) दित्युक्तम्। स्मृतिलम्भे—आहारशुद्ध्यादिक्रमेण प्रस्तुतध्रुवानुस्मृतिसिद्धावित्यर्थः। ग्रथ्यत एभिः क्षेत्रीति ग्रन्थयः। धर्माधर्मरागद्वेषमोहादयः कर्मोपनीताश्च त्रिगुणविकारभेदाः, ते च मायापारग्रन्थितयासागमोक्ताः। विप्रमोक्षः— विभज्यात्यन्तिकमोचनम्।

ननु भ्रान्त्या बन्धस्सर्वेष्टः, तस्य कथमप्रमा स्मृतिर्बाधिका भ्रान्त्यधीनकर्मविषयस्य स्वयं भ्रान्तिविषयत्वासिद्धेः, भ्रमोत्थस्यापि भयशङ्काविषजन्यज्वरादेरिव बन्धस्य सत्यतया युक्तोयमीदृशः प्रतीकारविधिः, मिथ्यात्वपक्षेपि प्रायश्चित्तादिन्यायो दुस्त्यजः। अतो निवर्त्यस्य सत्यमिथ्यात्वे निवर्तकस्य मानामानत्वे अनादृत्य चोदितत्वात् सफलसाधनत्वं ग्राह्यम्. वेदवाक्यनायात्त ध्यानरूपा स्मृतिर्नाशिनी त्वयैवोक्ता, तदत्र शुक्तिरजतवन्न बन्धस्य बाधः, नाशस्तु यथाविधि स्मृत्या प्रमित्या वा स्यात्। नचेयं स्मृतिरप्रमाप्ययथार्था स्वहेतुर्न्नामत्यनन्यविष-

दर्शनसमानाकारा [1]"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे

* श्रुतप्रकाशिका *

शब्दस्य भावः । हृदयस्य–मनसः. ग्रन्थयो–रागादयः । यद्वा, मर्माः क्रोशन्तीति-

७ तत्त्वटीका ७

यत्वात् । उक्तञ्च सामान्यतः श्रीमद्गीताभाष्ये· स्मृतिर्नाम– पूर्वानुभूतविषयमनुभवसंस्कारमात्रजं ज्ञानम्, इति । पूर्वानुभूतविषयत्वं न लक्षणप्रविष्टम्, किन्तु विषयसत्यत्वासत्यत्वयोः सहेतुधीसामान्यज्ञप्त्यर्थम् ।

निवृत्ततदवस्थस्य तदवस्थतया स्मृतौ ।
याथार्थ्यं न प्रतिक्षेप्यं भूतभाविप्रमा क्रमा ॥ ७ ॥
स्मृतिप्रमोषे चार्थस्य तादवस्थ्यं न भासते ।
अयाथार्थ्यं कथं तत्र तत्तेदन्ताविवर्जिते ॥ ७ ॥
अतो मूलानुसारेण यथादर्शनमिष्यताम् ।
यथार्थाचाऽयथार्था च स्मृतिरप्यनुभूतिवत् ॥ ७ ॥
अन्यदृष्टिस्तथान्यत्र क्वेलध्वंसादिकृन्मता ।
परविद्यास्वपि ह्येषा कचिदंशेषु गृह्यते ॥ ७ ॥
अतः श्रुतिस्मृतिशतैश्चोदिता स्मृतिरूपिणी ।
भाष्यते परविद्येयं भवारम्भस्य निष्कृतिः ॥ ७ ॥

ननु ध्यानमेवेत्याद्ययुक्तं, तदपि धारणावत्समाध्यर्थतयोक्तम्, समाधिरेव तु दर्शनात्मकः 'आत्मानं पश्ये' दित्यादिभिर्मुक्तिहेतुरुक्तः, न च योगिप्रत्यक्षमनभ्युपगतम्, तस्य बहुषु प्रदेशेषु भाष्यमाणत्वादित्यत्राह ( साचेति ) ध्रुवत्वविशेषितेत्यर्थः । आकारान्तरेणापि सूत्रसूचितगत्या विशेष्यत इति व्यक्त्यै चकारः एवार्थो वा, सैव स्मृतिर्वैशद्यातिशयात्समाध्याख्या, न तु ध्यानफलमन्यद्दर्शनं पश्येदित्यादिषु च विधेयमित्यर्थः । स्मृतेर्दर्शनत्वव्याघातशमनाय समानत्वोक्तिः । परोक्षेप्यपरोक्षत्वोपचार इति भावः ।

१– मुण्ड. उ. २. मु. २. ख. २. वा ॥

परावरे" इत्यनेनैकार्थ्यात् । एवं च सति [1]" आत्मा

* श्रुतप्रकाशिका *

वद्धृदयशब्दस्तत्स्थजीवपरः, हृत्स्थानमयतीति व्युत्पत्तेर्वा, तस्य ग्रन्थिः– प्रकृतिसंबन्धः, हृदयशब्दोपलक्षितं वा शरीरं ग्रन्थिः । संशयशब्दो विपर्ययस्यापि प्रदर्शनार्थः । देहात्माभिमानादिरूपाऽविद्येत्यर्थः । कर्माणि–पुण्यपापरूपाणि । अविद्यासञ्चितकर्मकृतप्रकृतिसम्बन्धनिवृत्तिदर्शनसमानाकारोपासनेनेत्यर्थः । (एवं च सतीति) उपायदशायां ज्ञानस्य दर्शनरूपत्वे स्फुटार्थवाक्यान्तरसिद्धे सतीत्यर्थः । चशब्दो द्रष्टव्यशब्दस्य फलदशाभिप्रायत्वशङ्कानिवृत्त्यर्थः । दर्शनशब्दस्य ज्ञानसामान्यपरत्वसम्भवेपि "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"

ঙ तत्त्वटीका ঙ

परोक्षा चापरोक्षा च स्मृतिर्द्वेधा स्वमूलवत् ।
कृत्स्ना वा स्यात् परोक्षैव द्विधाप्यत्रापरोक्षता ॥ ঙ ॥
विधौ च परशब्दार्थो गत्यभावेऽनुमन्यते ।
लक्षणेष्टादर्शनादौ गौणी श्येनादिनामसु ॥ ঙ ॥
अर्द्धमन्तर्बहिर्वेदिमिनुयादिति च श्रुतौ ।
मध्यदेशस्य लक्ष्यत्वं सर्वत्रैवं यथायथम् ॥ ঙ ॥

नन्वत्र स्ववाक्ये ध्रुवत्वं न दर्शनरूपत्वं विशेषणतयोपात्तं, यतस्समाधेः पार्थक्यं परिह्रियेतेत्यत्राह (भिद्यत इति) अत्र ग्रन्थिशब्द उपात्तकर्मादिव्यतिरिक्तविषयः । हृदयस्य मनसस्सम्यक्प्रवृत्तिप्रतिबन्धकतया ग्रन्थयो रागाद्याः, यद्वा हृच्छब्दोक्तं स्थानमयतीति हृदयो जीवः, तात्स्थ्याद्वासौ तच्छब्देन लक्ष्यते, तस्य ग्रन्थिः पूर्वोक्तस्त्रिगुणविकारवर्गः हृदयं वा ग्रन्थिः, उपलक्षणमिदं यत्तु निरुच्यते छान्दोग्ये " स एव एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदि ह्ययमिति तस्माद्धृदयम् अहरहर्वा एवंवित् स्वर्गं लोकमेति" इति तदुपास्यब्रह्मपरं, न च तदेवात्र हृदयशब्दवाच्यमिति भ्रमितव्यम्. ग्रन्थिसंशयादिविरुद्धधर्माध्यासात्. सर्वविषयास्संशयास्सर्वे वा संशयाः, संशयशब्दोत्र विपर्यासस्याप्युपलक्षकः, ते छिद्यन्ते हेतुच्छेदान्न सन्तन्यन्त इत्यर्थः । कर्माणि–बन्धकसुकृतानि दुष्कृतानि च,

१– बृ. उ. ६. अ. ५- ब्रा. ६. वा ॥

* श्रुतप्रकाशिका *

"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" इति । श्रवणादीनां पृथगुक्तत्वाद्द्रष्टव्य इतिपदं साक्षात्काररूपत्वपरम्, दृष्टशब्दश्च तत्तुल्यार्थः, स चोपायदशाभिप्रायः, तस्मिन् दृष्टे हृदयग्रन्थिर्भिद्यते इत्युक्तत्वात् । "येनाहं नामृता स्याम्" "अमृतत्वस्य तु नाशास्ति वित्तेन" "एतावदेव खल्वरेऽमृतत्व"-मिति पूर्वापरवाक्येषु फलस्य निर्दिष्टत्वात् प्रकरणान्तरोक्तस्य साक्षात्कारत्वस्येहापि वक्तुमपेक्षितत्वादपेक्षितविधेरनपेक्षितविधानदौर्बल्याच्च । ननु, ध्रुवानुस्मृतेरेव दर्शनरूपत्वविधिरयुक्तः, ध्रुवानुस्मृतिदर्शनयोर्भिन्नप्रकरणाम्नातयोर्दहरशाण्डिल्यादिवेदनानामिव परस्परनिरपेक्षोपायत्वं हि प्रतीयते । नैवम्, द्रष्टव्यो निदिध्यासितव्यः" इत्येकवाक्यविहितत्वात् । न च तत्रापि विद्याद्वयविधानं शक्यम्, रूपभेदाभावात्, तत एव वाक्यैकत्वे संभवति वाक्यभेदाश्रयणायोगात्, विद्यान्तराणामिव तयोर्विकल्पप्रसङ्गाच्च । तयोर्निरपेक्षोपायत्ववादिनो विकल्प इष्ट इति चेन्न, तस्याष्टदोषदुष्टस्य सति गत्यन्तरेऽभ्युपगन्तुमयुक्तत्वात् । दृश्यते हि व्रीहियवशास्त्रयोस्तस्याष्टदोषदुष्टत्वम् । व्रीह्यनुष्ठाने यवशास्त्रस्य प्रामाण्यत्यागः, अविद्यमानाप्रामाण्यकल्पनं, यवानुष्ठाने तस्य त्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यत्यागश्चेति यवशास्त्रे चत्वारो दोषाः, यवानुष्ठानवेलायामेव प्रथमप्रयोगे स्वीकृतव्रीहिशास्त्रप्रामाण्यत्यागः, तदप्रामाण्यकल्पनं च तृतीयप्रयोगे व्रीहिषूपादीयमानेषु द्वितीयप्रयोगे स्वीकृतव्रीहिशास्त्राप्रामाण्यत्यागस्त्यक्तप्रामाण्यस्वीकारश्चेति व्रीहिशास्त्रे चत्वारो दोषाः, इहापि

* तत्त्वटीका *

प्राप्तिविरोधित्वयस्यात्र विवक्षितत्वान्न विद्योत्पत्तिकर्मनिवृत्त्योरन्योन्याश्रयः । परावरे—परत्वं सर्वातिशायिता, अवरत्वम् सौलभ्यार्थेन्द्रानुजत्वाद्यैः । यद्वा, 'सद्ब्रह्म ब्रह्मदाशा, इत्याद्युक्तपरावरजन्तुशरीरके, अपरावरे वा निम्नोन्नतविश्वलक्षणसुलक्षणे, अथवा परा एवावरा भूत्वा यस्य सः परावरः, इदमत्राकूतम्- दृष्ट इत्यत्र दर्शनशब्दो न तावन्मुक्त्यवस्थाभाविदर्शनपरः ध्रुवस्मृतिशब्दवत्, ग्रन्थिमोक्षसाधनविषयत्वात् । नच साधनविषयत्वेपि स्मृतिदृष्ट्योरपवर्गं प्रति समुच्चयः दर्शपूर्णमासादिवद्द्वंद्वस्य चकारस्य वानुलब्धेः । नचात्र समुच्चयश्शक्यः, प्रक्रान्तयोगेन ब्रह्मणस्साक्षात्कर्तुमशक्यत्वात्; शक्यत्वेपि यौगपद्यस्यासम्भवात् । क्रमस्य च

वा अरे द्रष्टव्य इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते ।

* श्रुतप्रकाशिका *

यथासम्भवं दोषप्राप्तिः । यद्वा प्रतिपत्तिबाधोऽनुष्ठानबाधोऽपूर्वबाधः फलबाधश्चेति एकैकशिरसि दोषचतुष्टयादष्टदोषदुष्टत्वम् । अतो गत्यन्तरे सति विकल्पायोगाच्च-

॥ तत्त्वटीका ॥

व्यवस्थापकाभावात् । न च प्राचीनध्रुवस्मरणं पश्चिमं च योगिप्रत्यक्षं कारणतया समुच्चीयेत, धारणावत्तादर्थ्योपपत्तौ समुच्चयक्लृप्त्ययोगात्. अन्यथातिप्रसङ्गात्. ध्रुवस्मृतेर्व्यवहितसाधनत्वक्लृप्तौ श्रुतहानादिप्रसङ्गाच्च, प्रमाणफलं च दर्शनं न स्वरूपेणोपादातुं शक्यं, येन समुच्चित्य विधीयते । ननु संस्कारोद्बोधफले स्मरणेऽपि समानमेतत्, अत आज्यावेक्षणन्यायात्तदुपायभूतशक्यव्यापारार्थो दर्शनविधिरिहास्त्विति चेन्न, तथासत्येकस्मिन् वाक्ये द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिप्रसङ्गात् अन्ततो निदिध्यासनार्थचित्तप्रेरणस्यैव पुरुषतन्त्रस्य दर्शनोपायतया विधातव्यत्वात्, अन्यस्य चादृष्टेः । नन्वेक एव दर्शनोपायस्सामान्यतो विशेषतश्च पदद्वयोक्त इत्यपुनरुक्तिस्स्यात्; हन्तैवं सति समुच्चयं त्यक्त्वाऽस्मत्पदवीमासीदसि, द्रष्टव्यो निदिध्यासितव्य इत्युभाभ्यामेकस्यैव विधेयत्वात्, अस्मदुक्ते तु ध्यानं वैशद्यतो विशेष्यत इति वैषम्यम् । न च दर्शनसमानाकारध्यानान्तरेण ध्रुवस्मृतेस्समुच्चयः तादृशस्यान्यस्यादृष्टेः तत्क्लृप्तौ गौरवात्, ध्रुवस्मृतेर्निरपेक्षसाधनत्वश्रुतिभङ्गप्रसङ्गाच्च नच मोक्षे साध्ये साक्षात्कारस्मृत्योरनेकदोषदुष्टो विकल्पः स्वीकार्यः ।

विकल्पबुद्ध्यनुष्ठानापूर्वतत्फलबाधतः ।
कोटिभ्यामष्टदोषत्वं प्रयोगद्वितयेऽब्रुवन् ॥ ७ ॥
प्रामाण्यत्यागतोऽन्यस्य स्वीकृतेस्त्यक्तसंग्रहात् ।
स्वीकृतत्यागतश्चान्ये प्रयोगद्वितये विदुः ॥ ८ ॥

गुरुलघुवैषम्याच्च न तत्सम्भवः, अन्यथातिप्रसङ्गात्. विषमफलेष्वेव तद्धेतुत्वदृष्टेः, नचात्र द्वारद्वारिता- मानाभावात्. नहि श्रवणमननयोर्ध्यानोपकारकत्ववद्ध्यानस्य दर्शनोपकारकत्वं दृष्टं, परोक्षे भावनाबलजन्तुप्रत्यक्षं शास्त्रयोन्य-

* श्रुतप्रकाशिका *

न ध्रुवानुस्मृतिदर्शनयोः पृथगुपायत्वम्, नापि समुच्चयः चशब्दाश्रवणात् दर्शपूर्णमासयोरिव द्वन्द्वनिर्देशाभावाच्च, परमात्मनोऽतीन्द्रियत्वात्तत्साक्षात्कारस्य चक्षुषा शब्दग्रहणस्येव प्रकान्तयोगं प्रत्यशक्यविधानत्वाच्च, शब्दविषययोः स्मर-

छ तत्त्वटीका छ

धिकरणे निरसिष्यते. नचात्र श्रुतम्। एवं क्रमाद्यनुक्तेः । 'ततस्तु तं पश्यति निष्कलं ध्यायमानः, ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत्' इत्यादिकमस्तीति चेत् । सत्यम्—ध्यानफलं ह्येतद्दर्शनमणिमादिवत् सिद्ध्यन्तरमस्तु, न साधनं. तथानुक्तेः। परविद्याप्रकरणे क्वचित्तदुक्तिस्तु तत्तत्प्रभावप्रदर्शनार्था "तमक्रतुं पश्यति वीतशोकः, पुरिशयं पुरुषमीक्षते" इतिवद्ध्यानसाध्यतयोक्तं दर्शनं मुक्तस्यास्तु, ध्यानसाध्यं दर्शनं मुमुक्षोश्चेत् विशदध्यानरूपं स्यात्. तथा हि, दर्शनशब्दस्य श्रावणज्ञानादिष्वप्रयुज्यमानस्य चाक्षुषज्ञानमेव हि मुख्यम्, तत्तु 'न चक्षुषा गृह्यते नापि वाचा "मनसा तु विशुद्धेन" इत्यादिभिः प्रतिक्षिप्तम्; अतो मनोजन्यज्ञानविशेषे दर्शनत्वोपचार इति वाच्यम्, तथासति वरं मोक्षसाधनतया कण्ठोक्तस्यैव ध्रुवानुस्मरणस्य तादृशवैशद्यविवक्षया तदुपचार इति । ननु दर्शनशब्दः स्मृतिं साक्षात्काररूपत्वेन विशिनष्टु; मैवम्,—तस्य स्मृतावसम्भवात्. मूलभेदानुसारेण सम्भवाभिमानिनामपि परोक्षानुभवसाध्यस्मृतौ तदसिद्धेः 'मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते' इति समाधेर्ध्याननिष्पाद्यत्वोक्तिश्च विशदाविशदवैषम्यात्. उक्तञ्च समाधाववस्थाद्वयं तस्यैव योगाङ्गत्वमङ्गित्वञ्च निर्वहद्भिः। अस्त्वेवम्. इह स्मृतिदर्शनवाक्ययोरैकार्थ्यं, तथापि स्मृतिशब्देन दर्शनमुपचर्यताम्, तन्न,— मुख्यार्थबाधाबाधाभ्यां विपरिवर्त्तस्यैव स्थापितत्वात् । किञ्च, स्मृतिर्हि वैशद्योक्त्या स्तूयेत, दृष्टिस्तु स्मृतित्वोक्त्या निन्दिता स्यात् परोक्षज्ञाने च वैशद्यविवक्षया 'तमसः पारं दर्शयति' इत्युच्यते। लोके पारदर्शी दूरदर्शीत्यादि । नन्वपरोक्षस्य संसारस्य दर्शनसमानयापि परोक्षया स्मृत्या कथं बाधः? न कथञ्चित्, मिथ्यात्वासिद्धेः । अपरोक्षस्यापि ज्वालैक्यदेहात्मत्वचन्द्रद्वित्वादेरनुमानादिना बाधो दृष्टस्सर्वैश्चाभ्युपगतः, अतः 'तस्मिन् दृष्टे' इत्यनेनापवर्गोपायविषयेण स्मृतेर्वैशद्यलाभात्तादृशी सैव समाधिरिति नादृष्टमलोपप्रसङ्गश्चेति.

* श्रुतप्रकाशिका *

णचाक्षुषज्ञानयोरिव समुच्चयोनुपपन्नः । ननु परमात्मनो योगपरिशुद्धमनोग्राह्यत्वान्न तद्दर्शनस्य चक्षुषा शब्दज्ञानतुल्यतेति दर्शनोपायभूतस्य व्यापारस्य विधेयत्वोपपत्तेस्समुच्चयस्सम्भवतीति । सत्यम्;— कस्तद्दर्शनोपायः ? "ततस्तु तं पश्यते निष्कलं ध्यायमान" इति श्रुतेर्ध्यानमेवेति चेत्— तर्हि द्रष्टव्यनिदिध्यासितव्यपदयोः पुनरुक्तिः स्यात्, उभयोरपि दर्शनोपायध्यानविधिपरत्वाविशेषात् । द्रष्टव्य इति दर्शनोपाये विहिते, क उपायः ? इत्यपेक्षायां निदिध्यासनं विधीयते; द्रष्टव्यपदाभावे निदिध्यासनस्य तदुपायत्वं न ज्ञायत इति तज्ज्ञापनार्थत्वान्न पुनरुक्तिरिति चेन्न, द्रष्टव्यपदश्रवणेपि दर्शनस्य ध्यानसाध्यत्वाप्रतीतेः, न हि दर्शनकामनेति श्रूयते, तथा सति हि स्वर्गयागयोरिव साध्यसाधनभावावगमः स्यात् । न च ध्यानं प्रति श्रवणमननयोरिव दर्शनं प्रति ध्यानस्य दृष्टकिञ्चित्कारः, अतो न मानान्तरेण तयोस्साध्यसाधनभावाव-

ॐ तत्त्वटीका ॐ

तथाहि,— द्रष्टव्य इत्यादौ ध्यानसामर्थ्यादिसिद्धश्रवणमननयोर्ध्यानार्थत्ववदग्र्यप्रायन्यायेन ध्यानस्यापि दर्शनार्थबुद्ध्यन्तरत्वोपपत्तेर्न दर्शनशब्दस्तद्विषयस्स्यादिति शङ्कायां ध्यानमेवेत्यत्राभिप्रेतं विवृणोति (एवंच सतीति) ध्रुवस्मृतित्वेनेव दर्शनसाम्येनापि निदिध्यासनस्य विशेषितत्वे श्रुत्यन्तरसिद्धे सतीत्यर्थः । चः शङ्कानिवृत्त्यै, स्वतःप्राप्तविधिपरत्वयुक्त्या सह स्फुटार्थश्रुत्यन्तरानुगुणसमुच्चयार्थो वा, अयं भावः,— ध्यानस्यापि श्रवणादिवदविधेयत्वे यज्ञादिभिरिवादृष्टद्वारेण दर्शनसिद्धिः कल्प्येत. तथा च मध्ये ध्यानं विफलं स्यात्, भावनाबलजप्रत्यक्षानुपपत्त्या तादृशदृष्टोपकारकाभावाद्विधेयत्वे त्वेकत्र निर्णीतश्शास्त्रार्थस्सर्वत्र स्वतःप्राप्त इतिन्यायाद् ध्रुवानुस्मृतिवाक्यवदिहापि निदिध्यासनं दर्शनसमानतया विशेष्टव्यम् । 'द्रष्टव्य इत्यत्र परोक्तफलपरत्वे तु प्रत्ययवैघट्यं, पूर्वापरवाक्येषु च "येनाहं नामृता स्याम् अमृतत्वस्य तु नाशास्ति वित्तेन एतावदेव खल्वरे अमृतत्वम्" इति फलस्योक्तत्वात्तदुक्तिरत्रानपेक्षिता, वैशद्यन्त्वन्यत्रोक्तमत्राप्याकाङ्क्षाबलायत्तम्. अत उपायपरतया 'तस्मिन् दृष्टे' इतिवद्विधेयविशेषकत्वे सम्भवति विकल्पसमुच्चयश्रुतहानादेरयोगादेकफलसिद्ध्यर्थं विशिष्टैकसाधनविधितात्पर्यसम्भवे पृथक्फलभेदस्य ग्राह्यत्वात्;

* श्रुतप्रकाशिका *

गम इति वैयर्थ्यम् । किंच ध्यानसाध्यं दर्शनं चेत् ध्यानदर्शनयोः समुच्चयश्च न सम्भवति, दर्शनंप्रति समुच्चये. दर्शनस्य दर्शनं साधनमित्यात्माश्रयप्रसङ्गात् । नच मोक्षं प्रति समुच्चयसंभवः, ध्यानस्य स्वसाध्यदर्शनव्यवहितस्य मोक्षं प्रति दर्शनेन सहाव्यवहितकिंचित्कारायोगात्, न हि यागनिष्पत्त्यर्थानां प्रोक्षणावघातादीनामपूर्वनिष्पत्तौ योगेन सह समुच्चयः, यदि साक्षात्कारं प्रति ध्यानेन सहाव्यवहितकिंचित्कारोपपत्तये दर्शनसमानाकारं ज्ञानान्तरं विधेयमित्युच्यते. तदयुक्तम्. स्वर्गं प्रति ज्योतिष्टोमव्रतस्येव निदिध्यानस्य साध्यं प्रति निरपेक्षोपायताप्रतीतिस्वारस्यभङ्गप्रसङ्गात्- न हि "ज्योतिष्टोमेन स्वर्गकामो यजेते" तिवाक्यप्रतिपन्नज्योतिष्टोमस्य स्वर्गसाधनत्वं कर्मान्तरसापेक्षमवगम्यते । नचात्र चशब्दो द्वन्द्वसमासो वा, अतो दर्शनसमानाकारतारूपविशेषणस्य किं विशेष्यमित्याकाङ्क्षायां विशेष्यान्तरं च न दृश्यते, निदिध्यासनं च सन्निहितम्. अतस्तदेव दर्शनसमाना-

ଓ तत्त्वटीका ଓ

दध्नेतिवदनूद्य विधाने विशिष्टविधेयैक्यसम्भवाच्च; वैशद्यविशेषितध्यानविधिपरमिदं द्रष्टव्य इत्यादिवाक्यमिति । अत एवास्य युगपदेकस्य तु मिथ्यानुवादशङ्काप्यपास्ता. स्वानन्दसाक्षात्काररूपस्यात्मदर्शनस्य स्वयमेवेप्सितस्य कथं विधेयत्वमिति चोद्यं विशदस्मृतिविधानोक्त्या प्रत्युक्तम् । एतेन "निचाय्य तं मृत्युमुखात्प्रमुमुच्यते" यदा पश्यः पश्यते रुक्मवर्णं, तद्विज्ञानेन परिपश्यन्ति धीराः, आनन्दरूपममृतं यद्विभाति " इत्याद्यपि यथार्ह [ व ] न्निरूढम् । नन्वेवं योगिप्रत्यक्षमेव लुप्येत. तत्तद्वाक्येषु दर्शनादिशब्दानां योगिप्रत्यक्षसद्भाववचनानामपि प्रत्यक्षसमानाकारविषयतया नेतुं शक्यत्वात्. नच धर्मादयः कस्यचित् प्रत्यक्षाः प्रमेयत्वादिभिस्तत्सिद्धिः । ईश्वरप्रत्यक्षेणार्थान्तरतापत्तेः । इन्द्रियग्राह्या इति साध्यप्रयोगेपि शास्त्रवेद्यस्यापि मनोविषयत्वेन सिद्धसाधनात् । इन्द्रियसाक्षात्कर्तव्येत्यत्रापि अतीन्द्रियाणामप्यनुव्यवसायवेद्यत्ववादिनामर्थान्तरत्वेन दत्तोत्तरत्वात्. सुखादिवदाहत्य साक्षात्कार्यत्वविवक्षायां विपक्षे बाधकासम्भवेन प्रतिबन्धासिद्धेः । अन्यथा बौद्धवद्धर्मादीनां चाक्षुषत्वस्यापि साधनप्रसङ्गात्. शक्यं हि विमतं कस्यचिच्चाक्षुषं प्रमेयत्वादित्यादि प्रयोक्तुम् । किञ्च, योगीन्द्रियं न धर्मादिप्रत्यक्षजनकम्, इन्द्रिय-

* श्रुतप्रकाशिका *

कारतया विधित्सितमिति युक्तमभ्युपगन्तुम्, ततश्च वाक्यभेदोपि न स्यात्, निदिध्यासनस्य निरपेक्षोपायताप्रतीतिस्वारस्यं च न बाध्येत। ननु विशिष्टविध्याश्रयणं चेदुपदेशैकगम्यार्थश्रवणशुभाश्रयमननदर्शनरूपताविशिष्टनिदिध्यासनविधिः किं न स्यात् ? । नैवम्— चतुर्ष्वंशेषु तात्पर्यकल्पनादपि द्वयोस्तत्कल्पनस्य लघुत्वात् । लघुपक्षसम्भवे गुरुपक्षाश्रयणायोगाच्च, नचास्मिन्वाक्ये विधानाभावादौपदेशिकार्थाधिगमालम्बनसंशीलनयोरसिद्धिः शङ्कनीया, "तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथ मुनि" रित्यनन्यथासिद्धवाक्यान्तरसिद्धत्वात्; तद्धि निरूपयिष्यते "सहकार्यन्तरविधि" रितिसूत्रेण, तस्माद्दर्शनसमानाकारत्वगुणविशिष्टनिदिध्यासनविधिः । नन्वेवमपि सर्वोपासनानां न दर्शनसमानाकारनिदिध्यासनरूपतासिद्धिः । "द्रष्टव्यो निदिध्यासितव्य" इति वाक्यस्य मैत्रेयीब्राह्मणे सत्वात्, अतस्तत्र प्रतिपाद्यस्यैवोपासनविशेषस्य तादृग्रूपता प्रतिपाद्या स्यात् । नैवम्— "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमिति" तत्रत्येनैव वाक्येन जगत्कारणविषयसर्वोपासनानां दर्शनसमानाकारनिदिध्यासनरूपतावगमात्, नहीदं वाक्यं विद्याविशेषविधायकम्, कारणज्ञानेन सर्वज्ञाततप्रतिज्ञापरत्वात्, कारणमेव हि सर्वविद्योपास्यम्, 'कश्च ध्येयः' इत्युपक्रम्य "कारणं तु ध्येय" इति कारणस्यैव ध्येयत्वविधानात्. कारणविषयं

७ तत्त्वटीका ७

त्वात्. अस्मदादीन्द्रियवदिति प्रतिप्रयोगस्सुलभ इति । मैवम्,—

मुक्त्युपाये हि कथिता दर्शनोक्तेरमुख्यता ।
अन्यत्र बाधकाभावाद्यथाश्रुतपरिग्रहः ॥ ७ ॥

संयमिनां ह्यतीतानागतातीन्द्रियादिवेदनं कण्ठोक्तं. न च स्मरणमेतत्, अननुभूतत्वात्; अत एव न तत्र वैशद्यमात्रेण प्रत्यक्षत्वोपचारसम्भवः, नच तत्रानुमानाद्यवकाशः "तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति" इत्यादिभिस्तत्प्रतिक्षेपात् "पाणावामलकं यथा" इत्यादि च निर्दिश्यते. धर्मोपचयभेदैरनधीतसूक्तकाण्डमन्त्रसाक्षात्कारश्च कीर्त्यते "दिव्यं ददामि ते चक्षुः" इत्यादि च प्रसिद्धम्, अतो नासिद्धिः । योगिप्रत्यक्षस्य बाह्येन्द्रियाणां मन-

भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता ।

* श्रुतप्रकाशिका *

चोपासनमत्र दर्शनसमानाकारनिदिध्यासनरूपमवगम्यते । अस्मिन्वाक्ये विज्ञात-शब्दो हि निदिध्यासनपरः "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "दृष्टे श्रुते मते विज्ञाते" इति स्थानप्रमाणात् । अतोऽस्य वाक्यस्य सर्वविद्यासाधारणकारणमात्रविषयत्वात् जगत्कारणोपासनं चेद्दर्शनसमानाकारनिदिध्यासन-रूपमवगम्यते । किञ्च नानाविद्यानां विकल्पस्य वक्ष्यमाणत्वात्, गुरुपक्षविषय-शास्त्रवैयर्थ्यप्रसङ्गेन गुरुलघुयत्नविकल्पायोगाद्वस्तुसामर्थ्यस्य प्रकरणाद् बलीयस्तया च ध्रुवानुस्मृतिरूपत्वं, दर्शनरूपत्वं, वक्ष्यमाणभक्तिरूपत्वं, च सर्वविद्यासाधारणाकारा भवितुमर्हन्ति । नन्विन्द्रियजन्मनोऽनुभवस्य ह्यपरोक्षत्वं तत्कथं स्मृतेः संभवतीत्यत्राह (भवति चेति) भावना— वासना दर्शनरूपता— दर्शनसमानाकारता. 'वृक्षे वृक्षे च पश्यामी' त्यादिष्वपि दर्शनसमानाकारत्वं स्मृतेश्च दृष्टमिति भावः, तच्च विशदतरावभासरूपत्वं, नचैतदनुभवासाधारणं. स्मृतेरपि तत्सद्भावस्य प्रामाणिकत्वात् । ननु दर्शनसमानाकारत्वविधानमयुक्तं, दर्शनवाचिशब्देन तत्समानाकारोपस्थापनस्यामुख्यत्वात् "न विधौ परः शब्दार्थ" इति न्यायविद इति चेन्न— तैरेव "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" त्यत्र दर्शपूर्णमासशब्दयो-

ॐ तत्त्वटीका ॐ

सश्च सुकृतविशेषैर्यथार्हं लोकोत्तरातिशयाधानात्. नचातिप्रसङ्गः, यथाश्रुतातिलङ्घने हेत्वभावात्, अनुमानस्य विपक्षे बाधकाभावाच्च; नचानुमानतः श्रुतभङ्गः, तस्यागमेनैव बाधात्, अन्यथातिप्रसङ्गात् ॥ ननु शास्त्रं शक्ये शक्तं विनियुङ्क्ते, स्मृतेस्तु दर्शनसामान्यं न पुरुषतन्त्रम्, नच तदपि तस्यास्सम्भवि. दर्शनत्ववदेवासम्भावितञ्च न विधिराघ्रातुमर्हति न दृष्टाधिकारो विधिरसम्भावितदृष्टफले सति भवतीत्यत्राह (भवतीति) भावना— अनुभवजन्यसंस्कारः, चिन्तैव वा, सा च सादरं निरन्तरञ्च कर्तुं शक्या, ततः स्मृतिवैशद्यसिद्धिः, दर्शनस्य रूपमिव रूपं यस्यास्सा इत्युपमानबहुव्रीहिरत्र ग्राह्यः । भीतकामुकादिप्रतिभाश्चात्र निदर्शयितव्याः । परैरप्युच्यते— "दृष्टे परोक्षमपि ध्यायमानं साक्षाद्भावमापन्नं कामाद्युपप्लवः" इति । 'वृक्षे वृक्षे च पश्यामि' इत्यादिषु भ्रान्तिमिश्रत्वं दोषायत्तम्.

वाक्यकारेणैतत्सर्वं प्रपञ्चितम् । [1]"वेदनमुपासनं स्यात् तद्विषये श्रवणात्" इति । सर्वासूपनिषत्सु मोक्षसाधन-

* श्रुतप्रकाशिका *

लक्षणया, श्येनादिवाक्ये श्येनादिशब्दानां गौण्या वृत्त्या, कर्मनामधेयत्वाभ्युपगमात् "अर्द्धमन्तर्वेदि मिनुयादर्द्धं बहिर्वेदी" त्यत्रापि मध्यदेशलक्षणाया अङ्गीकृतत्वाच्च, विशदतरत्वस्य फलरूपत्वादपुरुषतन्त्रस्य कथं विधान ? मिति चेन्न आज्यावेक्षणस्येव विधानोपपत्तेः । तत्राज्यसाक्षात्कारहेतुभूतव्यापारविषयो विधिरिति चेन्न– इहापि विशदतरत्वावहस्मृतिसंततिविषयमनोव्यापारविधिरित्युपपन्नम् । अथ सूत्रकाराभिप्रायविदां वचनं दर्शयति ( वाक्यकारेणेति ) ( एतत्सर्वमिति ) सूत्रकारेण कण्ठोक्तमभिप्रेतं चेत्यर्थः ( प्रपञ्चितमिति ) पूर्वपक्षसिद्धान्तरूपेणोक्तमित्यर्थः । प्रपञ्चनं च वेदनमुपासनं स्यादित्यादिवाक्यचतुष्टयेन वाक्यमेकैकं व्याचष्टे ( सर्वासूपनिषत्स्विति ) न केवलं छान्दोग्य इत्यर्थः । मोक्षसाधनतया विहितं वेदनमिति घटादिज्ञानव्यावृत्तिः । विहितमित्यनूदितश्रवणादिव्यावृत्तिः । अस्यार्थस्य पूर्वपक्षसिद्धान्तरूपेण स्फुटीकरणार्थं सकृत्प्रत्ययं कुर्यादिति वाक्यश्रवणेन वेदनमुपासनं स्यादिति वाक्यस्य पूर्वपक्षपरत्व-

७ तत्त्वटीका ७

इहतु यथाश्रुतचिन्तनान्न दोषबाधाविति भावः ॥

यदि स्याद्भावना भूम्ना स्मृतेर्दर्शनतुल्यता ।
किमत्र कर्मणामेवं मानसिद्धोभयग्रहात् ॥ ७ ॥

उक्तस्य न्यायवर्गस्य दार्ढ्याय सूत्रे शाब्दमार्थं च सर्वं मुख्यभेदेन तदभिप्रायविद्भिर्विमृश्य निर्धारितमित्याह ( वाक्यकारेणेति ) ( तद्विषये श्रवणात्) उपासनस्थाने वेदनशब्दस्य एकत्रान्यत्र च प्रकरणे प्रयोगादित्यर्थः । अत्रोक्तस्य प्रायिकत्वशङ्काव्युदासाय वाक्यं व्याचष्टे ( सर्वास्विति ) "मनो ब्रह्मेत्युपासीते" त्यत्र दृष्टिविधावुक्तमपि न्यायसाम्यात्परविद्यास्वपि योज्यम्, किं पुनःस्वास्वेवैकत्र दृष्टमिति व्यक्त्यै, 'मोक्षसाधनतया विहित' मित्युक्तम् । एते-

१– बोधायनवृत्तिः ॥

तया विहितं वेदनमुपासनमित्युक्तम्[1] "सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत्" इति पूर्वपक्षं कृत्वा [2]"सिद्धन्तूपासनशब्दात्" इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्। [3]"उपासनं स्याद्

* श्रुतप्रकाशिका *

शङ्काव्यावृत्त्यर्थं च सकृदित्यादिकं व्याचष्टे ( सकृदिति ) सकृदित्यादिवाक्यमेव पूर्वपक्षपरं. न तु वेदनमुपासनं स्यादितिवाक्यम्. अनन्तरमेवोपासनरूपत्वस्य सिद्धान्तितत्वादिति भावः । तथा सिद्धान्तितत्वं दर्शयति ( सिद्धं त्विति ) सिद्धन्तु सिद्धान्तस्त्वित्यर्थः । यद्वा वेदनमुपासनं सिद्धमित्यर्थः। उपासनशब्दादित्येतद्व्याचष्टे (वेदनमसकृदावृत्तमिति ) अस्याविच्छिन्नस्मृतिसन्तानरूपत्वं सूत्रकाराभिप्रेतं वाक्यकारकण्ठोक्तं दर्शयति ( उपासनं स्यादिति ) दर्शनात् लोके दर्शनात्।

छ तत्त्वटीका छ

नापातधीश्रवणमनननिर्णयादेर्व्यच्छेदः, वेदनमुपासनमित्युक्तस्योत्तरवाक्यस्य सत्यानन्दानां पूर्वपक्षोक्तत्वशङ्कां स्पष्टोक्त्या निवर्त्तयितुमाह ( सकृदिति ) विधिर्हि स्वतःप्रवृत्त्युन्मुखं पुरुषं प्रेरयन् स्वसिद्धौ प्रयाजादिशास्त्रेष्विवात्रापि सकृत्प्रवर्त्तयेत्, विशेषवचने खल्वावृत्तिभरस्सोढव्य इत्यभिप्रायेणोक्तम् ( शब्दार्थस्य कृतत्वादिति ) विधिविषयस्य धात्वर्थस्य तावतैव पूर्णानुष्ठितत्वादित्यर्थः । उत्तरवाक्यस्थेन तुशब्देन सूचितमाह ( पूर्वपक्षं कृत्वेति ) तत्प्रातिक्षेपोक्तिं दर्शयति ( सिद्धमिति ) न्यायत उपासनं सिद्धमित्यर्थः। सिद्धम्—सिद्धान्त इति वा। ( उपासनशब्दात् ) नहि सुकृद्बुद्धावुपासनशब्दस्य प्रख्यातिरिति भावः एतद्वाक्यं व्याचष्टे ( वेदनमित्यादिना ) उपासनशब्दादित्यनेन वेदनमुपासनमितिवाक्यस्यापि शब्दप्रत्यभिज्ञया सिद्धान्तपरत्वं दर्शितं भवति। ध्यानस्य ध्रुवत्वं सूत्रानुक्तमपि न्यायसाम्यात्सूचितं प्राक् स्वेन विवृतं, वाक्ये तु ध्यानादभिन्नस्योपासनस्य तदुक्तमुपादत्ते ( उपासनमिति ) दर्शनम्—स्वारसिकी लोकदृष्टिः। निर्वचनम् निर्णायकतया प्रागुक्तं श्रुतिवाक्यं. यद्वा. दर्शनं—प्रत्यक्षश्रुतिः. निर्वचनम्

१— २ . ३ . बोधायनवृत्तिः ॥

ध्रुवानुस्मृतिर्दर्शनान्निर्वचनाच्च" इति· तस्यैव वेदन-स्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णि-तम् ॥

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता, दर्शनरूपता

---

* श्रुतप्रकाशिका *

निर्वचनात्— श्रुतिवाक्यात् (तस्यैवेति) मोक्षसाधनतया विहितस्येत्यर्थः । उपासनरूपस्येति हेतुगर्भम् उपासनरूपत्वात्, उपासनशब्दवाच्यत्वादसकृदावृत्तस्येत्यर्थः । असकृदावृत्तं ज्ञानं ह्युपासनम् एवमविच्छिन्नस्मृतिसन्ततिरूपत्वमुपपादितम् ॥

सूत्रकारकण्ठोक्तमसकृदावृत्तिरूपत्वं तदभिप्रेतं ध्रुवानुस्मृतित्वं च वदतो वाक्यकारस्यायं भावः,– एतत्तुल्यन्यायतया विशेषान्तरोपस्थापकवाक्ये सति वेदनादिशब्दास्तत्पर्यन्ताः स्युरिति, तस्मात् पूर्वोक्तं दर्शनसमानाकारत्वमपि वाक्यकाराभिप्रेतमित्यभिप्रयन्नाह (सेयमिति) सेयम्– असकृदावृत्तिरूपा, ध्रुवानुस्मृतिरूपा चेत्यर्थः । दर्शनशब्दस्यार्थदर्शी तत्त्वदर्शीत्यादिप्रयोगात् परोक्षापरोक्षसाधारण्यमाशङ्क्याह (दर्शनरूपता च प्रत्यक्षतापत्तिरिति) प्रत्यक्षसमानाकारतापत्तिरित्यर्थः ।

ঌ तत्त्वटीका ঌ

निष्कृष्यवचनमुपबृंहणम् । तस्यैव— मुक्तिसाधनतया विहितस्यैव, न तु परेष्टमुक्तिसाधनहेतोरित्यर्थः । सकृदावृत्तावुपासेः प्रयोगाभावादुपासनरूपस्यासकृदावृत्तस्येति वाक्यस्योपासनशब्दविवक्षितोक्तिः । नन्वेतत्सर्वं प्रपञ्चितमिति पूर्वोक्तम् । तत्र दर्शनरूपत्वं न दृष्टमित्यत्र तस्यानुक्तस्यापि तदुक्ताभ्यामावृत्तिरूपत्वध्रुवत्वाभ्यां तुल्यन्यायत्वव्यक्त्यर्थमन्यविधानार्थञ्चानुभाषते (सेयमिति) ध्यानत्वोपासनत्वाभ्यामसकृदावृत्ता वाक्यान्तरेणोक्तध्रुवत्वविशिष्टा चेत्यर्थः । (प्रतिपादिता) दर्शनरूपत्वमपि वाक्यकारेणार्थादुक्तमिति भावः । यद्वा, न्यायसाम्यादभिप्रेतमिदमस्माभिः प्रागुक्तमिति । ननु यद्यप्यन्यस्यान्यत्वं विधातुं न शक्यं, स्मृतिदर्शनयोश्च सामग्रीनियमात् विरुद्धजातीययोरन्यत्रैक्यमसम्भवि । तथापि संस्कारमात्रजन्ये स्वाप्नज्ञानेऽदृष्टविशेषसहकारात्साक्षात्काररूपत्वमिवात्रापि चक्षुर्जन्यत्वासम्भवेपि तदवि-

च प्रत्यक्षतापत्तिः। एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां

---

* श्रुतप्रकाशिका *

"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रवणादिपरोक्षज्ञानपूर्वसूत्रेष्वपि पृथङ्निर्देशादिति भावः। सूत्रकारवाक्यकारयोः कतिपयविशेषं वदतोः सति विशेषान्तरोपस्थापके तत्पर्यवसायित्वस्याभिप्रेतत्वाच्छ्रुत्यन्तरसिद्धं विशेषान्तरमस्तीत्याह (एवमिति) अनेन श्रवणादीनां मुक्त्युपायत्वनिषेधान्नोपासनस्य मोक्षोपायत्वमिति शङ्काव्युदासश्च भवति। एवम्—उक्तेन प्रकारेण सामान्यविशेषन्यायेन प्रत्यक्षतापन्नामित्यर्थः। (अपवर्गसाधनभूतामिति) प्रतीकोपासनव्यवच्छेदः।

ꕤ तत्त्वटीका ꕤ

नाभूतप्रत्यक्षत्वेपि ध्रुवानुस्मृतेर्धीत्वमात्रसाम्याद्दर्शनशब्दोपचारः कथं न स्यादित्यत्राह (दर्शनरूपतेति) (प्रत्यक्षतापत्तिः) नतु साक्षात्प्रत्यक्षत्वम्, असम्भवात्। अयम्भावः,— स्वप्नधीरपि न तावन्मुख्यदर्शनं चक्षुर्व्यापाराभावात्. किन्तु तत्र बाह्यकरणवृत्तिनिरोधे सत्यनन्यसञ्चारिणा मनसा संस्कारमहिम्ना प्रागनुभूतेषु विशदस्मृतिराधीयते, तदतिरिक्तकल्पनेऽनन्यथासिद्धहेत्वभावात्. तत्र चक्षुराद्यजन्येपि तज्जन्यत्वधीरसंसृष्टे संसृष्टधीश्च दोषवशान्मानसभ्रान्तिः। सन्ध्यधिकरणानुरोधे तु संस्कारमात्रजन्यत्वाभावादसङ्कीर्णं दर्शनत्वम्. अतो न स्वप्ननिदर्शनेन प्रस्तुते प्रत्यक्षत्वक्लृप्तिशक्या. धीत्वमात्रेण दर्शनसाम्यादुपचारश्च वाच्यासन्नतमस्तुल्यनुगुणविशेषसिद्धौ न युक्त इति। ननु 'नायमात्मे' त्यादौ श्रवणादित्रिकं प्रतिषिध्यापव्र्यनुयोज्यस्वतन्त्रवरणमात्रेण तल्लाभ इत्युक्तम्, तस्मात् 'दैवमेव परं मन्ये पौरुषन्तु निरर्थकम्' इतिन्यायादुक्तं सर्वं वितथमित्यत्र सूत्रवाक्ययोर्ध्रुवत्वादिविशेषितायाः स्मृतेरुपासनशब्दार्थतयाभिप्रेतं भक्तिरूपत्वविशेषणमेव तत्र विवक्षितमित्यत्राह (एवमिति) सामान्यशब्दानां सूत्राद्युक्तेन विशेषविश्रमप्रकारेणेत्यर्थः। प्रत्यक्षतापन्नामित्येतद्वक्ष्यमाणस्य भक्त्यात्मकत्वस्य न्यायसाम्यसूचनार्थम्. अहेतुकवरणमयुक्तं, तस्यादिमत्त्वे निर्हेतुकत्वायोगात्. अनादित्वे मुक्तेरप्यनादित्वापातान्मुक्त्युपायविधेश्च वैयर्थ्यप्रसङ्गाज्जीवव्यापाररूपभेदविशेषनिषेधपरस्य वैषम्यनैर्घृण्यनिषेधकसूत्रादेर्विरोधापत्तेश्चेत्यभिप्रायेण (अपवर्गसाधनभूता) मित्युक्तम्।

स्मृतिं विशिनष्टि- [1]" नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति । अनेन केवलश्रवण-

* श्रुतप्रकाशिका *

( नायमात्मेति ) प्रवचनशब्देन मननं लक्षयति, मननफलत्वात् प्रवचनस्य, मननस्याचार्यप्रवचनफलत्वाद्वा, प्रोच्यतेनेनेति करणव्युत्पत्त्या वा प्रवचनं मननं, मेधा निदिध्यासनं, परिशेषात्, अस्मिन्वाक्ये श्रवणादीनामनुपायत्वं प्रतीतं ध्रुवानुस्मृतिविशेषणत्वेन न किंचित्प्रतिपन्नम् । अतस्तद्व्याचष्टे ( अनेनेति ) केवलश्रवणमनननिदिध्यासनानां वक्ष्यमाणविशेषविरहितानामित्यर्थः । यथा "न पृथिव्यामग्निश्चेतव्य" इत्यत्र हिरण्योपधानरहितपृथिव्यां चयनं निषिध्यते, न तु पृथ्वीमात्रे— तद्वदिति भावः । विवक्षितं विशेषं वाक्यतात्पर्यनिरूपणेन दर्श-

ॐ तत्त्वटीका ॐ

फलान्तरोपास्तिपरत्वशङ्का चानेन निरस्ता, परो ह्यात्मात्र लभ्य इष्यते । ( विशिनष्टि ) न तु प्रमाणप्राप्तं निवर्त्तयतीत्यर्थः । अन्यथा उपायान्तरविधानवैयर्थ्यं "मत्वा धीरो न शोचति, प्रज्ञानेनैनमाप्नुयात्" इतिपूर्वापरविरोधश्च स्यात्. नायमात्मेत्यादौ श्रुतशब्देन श्रवणमुपात्तं, मेधाशब्दश्च ध्यानार्थः स्यात् । 'मेधा मनीषे मा विशतां समिची भूतस्य भव्यस्यावरुध्यै' इति श्रुत्यनुसारात् 'धीर्धारणावती मेधा' इति च निघण्टुः । पारिशेष्यात्प्रवचनशब्दः श्रवणध्यानसहोक्तमननपरः । प्रोच्यतेऽनेनेति करणव्युत्पत्तेः, शिष्यमननार्थगुरुप्रवचनेन वा मननलक्षणा प्रवचनहेतौ वा तत्कार्योपचारः । ननु, स्वरूपनिषेधकस्य कथं तद्विधायकत्वम् ? अत्र च क्वचिदङ्गाङ्गिप्रतिषेधाद्वैयर्थ्यं, क्वचित्तु विहितप्रतिषेधाद्विरोध इति शङ्कायां श्रवणादिवैयर्थ्यप्रसङ्गञ्च परिहरन् वाक्यस्य ध्रुवानुस्मृतिविशेषकत्वं व्यनक्ति ( अनेनेति ) यथा 'न पृथिव्यामग्निश्चेतव्यः' इत्यत्र निषेधस्य हिरण्यवैकल्यपरिहारार्थतया हिरण्योपाहितत्वविधौ तात्पर्यं, तथात्रापि पृथिव्या श्रवणादेर्यथार्हं प्रणाड्या साक्षाच्चावश्यंभावित्वात्प्रतीतिवैकल्यनिषेधमुखेन त्रिष्वपि प्रीतिविशेषविधौ तात्पर्यमित्य-

[1]– मुण्ड. उ. ३. मु. २. ख. ३. वा.

मननानिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा "यमेवैष आत्मा वृणुते तेनैव लभ्य" इत्युक्तम् । प्रियतम एव हि वरणीयो भवति, यस्यायं निरतिशयप्रियः

---

* श्रुतप्रकाशिका *

यित्यन्वाक्यस्यार्थान्वयं दर्शयति, यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तमिति । वरणीयेन लभ्योऽस्तु, ततः कथं ध्रुवानुस्मृतेर्विशेषितत्व ? मिति शङ्कायां तद्दर्शयितुं लोकसिद्धप्रतीतिमाह ( प्रियतम एव हीति ) प्रीतिविषयमात्रस्य न वरणीयत्वं, किन्तु स्वयमुपस्थितस्य स्वीकार एव, अतस्तद्व्यावृत्त्यर्थं प्रियतम इत्युक्तम् । ततः किमित्यत्राह ( यस्येति ) यस्योपासकस्यायं परमात्मा निरतिशयप्रीतिविषयः स एवास्य परमात्मनो निरतिशयप्रीतिविषयो भवति, चेतनत्वे सति भगवता वरणीयत्वं भगवति निरतिशयप्रीतिमत एव । यद्वा स्वतः प्रियत्वं वरणीयत्वंच स्वस्मिन्

ॐ तत्त्वटीका ॐ

भिप्रायवान् केवलशब्दः । यद्वा,— 'नान्तरिक्षे न दिवि' इत्यभागिप्रतिषेधेन सह पठितो 'न पृथिव्या' मिति प्राप्तप्रतिषेधः यथा केवलपृथिव्या अन्तरिक्षादिवदधिकरणत्वव्युदासेन हिरण्योपधानत्ववैशिष्ट्यविधौ विश्राम्यति- तथानुपायभूतश्रवणमननाभ्यां सहोपायभूतनिदिध्यासनस्य प्रतिषेधः केवलनिदिध्यासनस्य श्रवणादिवदनुपायत्वोक्तिमुखेन भक्त्यात्मकत्वविधौ पर्यवस्यतीति । अनियमेन यथेष्टं स्वतन्त्रवरणशङ्काव्युदासाय यद्वृत्तानुक्तिबलेन नियतविषयवरणव्यक्त्यर्थं 'यमेवे' त्युपादानम्. वैषम्यादिदोषानाघ्रातसर्वसुहृद्वरणस्यानियतविषयत्वायोगात् 'यदाग्नेय' इति वाक्यस्थभवतिवद्वृणुत इत्यस्य प्रयोजकव्यापारविधौ तात्पर्यं, लप्स्यमानवरणप्रयोजकव्यापारवता भवितव्यमिति । ननु हिरण्योपधानस्य पृथिवीस्थत्वावश्यंभाववदेतद्वाक्यस्थयद्वृत्तव्यङ्ग्यवरणीयताहेतुगुणविशेषस्य ध्रुवानुस्मृतिसम्बन्धनियमादृष्टेर्न तस्यास्तेन वैशिष्ट्यलाभ इत्यत्राह ( प्रियतम इति ) फलान्तरार्थिभक्ताभासव्यवच्छेदार्थं तमप्रयोगः । हिः शास्त्रतो लोकतश्च परावरपुरुषस्वभावप्रसिद्धौ । नन्वेतावतापि वरणीयस्य प्रियतमत्वापादकः कश्चिदन्यो व्यापारस्सिद्ध्यतु, ध्रुवानुस्मृतेर्विशेषितत्वन्तु न लब्धमित्यत्राह ( यस्येति ) ( स एव ) न सुकृतान्तरवान्

**स एवास्य प्रियतमो भवति; यथायं प्रियतम आत्मानं प्राप्नोति तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तम् "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।**

---

* श्रुतप्रकाशिका *

प्रीतिमत एव. पुण्यक्षेत्रादिषु भगवतः प्रीतिः स्वस्मिन् प्रीतिमत्पुरुषवरणार्था, पत्रपुष्पफलादिषु तत्सम्बन्धनिबन्धना । स एवेत्येवकारेण केवलश्रवणादिमद्व्यावृत्तिः । भगवति प्रीतिमत एव भगवत्प्रीतिविषयत्वमिति कथमवगम्यते ? इत्यपेक्षायामत्र प्रमाणतया स्मृतिवचनमर्थोपन्यासपूर्वकं दर्शयन्वरणप्रकारमपि विवृणोति ( यथेति ) अयम्—भगवति निरतिशयप्रीतिमान् । प्रियतमः– निरतिशयभगवत्प्रीतिविषयो भवन्नित्यर्थः । ददामि बुद्धियोगं तमित्यस्यार्थविवक्षया स्वयमेव भगवान् प्रयतत इत्युक्तम्, अनेन वरणप्रकारो दर्शितः । भगवतैवोक्तमित्येवकारेण भगवदाप्त्यतिशयः सूचितः । सततयुक्तानां—सततयोगं काङ्क्षमाणानाम् "आशंसायां भूतवच्चे" ति कर्तरि क्तः, प्रीतिपूर्वकं ददामीत्यन्वयः ।

७ तत्त्वटीका ७

न च केवलध्रुवानुस्मृतिमान्, नापि निर्व्याजप्रियः कश्चिदिति भावः । ( अस्य ) 'समोऽहं सर्वभूते' ष्वित्यादिना स्वेनैवोक्तस्वभावस्येतियावत् । अयं भावः,–अन्येषां स्वप्रीतिहेतुव्यापाराणां स्वलाभार्थवरणहेतुत्वाभावात्स्वविषयकनियतात्यन्तिकप्रीतिमानेव परस्य प्रियतमो भवन् स्वप्रापणाय वरणीयस्स्यात् । इयञ्च निरतिशयप्रीतिरूपा बुद्ध्यवस्था मुक्तिसमुत्पादने विकल्पसमुच्चयविद्वेषिणी अनन्यगतिकप्रमाणवशान्मुक्तिसाधनतया स्थापितध्रुवानुस्मृतिमाश्रयति- तां विशिनष्टीति । ननु, स्वशेषतया नित्योपात्तस्य किमद्य वरणम्, सर्वव्यापितया नित्यप्राप्तस्य किं वेदानीं लभ्यत्वम्, प्रियतम एवास्य वरणीय इति च कुतस्त्यम् ? इत्यत्र तत्सर्वमुपबृंहणेन स्पष्टयति ( यथेति ) अयम्— भगवति निरुपाधिकभोग्यताविर्भावेन निरतिशयप्रीतिमान् । अत एव प्रियतमः, आत्मानं प्राप्नोति. रमते स्वात्मनि प्रसेदुषस्तस्यापवर्गाव्यवहितहेतुभूतबुद्धियोगादिप्रदानेऽन्येषामिव परसापेक्षत्वं नास्तीति व्यक्त्य स्वयमेवेत्युक्तम् । उपासितुरचिन्त्यमेव हितमाचरतीति वानूच्यम् । भगवतैव—

ददामि बुद्धियोगं तं येन मामुपयान्ति ते" ॥ इति "प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति च। अतः साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन

* श्रुतप्रकाशिका *

अनेन परस्परविषयप्रीतिरुपास्योपासकयोर्दर्शिता । सततयुक्तशब्दार्थस्फुर्टीकरणायाह ( प्रियो हीति ) अत्यर्थम्— अतिक्रान्ताभिधेयं, प्रियत्वं वाचामगोचरमित्यर्थः। ध्रुवानुस्मृतिं विशिनष्टीति हि पूर्वमुक्तम् । अत्र यो भगवति प्रीतिमान् भवतितस्मिन्नुपासके भगवतः प्रीतिमत्त्वमुक्तम्, तत्कथं ध्रुवानुस्मृतेर्विशेषितत्वम् ? इत्यत आह— ( अत इति ) अतः—उक्तार्थस्य लोकस्मृतिभ्यां सिद्धत्वादित्यर्थः। यद्वा, ध्रुवानुस्मृतिवचनाद्वरणीयत्ववचनाद्वरणीयस्य च भगवति निरतिशयप्रीतिमत्त्ववचनाच्चेत्यर्थः । ( साक्षात्काररूपा स्मृति ) रित्यनेन पूर्वोक्ताकारविशिष्टाया एव विशेषान्तरमिति दर्शितम् । ( स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियेति ) अर्थेनैव विशेषो हि

छ तत्त्वटीका छ

'यमेवैष वृणुते' इति वरणकर्तृतया श्रुतेनैव; एतेन स्वतस्सर्वज्ञतया परमाप्तत्वमपि व्यज्यते. सततयुक्तानाम्— सततयोगमाशंसमानानाम् । 'आशंसायां भूतवच्च' इतिक्तः । सततयुक्तानां भजतामित्यनेनैवोपासकबुद्धेः प्रीतिरूपत्वस्य सिद्धत्वात् प्रीतिपूर्वकं ददामीत्यन्वयः ।

उपचारापचाराभ्यां प्रीतिद्वेषौ परस्य [ न ] च ।
निमित्तशक्त्या तु फलं तयोरिति नयोज्झितः ॥ छ ॥
वरणं चोन्निनीषा चाधोनिनीषा च शासितुः ।
श्रुतत्वादनिषिद्धानि तत्तत्कर्मफलार्पणात् ॥ छ ॥

कस्यचिद्वरणीयतानिदाने प्रियतमत्वे श्रुत्यभिप्रेतसततयुक्तशब्दो हेतुस्तत्रैव विवृत इत्याह ( प्रियो हीति ) अत्यर्थम्— अत्यभिधेयम्; मयापि दुर्वचमिति भावः । अत्र वरणं. मामयं प्राप्नुयादित्यमोघसङ्कल्पः, अलभ्यत्वं चास्य वृणुत इत्यनेनाभिप्रेतं, निवृत्तप्रतिबन्धनिरुपाधिकानुभवविषयत्वमिति अर्थादुक्तं भवति । अत्र सोपबृंहणयापि श्रुत्या ध्रुवानुस्मृतेः प्रीत्यात्मकतया विशेषितत्वमनभिव्यक्तं

स्वयमप्यत्यर्थप्रिया यस्य स एव परेणात्मना वरणीयो भवतीति तेनैवं लभ्यते पर आत्मेत्युक्तं भवति· एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते,— उपासनप·

* श्रुतप्रकाशिका *

निराकारतया धियामिति भावः । स्वयमप्यत्यर्थप्रिया—अनुभूयमानोऽनुभव इतिवदयं निर्देश औपचारिकः, अत्यर्थप्रीतिरूपेत्यर्थः । यद्वा, अत्यर्थप्रिया— अत्यर्थानुकूलरूपा, स्मर्यमाणस्य भगवद्विषयस्य निरवधिकनिरुपाधिकानुकूलत्वेन तद्विषयानुस्मृतिरपि हि निरतिशयानुकूला भवति । यद्वा ध्रुवानुस्मृतिः स्वयमत्यन्तानुकूलत्वादयुक्तावस्थायामपि प्रीतिरूपज्ञानेन प्रतिसन्धीयत इति प्रिया, अत एव हि "या प्रीतिरविवेकाना" मित्यादिना सा प्रार्थ्यते, प्रीतिरूपध्रुवानुस्मृतेरपवर्गोपायत्वमुक्तम्, अन्यत्र भक्तेरुपायत्वं दृश्यते, कथमनयोरैकार्थ्यमित्यत्राह— ( एवंरूपेति ) यद्वा "शेमुषी भक्तिरूपे" ति भक्तिरूपज्ञानस्योपायत्वं प्रागुक्तम्, कथमिदानीं प्रीतिरूपध्रुवानुस्मृतेरुपायत्वं प्रतिपाद्यते ? इत्यत्राह—एवंरूपेति । एवंरूपा—साक्षात्कारत्वप्रीतिरूपत्वपर्यन्ता ध्रुवानुस्मृतिरेव भक्तिशब्दवाच्येत्यर्थः । कुत इत्यत्राह ( उपासनपर्यायत्वादिति ) उपासनादिशब्दानां भक्तिशब्दस्य चैकार्थ·

ः तत्त्वटीका ः

व्यनक्ति ( अत इति ) लोकानुसारादुपात्तश्रुतिस्मृतितात्पर्यवृत्त्या चेत्यर्थः । ( अत्यर्थप्रिया ) अतिमात्रानुकूलस्वभावतया स्वयमेव भासमाना अयुक्तदशायामपि 'या प्रीतिरविवेकाना' मिति न्यायेन प्रीतिरूपज्ञानान्तरेण विषयीकृता । विषयविशेषायत्तं हि सर्वत्र विषयिणो ज्ञानस्य प्रीतिरूपत्वं प्रीतिविषयत्वञ्चेत्यभिप्रायेण स्मर्यमाणात्यर्थप्रियत्वोक्तिः, वरणविवरणयोः कर्तृत्तत्कर्मणो वरणीयार्थी प्राकरणी च व्यावृत्तिः परेणेति दर्शिता । ननु, 'शेमुषी भक्तिरूपे'ति पुराणादिप्रसिद्धं भक्तेरुपायत्वं प्रक्रान्तम्. ध्यानोपासनादिशब्दवाच्यमित्यत्रादिशब्देन भक्तिशब्दोपि विवक्षितः, उपासानुश्रुतिषु तु न तद्गीरस्ति, अतः कथमविरोधः ? तत्राह ( एवंरूपेति ) उक्तशङ्कानुक्रमेण विशेषितेत्यर्थः । प्रतिज्ञामात्रमित्येतदित्यत्राह ( उपासनेति ) ध्रुवानुस्मृतेः प्रीतिरूपत्वेनोपासनशब्दवाच्यतया च विशेषणात्

र्यायत्वाद्भक्तिशब्दस्य। अतएव श्रुतिस्मृतिभिरेवमभिधीयते [1]"तमेव विदित्वातिमृत्युमेति" [2]"तमेवं विद्वा-

* श्रुतप्रकाशिका *

वृत्तित्वं विवक्षितम्, न तु घटकुम्भयोरिव पर्यायत्वम् । एकार्थवृत्तित्वं च "सेवा भक्तिरुपास्ति" रिति नैघण्टुकोक्तेरेव गम्यते, "स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते। भज इत्येष धातुर्वै सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी" इत्यादि चानुसन्धेयम् । यद्यपि साक्षात्काररूपत्वभक्तिरूपत्वादिपराणां वाक्यानां विद्याविशेषविषयप्रकरणपरिगृहीतत्वेपि सर्वोपासनसाधारणत्वं लघुगुरुयत्नविकल्पानुपपत्तेः प्राप्तं, तथापि प्रपदने तु लघुगुरुयत्नविकल्पानुपपत्तिरूपन्यायो वचनबलप्रतिक्षिप्तः । न हि वचनविरोधे न्यायः प्रभवति, वचनविरोधाभावादुपासनेषु तस्य प्रवृत्तिः, वेदान्तेषूपासनपराणां वाक्यानामैकार्थ्यसिद्ध्यर्थं भक्तिदशापन्नस्योपासनस्यैवापवर्गोपायवेदनत्वमुक्तम्, स्मृतिवचनप्रदर्शनं च श्रुत्यर्थवैशद्याय कृतम् । इदानीं तु श्रुतिस्मृत्योरैकार्थ्येन मुक्त्युपायवेदनस्य भक्तिरूपोपासनत्वमुपपाद्यते ( अत एवेति ) अतएव– अपवर्गोपायवेदनस्य भक्तिरूपोपासनत्वादेवेत्यर्थः । "तमेव विदित्वे" ति वाक्यं श्वेताश्वतरोपनिषदि श्रूयते, तत्र "तस्मा-

* तत्त्वटीका *

'स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयते' इति तल्लक्षणानुरोधात् 'सेवा भक्तिरुपास्ति' रिति पर्यायपाठाच्छब्दभेदेप्यैकार्थ्यसिद्धौ विधेयभेदाभावान्न विरोधप्रसङ्ग इति भावः । वेदनादिशब्दानां भक्तिपर्यवसायित्वमुपबृंहणोपबृंहणीययोर्मिथः प्रतिक्षेपकत्वप्रसङ्गरूपयुक्त्यन्तरेण दृढीकृतमित्याह ( अत इति ) इदं फलरूपहेतुपरं. वेदनोपासनादिशब्दैर्भक्तेरेवोक्तत्वादित्यर्थः । अन्यथा श्रुतीनामिव श्रुतिस्मृत्योरपि मिथो विरोधस्स्यादित्यभिप्रायवानेवकारः । ( एवम् ) श्रुतौ वेदनव्यतिरिक्तः, स्मृतौ तु भक्तिव्यतिरिक्तश्चरमोपायो नास्तीत्युक्तप्रकारेणेतियावत् । ननु 'तमेव विदित्वातिमृत्युमेति' इति श्वेताश्वतरवाक्यं शिवादिशब्दसमभिव्याहाराद्रुद्रविषयम्, 'तमेवं विद्वानि'ति तु महापुरुषविषयं, तत्र चात्र च "नान्यः पन्था

1– श्वे. उ. ३. अ ८. वा. ॥ 2– पुरुषसूक्तम्. १७. वा. ॥

नमृत इह भवति। नान्यः पन्था अयनाय विद्यते", [1]"नाहं वेदैर्न तपसा न दानेन न चेज्यया। शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया

* श्रुतप्रकाशिका *

त्सर्वगतः शिव" इति शिवशब्दग्रहणाच्छिवस्य परमात्मत्वविषयत्वभ्रमः कस्यचिन्मन्दधियः स्यादिति तन्निवृत्त्यर्थं "वेदाहमेतं पुरुषं महान्तम्" "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक" इत्युपक्रमोपसंहारयोरवगतपरमपुरुषपरैव सोपनिषदिति पुरुषसूक्तैकार्थ्यं दर्शयितुं तमेवं विद्वानिति वाक्यमुपात्तम्, तमेवं विद्वानिति वाक्येन नान्यः पन्था इति परमपुरुषवेदनव्यतिरिक्तोपायनिषेधः कृतः, नाहं वेदैरित्यादिना तद्भक्तिव्यतिरिक्तोपायनिषेध उक्तः, उभयोरप्युपबृंहणोपबृंहणीयवचनयोः प्रमाणतमत्वेन सर्वाविगीतयोरैकार्थ्ये वेदनादिशब्दानां भक्तिपर्यन्तत्वे सिद्ध्यतीति भावः। उपायान्तरनिषेधकण्ठोक्त्या ज्ञानदर्शनप्राप्तीनां भक्तिसाध्यत्वकण्ठोक्त्या च नाहं वेदैरिति

* तत्त्वटीका *

अयनाये' त्याम्नातम्, अतो मिथो व्याघात इति मन्दशङ्कापनुत्त्यै तदुभयवाक्योपादानम्. अयं भावः,— 'वेदाहमेतं पुरुषं महान्त' मित्याद्यैः पूर्ववाक्यैः "महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्त्तकः' सहस्रशीर्षा पुरुषः" इत्याद्यैरुत्तरवाक्यैश्च सत्त्वप्रवर्तकस्यानन्यपरपुरुषसूक्तोदितस्य महापुरुषस्य शब्दतोऽर्थतश्च प्रत्यभिज्ञया शिवमहेश्वरादिशब्दानां तत्परत्वावश्यम्भावेन ऐन्द्रीन्यायेन रूढिपरित्यागस्य न्याय्यत्वात् "सर्वश्शर्वश्शिवस्स्थाणुः" इति भगवन्नामपाठाच्छिवशब्दस्य च माङ्गल्यादौ रूढत्वात् प्रसिद्धिप्रकर्षस्यात्रोक्तरीत्या नैष्फल्यात् अनन्यथासिद्धनारायणानुवाकसौबालमहोपनिषदादिप्राबल्यात् 'शाश्वतं शिवमच्युत' मितिवन्महापुरुषविषयत्वावश्यम्भावात् 'तस्मात् सर्वगतश्शिवः' इत्यस्यारम्भे "सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः" इति सहस्रशीर्षत्वादिप्रत्यभिज्ञानात् 'सर्वव्यापी च भगवान्' इति भगवच्छब्दस्य महापुरुषरूढत्वस्थापनात् निगमनस्य प्रस्तुतशेषतया तदविरोधेन नेयत्वाच्च विगीतं पुरुषसूक्तोक्तविषयमेवेति। अत्र 'नाह' मित्यादेर्वेदतपःप्रभृती-

१— गीता ११. अ. ५३. ५४. श्लो. ॥

शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इति ।

* श्रुतप्रकाशिका *

वचनमुपात्तम् । ननु "भक्त्या मामभिजानाति" "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मिति भक्तिजन्यज्ञानस्यैवाव्यवहितोपायत्वमवगम्यते, न तु भक्तेरिति शङ्का च नाहं वेदैरित्यनेन परिहृता भवति । अत्र ज्ञानदर्शनयोरिव प्राप्तेरपि भक्तिसाध्यत्वावगमात् भक्त्या प्रवेष्टुं च शक्य इति ह्यन्वयः । भक्त्या मामिति वचनेपि ततो मां विशत इति तच्छब्दपरामृष्टाया भक्तेरेव प्राप्त्युपायत्वमवगम्यते. तत इति भक्तिपरामर्शाभावे तदनन्तरमित्यनेन पौनरुक्त्यप्रसङ्गात्, अतश्च भक्तिरेवाव्यवहितोपायः "पुरुषः स परः पार्थ" इत्यत्र च भक्त्या लभ्यइति भक्तेः प्राप्तिसाधनत्वं स्वरसतोवगम्यते । अनेन पुरुषशब्दप्रत्यभिज्ञापितपुरुषसूक्तप्रतिपाद्यवस्त्वैक्यवत् तत्प्रतिपन्नोपायैक्यं न्याय्यमिति सूचितम् ।

* तत्त्वटीका *

नां साक्षादुपायत्वाभावे तात्पर्यमिति न तद्विरोधः । 'भक्त्या त्वनन्यये'त्यादेश्च पूर्वभेदवतैव भक्तिरूपज्ञानेन ज्ञानान्तरादेस्साध्यत्वे तात्पर्यान्नात्माश्रयादिप्रसङ्गः "पुरुषस्स पर" इत्याद्युपादानस्य न पूर्वेण कृतकरत्वं– तदप्रतिपन्नख्यापनात्. अयं खल्विहाभिप्रायः,— तमेवं विद्वानित्यत्र आदित्यवर्णं तमसः परस्तादिति यत्पूर्ववाक्ये श्रुतं तदेव 'अणोरणीयांसमनुस्मरेद्य' इत्यारभ्य अचिन्त्यरूपत्वादित्यवर्णत्वोक्त्या प्रत्यभिज्ञापितं 'धाता पुरस्ता' दित्युक्तं च 'सर्वस्य धातार' मिति दर्शितम्. तत्र श्रुतौ विदिनोक्तमिहानुस्मरतिना विवृतम् 'भक्त्या युक्त' इति चानन्तरं विशेष्यते- अतो भक्तिरूपा ध्रुवानुस्मृतिः श्रुतौ विदिना विधीयत इति गम्यते । यद्यप्यत्र यद्वृत्तावृत्तिवशात्पुरुषार्थान्तरसाधनविषयत्वमेव युक्तम्, तथापि समानन्यायतया मोक्षार्थविदेरपि भक्तिविश्रमासिद्धिस्स्वीकार्या, तत्रैव च 'पुरुषस्स पर' इत्यादिना मोक्षार्थश्रौतविदेरपि तद्विशेषपरत्वं व्यञ्जयति. 'यमेवैष वृणुते तेन लभ्य' इति श्रुतिसम्पुटनिगूढं चात्रोद्घाटितम्, अत्र हि ज्ञानिनां प्राप्यान्तरवत्प्रापकान्तरमपि

एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञादीनि कर्मा॰

* श्रुतप्रकाशिका *

अस्त्वेवं वेदनस्य भक्तिरूपोपासनत्वसिद्धिः, ततः प्रकृतस्य कर्मापेक्षितत्वस्य किमायात ? मित्यत्राह ( एवमिति ) एवंरूपायाः— आपरोक्ष्यप्रीतिरूपत्वविशेषणविशिष्टायाः । वाक्यकारसूत्रकाराभ्याममभिप्रेताः कण्ठोक्ताश्च मोक्षोपायज्ञानावस्थाविशेषाः कर्मसाध्या इति भावः । ( ध्रुवानुस्मृतेः साधनानीति ) यथा असिना जिघांसतीत्यत्रासेर्हननसाधनत्वं– न त्विच्छासाधनत्वं, तथा यज्ञेन विविदिषन्तीत्यत्रापि विद्यासाधनत्वमेवोक्तं– न तदिच्छासाधनत्वम्, यज्ञादेर्वेदनेच्छासाधनत्वेन विनियोगायोगादितिभावः । तथा हि– सर्वेषां पुरुषाणामवान्तरसाध्योपाये प्रवृत्तिः परमसाध्येच्छया विना नोपपद्यते, यथा यागाद्युपायभूतद्रव्यार्जनादौ प्रवृत्तिः, यागादिसाध्यापूर्वादिविषयेच्छया विना नोपपद्यते, तथा इच्छासिद्ध्यर्थमनुष्ठानमिच्छासम्पाद्यवेदनेच्छया विना नोपपद्यते; अतो वेदनेच्छायां जातायां वेदनोपायभूतेच्छासिद्ध्यर्थानुष्ठानं, तस्यां जातायां च तदर्थमनुष्ठानमनपेक्षितमिति तदनुष्ठानविधिवैयर्थ्यं स्यात् । किंच, स्वसिद्धिसापेक्षा स्वसिद्धिरित्यात्माश्रयः, वेदनेच्छया इच्छासिद्ध्यर्थकर्मानुष्ठानम् इच्छासिद्ध्यर्थकर्मानुष्ठानाद्वेदनेच्छासिद्धिरित्यन्योन्याश्रयणं वा, अतो विविदिषासाधनत्वं कर्मणां न युक्तम् । नन्विच्छासिद्ध्यर्थकर्मानुष्ठानस्यात्माश्रयादिग्रस्तत्वे कचिदपीच्छा न सम्भ-

ও तत्त्वटीका ও

सविशेषणोक्त्या व्युदस्तम्. श्रुत्युक्तप्रत्यभिज्ञया प्राप्यैक्यवदुपायैक्यमपि हि युक्तम् अतो विदिस्थाने ध्यायत्युपासिवद्भजतिरप्यत्र विशेषकतया प्रयुक्तः । पुंसूक्तभगवद्गीते प्रमाणतमसम्मते न मिथो बाधमर्हेतां, नैकार्थ्ये स्मृत्यनादर इति ।

ननु 'भक्त्या मामभिजानाति' इत्यादौ भक्तिसाध्येन ज्ञानेन परमप्राप्तिर्गीता, मैवम्,—तत्रापि ' ततो मां विशत 'इति भक्तेरेव प्राप्तिहेतुत्वेन परामर्शात्. अन्यथा तत इत्यस्य नैरर्थ्यात्, अतो ' भक्त्या प्रवेष्टु ' मित्यैकार्थ्यम् । ननूक्तश्रुतिस्मृतिस्वारस्याद्वेदनानुवचनयज्ञादिनिरपेक्षा भक्तिरेव मुक्तिसाधनमस्तु, ततश्च न कर्मविचारवृत्तत्वं सिद्ध्येदित्यत्राह ( एवंरूपाया इति ) सुकृतसापेक्षध्यानादिभक्त्यन्तपर्वविशेषवत्तया श्रुतिस्मृतिसूत्रवाक्यसिद्धाया इत्यर्थः । श्रुतिसूत्रयोर्विविदि-

# णीति–¹"यज्ञादिश्रुतेरश्ववत्"दित्यभिधास्यते। यद्यपि

* श्रुतप्रकाशिका *

वेत् इच्छाहेतुभूतकर्मानुष्ठानायोगात्। न चेच्छाया विषयवैलक्षण्यज्ञानमात्राधीनत्वं, वैलक्षण्यज्ञानेपि कस्यचिदिच्छानुत्पत्तिदर्शनात्; अतः कस्यचिदिच्छोत्पत्तेः कर्महेतुकत्वमाश्रयणीयं- तच्च तवानुपपन्नम्, नैवम्-भोगादृष्टोद्बोधितपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्तेः, न चाज्ञातसुकृतवशाद्धर्मरुचिवद्यज्ञादिना वेदनेच्छासिद्धिरिति वाच्यम्;- बह्वर्थव्ययायाससाध्यानां यज्ञादीनामज्ञातसुकृतरूपत्वासंभवात्, यज्ञेन विविदिषन्तीति वाक्यस्य ह्यर्थश्चिन्त्यते, अतो बुद्धिपूर्वकमेव यज्ञाद्यनुष्ठानम् तत्र मोक्षोपायवेदनेच्छाया अभावे बह्वर्थयत्नसाध्यकर्मणां फलान्तराभिसंधिपूर्वकत्वनियमान्न विविदिषां साधयति. फलान्तराभिसंधिविधुरं तु यज्ञादिकं वेदनेच्छया विना नोपपद्यते, प्रयोजनानुद्देशेन प्रेक्षावतः प्रवृत्त्ययोगात् प्रकृष्टप्रयोजनतदुपायेच्छाविरहे क्षुद्रप्रयोजनपरित्यागायोगाच्च, अतोऽवान्तरसाध्येच्छासिद्ध्यर्थमनुष्ठानं परमसाध्यवेदनेच्छया विना नोपपद्यत इति स्वसिद्ध्यर्थकर्मानुष्ठानस्य स्वसिद्धिसापेक्षत्वादात्माश्रयादिदोषः स्यादेव (अभिधास्यत इति) तत्रोपपादयिष्याम इत्यर्थः

ॐ तत्त्वटीका ॐ

षाविषयत्वे प्रकरणतोर्थतश्च प्रत्यूढमित्यभिप्रायेण ध्रुवानुस्मृतेरित्युक्तम् ( अभिधास्यते ) सूत्रकृताऽसाभिश्च समर्थयिष्यत इतिभावः। विविदिषन्तीत्यस्य सन्निधौ 'मनसैवानुद्रष्टव्य' मिति विशदवेदनं विहितम् 'एतमेव विदित्वा मुनिर्भवति' इतिस्तुतम्, अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र विध्यन्तराकाङ्क्षा, नतु तदुभयरहिताया विविदिषायाः। विविदिषा साधनत्वेन विधानं च दुर्वचम्, नहि यागेन स्वर्गं जिगमिषतीत्युक्ते यागस्य जिगमिषासाधनत्वं स्यात्, इह च वेदनेच्छाविरहे विविदिषा कामत्वस्यासिद्धेः। तत्सम्भवे तदुपायानपेक्षणं, वेदनेच्छया च विविदिषा कामना, तया यज्ञाद्यनुष्ठानं, तेन विविदिषोत्पत्तिरिति चक्रकं स्यात्। अत्र पर्वसङ्कोचेनात्माश्रयमन्योन्याश्रयञ्च केचिदाहुः, न चात्राज्ञातसुकृतनीतिः, सावधानकृच्छ्रसाध्यत्वाद्यज्ञादेः, अतो 'असिना जिघांसती'त्यादिष्विवानुपपत्त्या नेच्छासा-

१— शारीरकमीमांसा. ३. अ. ४. पा. २६. सू.

विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते

* श्रुतप्रकाशिका *

विविदिषासाधनत्वे यज्ञादेरात्माश्रयादिदोषाभावमभ्युपगम्याह ( यद्यपीति ) तस्यैव-

७ तत्त्वटीका ७

धनत्वेनान्वयः ।

साध्येच्छया विना क्वापि साधनेच्छा न सिद्ध्यति ।
अतो विविदिषार्थत्वायोगाद्वित्त्यर्थता त्विह ॥ ७ ॥
अपवर्गाभिलाषात्तत्साधनेच्छापि सिद्ध्यति ।
अतो वेदनकामस्य युक्तं तत्साधने विधिः ॥ ७ ॥
भक्तिरत्र फलत्वेन प्रकृत्या परिमृश्यते
अधिकारतया ख्याप्या तदिच्छाप्रत्ययेन तु ॥ ७ ॥

नन्वदृष्टस्य सांसारिकसर्वकार्यहेतुत्वमेष्टव्यम्, अन्यथा विषमसुखदुःखादिहेतुभूतविचित्रेच्छोत्पत्तेः, कदाचित्तदनुत्पत्तेश्चायोगात्; अत इच्छामात्रस्य साध्यत्वे वेदनेच्छाया अपि तथात्वम्, तत्खण्डनं सर्वतन्त्रविरुद्धं स्यात्-अत्रैवं प्रत्युक्तं श्रुतप्रकाशिकायां 'भोगादृष्टोद्बोधितपूर्ववासनासचिवाद्विषयवैलक्षण्यज्ञानादिच्छोत्पत्त्युपपत्ते'रिति ।

भोगार्थेन ह्यदृष्टेन पुम्भिरप्रार्थितान्यपि ।
अन्तरस्थानि कार्याणि स्युः फलप्रदबुद्धितः ॥ ७ ॥

तदिह भक्तिरूपब्रह्मवेदनकामः शान्त्यादिसहितैर्यज्ञादिभिस्तद्भावयेदितिप्रयोगविधिः । ननु, भक्त्यर्थोपायविधावपि त्वदुक्तचक्रकादिप्रसङ्गस्स्यात्— न स्यात् भक्तेरुपचयमनुवृत्तिं चापेक्ष्य तद्विधानात् । एवं वेदनसाधनविधावपि न विरोधः, सामान्यतो विदितेपि विशेषतो बुभुत्सया प्रवृत्तेः, न च विशेषेपि विदिताविदितविकल्पानुपपत्तिरिति वाच्यम्; तवापि बुभुत्सा प्रश्नादिघटिते वादादौ प्रवृत्तेः, अन्यथा पामरपरीक्षकविरोधात् । अथैवमुत्पन्नविविदिषस्य तदनुवृत्तिकामनया तदुपायविधिरुच्यते । तत्रापि फलवैषम्याभावात्तदन्वारोहात् परोक्तवेदनस्य प्रागेव निरस्तत्वात् । स्वोक्तबह्वाकारविशिष्टवेदनेच्छानुवृत्त्यै यावज्जीवं कर्मणोऽनुष्ठेयत्वमाह ( यद्यपीति ) परोक्तविविदिषामात्रसाधनत्वे त्वन्वारोह इति पक्षे तु विविदिषानुवृत्त्या प्रत्युत्तरं

तथापि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याप्रयाणादनुवर्त्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि । वक्ष्यति च "[1]आप्रयाणात्तत्रापि

* श्रुतप्रकाशिका *

इच्छाविषयभूतस्य । ध्यानरूपस्येति वाक्यार्थज्ञानव्युदासः । ध्यानस्याप्येकदिनानुष्ठेयत्वव्युदासार्थमाह ( अहरहरिति ) अहरहरनुष्ठानफलमाह ( अभ्यासेति ) अहरहरनुष्ठानेपि मासर्तुसंवत्सराद्यवधित्वव्यावृत्त्यर्थमाह ( आप्रयाणादिति ) आप्रयाणादनुवर्त्तमानत्वेपि एकद्वित्रिदिनान्तरितव्यावृत्त्यर्थमहरहरनुष्ठीयमानस्येत्युक्तम्,तत्रापि स्मृतिविच्छेदव्युदासार्थं ध्यानरूपस्येत्युक्तम् । तदुत्पत्तये-विविदिषोत्पत्तये । वेदनस्याव्यवहितप्रकृतत्वेप्यर्थवशात्तच्छब्दो विविदिषापरः,विविदिषासाधनत्वं ह्यभ्युपगम्योच्यते । आप्रयाणादहरहरुपासनानुवृत्तौ यावज्जीवं कर्मणोपेक्षितत्वे च किं प्रमाणमित्यत्राह ( वक्ष्यति चेति ) चः शङ्कानिवृत्तौ । सूत्रसन्दर्शने तद्विषयभूतश्रुतिवाक्यमपि दर्शितं भवतीत्यभिप्रायेणोपासनानुवृत्तिपरं सूत्रं

* तत्त्वटीका *

कथञ्चिन्नेयम् । तस्यैव--विविदिषागोचरस्यैव । न ह्येतद्वेदनं योगादिवदपूर्वादिवद्वा सकृदुत्पन्नं सान्तरं वा साधनमित्यभिप्रायेण ध्यानरूपत्वोक्तिः 'अहरह'रित्यादिकं निरन्तरस्याप्येकाहसाध्यत्वं दर्शपूर्णमासादिवद्दिवसान्तरितसाध्यत्वञ्च व्यवच्छिनत्ति आप्रयाणादनुवृत्तिवचनं संवत्सराद्यवधिकप्रतिदिनकर्तव्यव्युदासार्थम् । अभ्यासाधेयातिशयस्येत्यनेन दृष्टोपकारश्चाप्यस्तीति व्यज्यते ( तदुत्पत्तये ) अनुवृत्तेरिष्टतया यज्ञादिसाध्यत्वेनाभिमतविविदिषोत्पत्तय इत्यर्थः । सर्वाणीत्येतद्यथार्हं विभाज्यम्, यावज्जीवमित्यनेन जन्मान्तरशतेत्यादेः प्रागुक्तस्योपालम्भः । विविदिषायां जातायामपि मध्ये कर्मणां त्यागो न युक्तः विविदिषाविच्छेदे वेदनाविच्छेदप्रसङ्गात्, नहि सकृदुत्पन्नया विविदिषया वेदनानुवृत्तिस्सिध्येत्-- सकृद्बुभुक्षयेव भोजनानुवृत्तिः, प्राचीनसुकृतभूम्नानुवृत्तिसम्भवेपि पाक्षिकविघ्नशान्त्यै

१-- शा. ४ अ. १. पा. १२. सू० ॥

हि दृष्टम्" [1]'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' [2]"सहकारित्वेन च" इत्यादिषु. वाक्यकारश्च ध्रुवानुस्मृ-

* श्रुतप्रकाशिका *

दर्शितम् ( आप्रयाणादिति ) "स खल्वेवं वर्त्तयन् यावदायुष" मिति श्रुतिः । यावच्छब्दस्य साकल्यार्थत्वात् अहरहरनुष्ठानसिद्धिः, तावत्कर्मापेक्षायामाह ( अग्निहोत्रेति ) आश्रमधर्माणामाश्रमशेषत्वेपि विद्याङ्गत्वमप्यस्तीत्याह ( सहकारित्वेन चेति ) इत्यादिषु सूत्रेषु इममर्थं वक्ष्यतीत्यर्थः । उक्तं कर्मणो विद्याङ्गत्वमुपासनस्य शमाद्यङ्गत्वविरोधान्नोपपद्यत इत्याशङ्क्य विरोधं परिजिहीर्षुस्तद्विषयश्रुतिवाक्य-प्रदर्शनेनाप्रमाणतां च निराचिकीर्षुराह ( वाक्येति ) सूत्रकाराभिप्रायज्ञैरप्येवमुक्त-मिति भावः । ध्रुवानुस्मृतिशब्देन तल्लब्धिरित्यत्र तच्छब्दो व्याख्यातः । विवे-

৩ तत्त्वटीका ৩

प्रवर्त्तितव्यमितिभावः । पूर्वं वेदनस्य ध्यानोपासनादिरूपत्वे सूत्रं दर्शितम् । अथाहर-हराप्रयाणादनुवर्त्तनीयत्वे तद्वदेव तदङ्गकर्मानुवृत्तौ च सूत्राणि सन्तीत्याह ( वक्ष्य-ति चेति ) सूत्रैरेव तत्तद्विषयवाक्यान्यपि सूच्यन्ते, एतेन स्वोक्तानभ्युपगमे सूत्रा-दिविरोधो दृढीकृतः । "आप्रयाणात्तत्रापि हि दृष्टम्" इत्यनेनैव कर्मणो याव-दायुरनुष्ठेयत्वं सिद्धम् । 'स खल्वेवं वर्त्तयन् यावदायुष' मितिवाक्यस्य दृष्टमित्य-नेन विवक्षितत्वात्, तत्र च 'कुटुम्बे शुचौ देशे' इत्याद्युक्तधर्मानुवृत्तेरेवंवर्त्त-यन्नित्यत्रानूदितत्वात्. "यावज्जीवमग्निहोत्रं जुहोती"ति नियतस्यापि विद्याङ्ग-ताज्ञापनायाग्निहोत्रादिसूत्रोपादानम् "विहितत्वाच्चाश्रमकर्मापि" इत्याश्रमाङ्गत-योक्तस्य कथं विद्यार्थत्वमित्यत्र विनियोगपृथक्त्वव्यञ्जनाय "सहकारित्वेन च"इति सूत्रग्रहणम्. आदिशब्देन 'सर्वथापि त एवोभयलिङ्गा' दिति कर्मणां विद्याश्रमाङ्गत्वे तन्त्रानुष्ठानसूचकसूत्रसङ्ग्रहः । अथ विरोधादप्रमाणत्वादित्यादिपूर्वपक्षहेतुः सूत्रका-राभिप्रायविदां वचसापि परिहरति ( वाक्येति ) एवकारेण शमदमादेर्यज्ञादेश्च विरोधाभावात्स्वोक्तसंवादश्च ख्याप्यते. अथवा, न साधनचतुष्टयेन नच विवेका-दिष्वन्यतमेन कर्ममात्रेण शमादिमात्रेण चेत्यर्थः ।

---

१— शा. ४. अ. १. पा. १६. सू० ॥ २— शा. ३. अ. ४. पाद. ३३. सू. ॥

तेर्विवेकादिभ्य एव निष्पत्तिमाह ॥ [1]"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः संभ-

* श्रुतप्रकाशिका *

कादिभ्य एव- न तु केवलकर्मणा केवलशमादिना वेत्यर्थः। वाक्यकारग्रन्थ उपादीयते (तल्लब्धिरिति) उपासनं स्याद् ध्रुवानुस्मृतिरिति हि प्रकृतम्, अतो ध्रुवानुस्मृति लब्धिरित्यर्थः। विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्य इति द्वन्द्व समासः, स चेतरेतरयोगार्थे. एष्वन्यतमेन तल्लब्धेर्दुष्करत्वात्. समुच्चये सम्भवति पाक्षिकबाधगर्भविकल्पो ह्ययुक्तः, तस्याष्टदोषदुष्टत्वात्, समुच्चयस्य चात्र सम्भवात्, एवं विवेकादिविधायिनां वाक्यानां समुच्चये तात्पर्यमिति दर्शयितुमितरेतरयोगद्वंद्वेन वाक्यकारनिर्देशः। ननु समुच्चयादर्थान्तरमितरेतरयोगः, तत्कथमितरेतरयोगद्वन्द्वेन समुच्चयलाभः। उच्यते;— अन्वाचयसहपठितात् समुच्चयाद्विकल्पप्रति सम्बन्धिसमुच्चयोर्थान्तरम्, एकस्मिन्नेव कार्ये मिथो निरपेक्षसाधकानामन्वयोन्वाचय-सहपठितः। विकल्पसमभिव्याहृतसमुच्चयस्त्वेकस्मिन् कार्ये मिथः सापेक्षाणामन्वयः, स एव इतरेतरयोग इत्यविरोध इति। निवृत्तिरूपशमादेः प्रवृत्तिरूपयज्ञादेश्च विरोधान्न समुच्चय इति चेन्न, भिन्नविषयत्वेन विरोधाभावात्। अविहिताप्रतिषिद्धकाम्य विषया हि शमादयः। सम्भवात्- उपपन्नत्वात्। निर्वचनाच्च-श्रुतिवचनाच्च, प्रमाणोपपत्तिभ्यामित्यर्थः। विवेकादयः किं रूपाः, कथं वा शमादेः कर्मणश्चाविरोधः?

छ तत्त्वटीका छ

निषिद्धकाम्यव्यर्थेभ्यो निवृत्तस्य शमादिभिः।
स्वाश्रमोचितविद्याङ्गप्रवृत्तिर्न विरुध्यते ॥

अविरोधेन सम्भूयसाधनत्वव्यक्त्यै वाक्यमुपादत्ते (तल्लब्धिरिति) अत्र तच्छब्दार्थो ध्रुवानुस्मृतेरित्यनेन दर्शितः "उपासनं स्याद्ध्रुवानुस्मृति"रिति तत्र प्रकृतं बहिः परामृश्यते. विवेकादीनां सप्तानामेकस्मिन् कार्येऽन्योन्यसापेक्षत्वरूपेणेतरेतरयोगेन समप्रवृत्तिनिवृत्तिरूपाणामाश्रमभेदेन व्यवस्था शक्येष्वपि कतिपयशङ्का च व्युदस्ता। सम्भवात—एकत्र योग्यतया विरोधप्रसङ्गाभावात्। निर्व-

१– बोधायनवृत्तिः

वान्निर्वचनाच्च" इति । विवेकादीनां स्वरूपं चाह [1]"जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेक" इति। अत्र निर्वचनम्–[2]"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृति" रिति। [3]'विमोकः कामानभिष्वङ्गः' इति ।

* श्रुतप्रकाशिका *

इत्यत्राह ( विवेकादीनां स्वरूपं चाहेति ) न केवलं परिगणनामात्रं तत्स्वरूपं च वाक्यकार एवाहेत्यर्थः । प्रथमं विवेकस्वरूपविषयवाक्यमुदाहरति (जात्याश्रयेति) आहारविषयविवेचनं विवेकशब्देन विवक्षितं भवति, दुष्टाहारात् सात्त्विकाहाराणां विवेचनं विवेकः, जातिदुष्टाः कलञ्जगृञ्जनादयः । आश्रयः–द्रव्यस्वामिपुरुषः, अभिशस्तपतितचण्डालादिद्रव्यमाश्रयदुष्टम् । उच्छिष्टकेशाद्युपहतं निमित्तदुष्टम् । एतत्रिविधदोषरहिताहारविवेचनफलभूतकायशुद्धौ विवेकशब्द उपचरितः । यद्वा विविक्ताहारसेवया राजसतामसाहाराप्यायितदेहात् स्वदेहस्य विवेचनं विवेकः । अशुद्धेभ्यो विवेचनं हि शुद्धिः, इतिशब्दो भाष्यकारीयः । अत्र निर्वचनमिति च भाष्यग्रन्थः । निर्वचनम्—निष्कृष्टवचनम् । अप्रमाणेभ्यो निष्कृष्टं प्रमाणभूतं वचनमित्यर्थः। आहारशुद्धावित्यादि निर्वचनं, विमोकः कामानभिष्वङ्गः–विषयमभुक्त्वा स्थातुं न शक्नोति येन स विकारोऽभिष्वङ्गः "कामात्

* तत्त्वटीका *

चनात्—अतीन्द्रियार्थे निश्चायकतया निष्कृष्टाद्वचनात्, युक्तिसहितागमादिति यावत्। इह विद्यायाः कर्मजन्यत्वसिद्ध्यर्थतयोपात्ताः के विवेकादयः, कथंच तेषामविरोधः? इत्यत्र वाक्यकारेणैव व्याख्यातत्वमाह (विवेकादीनामिति) (स्वरूपं च) उद्दिष्टानां मिथो व्यावर्तकस्वरूपं चेत्यर्थः । जातिदुष्टम्–लशुनादि । आश्रयदुष्टम्–शूद्रान्नादि । निमित्तदुष्टम्– केशाद्युपहतम्, तादृशदोषराहित्येनाशुद्धेभ्यो विभक्तादन्नात्सेन्द्रियस्य देहस्य रजस्तमोभिभवरहितसत्त्वोन्मेषापादनेन शुद्धितः पृथक्करणं विवेक इति । प्रदर्शकं वाक्यमाह ( जातीति ) अत्र निर्वचनमिति भाष्योक्तिः । 'आहारशुद्धौ सत्त्वशुद्धि' रितिनिर्वचने सत्वमन्तःकरणम्, सत्त्वगुणो वा, तस्य

१–बोधायनवृत्तिः ॥ २– छा. उ. ७. प्र. २६. ख. २. वा. ॥ ३– वृत्तिः ॥

[1]"शान्त उपासीते" ति निर्वचनम् । [2]'आरम्भण-संशीलनं पुनः पुनरभ्यासः' इति । निर्वचनञ्च स्मार्त्त मुदाहृतं भाष्यकारेण, [3]"सदा तद्भावभावितः" इति।

* श्रुतप्रकाशिका *

क्रोधोऽभिजायते" इत्यादिवचनात् क्रोधाद्यभावश्चात्र फलितः । "शान्त उपासीते" ति निर्वचने शान्तशब्देन रागद्वेषाद्यभावो विवक्षितः । आरम्भणम्—आलम्बनं—शुभाश्रयः, तस्य संशीलनं, कथमेतत्साधनं साध्यं ह्रीदम्. न. "शुचौ देशे प्रतिष्ठाप्ये" त्याद्युक्तदेशकालविशेषाभ्यसनीययोगशब्दवाच्या ध्रुवानुस्मृतिर्हि साध्या, इदं तु योगकालकर्तव्यध्यानानुग्राहकं सदा संशीलनं "सदा तद्भावभावित" इति हि वक्ष्यति, सदा भगवत्संशीलनाभावे योगकालेषु कालान्तरसंशीलितं विषयान्तरं बुद्धिस्थं स्यात्, अतो न साध्याविशिष्टत्वम् आरम्भणसंशीलनस्य, निर्वचनं च स्मार्तमुदाहृतं भाष्यकारेणेत्यनेन पूर्वोपात्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायते । "अथ मुनि" रिति श्रौतं निर्वचनम्, तस्य न्यायोपन्याससापेक्षत्वेन

* तत्त्वटीका *

शोधनीयसर्वोपलक्षणतया वाक्ये कायोक्तिः, सापि करणवर्गोपलक्षिका । 'आयुस्सत्त्वे' त्यादिभिश्शुद्धाशुद्धाहारश्च गीतः । विमोकशब्दस्यात्र 'कामः क्रोधस्तथा लोभः' इत्याद्युक्तत्याज्यवर्गानुपश्लेषपरतया कामानभिष्वङ्ग इति मूलघातोक्तिरित्यभिप्रायः । कामोऽत्र तीव्रतमसङ्गजन्यः । सङ्गात्सञ्जायते काम' इत्युक्तेः, तेनाभिष्वङ्गोऽनुवृत्तदृढग्रहणं, तदभावे "कामात्क्रोधोऽभिजायते" इत्याद्युक्तपरम्परानिवृत्तिः । शान्त उपासीतेत्यत्र शान्तशब्दः करणव्यापारनिवृत्तिमुखेन कामादिराहित्यपरः । आरम्भणम्— योगमारुरुक्षोश्चित्तालम्बनं शुभाश्रयरूपम् । विवरणे तु 'ज्ञानालम्बनमुपास्य' मित्युक्तं, तस्य संशीलनम्—अनुकूलतया शीलनम्. पुनः पुनरित्येतदङ्गप्रकरणात् 'व्यापृतेनापि मनसा' इत्यादिस्मृत्या चोत्थानकाले योज्यम्. अतएव नात्माश्रयशङ्का. इदञ्च योगानुगुणवासनाप्रचयार्थं कषायापाकरणार्थञ्च । "बाल्यञ्च पाण्डित्यञ्च निर्विद्याथ मुनि" रितिश्रौतनिर्वचनस्याप-

१– छा. उ. ३. प्र. १४. ख. १. वा. ॥ २– वृत्तिः ॥ ३–गीता.८.अ.६. श्लो. ॥

१ "पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया" इति। निर्वचनं २ "क्रियावानेष ब्रह्मविदां वरिष्ठः" ३ "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने" ति च। ४ "सत्यार्जवदयादानाहिंसानभिध्याः

* श्रुतप्रकाशिका *

"सहकार्यन्तरविधि" रित्यधिकरणे व्याख्येयत्वात् स्मार्त्तनिर्वचनस्य स्पष्टार्थत्वाच्च स्मार्त्तनिर्वचनमुदाहृतम् "तस्मात्सर्वेषु कालेषु मामनुस्मरे" त्येवमन्तं वचनजातमिहाभिप्रेतम्। (पञ्चमहायज्ञेति) शक्तितः—न हि शास्त्रमशक्यं विदधाति। (क्रियावानेष इति) सन्राहितवाक्यम्। ब्रह्मविदां वरिष्ठः—ब्रह्मविदां मध्ये वरिष्ठः, न हि ब्रह्मविविदिषूणामित्युक्तम्। क्रियाशब्दार्थविशदीकरणायाह (तमेतमिति) सत्यम्—भूतहितम्। आर्जवम्—मनोवाक्कायानामैकरूप्यम्। दया—स्वार्थनिरपेक्षपरदुःखासहिष्णुत्वम्। अहिंसा—करणत्रयेणापि परपीडानिवृत्तिः,

छ तत्त्वटीका छ

ष्टार्थतया तदुपबृंहणं दर्शितमित्यभिप्रायेण स्मार्तोक्तिः। अत्र भाष्यकारो बृंहनन्दी, वाक्यव्याख्याता द्रमिडाचार्यः। तेनान्येषु श्रुतिरुदाहृता. अत्र तु स्मृतिः। अथवा अन्यत्र वाक्यकारेणैव श्रुतिरुदाहृता. अत्र तु भाष्यकारेणैव स्मृतिरिति. यद्यपि 'यं यं वापि स्मरन्' इति प्रक्रमात् सदेत्यादिकं सामान्यं, तथापि 'तस्मात् सर्वेषु कालेषु मामनुस्मर' इत्युत्तरवाक्यानुसारेण प्रकृतार्थत्वात्तद्ग्रहः। पञ्चमहायज्ञोपादानं 'गृहस्थोपि विमुच्यते' इति स्मृतिसूचनार्थम्. आदिशब्देनाश्रमान्तरधर्माणामपि सङ्ग्रहः। यद्यपि काम्ये सकलाङ्गोपसंहारः प्राप्तः, तथापि अत्र वचनाद्यथाशक्त्यनुष्ठानं पर्याप्तमित्यभिप्रायेण शक्तित इत्युक्तम्. 'तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्' इति हि स्मर्यते। 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इत्यत्र सन्प्रयोगाभावेन कर्मणां विद्यान्वयस्फौट्याद्विविदिषन्तीत्येतदपि नियमितम्। इदञ्च वाक्यं क्रियाया अङ्गत्वेन विद्यापौष्कल्यहेतुत्वपरं, नतु निष्क्रियब्रह्मसद्भावसू-

१— बोधायनवृत्तिः॥
२— मु. उ. ३. मु. १. ख. ४. वा.
३— बृ. उ. ६. अ- ४. ब्रा. २२. वा.
४— बोधायनवृत्तिः॥

कल्याणानि" इति । निर्वचनम् [1]"सत्येन लभ्यः" [2]"तेषामेवैष विरजो ब्रह्मलोकः" इत्यादि । [3]"देशकाल-

* श्रुतप्रकाशिका *

दानम्–लोभराहित्यम् । अभिध्या–परकीये स्वत्वबुद्धिः, यद्वा निष्फलचिन्ता, अथवा परकृतापकारचिन्ता, तद्राहित्यमनभिध्या । सत्येनेतीत्यादिशब्देन आर्जवादिप्रतिपादकवाक्यजातं क्रोडीकृतम् (देशेत्यादि) अनवसादानुद्धर्षयोरवसादोद्धर्षविपर्ययरूपत्वा-

* तत्त्वटीका *

चकम्, यावज्जीवं क्रियाया अनुवृत्तेरुक्तत्वात्. मत्वर्थीयस्य भूमपरतया विधुरादि ब्रह्मविद्व्यावृत्तिपरं वा. तेषां हि वर्णधर्ममात्रयोगित्वादवरत्वम् 'अतस्त्वितरज्ज्यायो लिङ्गाच्चे' ति सूत्रसिद्धम्. अत्र 'मन्त्रेषु कर्माणी' त्यारभ्य– 'तान्याचरत नियतं सत्यकामा, इतिश्रुतिरप्यनुसन्धेया । क्रियाशब्दस्य चित्तसमाधानादिमात्रव्यावृत्त्यै 'तमेत' मित्याद्युपात्तम् । अनाशकेन–अनशनेन । अत्र गोबलीवर्दन्यायात्तपश्शब्दसङ्कोचः । यद्वानाशकादन्येनेति । यज्ञाद्यपि भोगार्थं चेत् संसारात्मकनाशप्रदमेव श्रुत्यादिसिद्धम् । भूतहितं यथार्थञ्च वाक्यं सत्यम् । आर्जवम्— करणत्रयस्यैकरूप्यम् । दया–स्वार्थनिरपेक्षा परदुःखनिराचिकीर्षा । दानम्–न्यायसिद्धद्रव्यस्य यथाविधि पात्रसात्करणम् । तेन लोभनिवृत्तिर्व्यज्यते । "दैप् शोधने" इति धातौ स्वपक्षादिशोधनं वा । "दो अवखण्डने" इत्यत्र पराहङ्कारखण्डनं वा । "निगृह्णीयाद्यथाशक्ति देवतागुरुनिन्दकान्" इतिस्मृतेः । 'न विगृह्यकथां कुर्या,दित्यस्य कामकारविषयत्वात्. अशास्त्रीयप्राणिपीडावर्जनमत्र अहिंसा "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्य" इति स्थापनात् । अभिध्या–परप्रतिकूलचिन्ता । अभिचारादौ ह्यभेदः प्रातिकूल्यमर्थः, परकृतद्रोहे निरन्तरस्मृतिर्वा. वितथाभिनिवेशो वा परस्वे ग्राह्यत्वधीर्वा– तन्निवृत्तिरनभिध्या । एवं कतिपयोपादानम् आर्जवदयादिसहपठितानामन्येषामप्युपलक्षणम् । इत्यादीत्यनेन "अमानित्वमदम्भित्वम्, दया सर्वेषु भूतेषु' क्षान्तिरनसूये" त्यादेस्सङ्ग्रहः । अनवसादोऽर्थात्सिद्ध्येदिति कृत्वा सहेतुकं तत्प्रतियोगिस्वरूपविषयं वाक्यमुपादत्ते (देशेति)

१–मु. उ. ३. मु. १. ख. ५. वा. २– प्रश्न.उ. १. प्रश्ने– १५.१६. वा.. ३– वृत्तिः

वैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः' इति। तद्विपर्ययोऽनवसादः। निर्वचनम् [1]"नायमात्मा बलहीनेन लभ्यः" इति । [2]"तद्विपर्ययजा

* श्रुतप्रकाशिका *

दवसादोद्धर्षलक्षणमात्रमुक्तं वाक्यकारेण, तद्विपर्ययरूपो नञर्थोऽर्थात्सिध्यतीति वाक्यकाराभिप्रायः । शोकवस्तु—शोकनिमित्तं वस्तु, अतीतपुत्रमरणादि । आदि-शब्देन भयनिमित्तमागामि विवक्षितम्। अतीतविषयो हि शोकः, आगामिविषयं च भयम्। अभास्वरत्वमिति दैन्यशब्दाविवरणम्, अभीष्टकार्यप्रवृत्त्यक्षमत्वरूपं दैन्यमित्युक्तं भवति। भास्वरत्वविरोधीति वा दैन्यविशेषणं, चशब्दो भिन्नक्रमः, तज्जं च दैन्यज-दैन्यं चेत्यर्थः।बन्धुजनदैन्ये दृष्टेपि हि दैन्यं स्यात् देशकालवैगुण्यशोकवस्त्वाद्यनुस्मृति-हेतुकं मनसो भास्वरत्वाभावरूपं भास्वरत्वविरोधि वा दैन्यं, दैन्यजदैन्यं च मनसो ऽवसाद इत्यर्थः । यद्वा, भिन्नवाक्यतया योजनीयं, देशकालवैगुण्यशोकवस्त्वाद्यनु-स्मृतिजनितं मनसोऽ भास्वरत्वमवसादः । किमुक्तं भवतीत्यत्राह ( तज्जं दैन्य-मिति ) तच्चाभास्वरत्वं, तज्जम्—उक्तहेतुजं दैन्यमिति व्याख्येयव्याख्यानरूपं वाक्य-द्वयमिति. तद्विपर्यय इत्यादिभाष्यग्रन्थः । बलहीनेन—मनोबलहीनेन । तद्वि-पर्ययजा—देशकालसाद्गुण्यप्रियवस्त्वाद्यनुस्मृतिजा । तुष्टिरुद्धर्ष इत्येतावदेव वाक्यं,

ॐ तत्त्वटीका ॐ

शोकनिमित्तं वस्तु शोकवस्तु, शोच्यतेऽनेनेति करणव्युत्पत्त्या वा शोकशब्दः, आदिशब्दो भीतिहेतुपरः, भूतभाव्यनिष्टगोचरधीरूपे दुःखे शोकभये । वैगुण्या-दनुस्मृतेश्चेत्यनयोर्मनसोऽभास्वरत्वमित्यनेनान्वयः। अभास्वरत्वम्—भास्वरत्वाभावः, तद्विरोधि वा. तत्स्वरूपाभिव्यक्त्यै तद्विवरणवाक्यस्याकांक्षायां मध्ये तज्जं दैन्य मिति वाक्यान्तरं, तस्यां जातं तस्मिन् मनसि वा जातम् अभास्वरत्वं दैन्यम् उप-युक्तप्रकाशनाशकत्वमित्यर्थः । यद्वा—मनसो यदभास्वरत्वं, यच्च तज्जं दैन्यं तदुभयमवसाद इति योज्यम् ( तज्जं ) तादृशदशाविशेषाज्जातमित्यर्थः । अस्ति हि पुंसां परदुःखदुःखित्वादि भास्वरत्वविरोधि मनसो दैन्यं, तज्जञ्च शोकादिकमिति

१– मु. उ. ३. मु. २. ख. ४. वा. ॥ २– बोधायनवृत्तिः ॥

तुष्टिरुद्धर्षः" इति । तद्विपर्ययोऽनुद्धर्षः, अतिसन्तोषश्च विरोधीत्यर्थः । निर्वचनमपि [1]"शान्तो दान्त" इति । एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनैव विद्या-

* श्रुतप्रकाशिका *

तद्विपर्ययोऽनुद्धर्ष इत्यर्थसिद्धम् । कथं "स्वाध्यायशौचसंतोषतपांसि नियतात्मवान्" इत्यपेक्षितस्य त्याज्यत्व ? मित्यत्राह ( अतिसन्तोषश्च विरोधीत्यर्थ इति ) । न केवलमसन्तोष एव विरोधी अतिसन्तोषश्च विरोधीति चार्थः, यथान्यविषयेष्वेव प्रवृत्तिः स्यात्तथा सन्तोषोऽतिसन्तोषः, स त्याज्य इत्युक्तं भवति । निर्वचनमपीत्यपि-शब्दः सर्वनिर्वचनसमुच्चये एवं पदार्था व्याख्याताः । तल्लब्धिरित्यादेर्वाक्यकार-ग्रन्थस्य वाक्यार्थमाह । ( एवमिति ) एवं नियमयुक्तस्याश्रमविहितकर्मानुष्ठानेनेति पृथङ्निर्देशेन प्रवृत्तिनिवृत्तिरूपकोटिद्वयविभागो दर्शितः । एतेन पदद्वयेन केवल-शमादि केवलकर्म च व्यावर्तितम् । शमादि कर्म च समुच्चित्यामित्यर्थः । यद्-

* तत्त्वटीका *

वा नेयम्, भास्वरत्वमिह प्रकाशकत्वं तदभावः तज्जश्च दैन्यमवसाद इत्यत्र तद्विपर्ययोऽनवसाद इति वाक्यशेषो भाष्योक्तः । वाक्ये तु शिष्याणामूहाशक्ति-सम्पत्त्यै तदनुक्तिः ( बलहीनेन ) 'समदुःखसुखं धीर' मित्युक्तमनोबलहीने-नेत्यर्थः । ( तद्विपर्ययजा ) देशादिगुणैर्भूतभाविसुखहेतुधिया बन्धुसुखेन च जाते-त्यर्थः । उद्धर्षोक्तावपि पूर्ववत्तद्विपर्ययेऽनुद्धर्ष इति ऊह्यत्वाद्वाक्यानुक्तं भाष्ये दर्शि-तम् । "यदृच्छालाभसन्तुष्टः, सततं योगी, स्वाध्यायशौचसन्तोषे" त्यादिविरोध-माशङ्क्याह ( अतिसन्तोष इति ) असन्तोषवदतिसन्तोषोपि विषयान्तरेष्वपि प्रव-र्तकतया विरोधीत्यर्थः । इदञ्चोद्धर्ष इत्युपसर्गेण सूचितम्. 'ऐश्वर्यमदमत्तो ही 'त्या-दिषु तत्तद्वृत्तान्तेषु चास्य विरोधित्वं प्रसिद्धम्. निर्वचनमपीत्यत्र अपिशब्दस्स-म्भवसमुच्चयार्थः पूर्वनिर्वचनेष्वपि भाव्यः । प्रकृतं कर्मणामनुपयोगं निवृत्त्यंशेन तेषामविरोधेन निवेशनञ्च सूत्रवाक्याभिप्रेतन्यायसमाहारसिद्धं निगमयति (एवमिति) एवकारेण परानिष्टत्वं द्योत्यते. तत्त्वमस्यादिवाक्यानि वा व्यवच्छिद्यन्ते, तदिह

---

१– बृ. उ. ६. अ. ४. बा. २३. वा. ।

निष्पत्तिरित्युक्तं भवति । तथाच श्रुत्यन्तरम्- "[1]विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति । अत्राविद्याशब्दाभिहितं वर्णा-

* श्रुतप्रकाशिका *

विविदिषासाधनमिति त्वयोक्तं तेनैव विद्यानिष्पत्तिरित्येवकाराभिप्रायः ( इत्युक्तं भवति ) इति वाक्यार्थो भवतीत्यर्थः । 'विद्यां चाविद्यां चे'ति श्रुतेः शङ्करयादवप्रकाशाभिमतयोजनाव्युदासार्थं तां व्याचिख्यासुरुपादत्ते ( तथा चेति ) अनेन कर्मणोऽपेक्षितत्वे सन्रहितश्रुत्यन्तरं च दर्शितं भवति । तथा च श्रुत्यन्तरं—यदन्यथा भवद्भिर्व्याख्यातम्, तच्चास्मदुक्तार्थानुगुणमिति तथाशब्दमन्तरशब्दं च प्रयुञ्जानस्य भावः । सन्निहिततया यज्ञादिवाक्यवैलक्षण्यश्चान्तरशब्दाभिप्रेतम् । अस्मिन्वाक्ये न कर्मवाचिशब्दः श्रूयत इत्यत्राह ( अत्रेति ) अत्र—श्रुतिवाक्ये । ' न त्वनात्मन्यात्म-

* तत्त्वटीका *

कर्मणोऽनुपयोगप्रमाणाभावा निरस्ताः । अथ मृषावादिना समुच्चयवादिभ्यां चान्यथा व्याख्याता श्रुतिरस्मदुक्तप्रकारमेव व्यनक्तीत्याह ( तथेति ) चोऽवधारणे । श्रुत्यन्तरञ्च तथेति वान्वयः । अन्तरशब्दस्सन्प्रत्ययरहितत्वेन स्फुटार्थत्वादङ्गिनिष्पादने द्वारप्रदर्शनात्, कर्मणां विद्यन्तानां कण्ठोक्तवेदनकरणकफलभावनानिष्ठतया परमपुरुषार्थविश्रान्तिबोधनाच्च प्रागुक्तवाक्याद्विशेषं व्यनक्ति । विद्यां चेत्यादेः परविद्यां तदङ्गभूतां कर्मरूपाविद्यां चानुष्ठेयत्वेन शास्त्रतो यो वेत्तीत्यर्थः । चकारौ अभेदसमुच्चयार्थौ, तयोरनुक्तद्योतकत्वे तु तत्तदितिकर्तव्यताविशेषयोरेव विद्याफलयोर्निवर्त्यंयोश्च प्राप्त्युपायविरोधिनोर्ग्रहणम् ' उभयं सह ' इत्यत्राङ्गाङ्गितया तृतीयाध्याये साधयिष्यमाणयोरनुष्ठेययोर्बुद्ध्यारोहणे साहित्यमभिप्रेतम्, न तु समकालतयोपादेयत्वे. वेद्यत्वे हि सहभावः उच्यते, नतु सहिततया वेदनं, न ह्युत्पत्तिदशायां विरोधिनिरसनदशायां च विद्याकर्मणोस्सहत्वसम्भवः । अत्र ' अन्धं तमः प्रविशन्ती ' त्यादिना ' ततो भूय इव ते तम ' इत्यादिना च प्रत्येकनिन्दापरत्वम् ' चकारस्सहशब्दश्च समसमुच्चयस्थापकाविति न भ्रमितव्यम्, तेषामन्यथा सिद्ध-

१– ईशा. उ. ११. वा.

# श्रम विहितं कर्म । अविद्यया–कर्मणा. मृत्युं–ज्ञानोत्पत्ति-

* श्रुतप्रकाशिका *

बुद्धिर्या' इत्यादिषु, अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मास्तु, ततः किमुक्तं भवतीत्याशङ्कायां पदान्तराण्यपि विवृण्वन् वाक्यार्थमाह (अविद्ययेति) अविद्यया–कर्मणा । विद्यया–ज्ञानेनेत्यत्र च कर्मज्ञानशब्दाभ्यां "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्त्तते" इति स्मृतिः स्वोपजीव्यार्था स्मारिता भवति । कर्माणि कषायपक्तिः–कषायपक्तिनिमित्तानि । कषायशब्दः पापपरः 'धर्मेण पापमपनुदती'त्यनेनैकार्थ्यात् कषायशब्दस्य रागादिपरत्वेपि तत्पक्तिहेतुत्वं पापनिर्हरणद्वारा, ज्ञानं परमा गतिः– परमगत्युपायः, उभयत्र कारणे कार्योपचारः कषाये पक्के ततो ज्ञानं प्रवर्त्तते– प्रसरतीत्यर्थः । अत्रोपायविरोधिनिरासकत्वं कर्मणः स्पष्टम्, न हि विविदिषा प्रवर्त्तते मोक्षः प्रवर्त्तत इति चोक्तम्, अपितु ज्ञानं प्रवर्त्तत इत्येवोक्तम् । अस्य वाक्यस्यार्थमुपजीव्याह (मृत्युं–ज्ञानोत्पत्तिविरोधीति) न तु ब्रह्म-

७ तत्त्वटीका ७

त्वात्. 'य उ विद्यायां रताः' इति कर्मानादरेण विद्योत्पत्त्युत्साहवन्त इत्यर्थः । कर्मनिरतानां विद्यानिरपेक्षकर्मस्वरूपं तावन्निष्पद्यत एव, नतु तावन्मात्रेण मुक्तिः । विद्यानिरतानां हेत्वभावाद्विद्यैव न सम्भवति, कुतस्तरां मुक्तिरिति भूयश्शब्दाभिप्रायः । अविद्याशब्दस्यात्र कर्मविषयत्वं प्रकरणेन स्थापयति (अत्रेति) न तु सर्वत्र. "अविद्यायामन्तरे वर्त्तमानाः, क्षरन्त्वविद्या, अनात्मन्यात्मबुद्धिर्या" इत्यादिष्वर्थान्तरेष्वपि प्रयोगात्. इह तु "आत्मन्येवानुपश्यति' कुर्वन्नेवेह कर्माणि" इत्यादिना विद्या तदङ्गं कर्म च प्रकृतम्, तदेवात्राविद्याशब्देन विद्योपयोगज्ञापनार्थमनूदितम् । परव्याख्यया व्याख्यातौ संशयविपर्ययौ छेत्तुं पदार्थवाक्यार्थौ स्पष्टयति (अविद्ययेति) पापस्यानर्थहेतुतयावयवशक्त्या गौण्या वा मृत्युशब्दबोध्यत्वाय यज्ञादेर्विविदिषोत्पत्तिविरोधिनिवर्तकत्वव्युदासाय चोदितज्ञाननिवर्त्त्यतया श्रुतिस्मृतिशतसिद्धप्राप्तिविरोधिव्यावृत्त्यै च ज्ञानोत्पत्तिविरोधित्वोक्तिः । यादवप्रकाशीयनिर्वाहोप्येतेन निरस्तः । यद्यत्र मृत्युतरणं मुक्तिरेव, कथं विद्ययान्यत् साध्यं स्यात् ? क्त्वाश्रुतिश्च न घटते, स्वापेक्षया स्वस्य पूर्वत्वायोगात्,—

* श्रुतप्रकाशिका *

प्राप्तिविरोधि, न च विविदिषाविरोधीत्यर्थः । उपेयविरोधिकर्मणो ज्ञाननिवर्त्यत्वं श्रुतिस्मृतिशतसिद्धम् । यथा "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः" एवमेवंविदि पापं कर्म न श्लिष्यते" "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "निचाय्य तं मृत्युमुखात् प्रमुच्यते" "ज्ञात्वा देवं मुच्यते सर्वपापैः" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति । एवमुपेयविरोधिनो ज्ञाननिवर्त्यत्वश्रवणेन परिशेषान्नान्यः पन्था इत्युपेयविरोधिनिरासे उपायान्तरनिषेधस्वारस्यात् समसमुच्चय पक्षे कर्मणोप्युपायतया वेदनव्यतिरिक्तकृत्स्नगोचरान्यशब्दस्य सङ्कोचप्रसङ्गात् यज्ञेन विविदिषन्तीति कर्मण उपायहेतुत्वस्य कण्ठोक्त्या "कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तत" इति स्मृत्यानुगुण्याच्च सामान्येन मृत्युशब्देन प्रतिपन्नमपि निरसनीयमुपायविरोधिकर्मरूपे विशेषे पर्यवस्यति; तथा विविदिषासाधनत्वस्य प्रागुक्तान्योन्याश्रयणादिनिरस्तत्वेन परिशेषाद्विविदिषन्तीत्यत्र च प्रकृतिप्रत्ययार्थयोर्वेदनतदिच्छयोरविशेषेण यज्ञादीनां साधनत्वे प्रतीतेपि "ततो ज्ञानं प्रवर्त्तत" इति स्मृत्याद्यानुगुण्यादिष्यमाणप्रकृत्यर्थप्राधान्यस्य नीतिविद्भिर्निर्णीतत्वाच्च प्रकृत्यर्थभूतवेदनसाधनत्वं सिद्धम् । तस्मादुपायविरोधि कर्मैवात्र मृत्यु शब्दवाच्यमविद्यानिवर्त्यमित्यभिप्रायः । उपासनरूपं—न्यासरूपं चोपेयविरोधिनिरासकं ज्ञानम् उत्तरपूर्वाघयो

* तत्त्वटीका *

धीसङ्कोचनिवृत्तिश्चेदविद्याख्येन कर्मणा ।
धीविकासोऽपि सैवेति न साध्यान्तरसम्भवः ॥
प्रतिबन्धनिरासश्च साध्यते चेदविद्यया ।
अमृताप्तिस्स्वतस्सिध्येन्नादृष्टान्तरकाङ्क्षिणी ॥
स्वतः स्वानुभवाधानप्रवणः प्राणिनां प्रभुः ।
प्रशान्तप्रतिबन्धानां निरपेक्षं हि कारणम् ॥

मृत्युशब्दस्य साधारण्यसम्भवेपि 'तमेव विदित्वातिमृत्युमेति' इत्यादिस्पष्टार्थबहुश्रुतिस्मृतिबलेन विद्यानिवर्त्त्यप्राप्तिविरोधिविषयत्वासम्भवात्, तत्र च नान्यः पन्था इति साधनान्तरप्रतिषेधेन कर्मणो विमुक्तिसाधनसमुच्चेतव्यत्वायोगात्, कर्मणः श्रुत्यादिभिरेव विद्यासाधनत्वस्थापनात् इहोपायविरोधिनि कर्मण्येव वृत्तिः ।

विरोधि प्राचीनं कर्म । तीर्त्वा—अपोह्य । विद्यया—ज्ञानेन । अमृतं-ब्रह्म । अश्नुते—प्राप्नोतीत्यर्थः । मृत्युतरणो-

* श्रुतप्रकाशिका *

रुभयोरपि निरासकं स्यादिति तद्व्यावृत्त्यर्थं प्राचीनमित्युक्तम् । उपायविरोधिनिरासककर्म प्राचीनमेव पापं शमयति, न तूत्तराघमित्यर्थः । तीर्त्वेति पदं व्याचष्टे । ( अपोह्येति ) 'न त्वेतं सेतुं तीर्त्वे'तिवत् प्राप्तिवचन इत्यर्थः । अविद्यया तीर्त्वेति पदद्वयव्याख्यानेन शङ्करमतयोजनाव्यावृत्तिः, अज्ञानेन संसारं प्राप्य स्थित इति हि तद्योजना, तन्मते अविद्यायाः ज्ञातव्यत्वं च हेयत्वेन, अविद्याशब्दो विविदिषाविरोधिनिवर्तककर्मवाचीति वा शङ्कराभिमतयोजना स्यात् . अविद्याशब्द उपेयविरोधिनिवर्त्तककर्मवाचीति यादवप्रकाशाभिमतयोजना, ज्ञानोत्पत्तिविरोधीति मृत्युशब्दव्याख्यानेन तदुभयव्युदासः । अयमविद्याशब्दः संसारहेतुभूताज्ञानपरः किं न स्यात्, कथं च तस्य कर्मवाचित्व? मित्यत्राह ( मृत्युतरणेति ) तरतेरुत्तरणवाचित्वं

७ तत्त्वटीका ७

विद्याया इव कर्मण उत्तराघविरोधित्वाभावात्प्राचीनग्रहणम् । तीर्त्वेत्यस्य स्वरसार्थं त्यक्त्वा प्राप्य स्थित इति परोक्तं क्लिष्टत्वादध्याहारत्वाच्चायुक्तम् । [ इत्यभिप्रायेणोक्तं अपोह्येति ] यज्ञादिसत्कर्मणां विविदिषाविरोधितया मृत्युशब्दवाच्यं कर्म तीर्त्वेति गमनिकापि विविदिषार्थविनियोगप्रतिषेधात्प्रत्युक्ता । एतं सेतुमित्यादिषु गत्यभावात्. तरतेः प्राप्तिवचनत्वमित्यभिप्रायेण अपोह्येत्युक्तम्। विद्याशब्दस्य शास्त्रादिष्वपि प्रयोगात् इह प्रकृतब्रह्मवेदनविषयत्वं व्यनक्ति (ज्ञानेनेति) "एतदमृतम्' एतदभयम्' एतद्ब्रह्म' ब्रह्मविदाप्नोति परम्"इत्यादिश्रुत्यनुसारेणाह ( अमृतं ब्रह्मेति ) ननु पूर्वमविद्यानिवृत्तिरेव मोक्षः, सा च ब्रह्मविज्ञानादेव भवतीति परोक्तमभ्युपगतम्; इह तु ब्रह्मविदाप्नोतीत्युक्त्या अस्यां श्रुतौ साध्यान्तरं स्वीकृतमिति भाति। मैवम्,—अविद्यानिवृत्तिशब्देन ज्ञानसङ्कोचनिवृत्तेर्विवक्षितत्वेन भावान्तराभावनयेन सैव ब्रह्मप्राप्तिरिति । सहनार्थत्वान्मोक्षशब्दस्वारस्यानुरोधादविद्या कर्मसंज्ञेत्युक्तबन्धकर्मनिवृत्तिविवक्षायान्तु तावन्मात्रमेवोपासनसाध्यम्, धीसङ्कोचहेतुनिवृत्तौ सेतुभङ्गस्रोतःप्रवृत्तिनीत्या तादृशैश्वरसङ्क-

पायतया प्रतीता अविद्या विद्येतराद्विहितं कर्मैव,

* श्रुतप्रकाशिका *

स्वरससिद्धम्, प्राप्तिवाचित्वे तु स्वारस्यभङ्ग इत्यभिप्रेतम्। अविद्याशब्दस्य कर्मवाचित्वं दर्शयति (विद्येतरदिति) तदन्यार्थे नञिति भावः, विहितं कर्मैवेत्येवकारेणाज्ञानमविहितं कर्म च व्यावर्त्यते, अत्र "विद्यां चाविद्यां चे"ति चशब्दावनुक्त समुच्चयपरौ। विद्यानुबन्धि कर्मानुबन्धि च यदनुक्तं तत्समुच्चेतव्यं, विद्यानुबन्धि शमदमादिकं, कर्मानुबन्धि फलाभिसन्धिकर्तृत्वाभिमानराहित्यादिकं तदुभयं चशब्द

७ तत्त्वटीका ७

त्वेन स्वतः प्राप्तौ धीविकासः, अतो 'विद्ययामृतमश्नुते' इत्यनेन प्रतिबन्धनिवृत्तौ विद्यातस्सिद्धायां स्वतस्सेत्स्यन्ती ब्रह्मानुभूतिरुच्यत इति न पूर्वापरविरोधः। ब्रह्मप्राप्तेश्च परमपुरुषार्थतया काम्यमानत्वेपि तत्प्रातिबन्धकानिवृत्त्युपायस्य काम्यवर्गात्पृथगेव व्यपदेशः॥

प्राप्तितत्साधनानां हि प्रतिबन्धनिवर्तकाः।
निवृत्तिधर्मास्सर्वेपि नैमित्तिकपदे स्थिताः॥

अत्र करणविभक्त्यन्तरूपकर्मज्ञानशब्दाभ्यां "कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इति स्पष्टार्थोपबृंहणार्थस्सूच्यते, तेन च मृत्युशब्दस्यात्रोपायविरोधिविषयत्वं वेदानुवचनादीनां विविदिषन्तीत्यत्र प्रकृतार्थेनान्वयः समुच्चयवादनिरासश्च सिद्ध्येत्। कषायस्य—पापस्य तज्जन्यरागादेर्वा। पक्तिः—पच्यतेऽनेनेति पाकनिमित्तं, गम्यतेऽनेनेति गतिः, ततो ज्ञानं न तु विविदिषा नापिमुक्तिं, प्रवर्त्तते उचितविषये प्रकृष्टवृत्तिमद्भवतीत्यर्थः। आस्तां प्रकरणम्, अस्मिन्नेव वाक्ये कर्मणां विद्याङ्गत्वे साधारणानामविद्यादिशब्दानामस्मदुक्तपदार्थानियमे च निर्बाधस्वारस्यप्राप्तो वस्तुसामर्थ्यरूपो हेतुर्लक्ष्यत इत्यभिप्रायेणाह (मृत्युतरणेति) प्रतीतेति हेतुगर्भम्, विद्येतरदित्येतदत्र्त्याविद्याशब्दनिरुक्तिः। अब्राह्मणादिशब्दनयात्तदन्यवृत्तौ प्रकरणस्यासन्नविषयत्वं युक्तमित्यभिप्रायेण विहितं कर्मेत्युक्तम्, न त्वविहितं कर्म नापि ब्रह्मज्ञानादिकमिति पदद्वयान्वितावधारणाभिप्रायः, एतेन 'कुर्वन्नेवेह कर्माणी'त्यत्र कर्मशब्दस्साधारणोपि उपचितविषये नियमितः, नहि काम्यादिकं यावज्जीवमनुष्ठेयम्। उक्त-

**यथोक्तम्–[1]"इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः। ब्रह्मविद्यामधिष्ठाय तर्त्तुं मृत्युमविद्यया"॥ इति।**

* श्रुतप्रकाशिका *

समुच्चेतव्यम्। यद्वा, "धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ" इत्यत्र चशब्दवदत्राप्युक्तार्थविरोधिसमुच्चयपरौ चशब्दौ स्याताम्। विद्याविरोधि कर्मविरोधि च चशब्दाभ्यां हानार्थं ज्ञातव्यतया समुच्चिते भवतः, विद्या–ब्रह्मविद्या, तद्विरोधि–तदितरविषयज्ञानतद्विषयरागद्वेषादिकम्। अविद्या– विद्याङ्गं कर्म, तद्विरोधि– संसरण हेतुभूतं फलाभिसन्ध्यादिसहितं कर्म पापञ्च तदुभयं हानार्थं ज्ञातव्यमिति चशब्दयोरभिप्रायः। यद्वा, प्रतिपदद्योतकौ चशब्दौ स्याताम् यथा "धर्मे चार्थे च कामे चे"ति प्रतिपदं यदभिधेयं तस्य समुच्चयद्योतकत्वं प्रतिपदद्योतकत्वं, तदत्रापि स्यात्, अस्मिन्वाक्ये अविद्यातरणशब्दयोरुक्तार्थपरत्वस्थापनायोपबृंहणवचनं च दर्शयति (यथोक्तमिति) ज्ञानव्यपाश्रयः–आगमोत्थज्ञानवान्। ब्रह्मविद्यामधिष्ठाय- उपासनात्मकज्ञानं साध्यत्वेनावलम्ब्येत्यर्थः। ज्ञानविद्याशब्दयोरर्थभेदबुभुत्सायामागमोत्थविवेकादिजन्यज्ञानयोः प्रकृतत्वात् तत्परत्वाश्रयणं हि युक्तम्। तर्त्तुं मृत्युमित्यनेन तरतेः प्राप्तिवाचित्वशङ्का व्युदस्ता, न हि संसारं प्राप्तुं ब्रह्मविदा केशिध्वजेन नृपेण यज्ञादिकर्मानुष्ठीयते, मृत्युशब्दस्य विविदिषाविरोधिकर्मपरत्वमपि न शङ्कनीयम्. ज्ञानव्यपाश्रय इत्यनेन शास्त्रजन्यज्ञानवत्ताया अभिहितत्वात् ब्रह्मविद्यामधिष्ठायेत्युक्तत्वाच्च न हि ब्रह्मविद्येच्छामधिष्ठायेत्युक्तम्। कथं ज्ञानोत्पत्तिविरोधि प्राचीनं

* तत्त्वटीका *

श्रुतेरुपबृंहणेन स्वोक्तौ पदार्थवाक्यार्थौ स्थिरीकृतावित्याह। (यथोक्तमिति) ज्ञानव्यपाश्रयः–आगमोत्थज्ञाने प्रतिष्ठितः। ब्रह्मविद्यामधिष्ठाय–विवेकादिजन्यां परविद्यां भक्तिरूपापन्नां निष्पाद्यत्वेनाभिसन्धायेत्यर्थः। 'आगमोत्थं विवेकाच्च' इति प्रस्तुतं ज्ञानद्वयमेव ह्यत्र स्पष्टीकृतम्, अतएव मृत्युशब्दस्यात्र विविदिषाविरोधित्वं चायुक्तं, तस्यास्साध्यत्वेनानुपादानात् 'ब्रह्मविद्यामधिष्ठाये'त्यनेनैव विविदिषानिष्पत्तेरर्थसिद्धत्वाच्च। 'तर्त्तुं मृत्यु'मिति प्रयोजनवचनेन तीर्त्वेत्यस्य प्राप्त्यर्थत्व-

१– श्रीविष्णुपुराणे ६. अंशे. ६. अध्याये. १२. श्लो.

# ज्ञानविरोधि च कर्म पुण्यपापरूपम् । ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्।

* श्रुतप्रकाशिका *

कर्मेति पुण्यपापसाधारणकर्मशब्देन कर्ममात्रं निरसनीयमुक्तं, श्रुतिर्हि " धर्मेण पापमपनुदती "ति पापरूपकर्मविशेषस्य निरसनीयत्वमाहेति शङ्कायां तत्रापि पापशब्दस्य पुण्यपापपरत्वं दर्शयितुं पुण्यपापयोरुभयोरपि पापशब्दवाच्यत्वोपपादनाय तयोर्ज्ञानोत्पत्तिविरोधित्वमाह ( ज्ञानविरोधि चेति ) च शङ्कानिवृत्तौ. पुण्यपापे उभे अपि ज्ञानविरोधिनी चेत् कथं तयोरन्यतरस्य पापस्य निरसनीयत्वमन्यतरस्य पुण्यस्य निरासकत्वं च श्रूयते ? इत्यत्राह ( उभयोरपीति ) तयोर्द्वयोरपि निवर्त्यत्वं फलाभिसन्ध्यादिरहितस्य धर्मान्तरस्यैव निवर्तकत्वं च विवक्षितमिति भावः । कथमुभयोः पापशब्दवाच्यत्वम् ? इत्यत्राह ( ब्रह्मज्ञानोत्पत्तीति ) ( अनिष्टफलतयेति ) प्रवृत्तिनिमित्तसूचनम् । अलौकिकत्वे सत्यनिष्टफलासाधारणकारणत्वं पापत्वमिति भावः । अत एव शस्त्रादावीश्वरे च नातिव्याप्तिः " वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम् ।" " एते वै निरयास्तात स्थानस्य परमात्मन " इत्यादिभिः पुण्यस्यापि मुमुक्षुं प्रत्यनिष्टफलप्रदत्वं सिद्धम् ।

७ तत्त्वटीका ७

शङ्का च निरस्ता. उपबृंहणीयश्रौतपदसूचकाविद्याशब्दोक्तमेव च यज्ञशब्देन व्यञ्जितम् । यज्ञानियाज- चकारेत्यर्थः । ननु, धर्मेण पापस्यैवापनोद्यत्वं श्रुतम् . अत्र तु प्राचीनं कर्मेत्यविशेषेण पुण्यस्यापि तरणं कथं भाषितमित्यत्र वक्ष्यमाणश्रुतापनोद्यतयोक्तं शोधयति ( ज्ञानेति ) पुण्यस्य कथं धर्मापनोद्यत्वं, पापशब्दवाच्यत्वञ्चेत्यत्राह (ब्रह्मेति) उभयोरिति विगीताविगीतसंवलितत्वोक्तिर्निदर्शनपरा, अत्राभिधेयत्वं बोध्यत्वं, लक्षयेदिति विवरणोक्तिर्वैभवात्. अयंभावः,—'स एव धर्मस्सोधर्मस्तं तं प्रति नरं भवेत्'इत्यादि स्मर्यते. अतः पुण्य [ ण्याभिसन्धिप्रसिद्ध ] मपि मुमुक्षुदशायां पापायते—

मुमुक्षुत्वामुमुक्षुत्वदशाभेदेन कर्मणः ।
कर्मैकं पापपुण्यत्वे साध्यैक्येपि समश्नुते ॥ ७ ॥

* श्रुतप्रकाशिका *

श्रुतिश्च दुष्कृतेन सह पूर्वनिर्दिष्टं सुकृतमपि पाप्मशब्देन निर्दिशन्ती निगमयति "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इति। न चानुक्तपापान्तरविषयः पापशब्दः, दुष्कृतशब्दस्य सम्प्रतिपन्न-समस्तपापसाधारणतयानुक्तपापान्तरासम्भवेन तद्विषयत्वायोगात्. सम्भवेपि न तन्मात्र-पापान्तरविषयः पाप्मशब्दः, उक्तसर्वहेयनिवृत्तिसंवादितयोपात्ते "अपहतपाप्मा ह्येष ब्रह्मलोक" इत्यनन्तरवाक्ये पाप्मशब्दस्य सर्वहेयविषयत्वदर्शनात्। न ह्यनुक्तक-तिपयपापनिवृत्त्युक्तौ उक्तसर्वहेयनिवृत्तिसंवादसिद्धिः, शोकादिषु पाप्मशब्दस्यामुख्य-त्वेपि सुकृतदुष्कृतयोः प्रवृत्तिनिवृत्तिसम्भवान्न मुख्यत्वं त्याज्यम्, क्वचिदमुख्यस्य सर्व-त्रामुख्यत्वानियमाभावात्, अतः सर्वे पाप्मान इत्यत्राजहल्लक्षणा—च्छत्रिन्या-यात् "धर्मेण पाप"मित्यत्र तु मुख्यत्वमेव। कथं पापस्य ज्ञानविरोधित्वम्? रजस्तमसोर्हि

७ तत्त्वटीका ७

श्येनादेश्चोदितस्यैव द्वैरूप्यं द्विविधश्रुतेः।
एकस्यैवैकदैवास्ति कालभेदे तु किंपुनः॥ ७॥

प्रकृष्टसुखरूपस्वर्गैकसाधनं पुण्यमपि ह्यन्तराय निरयशब्दनिन्दितस्वफल-सङ्गार्थसिद्ध्यै निरुपाधिकसुखरूपब्रह्मज्ञानं प्रति रुणद्धि, अतः प्रवृत्तिधर्मस्य निवृत्ति-धर्मेणापनोद्यत्वं युज्यते. पापलक्षणञ्च कर्तुरनिष्टफलसाधनत्वेन शास्त्रवेद्यत्वं "नैनं सेतुमहोरात्रे तरतो न जरा मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" इति श्रुतौ च निगमनस्थस्य पापशब्दस्य शोकादिषु लाक्षणिकत्वेपि सुकृत-दुष्कृतयोर्निमित्तसम्भवान्मुख्यत्वमेव ग्राह्यम्. छत्रिन्यायेन सर्वत्र लक्षणा [वृत्त्यैक्य] पक्षेपि तारतम्यमस्ति. न च सुकृतदुष्कृतशब्दयोरिव दुष्कृतपाप्मशब्दयोरिह गोबली-वर्दन्यायात्पाप्मशब्दस्य दुष्कृतविशेषपरत्वं शक्यम्. उभयोरपि व्यापित्वेन हय-तुरङ्गशब्दयोरिव तदयोगात्। सर्वशब्दविशेषणवैयर्थ्यञ्च "अपहतपाप्मा ह्येष ब्रह्म-लोकः" इत्यनन्तरवाक्यञ्च प्रकृतसर्वहेयनिवृत्तिप्रख्यापने स्वरसं, तदिह पूर्वापर-पाप्मशब्दयोरसङ्कोचेन समानार्थत्वमेव युक्तम्. एवं सति पुण्यविशेषे पापशब्दः प्रवृत्ति-निमित्तैक्याद्घटत इति। ननु रजस्तमसोर्ज्ञानविरोधित्वमिष्टं, तत् किं पापेन सह समुच्चयतो विकल्पतः कारणान्तरेण वेति नियामकाभावात् पापस्य ज्ञानविरोधित्वं

# अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण । पापस्य च ज्ञानोदय-

* श्रुतप्रकाशिका *

तदवगम्यत इति शङ्कायां द्वारद्वारिभावादविरोधमाह ( अस्येति )पापस्य रजस्तमसोश्च ज्ञानविरोधित्वे प्रामाणिके सति द्वारद्वारिभावः कल्प्यत इत्यत्राह ( पापस्य चेति ) नन्वियं श्रुतिर्निरयनिनीषाविषया किं न स्यात् उन्नयनप्रत्यनीकत्वादधोनयनस्येति ? ब्रूमः,– अत्र विवक्षितमुन्नयनहेतुत्वमुपासननिष्पादनरूपम् । न चोन्नयनमपि नाकादिनयनमिति शङ्कनीयम्" यमेभ्यो लोकेभ्य उन्निनीषती" त्यवगतस्य समस्तलोकेभ्य उन्नयनस्यापवर्गप्रापणरूपत्वात्. तर्हि गर्भजन्मजरामरणादिसंसारप्रापणमधोनयनं स्यात्- न तूपासनविरोध इति चेन्न, उन्नयनस्य ज्ञानोत्पादनद्वारकत्वावगमात् " यं त्वं मनुष्याय हिततमं मन्यस "इत्युपक्रमवाक्येन मामु. पास्स्वेति विधित्सितस्य उपासनस्य ह्यव्यवहितोपायत्वमवगतम् । "नान्यः पन्थाः" इत्यादीनि च श्रुत्यन्तराणि तथावगमयन्ति, तच्च कर्मणामपवर्गं प्रत्यव्यवहितोपायत्वे विरुध्येत, अत उपक्रमाद्यविरोधात् साधुकर्मणामपवर्गं प्रत्युपायत्वमुपासनद्वारकमवसीयते, अतः कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनयनमुपासनप्रतिबन्धरूपमिति स्फुटतरमवगम्यते । किञ्च यद्यप्युन्नयनाधो-

॥ तत्त्वटीका ॥

दुरवधारणम्. अतो दुःखसाधनत्वमेव तस्येत्यत्राह ( अस्येति ) शुद्धसत्त्वमिह अभिभूतरजस्तमस्कमुपयुक्तप्रकाशादिजनकं सत्त्वम्. ज्ञानोत्पत्तिदशायामपि पुंसां त्रैगुण्यानुवृत्त्या तदातनगुणान्तराभ्यां विशेषव्यक्त्यै विवृद्धिशब्दः । "कर्मवश्या गुणा" इत्यादिभिर्गुणानां तद्‌द्वारत्वसिद्धिः । पापस्य दुःखसाधनत्वञ्च नान्यव्यवच्छेदेनेति भावः । द्वयोरपि ज्ञानविरोधित्वे मानाभावे कथं द्वारद्वारित्वक्लृप्तिरित्यत्र द्वारिणस्तावद्विरोधित्वे मानमाह ( पापस्येति ) "एष एवे"त्यादिश्रुतौ न तावत् 'अधो निनीषती'त्येतन्निरयादिनिनीषार्थम्. अत्रोन्निनीषायास्स्वर्गादिविषयत्वाभावात् । " यमेभ्यो लोकेभ्य उन्निनीषति" इत्यत्र स्वर्गादिसर्वलोकेभ्यो ह्युन्नयनं स्वरसतः प्रतीयते, अतोऽपवर्गप्रापणप्रतिपक्षभूताधोनयनार्थमिहासाधुकर्म तत्साधनविरुद्धमेव स्यात्. तत्साधनं

* श्रुतप्रकाशिका *

नयने स्वर्गनरकप्रापणरूपे, तथाप्यसाधुकर्मणां ज्ञानविरोधित्वं सिद्ध्यति. तथा हि, उन्निनीषाधोनिनीषयोर्निर्हेतुकत्वे परमात्मनो वैषम्यनैर्घृण्यप्रसङ्गान्नेतव्यचेतनगोचरं यद्वृत्तद्वयं गतिद्वयनिनीषानिमित्तभूतातिप्रभूतपुण्यपापकर्तृविषयं विज्ञायते । तत्र च गतिद्वयपर्याप्तोत्तरोत्तरसाध्वसाधुकर्मकारयितृत्वमीश्वरस्य, न भूतावेशादिवज्जीवबुद्ध्यनपेक्षितं भवति । तथा सति ज्ञानचिकीर्षाद्यभावाद्वायूदकादिनुन्नतृणादेरिव संसारिणां शास्त्रवश्यत्वाभावेन कर्मफलभोगानुपपत्तेः । एवं संसारिणां कर्मफलभोक्तृत्वान्यथानुपपत्तिरूपन्यायानुगृहीतम् एष एवेत्यादिकं वाक्यद्वयं ज्ञानप्रदानद्वारककारयितृत्वविषयमवसीयते, तथा सति स्मृत्यनुग्रहश्च भवति । "न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् । यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् । बुद्धिं तस्यावकर्षन्ति सोपनीतो विनश्यति"इति ह्युच्यते । तथा "पुण्यं प्रज्ञां वर्द्धयति क्रियमाणं पुनः पुनः । नष्टप्रज्ञः पापमेव नित्यमारभते नरः"॥ इति च । तत्र बुद्धिमवकर्षन्ति प्रज्ञां नाशयतीति च सम्यग्ज्ञानहानिपूर्वक तद्विपरीतज्ञान निष्पत्तिरिह विवक्षिता, अन्यथा कर्मान्तरप्रारम्भानुपपत्तेः । यद्यपीदं

* तत्त्वटीका *

चात्र 'मामुपास्वे'ति विहितम्. तस्य चोपक्रमे 'यं त्वं मनुष्याय हिततमं मन्यसे' इति हिततमत्वमव्यवहितमोक्षोपायत्वं सिद्धम्. तदेवात्र सन्निधिबलात् साधारणेनापि साधुकर्मशब्देन गृह्यते. तत्कारयितृत्वञ्च "ददामि बुद्धियोगं त"मित्यादिभिर्विशेषतोऽप्युक्तम्' तस्य चोत्पत्तिप्रतिबन्धकत्वेन विरुद्धं कर्म भगवद्वैमुख्यापादानं कर्म. तस्मान्मुख्येऽधोगतिप्रसङ्गाभावादसाधुकर्मणश्चाधोगतिनिदानत्वं 'तानहं द्विषतः क्रूरान्' इत्यारभ्य- 'ततो यान्त्यधमां गतिम्' इत्यन्तेन स्फुटीकृतम् । यद्वा, साधुकर्मशब्द इह प्रस्तुतोपायाकाङ्क्षिताङ्गपरः, न चात्र कर्मण उन्नयनशब्दोदितमुक्त्युपायत्वम्, अद्वाकरश्रुत्यादिभिस्सद्वारकत्वस्थापनात्; अतोऽविद्याङ्गकर्मप्रतिकोटिस्थमसाधुकर्मात्र विद्योत्पत्तिविरुद्धमेव । किञ्च साध्वसाधुकर्मकारयितृत्वमिह न प्राचीनजीवकर्मनिरपेक्षम्. वैषम्यनैर्घृण्यप्रसङ्गात् । नच वायूदकादिवत्प्रेरकत्वम्, शास्त्रवैयर्थ्यादिप्रसङ्गात् बुद्धिप्रदानादिवचनविरोधाच्च; अतो 'यमधो निनीषती'ति यद्वृत्तेन कस्यचिदनुवादोऽधोनिनीषाहेतुभूतपापकारित्वं व्यनक्ति. पूर्वपापे चोत्तर-

# विरोधित्वम्—[1]"एष एवासाधु कर्म कारयति । तं यमधो निनीषति" इति श्रुत्याऽवगम्यते । रजस्तमसोर्यथार्थज्ञानावरणत्वं सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितं [2]'सत्त्वात्सञ्जायते ज्ञानम्' इत्यादिना ।

* श्रुतप्रकाशिका *

वचनजातं सर्वदेवतासामान्यविषयं, तथापि भगवज्ज्ञानस्य सम्यग्ज्ञानसामान्याबहिर्भावादसाधुकर्मणस्तद्विरोधित्वसिद्धिः । तथा विशेषतश्चोच्यते "ददामि बुद्धियोगं तं येन मामुपयान्ति ते । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्" इति । एवं न्यायस्मृत्युपबृंहितया ऽनया श्रुत्या सामान्येन ज्ञानविरोधित्वमसाधुकर्मणां सिद्धम् । अस्मादपि निर्वाहात् पूर्वोक्त उपपन्नः प्रकरणानुगुण्यात्, एवं पापस्य ज्ञानविरोधित्वे प्रमाणं दर्शितम् । अथ रजस्तमसोर्ज्ञानविरोधित्वे, सत्त्वस्य ज्ञानहेतुत्वे च प्रमाणं दर्शयति । ( रजस्तमसोरिति )

ॐ तत्त्वटीका ॐ

पापारम्भे ज्ञानलोपस्तन्मूलविपरीतज्ञानञ्च द्वारं, तथा चोपबृंहितम्— "यस्मै देवाः प्रयच्छन्ति' पापं प्रज्ञां नाशयति" इत्यादिभिः । सर्वदेवेषु स [र्व] पापेषु च सामान्योक्तमपि प्रकृते कुण्ठितम् । विशेषतश्च गीयते— "क्षिपाम्यजस्रम्" इत्यादि; अतः पापस्य ज्ञानोदयविरोधित्वं सिद्धम् । ननु श्रुतेन द्विविधेन पापेनैव ज्ञानं निरुद्ध्यताम् निवृत्तिधर्मेण चोत्पद्यताम्—अलमुभयत्र प्रकृतिगुणैः द्वारीकृतैरित्यत्राह ( रज इति ) सत्त्वस्येत्युपादा[नोपाद]नमिह रजस्तमसोर्व्यतिरेकव्याप्त्या [ च ] ज्ञानहेतुत्वनिश्चयार्थं, साधुकर्मद्वारप्रदर्शनार्थं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वेत्युक्तस्थापनार्थञ्च । श्रुतिस्मृतिप्रमितान्यतरत्यागस्य,सति गत्यन्तरे विकल्पस्य चायोगाद्द्वारद्वारित्वमेवात्र युक्तमितिभावः । ननु, 'रजसो लोभ' इत्यनेनान्यथाधीहेतुत्वमपि सिद्धम्—अप्राप्तविषयलोभस्य भ्रान्तिहेतुत्वात् 'यया धर्ममधर्मं च' इत्यादिना तद्व्यक्तम्. 'नाभुक्तं क्षीयते कर्म' इत्यादिस्मृत्या कर्मफलभोगावसाने ज्ञानं साध्यताम्, धर्मस्य च धृतिशब्दार्थसुखसाधनत्वमेव प्राप्तमिति शङ्कापनुत्त्यै निष्कृतिशास्त्रविनियोगपृथक्त्वाभ्यां

१—कौषीतक्यां—३अध्याये. ९—वा. २—गीता १४ अ. १७ श्लो.

**अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम् । तन्निरसनश्च अनभिसंहितफलेनानुष्ठितेन धर्मेण । तथा च**

* श्रुतप्रकाशिका *

ततः किं प्रस्तुतस्य कर्मापेक्षितत्वस्येत्यत्राह ( अतश्चेति ) अतः—पापस्य ज्ञानविरोधित्ववचनात् । ततोऽपि किमित्यत्राह (तन्निरसनश्चेति) पापशब्दाभिधेययोः पुण्यपापयोरुभयोरपि निरसनीयत्वेन पापनिरासककर्मासम्भवमाशङ्क्योक्तम् ( अनभिसंहितफलेनेति ) अनेन स्वर्गादिफलप्रदकर्मव्यावृत्तिः । अनुष्ठितेन—न तु ज्ञातमात्रेणेति भावः । तत्र किं प्रमाणम् ? इत्यत्राह ( तथा च श्रुतिरिति ) इदानीं निरासकविशेषे प्रमाणतयोदाहृतस्य वाक्यस्यार्थनिर्णयोपयोगितयैतद्वाक्यस्थनिरसनीयवाचिपदस्यार्थः पूर्वमेव शिक्षितः, निरासकवाचिपदस्यार्थोऽनन्तरमुक्तः । नन्वयं धर्मशब्दः कृच्छ्रचान्द्रायणादिप्रायश्चित्तरूपधर्ममात्रविषयः किं न स्यात् ? अनभिसंहितफलधर्मविषय इति कुतो निर्णीयते ? उच्यते,— "यज्ञेन दानेन तपसाऽनाशकेन" शान्तो दान्त उपरतस्तितिक्षुः" "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" "यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत्" "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । शमो दमस्तपः शौच"मित्यादिश्रुतिस्मृतिभिर्मुमुक्षोरपेक्षितत्वेनोक्तानां यज्ञदानतपःशमादीना-

* तत्त्वटीका *

सिद्धं निरास्यनिरासकस्वभावं निर्द्धारयन्नुक्तमर्थद्वयं निगमयति ( अत इति ) निरसनीयम्—अनन्तेषु पापेषु सन्तन्यमानेषु न कदाचिदपि भोगे निश्शेषशान्त्यवसरः, अतः शास्त्रोक्तनिष्कृत्यैव तन्निरासः कार्य इति भावः । तथाप्यपरिमितानां निष्कृतिरप्यशक्येत्यत्राह ( तदिति ) 'स्वल्पमप्यस्य'त्यादिन्यायेन फलान्तरसङ्गरहितनिवृत्तिधर्ममाहात्म्यात्तन्निवर्त्तनं शक्यमित्याशयः । 'य उ चैनमेवं वेद' इत्यादिषु शास्त्रार्थवेदने फलश्रुतिः प्रशंसार्था परम्परया वा स्यात् अधिकारिभेदेन वा; अतोऽनुष्ठानं प्रधानम्. तत्परित्यागिनां तु कारणाभावात् कार्याभाव इत्यभिप्रायेणोक्तम् ( अनुष्ठितेनेति ) उपात्तश्रुतिगतानामविद्यादिशब्दानां स्वेष्टार्थत्वं पापस्य भोगेन विनापि निवर्त्त्यत्वञ्च स्पष्टयन्तीं श्रुतिमुदाहरति ( तथेति ) अत्र धर्मशब्दः प्रायश्चित्तमात्रविषयेप्यविशेषान्निवृत्तिधर्ममपि गृह्णाति. "विज्ञानादानन्दो ब्रह्मयोनि" रित्या-

श्रुतिः [1]"धर्मेण पापमपनुदति" इति । तदेवं ब्रह्मप्राप्ति-साधनं ज्ञानं सर्वाश्रमकर्मापेक्षम्; अतोऽपेक्षितकर्मस्वरूप-

* श्रुतप्रकाशिका *

मत्र श्रूयमाणत्वात् 'विज्ञानादानन्दो ब्रह्मयोनि'रित्यादिनास्य प्रकरणस्य ब्रह्मविद्या-विषयत्वाच्चायं धर्मशब्दो मुमुक्ष्वपेक्षितानभिसंहितफलधर्मविषय इत्यवगम्यते । अत्र यज्ञदानादिपर्यायेषु 'दानेन द्विषन्तो मित्रा भवन्ती'त्यादिना सांसारिकफलकीर्तनम् । 'अन्नवानन्नादो भवती'त्यादिवत् ब्रह्मवेदनानुगुणानुषङ्गिकफलविषयं मन्तव्यम्, 'भूयो न मृत्युमुपयाहि विद्वान्" इति प्रधानफलश्रवणात् । किञ्च यद्यपीदं वाक्यं न मुमुक्षुमात्रविषयं तथाप्यमुमुक्षुमात्रविषयं च न भवेत्, प्रवृत्तिनिमित्तसाधा-रण्यात्. न हि काम्यफलदत्वं धर्मशब्दार्थः, अलौकिकेष्टासाधारणसाधनेनालौ-किकानिष्टासाधारणकारणमपनुदेदिति ह्यर्थः स्यात्, ततश्च मुमुक्षुं प्रति काम्यकर्मणो-ऽनिष्टफलत्वेन धर्मशब्दवाच्यत्वायोगात् पापशब्दवाच्यान्तर्भावाच्च पक्षधर्मताबला-दनभिसंहितफलेन धर्मेण पुण्यपापयोरुभयोरपनोद्यत्वमुक्तं स्यात् । ज्ञानस्य कर्मसा-पेक्षत्वं निगमयति ( तदेवमिति ) तत्—श्रुतिस्मृतितदनुग्राहकोपपत्तिसूत्रवाक्यकार-वचनेभ्यः । एवम्—उपायप्रतिबन्धनिरासार्थं सर्वाश्रमिणां तत्तदाश्रमधर्माङ्गकोपासना-धिकारस्य वक्ष्यमाणत्वं हृदि निधाय सर्वाश्रमकर्मापेक्षमित्युक्तम् । ततः किं कर्म-विचारस्य ब्रह्मविचारपूर्ववृत्तत्व ? इत्यपेक्षायामनुष्ठानस्य ज्ञानसापेक्षत्वात् ज्ञानस्य मीमांसाधीनत्वाच्च तदधिगमः पूर्ववृत्त इत्याह ( अत इति ) अतः—ब्रह्मज्ञानस्य फला.

❀ तत्त्वटीका ❀

दिना ब्रह्मविद्यासन्निधानात्.सहपठितदानादिषु प्रतीतानि द्विषद्वशीकरणफलान्तराण्यपि ब्रह्मविद्यानिष्पत्त्यनुगुणान्येव, अङ्गाङ्गिफलञ्चात्र " भूयो न मृत्युमुपयाहि विद्वान्" इति प्रस्पष्टम्; अतोत्र निवृत्तिधर्मेण सांसारिकपुण्यपापयोर्द्वयोरपि पापशब्दोक्तयो-र्निवर्त्त्यत्वं सिध्येदिति । एतावता किमायातमित्यत्र तन्मूलमुपासनात्मकं ज्ञानमित्यने-नाभिप्रेतं कर्मसापेक्षत्वं निरूढमित्याह ( तदिति ) तत्—उक्तश्रुतिस्मृतिसूत्रोपपत्ति-सम्प्रदायबलात् । एवम्—निष्कामकर्मणां ब्रह्मविद्याप्रतिबन्धनिरासकत्वप्रकारेण ।

१—तैत्ति-६-प्रश्ने—नारायणे—५० अनु.

ज्ञानं केवलकर्मणामल्पास्थिरफलत्वज्ञानञ्च कर्ममीमांसावसेयमिति; सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ॥ अपि च नित्यानित्यवस्तुविवेकादयश्च मीमांसा-

* श्रुतप्रकाशिका *

भिसन्धिरहिताश्रमकर्मसापेक्षत्वात्. ज्ञानं हि हानार्थमुपादानार्थं वा ? अत्र तूभयार्थमित्याह—( अपेक्षितेति ) फलद्वारकं हानम् , स्वरूपेणोपादानम् । मीमांसाशब्दस्य पूर्वोत्तरसाधारणत्वात् कर्ममीमांसावसेयमित्युक्तम् ( सैव ) या त्वया विरुद्धेति निरस्ता सैवेत्यर्थः । यदनपेक्षितं परेणोक्तं तदेवापेक्षितमित्युक्तम् । यत्तु परेणापेक्षितमित्युक्तं तस्यानपेक्षितत्वमुच्यते ( अपि चेत्यादिना ) ( नित्यानित्यवस्तुविवेकादयश्चेति ) चस्त्वर्थः प्रत्युतेति यावत् ( मीमांसाश्रवणमन्तरेण ) कर्मब्रह्ममीमांसाश्रवणमन्तरेणेत्यर्थः ।

* तत्त्वटीका *

अस्त्वेवं विचार्यस्योपासनस्य स्वाङ्गकर्मापेक्षा, तद्विचारस्य कृत्स्नकर्मविचारापेक्षा कथमित्यत्र स्थापितमर्थं निगमनेन स्थिरयति ( अत इति ) मुक्तिसाधनविद्याया निवृत्तिधर्मनैरपेक्ष्यायोगादित्यर्थः । अपेक्षितकर्मस्वरूपज्ञानमित्यनेन वृद्धव्यवहारेण व्रीह्यादिवत्कर्ममीमांसया यज्ञादिपदार्थानां सेतिकर्तव्यताकानां विशेषतो वेदितव्यतया विधिविनियोज्यस्वरूपापेक्षिणी विनियोगेनागृहीतविशेषणन्यायतः स्वाङ्गसाध्यस्य फलसाधनतया तत्स्वरूपान्वितस्यैव बुभुत्सितत्वं, चिन्तितेप्युपासने कर्मणश्चिन्तयितुं शक्यत्वञ्चानूद्यते । विद्यानङ्गकर्मनिन्दया विद्याप्ररोचनञ्च तादृशकर्मज्ञानापेक्षमित्याभिप्रायेण केवलेत्यादिकमुक्तम् । अवसेयम्— साध्यमिति यावत् । मीमांसात्र विचारः, त्याज्योपादेयसहितोपासनशास्त्रार्थं विचारयतामवश्यम्भाविनस्तदुभयस्वरूपनिश्चयस्य कर्ममीमांसासाध्यतया अत्रापेक्षितत्वादनिष्टावृतत्वेन वक्तुं युक्तेत्याभिप्रायेण सैवेत्युक्तम् । अन्ततः कर्मपरीक्षासापेक्षा तापत्रयवृत्ततोक्तिश्चानेन निरस्ता । साधनचतुष्टयस्य वा निरास एवकारेणोपक्षिप्यते । न केवलमस्मदुक्तस्य युक्तत्वमात्रं त्वदुक्तस्य दोषोप्यस्तीतीत्यभिप्रायेणाह ( अपि चेति ) तत्रान्योन्याश्रयमुद्धाटयति ( नित्येति ) चस्त्वर्थो वर्त्तिष्यमाणस्य वृत्ततावैपरीत्यद्योतकः, मीमांसाशब्दोत्र भागद्वयार्थः । आत्मानित्यत्वाद्युपादानात्. श्रवणशब्दश्च विचारपर्यन्तः । अयं भाव :,— किमत्र

❧ तत्त्वटीका ❧

विवेकशब्देन निश्चयो विवक्षितः, आपातधीर्वा ? नाद्यः,—कृत्स्नमीमांसासाध्यस्य ब्रह्मविचारापेक्षया पूर्ववृत्तत्वायोगात्, आत्मनित्यत्वादिकं ब्रह्मकाण्डे हि निरूपयिष्यते न द्वितीयः,—तस्याः कर्मकाण्डसाधारणत्वेन विशेषतोऽत्र वक्तुमयुक्तत्वात्. प्रथमातिक्रमे कारणाभावस्य चोक्तत्वात्, न च सा फलान्तरवैराग्यादेर्हेतुः, उभयत्रामृतत्वाद्यापातधीसिद्धेः । नच कपिलकणादादितन्त्रैर्विवेकः, अध्ययनादिक्रमेण तदवसरनिरोधोक्तेः, तेषु च बहुधा निश्श्रेयसतत्साधनादौ विवेकवैपरीत्यस्य तवापि सम्मतत्वात्; अतएव हि निरसिष्यन्ते—'नित्यं हि नास्ति जगति' इत्याद्युपबृंहणन्तु श्रुतिमनुरुध्यैव विवेकार्थं स्यान्नतु स्वातन्त्र्येण, अन्यथा किं शारीरकेण ? ततोऽन्यत्र संशयादिसम्भवादिति चेत्; तर्हि तत्र न विवेकसिद्धिः । यत्त्वत्र वाचस्पतिनोक्तं "नित्यानित्ययोर्वर्तन्तीति नित्यानित्यवस्तूनि तद्धर्माः नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेक" इत्यारभ्य—" नित्यत्वं सत्यत्वं तद्यस्यास्ति तन्नित्यं सत्यं तथा चास्थागोचरः, अनित्यत्वमसत्यत्वं तद्यस्यास्ति तदनित्यमनृतं तथा चानास्थागोचरः" इति। 'ब्रह्मतं तन्नित्यं सुखं व्यवस्थाप्यते तदास्थागोचरो भविष्यति. यत्त्वनित्यमनृतं भविष्यति तापत्रयपरीतं तत्त्यज्यत इति सोऽयं नित्यानित्यवस्तुविवेकः' इति च । एतदपि मन्दम्;— अनित्यत्वस्याप्यबाधितत्वेन सत्यत्वस्य स्थापयिष्यमाणत्वात् । नच नित्यं सुखमनुपादेयमिति धिया कर्मिणां कर्मविचारादौ प्रवृत्तिः, किन्तु तस्य कर्मसाध्यत्वभ्रमाद्वा दौर्बल्यबुद्ध्या वा । किञ्च-नित्यत्वादिमात्रं नास्थादिगोचरत्वादिनिदानं पुरुषार्थतत्साधनत्वाभ्यामेव ह्यास्था, तद्वैपरीत्याच्चानास्था, ते च नित्यानित्ये यथार्हं स्याताम्. निरूपकस्यापि ह्यनित्यसुखत्यागः "अशक्यानि दुरन्तानि समव्ययफलानि च' इति न्यायात् अधिकसुखलाभतृप्त्या वा स्यात्. तदभावेऽत्यल्पमपि सुखमुपादीयते. नित्यमपि यदि दुःखात्मकमनुभवरूपं वा कथमास्थार्हम् ? प्रकृतस्य प्रकृष्टसुखत्वेन प्रतीतत्वादिति चेत्;— तत्प्रतीतिस्तावन्न व्याप्त्या अदृष्टेः, नच श्रुत्या तन्मूलापातधियः साधारण्यादिदौस्थ्यात् निश्चयस्य तु मिथस्संश्रयग्रस्तत्वात्. तन्त्रान्तरस्मृत्योश्चासाधकत्वस्य दर्शितत्वात् . नित्यसुखसम्भवमूलोपादित्सा च साधारणी, तन्त्रान्तरे तदसम्भवश्च सुव्यक्तः । 'आनन्दो ब्रह्मे' त्यादिरमीमांसितब्रह्मभागैर्दुर्बोधः, प्रमाणाध्याये तर्कपादे च तन्निरासात्; तत एवात्राद्यसूत्रे

श्रवणमन्तरेण न सम्पत्स्यन्ते, फलकरणेतिकर्तव्यता-धिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतात्स्थिर-

* श्रुतप्रकाशिका *

न सम्पत्स्यन्त इत्यनेन पश्चाद्भावित्वमुक्तम्। कुत इत्यत्राह (फलेति) फलविशेषः—भोग-मोक्षरूपः। करणविशेषः—यज्ञोपासनादिः। इतिकर्त्तव्यताविशेषः—प्रयाजादिः साधन-सप्तकं च। अधिकारिविशेषः—बुभुक्षुर्मुमुक्षुश्च। एषां निश्चयादृते, कर्मस्वरूपम्—साङ्गं यज्ञात्मकमुपासनात्मकञ्च। भाष्यकारश्च यागात्मकमुपासनात्मकं च कर्मेति हि वक्ष्यंति "प्रकाशश्च कर्मण्यभ्यासात्" इति च सूत्रम् "उपासनात्मके कर्मणि" इति च तस्य भाष्यम्। उपासनस्य कर्मत्वं स्मृतिसन्ततिरूपतया तस्य प्रयत्न-

७ तत्त्वटीका ७

अन्यत्र च नित्यफलासम्भवः, प्रकृतोपयोगात्प्रतिष्ठाप्यत इत्यपि दुर्वचम्. युष्माभिरेवं सूत्रवाक्यार्थानुक्तेश्च। अपिच नित्यसुखस्यात्र सम्भावनामात्रम्.स्वर्गादिसुखस्यानित्य-त्वञ्च न शास्त्रान्तरेणानुमानेन वा सिद्ध्येत्, ताभ्यामेव वैपरीत्यस्यापि सुवचत्वात्, स्वर्गसुखमनित्यं सुखत्वादित्यादेरमृतत्वादिश्रुतिबाधात्. तदान्यपर्यस्य तन्निरूपण-सापेक्षत्वात्; अन्यथा मुक्तसुखमनित्यं सुखत्वादित्यादेरपि प्रसक्तेः,तदप्रसक्तिश्च त्रय्य-न्तार्थनिश्चयात्, सच तथेति मिथस्संश्रयः, अतः कर्मविचार एवात्रापेक्ष्यः। शम-दमादीनां साधनत्वविवेकः तत्स्वरूपमात्रं वा वृत्तमित्युच्यते? न पूर्वः,— तस्य 'शमदमाद्युपेत' इति साधनलक्षणे निष्पाद्यत्वात्। नोत्तरः,—तत्र श्रवणौपयिकावधा-नादिमात्ररूपाणां सर्वशास्त्रसाधारण्येन विशेषतोऽत्र वक्तुमयुक्तत्वात्। योगौपयि-कानान्तु बाह्यान्तःकरणनिरोधादिरूपाणां त्रय्यन्तार्थश्रवणात्पूर्वमयुक्तेः 'तस्मादेवं-विच्छान्तो दान्त" इति ब्रह्मधीपूर्वकत्वोक्तेश्च। किञ्च, नित्यानित्यविवेकादयः किं हेतुसाध्यरूपेण स्थिताः, अन्यथा वा? आद्ये कर्मविचारोपि 'परीक्ष्य लोकान्' इत्यादिप्रकारेण मुमुक्षायाः परम्परया हेतुहेतुमद्भावात्सहपाठ्यः, अन्यथा मुमुक्षुत्वमे-कमेव हि पाठ्यम्. किं चतुष्कग्रहणेन? द्वितीयेप्यभ्युपगमविरोधात् "विवेकाद्-वैराग्य' मित्यादि क्रमस्य पौरुव्याख्यातत्वादिति॥ अत्र मीमांसाश्रवणमन्तरेणेत्युक्तं विवृणोति (फलेति) कर्मभागे स्वर्गादिर्यागादिः प्रयाजादिः बुभुक्षुश्च फलादयः

त्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात् ।—

* श्रुतप्रकाशिका *

साध्यत्वात् "वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् । शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" ॥ इत्यत्र मनुश्च "मानसैः कर्मदोषै" रित्युक्तवान्, फलं चोभयं भोगो मोक्षश्च (तत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनामिति) आदिशब्देन आत्मनां "निर्वाणमय एवाय" मित्युक्तज्ञानानन्दस्वरूपत्वादिकं विवक्षितम् । अत्र साध्याविशिष्टत्वं हेतोः प्रतीयत इति चेन्न, मैवम्,—मीमांसायां फलकरणेतिकर्तव्यतादीनां प्रत्यधिकरणं तत्तन्न्यायैर्यो निर्णयः क्रियते स हेतुः, एवं तत्तधिकरणन्यायानुगृहीतश्रुतिवाक्यसमुदायजन्या या प्रमितिरुपायोपेयविषया सा साध्या, तत्तदवान्तरवाक्यार्थनिश्चयैस्तत्समुदायरूपमहावाक्यार्थनिश्चयः साध्य इत्यर्थः । यथा—पदार्थनिश्चयैर्वाक्यार्थनिश्चय इत्युक्ते सति न साध्याविशिष्टता—तद्वत्; अत एव हि करणेतिकर्त्तव्यतादिशब्दैः पूर्वं पृथगुक्त्वा पश्चात्कर्मस्वरूपशब्देनोक्तम्, फलकरणेत्यादिभाष्यस्य कर्ममीमांसामात्रविषयत्वे तत्फलस्थिरत्वास्थिरत्वात्मनित्यत्वादीनामिति वक्तुमयुक्तं, निरुपपदमीमांसाशब्दस्य मीमांसाशास्त्रमित्यादिभाष्ये भागद्वयविषयतया प्रयुक्तत्वाच्च यथोक्त एवार्थः, तस्मात्कर्मब्रह्मविचारानन्तरभावी नित्यानित्यवस्तुविवेकः तत इहामुत्रफलभोगविरागो मुमुक्षुत्वं च शमदमादिसाधनसम्पच्च 'शमदमाद्युपेतस्स्या' दिति ब्रह्ममीमांसायां हि शमदमादिस्वरूपं निरूप्यते; अस्मिन् चतुष्टये सिद्धे ब्रह्मविचारः, ब्रह्मविचारात् तत्सिद्धिरित्यन्योन्याश्रयः स्यात्, अतः पश्चाद्भाविनः पूर्ववृत्तत्वमनुपपन्नम् । साङ्गाध्ययनजापातप्रतीतिरेव नित्यानित्यविवेक इति चेत्? तदयुक्तम्,—न ह्यापातप्रतीतिरिहामुत्र फलभोगविरागमुमुक्षुत्वयोर्हेतुः, नित्यानित्यविपर्ययप्रतीतेः । किञ्च आपातप्रतीतिरुभयभागविचारसाधारणी, तत्र प्रथमं कर्मविचार एव प्रवृत्तिर्युक्ता, उभयत्र बुभुत्साया अवशिष्टत्वात् प्रथमातिक्रमे कारणाभावाच्च, शास्त्रान्तरेणापि नित्यानित्यविवेकादिर्नोपपद्यते; प्रथममेवाध्ययनविधिवश्यतया पुरुषस्य शास्त्रान्तरानवकाशात् । किञ्च—शास्त्रान्तरे परमाणुकारणत्वाब्रह्मात्मकप्रधानकारणत्वगगनादिनित्यत्वनिमित्तमात्रेश्वरत्वादयो वेदान्तविरुद्धा एवार्था बहव उपलभ्यन्ते; अतः

* श्रुतप्रकाशिका *

शास्त्रान्तरजन्यो नित्यानित्यवस्तुविवेको वेदान्तविरुद्धत्वान्न तद्विचारं प्रति पूर्ववृत्तो भवितुमर्हति। किञ्च शास्त्रान्तरे षट्पदार्थषोडशपदार्थज्ञानादीनां मोक्षसाधनत्वप्रतिपादनेन वेदान्तश्रवणानैरपेक्ष्याच्च न तज्जन्यविवेकस्य पूर्ववृत्तत्वं युक्तम्, यतोऽभ्युदयनिश्श्रेयससिद्धिस्स धर्म्मः। "छलजातिनिग्रहस्थानां तत्त्वज्ञानान्निःश्रेयसाधिगमः" इति हि तत्र तत्रोच्यते। किञ्च "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्ये" दिति श्रुतिरेवंविच्छब्देन शास्त्रजन्यज्ञानमनूद्य पश्येदिति प्रतिपन्नस्योपासनस्याङ्गतया शमादीनुपदिशति; अतः शमादीनां श्रवणपूर्ववृत्तत्वं श्रुतिविरुद्धम्, 'प्रशान्तचित्ताये'त्यादिश्रुतिस्तु श्रवणोपविकावधानिष्पादनार्थेत्युक्तम्। इतिहासपुराणश्रवणान्नित्यानित्यविवेक इति चेत्? तर्हि तत एव ब्रह्मस्वरूपावगमात् ब्रह्मविचारस्यानारम्भणीयत्वं स्यात्. इतिहासपुराणयोरपि संशयविपर्ययबाहुल्यात् तन्निरासाय ब्रह्मविचारोऽपेक्षित इति चेत्? संशयविपर्ययबाहुल्यादेव नित्यानित्यविवेकोपि तत्र दुस्सम्पाद्य इति न साधनचतुष्टयस्य पूर्ववृत्तत्वं युक्तम्। यत्तु—नित्यानित्ययोर्वसन्तीति नित्यानित्यवस्तूनि तद्धर्मा इत्यारभ्य वाचस्पतिनोक्तं नित्यस्य धर्मिणो नित्यत्वं सत्यत्वं तत एवोपादेयत्वम्; अनित्यस्य धर्मिणोऽनित्यत्वम् असत्यत्वं तत एव हेयत्वमित्येवं नित्यानित्ययोर्धर्मिणोस्तद्धर्माणां च विवेको नित्यानित्यवस्तुविवेक इति। अत्र ब्रूमः,—अनित्यस्य तावदसत्यत्वं वक्ष्यमाणप्रकारेण निरस्तं वेदितव्यम्, यन्नित्यं तदुपादेयं यदनित्यं तद्धेयमित्युभयमप्यनुपपन्नम्, सुखदुःखनिवृत्तितत्साधनतदुपयोगिनामेवोपादेयत्वबुद्धिदर्शनात् तद्व्यतिरिक्तस्यैवानुपादेयताबुद्धिदर्शनाच्च. नित्यमपि दुःखरूपं दुःखनिमित्तं वा यदि स्यात् हेयमित्येव प्रतीयेत, अनुभयं चेदुपेक्ष्येत, अनित्यमपि सुखरूपं वा सुखनिमित्तं वा भवति चेत्तदुपादीयते, निरूपकस्य तु हेयमिति चेन्न,—प्रकृष्टसुखान्तरदर्शनात्यन्तदुःखसाध्यत्वदुःखोदर्कत्वविरहे सति निरूपकस्यापि तत्रोपादेयताबुद्धिदर्शनात्, क्षीरौदनलाभात् कण्टस्त्यज्यते, अन्धकूपपतिता वराटिका तदुद्धरणक्लेशस्य तल्लाभसुखादतिशायित्वात् त्यज्यते, विषमिश्रमन्नं मरणभयात्त्यज्यते, स्रक्चन्दनादि तु ततः प्रकृष्टसुखलाभाभावादनन्तरोत्तीव्रदुःखानुबन्धाभावाच्च परिमितमप्युपादीयते, तस्मादनित्यस्य हेयत्वं नानित्यत्वमात्रप्रयुक्तम्। यद्युच्येत नित्यस्य दुःखासम्भिन्नसुखरूप-

* श्रुतप्रकाशिका *

त्वादुपादेयत्वं तदसम्भवादनित्यस्य च हेयत्वमिति। उच्यते;—नित्यस्य दुःखासंभिन्न-सुखरूपत्वं किं व्याप्त्यावगम्यते, उत शास्त्रात्? न प्रथमः,— नित्यस्य कालादेः सुखरूपत्वादर्शनात् नित्यस्यात्मनो दुःखासम्भिन्नसुखरूपत्वादर्शनाच्च. आत्मनो हि दुःखमुपलभ्यते अहं दुःखीति। शास्त्रतश्चेत्, यदि वेदात्- वेदजन्यं च किमापात-ज्ञानम्, उत प्रमितिरूपम्? प्रथमे कर्मब्रह्मभागसाधारण्यात् कर्मविचारातिक्रमेण ब्रह्मविचारं प्रति तस्य पूर्ववृत्तत्वानुपपत्तिः, निश्चयरूपं चेत् मीमांसाद्वयफलं स्यात् आगमान्तरमूलत्वे विरुद्धतयानुपयोगात् तस्यैतन्नैरपेक्ष्याच्च पूर्ववृत्तत्वानुपपत्तिः। अथोच्यते यन्नित्यं तदुपादेयमिति। नैवं प्रतीतिः, किन्तु नित्यं सुखं सम्भवति चेत् तदुपादेयम्, सति तस्मिन् अनित्यमनुपादेयमिति, तत्र तावन्नित्यसुखसम्भवज्ञानस्य ब्रह्मविचारोपयोगो नित्यफलोपादित्साद्वारेणेति वक्तव्यम्, शास्त्रान्तरेषु कर्मकाण्डे च नित्यफलसम्भावनाया निवारकाभावान्नित्यानित्यविवेकानन्तरं तेषामप्यारम्भणीयता स्यात्. तेषु हि नित्यं फलं प्रतीयते, तदसदिति चेत्, तदसत्त्वमप्रामाण्यादन्यपरत्वाद्वा भवेत्, तदुभयं कर्ममीमांसया विना न सिध्यतीति तस्याः पूर्ववृत्तत्वमभ्युपेतव्यम्। आद्यसूत्रं तज्ज्ञापनपरमिति चेन्न,— तस्य स्वशास्त्रारम्भौपयिकविषयप्रयोजनपरत्वेन शास्त्रान्तराप्रामाण्यादिप्रतिपादनपरत्वाभावात्। स्वार्थोपयोगित्वात् तदप्रामाण्यादिक-मभिप्रेतमिति चेत्, तर्हि तस्य स्वोपजीव्यज्ञापनमपेक्षितमिति कर्मविचारस्य तर्क-पादस्य च पूर्ववृत्तत्वमापद्येत. शास्त्रान्तराप्रामाण्यं हि कर्ममीमांसाप्रथमपादावसेयम्. अन्यपरत्वं वाक्यान्तरविरोधादिभिः, नित्यफलाविवक्षाध्यवसायश्च तत्रत्यन्यायाधीनः शास्त्रान्तरप्रमेयदौस्थ्यञ्च तर्कपादे दर्शयिष्यते। किञ्च- आद्यसूत्रादेव शास्त्रान्तरगत-नित्यफलासत्त्वावगमश्चेत् अन्योन्याश्रयः, ब्रह्मविचारे प्रवृत्तस्यान्यत्र नित्यफला-

* तत्त्वटीका *

ब्रह्मभागेतु मुक्त्युपास्तिशमादिमुमुक्षवः—एषां विशेषः पूर्वपक्षोक्ताद्व्यावृत्तं रूपं मिथो भेदश्च। नात्र फलकरणादिनिश्चयेन कर्मस्वरूपादिबोधोक्तौ साध्याविशेषः, पदार्थवाक्यार्थनीत्या तेषु तेष्वधिकरणेषु तत्तदवान्तरवाक्यार्थनिश्चयेन पश्चान्मिथः-स्संसृष्टविशिष्टमहावाक्यार्थबोधोक्तेः वैराग्यादिमूलभूतस्य नित्यानित्यविवेकस्य फल-करणादिनिश्चयान्तर्गतबोधनपरत्वाच्च। कर्मग्रहणमिहोपास्तेरप्युपलक्षकम्, क्रियत

* श्रुतप्रकाशिका *

सत्त्वावगमः तदवगमाद्ब्रह्मविचारे प्रवृत्तिरिति। न चैवं सति धर्मजिज्ञासासूत्रेऽप्यन्योन्याश्रयः शङ्कनीयः, पित्रादिप्रेरणया कृतसाङ्गाध्ययनस्य पुरुषस्य प्रयोजनवदर्थापातप्रतीत्यैव प्रवृत्त्युपपत्तेः, येषां धर्मविचारो वैधः तेषामेवान्योन्याश्रयः, वैधत्वज्ञानाद्विचारो विचाराद्वैधत्वज्ञानमिति। किञ्च—अनित्यफलहेयताज्ञानस्य स्वर्गादिफलजिहासाद्वारेण ब्रह्मविचारोपयोगो वक्तव्यः, स्वर्गादिफलस्यानित्यत्वं दुःखसम्भिन्नत्वं च कथमवगम्यते? शास्त्रान्तरेण चेत्, तत्रैव नित्यपुरुषार्थसिद्धेर्नैराकाङ्क्ष्येण ब्रह्मविचारप्रवृत्त्ययोगात् तत्पूर्ववृत्तत्वानुपपत्तिः। यत्सुखं तदनित्यमिति स्वोत्प्रेक्षिततर्कमात्रेण चेत्, तेनैव निरस्तनित्यपुरुषार्थसम्भावनतया ब्रह्मविचारः प्रतिबध्येत. दुःखनिवृत्तेरन्तराहित्यात् स्वाभाविकसुखस्यानादिभावत्वादन्तविरहोपपत्तेश्च न नित्यपुरुषार्थासम्भावनेति चेन्न, दुःखनिवृत्तिश्चेत् दुःखानुबन्धिनी दुःखनिवृत्तित्वात् सम्प्रतिपन्नवत्, सुखं चेत् सुखत्वादेव कृतकमित्येवंरूपकुतर्कोत्प्रेक्षासम्भवेन केवलतर्कशरणानां नित्यपुरुषार्थसम्भावनाया दुरुपपादत्वात्, शास्त्रसिद्धनित्येतरविषयो व्याप्तिनिश्चय इति चेन्न, वेदान्तश्रवणपूर्वको व्याप्तिनिश्चयः, तत्पूर्वकं वेदान्तश्रवणमित्यन्योन्याश्रयप्रसङ्गात्, अतो ब्रह्मविचारं प्रति नित्यानित्यगतधर्मविवेकोपयोगाय नित्यानित्यविभागे प्रत्यक्षाप्रवृत्तेस्तर्कस्यातिप्रसक्तेः शास्त्रान्तराणां ब्रह्मविचारनैराकाङ्क्ष्यापादकत्वात् तद्विरोधेनानुपयोगाच्च वेद एव प्रमाणीकर्तव्ये तत्रापातप्रतीतेरुभयभागसाधारण्यान्नित्यानित्यनिश्चयस्य मीमांसाद्वयफलत्वेनान्योन्याश्रयस्य दुस्तरत्वाच्च नित्यानित्यगतहेयोपादेयत्वज्ञानं नित्यानित्यवस्तुविवेक इत्ययुक्तम्। ननु शास्त्रान्तरेषु नित्यफलसम्भावनाया निवारकाभावान्नित्यानित्यविवेकादिमतस्तत्रापि प्रवृत्तिप्रसङ्ग इति यदुक्तं, तन्न—शास्त्रान्तरनिवारकत्वादाद्यसूत्रस्य ब्रह्मैव जिज्ञास्यं

७ तत्त्वटीका ७

इति वा उभयसङ्ग्रहः, उपासनेऽपि कर्मशब्दस्सूत्रेप्युक्तः "प्रकाशश्च कर्मण्यभ्यासात्" इति। तत्र च भाष्यम्—'उपासनात्मके कर्मणी' ति। अन्यत्र 'यागादिकमुपासनात्मकञ्च कर्मे'ति। मानसकर्मोक्तिश्च स्मृत्यादिषु दृश्यते, कर्मशब्दस्यात्र ज्योतिष्टोमादिमात्रविषयत्वं मत्वा तत्स्थिरत्वास्थिरत्वेत्येतन्निरूपणप्रकारस्यानुकारः, नतु निश्चयप्रकारस्येति केचित्। अत्र वैघट्यव्यञ्जकेन व्यतिरेकेण भाष्य-

* श्रुतप्रकाशिका *

न प्रकृतिपुरुषाविति हि सूत्रार्थ इति । तदयुक्तम्; साधनचतुष्टयपूर्ववृत्तत्ववादिभिरस्यार्थस्यानङ्गीकृतत्वात्, तापत्रयज्ञानपूर्ववृत्तत्ववादिभिरयमर्थ उक्तः, न चायमर्थ उपपन्नः । तथाहि,—न तावदयमर्थः सूत्रकृतोपदिश्यते, न वाज्ञाप्यते किंतूपपाद्यत इति वक्तव्यम्, न्यायनिबन्धनत्वात् सूत्राणाम्, उपपत्तिश्च शास्त्रान्तरदौर्बल्यमेव वा, स्वशास्त्रप्राबल्यमेव वा, समुच्चितमुभयं वा ? न प्रथमः—स्वशास्त्रस्य दौर्बल्ये ब्रह्मणोऽप्यजिज्ञास्यत्वात् । न द्वितीयः—शास्त्रान्तरस्य प्राबल्ये ब्रह्मण एव जिज्ञास्यत्वासिद्धेः । तृतीये सूत्रवैयर्थ्यं पूर्वमीमांसायामेव चोदनासूत्रप्रभृतिभिस्तदुभयसिद्धेः । तत एव तस्याः पूर्ववृत्तत्वापत्तिश्च अवश्यापेक्षितत्वात्. वेदप्रामाण्यमात्रे सिद्धेपि ब्रह्मणि प्रामाण्यं न तावता सिध्यतीति चेत् तर्हि यैर्हेतुभिर्ब्रह्मणि प्रामाण्यासम्भवशङ्कास्ते परिहर्त्तव्याः, ते च सिद्धे व्युत्पत्त्यनुपपत्त्यादय इति तत्परिहारेण ब्रह्मणि वेदान्तप्रामाण्यसमर्थनपरत्वेऽस्मदीय एव पक्षः परिगृहीतः स्यात्; अत एव दुःखत्रयाभिघातज्ञानस्य पूर्ववृत्तत्वमपि निरस्तम्। तथाहि किमैहिकदुःखज्ञानं पूर्ववृत्तम् ? उत नारकदुःखज्ञानम्? उत स्वर्गादेरप्यल्पास्थिरतया तापत्रयान्तर्गतत्वज्ञानम् ? न प्रथमः—आयुर्वेदादिभिस्तन्निरसनोपायावगमात् वेदान्तविचारनैरपेक्ष्यात्। न द्वितीयः,—निरयदुःखहेतुभूतपापापनोदकरव्रतनियमविधायकशास्त्रबाहुल्याद्वेदान्तनैरपेक्ष्यात् । तृतीये तु कर्मविचारापेक्षा स्यादेव, प्रथमत एवाध्ययनविधिवश्यस्य शास्त्रान्तरावगमावसरविधुरत्वात्, सत्यप्यवसरे स्वर्गाद्यल्पास्थिरत्वज्ञापकैस्तैरेव शास्त्रैर्मुक्त्युपायस्यावगतत्वेन वेदान्तनैरपेक्ष्यात्. वेदान्तविरुद्धार्थाभिधायिनां तेषामवगमस्य वेदान्तज्ञानपूर्ववृत्तत्वायोगात् आपातप्रतीतेरितिहासपुराणयोश्चाल्पास्थिरत्वानन्तस्थिरत्वविपर्ययप्रतीतिहेतुत्वाच्च. पूर्वं व्याख्येयस्वभावात् क्रम-

⁂ तत्त्वटीका ⁂

माणस्यायञ्च भावः,—किं केन कथमित्याकाङ्क्षितफलाद्यंशत्रयनिश्चयमन्तरेण कथं त्र्यंशभावनात्मककर्मबोधः ? कथञ्च जीवनादिविशेषिताधिकारान्वितस्वर्गादिपदार्थस्य देहान्तरदेशान्तरभोग्यत्वनिश्चयः ? तदभावे च कथं लोकायतसौगतगतिखण्डनगर्भपूर्वोत्तरदेहानुवृत्तात्माध्यवसायः ? आत्मनि चासुखतयोपलब्धेरन्यथासिद्ध्या वचनमन्तरेण कथं सुखत्वश्रुतिमुख्यत्वम् ? तादृशात्मनिश्चयाभावे देहमेवात्मानं मन्य-

एषां साधनत्वं च विनियोगावसेयम् । विनियोगश्च श्रुतिलिङ्गादिभ्यः । स च तार्तीयः । उद्गीथाद्युपासनानि

* श्रुतप्रकाशिका *

नियम उक्तः । व्याख्यानस्वभावादपि तत्सिद्धिरिदानीमुच्यते (एषामिति) एषाम्-शमादीनाम् । साधनत्वम्, चः समुच्चये ( विनियोगावसेयं ) विनियोगः—अङ्गत्व-ज्ञापनम् । ततः किमित्यत्राह ( विनियोगश्चेति ) ततोपि किमित्यत्राह ( स च तार्तीय इति ) तृतीयाध्यायोक्त इत्यर्थः । इदं प्रदर्शनार्थमुक्तं कर्मविचारोक्त-कृत्स्नन्यायसापेक्षत्वाद्ब्रह्मविचारस्य. एतानि हि कर्ममीमांसाध्यायानां प्रमेयाणि । प्रथमे अध्याये प्रमाणलक्षणं वृत्तम् । द्वितीयेऽध्याये शास्त्रभेदः, कर्मभेदो वा. भेदहेतवश्च शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानि । तृतीयेऽङ्गनिरूपणम्, अङ्गत्वज्ञापकानि प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि । चतुर्थे क्रत्वर्थपुरुषार्थभेदनिरूपणेन पुरुषार्थैः क्रत्वर्थानां प्रयुक्तिर्निरूपिता । पञ्चमे क्रमः, क्रमप्रमाणानि श्रुत्यर्थपाठप्रवृत्तिमुख्यकाण्डानि । षष्ठेऽधिकारिनिरूपणम् । सप्तमे

७ तत्त्वटीका ७

मानस्य कथमैहिकफलविरक्तिः ? नित्यसुखरूपतया सिद्धस्याप्यधिकर्तुः प्रवृत्ति-धर्मफलं कृत्स्नं परिमितविषयभोगरूपमनित्यं निवृत्तिधर्मफलं परं नित्यमिति निश्चयालाभे कथं स्वर्गाद्यनित्यफलजिहासा, नैगमान्तिकनित्यफलधिया समा-कर्षश्च ? अतस्साधनचतुष्कवृत्तवादे विवेकविशेषादेर्मूलतया भागद्वयविचार एष्टव्यः ततश्च कर्मविचारसापेक्षत्वम्, परमन्योन्याश्रयस्त्वधिक इति । आदिशब्देन ज्ञानानन्दरूपत्वसङ्ग्रहः । शमादिसाधनसम्पत्तौ विशेषतश्च दोषमाह (एषामिति) 'शान्तो दान्त' इत्यादिविनियोजकवाक्योक्तानामित्यर्थः । शमादेरङ्गत्वे बोधिते ह्यत्र साधनत्वमनुक्तमप्यर्थात्सिद्ध्येत्, ततः किमित्यत्र शेषलक्षणसिद्धप्रमाणलक्षण-सापेक्षत्वमाह ( विनियोग इति ) विनियोगः—अङ्गाङ्गित्वबोधनम्, सम्बन्ध इति तु न्यायसुदर्शनम् । एतैर्मानैर्ब्रह्मकाण्ड एव तद्विनियोगश्चिन्त्यतामित्यत्राह ( स इति ) तार्तीयः—प्रागुक्तसङ्गतिक्रमेण कर्मकाण्डतृतीयाध्यायोक्तः । इह पुनस्तृतीये लाघवानुसारात्पूर्वं व्युत्पादितैस्तैरेवाक्षेपसमाधानमात्रं करिष्यते, एवमेवाध्याया-

कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि, ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि । तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापा-

* श्रुतप्रकाशिका *

सामान्यातिदेशो निरूपितः । अष्टमे विशेषातिदेशः । नवमे ऊहः । दशमे बाधः । एकादशद्वादशयोस्तन्त्रप्रसङ्गौ । यथोक्तं "धर्मधीमानभेदाङ्गप्रयुक्तिक्रमकर्मभिः । सातिदेशविशेषोहबाधतन्त्रप्रसक्तिभिः" ॥ इति । एतन्न्यायसापेक्षत्वं सङ्कर्षसापेक्षत्वं च ब्रह्मविचारे तत्र तत्र द्रष्टव्यम्; तस्मात् स च तार्तीय इति प्रदर्शनार्थमुक्तम् । अथ कर्मविचारापेक्षत्वे अभ्युच्चययुक्तिरुच्यते ( उद्गीथादीति ) परेण प्रसङ्गात् सङ्गतिरुक्ता, अत्र तु साक्षात्सङ्गतिरुपपाद्यते ( कर्मसमृद्ध्यर्थान्यपीति ) कर्मसमृद्ध्यर्थत्वे तत्प्रयोजनं तन्निर्वचनादिति वाक्यकारवचनं स्मारितम् ( ब्रह्मदृष्टिरूपाणीति ) अब्रह्मणि ब्रह्मत्वेन दृष्टिर्ब्रह्मदृष्टिः, ब्रह्मदृष्टिरूपत्वात् ब्रह्मज्ञानसापेक्षाणीत्यर्थः । इतिर्हेतौ ( इहैव चिन्तनीयानि ) न तु कर्मविचारे, ( तान्यपि कर्माणि ) यत्समृद्ध्यर्थान्युद्गीथाद्युपासनानि तान्यपीत्यर्थः । ( अनभिसंहितफलानि ) अनभिसंहितफलत्वात् ब्रह्मविद्योत्पादकानीत्यर्थः । इतिर्हेतौ । तत्साद्गु-

❀ तत्त्वटीका ❀

न्तरन्यायोपजीवनश्चात्र द्रष्टव्यमिति भावः । अथ युक्त्यन्तरं दर्शयन्नुद्गीथाद्युपासनविचारस्य स्थानान्तरानर्हतयात्रैव मुख्यसङ्गत्या कर्मब्रह्मचिन्ताक्रमं स्थापयति ( उद्गीथेति ) कर्मसमृद्ध्यर्थान्यपीत्यनेन पूर्वत्रोपयोगः, इह नेति शङ्कोद्धाट्यते । कर्मसमृद्धिः—'तदेव वीर्यवत्तर' मिति श्रुत्युक्तेः प्रबलकर्मभिरप्रतिबन्धो गुणफलरूपः । ब्रह्मदृष्टिरूपाणीति हेतुगर्भं ब्रह्मज्ञानापेक्षाणि, न ह्यारोप्यस्वरूपमन्यत्राजानतः क्वचिदपि तदारोपः, अनिर्वचनीयादिदृष्टेर्दूषयिष्यमाणत्वात्, इह च ब्रह्मज्ञानं प्रथमह्निकसाध्यमित्यर्थः । दृष्ट्युपासनानां प्रधानानुपयोगं प्रणाड्योपयोगात्परिहरति ( तानीति ) उद्गीथाद्युपासनपरिहार्यप्रत्यूहानीति यावत् । अपिरत्र परारोपितविरोधद्योतकः । यद्वा, पूर्वग्रन्थेऽनुपयोगमन्वारुह्य सजातीयप्रयोगमात्रात्सङ्गतिरनन्यगतिकाकाङ्क्षोक्त्या परिहृता । अत्र चोपयोगश्चास्तीति व्यज्यते ( अन-

दनान्येतानि सुतरामिहैव सङ्गतानि। तेषां च कर्मस्व-

* श्रुतप्रकाशिका *

एयापादनानि-साद्गुण्यं, प्रबलप्रतिबन्धके सत्यपि शीघ्रफलप्रदत्वम्, तदापादनानि-ब्रह्मविद्यां शीघ्रं सम्पादयन्तीत्यर्थः। (एतानि) उद्गीथाद्युपासनानि. अत इहैव सुतरां सङ्गतानि, प्रधानानुपयोगित्वेन सादृश्यादिना धीस्थत्वं प्रसङ्गात् सङ्गतिः, अन्यतरापेक्षया उभयापेक्षया वा सङ्गतिः साक्षात्सङ्गतिः, अत्र तूभयोरपेक्षितत्वं प्रतिपादितं ब्रह्मदृष्टिरूपाणीति. उद्गीथाद्युपासनस्य ब्रह्मज्ञानापेक्षाभिहिता। ब्रह्मविद्योत्पादकानीति ब्रह्मज्ञानस्य उद्गीथाद्युपासनापेक्षाभिहिता एतदभिप्रायेण सुतरामित्युक्तम् (इहैवेति) उभयापेक्षया अत्रैव विद्यमानत्वात् सुतरां सङ्गतिरिहैव, न तु कर्मविचार इत्यर्थः। ननु कथमुद्गीथादिविचारस्य ब्रह्मविचार एव सुतरां सङ्गतिः? कर्मविचारेपि सुतरां सङ्गतिरस्ति, उभयापेक्षया सङ्गतिर्हि सुतरां सङ्गतिः कर्माङ्गाश्रयत्वादुद्गीथादिधियां तद्विचारस्य कर्मापेक्षास्ति, कर्मणामपि स्वसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षास्तीत्युभयापेक्षाया विद्यमानत्वात्। उच्यते,— कर्मसमृद्ध्यर्थोद्गीथाद्युपासनापेक्षा केवलकर्मणां विद्याङ्गकर्मणां च तुल्या, अतः कर्मसमृद्ध्यर्थत्वहेतुः साधारणः, कर्माङ्गाश्रयत्वं पूर्वभागविचारसङ्गतेरसाधारणहेतुः, ब्रह्मज्ञानसापेक्षत्वमुत्तरभागविचारसङ्गतेरसाधा-

❀ तत्त्वटीका ❀

भिसंहितफलानि) बन्धकफलसङ्कल्परहितत्वादित्यर्थः। ब्रह्मविद्यात्र स्वाभीष्टा, साद्गुण्यम्— पूर्वोक्तैव समृद्धिः, नतु वैकल्यनिवृत्तिः, तदापादकानि—कर्मसमृद्ध्युत्पादकानि।—

कर्मजात्कर्मसाद्गुण्यं विद्यासाद्गुण्यतश्च सा।
अतो विरोध इत्यल्पं व्यक्तिभेदाद्व्यवस्थितेः॥ ❀॥

सुतराम्,— स्वापेक्षया परविद्यापेक्षया चेति भावः। इहेत्ययोगवदन्ययोगोपि व्यवच्छिद्यते।—

अब्रह्मदृष्ट्यादिषु तु प्रधानैकार्थता भवेत्।
विद्यौपयिकदृष्ट्यादि हेतुन्यायादिहोच्यते॥ ❀॥
नातिप्रसक्तिरेवं स्यादाधिक्या सत्यनुद्रुतेः।
कथञ्चित्सङ्गतिश्चात्र परेष्टा न प्रणुद्यते॥

रूपाधिगमापेक्षा सर्वसम्मता ॥ ❀ ❀ ॥

* श्रुतप्रकाशिका *

रणहेतुः । एवं साधारणासाधारणहेतुद्वयवत्तासाम्येपि, ब्रह्मदृष्टिरूपोद्गीथाद्युपासनानां ब्रह्मज्ञानसापेक्षत्वात् तेन विना तच्चिन्तनमशक्यं पूर्वभागविचारे. न हि कर्मविचारात् पूर्वं ब्रह्मविचार उपपद्यते, प्रागुक्तसङ्गतिविशेषविशिष्टत्वात्तयोः, उत्तरभागे तु ब्रह्मज्ञानस्य सुलभत्वात् निर्वृत्तकर्मविचारस्योद्गीथाद्युपासनचिन्तनं कर्तुं शक्यम्; अत एव शक्यत्वादुद्गीथाद्युपासनान्युपनिषद्भागे विहितानि, अत एव ब्रह्ममीमांसायां निरूपितानि च, एवं वेदान्तभागीविहितत्वब्रह्ममिमांसाविचारितत्वशक्यत्वरूपवैषम्यत्रयविशेषिताया उभयापेक्षाया उत्तरभाग एव विद्यमानत्वात्तन्निबन्धना सुतरां सङ्गतिस्तत्रैवेत्यभिप्रायेण "सुतरामिहैव सङ्गतानी" त्युक्तम् । अयं चाभ्युच्चयहेतुः, यदप्रधानस्यार्थस्यापि साक्षात्सङ्गतत्वात्तस्याप्यवश्यापेक्षितः कर्मविचार इति. प्रधानप्रतिपाद्यस्य नियमेनापेक्षितत्वरूपः प्रधानहेतुः पूर्वमेवोक्तः, ततः किं प्रकृतानन्तर्यस्येत्यत्राह (तेषां चेति) तेषाम्—उद्गीथाद्युपासनानाम् (सर्वसम्मता) तत्साक्षात्सङ्गतत्वे हि विगानम् उद्‍गीथाद्युपासने चिन्त्ये सति तस्य कर्मज्ञानापेक्षा सर्वाविगीता । यत्त्वधीतवेदान्तस्य कर्माधिगमापेक्षा नास्तीत्युक्तम्; तदयुक्तम्—वेदान्तेष्वपि उपायपरमुक्तिपरवाक्यमात्राध्यायिनः पुरुषस्य ब्रह्मविचारेपि तृतीयचतुर्थाध्यायमात्रश्रवणप्रसङ्गात्. तृतीयचतुर्थयोः प्रथमद्वितीयोक्तन्यायसापेक्षत्व-

❀ तत्त्वटीका ❀

अस्तु, यथावदनवगतेऽधिष्ठाने मिथ्यादृष्टिः प्रसिद्धेत्यत्राह (तेषामिति) न ह्येतन्मिथ्यादृष्टिमात्रम्, अपितु यथावदनवगते वैधमारोपणम्, ततश्चाधिष्ठानभूतं कर्माङ्गं यथावदविजानता तत्रान्यदृष्टिविधिर्न चिन्तयितुं शक्यते। सर्वसम्मता—विश्वविलापिनोपि निरूपकसन्निधौ दुरपह्नवा आहत्यसन्मात्रेवगतविमतेरिति भावः । ननु काम्यकर्मणोप्यनङ्गैरपि स्ववीर्यवत्तरत्वापादकैरेतैरपेक्षास्ति । तेषामपि विचारे अनुष्ठाने च कर्माज्ञानापेक्षा सिद्धा, अत उभयाकाङ्क्षया कर्मकाण्डे तच्चिन्तास्तु । मैवम्,— अविदितब्रह्मणस्तदयोगस्योक्तत्वात्, अतएव ह्युपनिषत्स्वेव तदधीतिः । यत्त्वधीतवेदान्तस्येत्यादिना वेदान्तमात्राध्यायिनस्तावन्मात्रचिन्ता शक्येति पूर्वं चोदितम्. तदसत्,— अध्ययनविधिर्हि यथाक्रमं कृत्स्नाध्ययिनं प्रयुङ्क्ते, नच विध्य-

* श्रुतप्रकाशिका *

मस्तीति चेत्, तर्हि कृत्स्नस्य ब्रह्मविचारस्य कर्मविचारन्यायसापेक्षत्वात्तस्यैव पूर्ववृत्तत्वम्. जन्मान्तरसुकृतविशेषेण कस्यचिद् ब्रह्मविचारमात्रापेक्षेति चेत् तस्य सुकृतविशेषेण तृतीयचतुर्थमात्रापेक्षा किं न स्यात्? अथवा सुकृतातिशयात् कृत्स्नब्रह्मविचारानिरपेक्षता किं नस्यात्?। किञ्च—वेदान्तेषूपायफलपरवाक्यमात्राध्ययनमशास्त्रीयमिति त्वयापि वक्तव्यम्, तद्वेदान्तमात्राध्ययनस्यापि तुल्यं कृत्स्नस्वाध्यायाध्ययनस्य विहितत्वात्, अतो विध्यतिलङ्घिनां यदपेक्षितं तदेव पूर्ववृत्तमित्यसङ्गतं, कृत्स्नाध्यायिनोपि सुकृतवशात् क्वाचित्कश्रवणापेक्षायां पूर्वमेव दत्तमुत्तरम्। विरोधादप्रमाणत्वादित्यादिग्रन्थसङ्गृहीतानि दूषणानि अत्रोच्यत इत्यादिना सिद्धान्तभाष्येण परिहृतानि। तथा हि,—कर्मणामनित्यफलत्वेन विरोधोऽनभिसंहितफलत्वात् परिहृतः, भेदवासनाजनकत्वेनैक्यज्ञानविरोधस्तु पृथगात्मानमिति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रुत्या परिहृतः, अयं विरोधो वक्ष्यमाणवस्तुसामर्थ्यान्तर्भूतश्च, मोक्षस्य सकलभेददर्शननिवृत्तिरूपतायाः प्रपञ्चमिथ्यात्वोपपादनसापेक्षत्वात्. ऐक्यज्ञानस्योपायत्वेपि कर्मणामदृष्टद्वारेणोपयोगादविरोधः। अप्रमाणत्वं क्रियावानेष ब्रह्मविदां वरिष्ठ इत्यादिसन्निहितविनियोजकप्रमाणदर्शनात् परिहृतम्। विविदिषार्थचित्तशुद्ध्युपयोगस्तु वेदनोत्पत्त्युपयुक्तमनोनैर्मल्यहेतुत्वोपपादनेन विविदिषार्थत्वेपि तस्याहरहरुत्पत्त्यपेक्षोपपादनेन च प्रत्युक्तः, ज्ञानमात्रस्य हेतुत्वश्रवणं च साधनद्वित्वानभ्युपगमाद् दत्तोत्तरम्। सामर्थ्यं नाम—मिथ्याभूतबन्धस्य ज्ञानैकनिवर्त्यत्वरूपं वस्तुसामर्थ्यं, तत्तु प्रपञ्चमिथ्यात्वदूषणेन प्रतिवक्ष्यते, शमाद्यङ्गकताम्नानकृतो विरोधश्च प्रवृत्तिरूपयज्ञादेर्निवृत्तिरूपशमादेश्च भिन्नविषयत्वेनाविरोधात् परिहृतः, शमादयो ह्यविहिताप्रतिषिद्धनिषिद्धकाम्यविषया इत्युक्तम्।

ॐ तत्त्वटीका ॐ

तिलङ्घनेन प्रवृत्तमापत्कृतं वा त्र्यन्तमात्राध्ययनमपेक्ष्येदानीं तद्विचारस्य पूर्ववृत्तत्वं मृग्यते. एतेन प्राचीनसुकृतविशेषनियतवैराग्यातिशयादेकदेशाध्ययनविचारौ स्यातामित्यपि निरस्तम्। तस्याप्यध्ययनविध्यतिलङ्घनायोगात्. अनधिगतकर्मणः कर्माङ्गविद्याधिगतिरशक्यविचार इति चोक्तम्. अविशदानिरूपणेन पश्चाच्छेषपूरणञ्च क्लिष्टम्, ब्रह्मचिन्तोद्यतस्य विद्याङ्गकर्मणां गुरूपदेशमात्रेण ज्ञप्तिरस्त्विति चेत् तर्हि

॥ महापूर्वपक्षः ॥

## यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव

* श्रुतप्रकाशिका *

वाक्यार्थज्ञानस्यैव मोक्षोपायत्वं प्रत्यक्षविरोध- शास्त्रविरोधाभ्यां निरस्तम् । तत्र निवर्त्यवासनाया निवर्तकोत्पत्तिप्रतिबन्धकत्वाभावेन श्रवणादेर्भेदवासनानिरासार्थमनपेक्षितत्वाच्चदृष्टयर्थपरिहारस्यानुपपन्नत्वाच्छ्रवणादिक्रमोत्थितवाक्यजा धीर्विमोचिकेत्येतदपि परास्तम् । साधनचतुष्टयस्य पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः, स पूर्वं ब्रह्मस्वरूपाच्छादिकेत्यादिना प्रतिज्ञातः, तदुपपादनदूषणयोर्बहुग्रन्थकार्यत्वात्तदुभयं पूर्वं न कृतम् ॥ ७ ॥ इति लघुसिद्धान्तः ॥

अथ तदुपपादनायोपक्रमते—पूर्वमुपायोपदेशपरवाक्यपर्यालोचनया वस्तुसामर्थ्यव्यतिरिक्तहेतव उपन्यस्ता निरताश्च, विविदिषितं ज्ञानमिति ह्युक्तं, वस्तुसामर्थ्यं तु सिद्धपरवाक्यसिद्धं, वस्तुस्वरूपोपदेशपरैरिति हि वक्ष्यते, अतः स्वरूपपरवाक्यपर्यालोचनामुखेन तदुपपादयितुमारभते ( यदप्याहुरिति ) अपिना उपपादयिष्यमाणस्यार्थस्य प्राधान्यं सूच्यते, आहुरिति ग्रन्थकारबहुत्वम्, अनेन

७ तत्त्वटीका ७

तेनैव न्यायेन ब्रह्मविचारोपि माभूत्. तदिह यथाविधि कृतस्वाध्यायिनः प्रागेव कृतावशिष्टे विचारपर्वणि वृत्तविशेषः स्थाप्यत इति शुद्धः पन्थाः ॥

श्रुतिकिरीटशरीरविचारकृ-
न्मलिनवृत्तिमलिम्लुचवृत्तिभिः ।
विघटितामिव विंशतिलक्षणीं
यतिपतेरितिनीतिरजीघटत् ॥ ७ ॥

॥ इतिलघुसिद्धान्तः ॥

एवं विरोधादप्रमाणत्वादित्याद्युक्तानां कर्मनैरपेक्ष्यहेतूनां साङ्गोपायविधिनिरूपणेन बाधासिद्धिसाधारण्यान्यथासिद्ध्यादिदोषाः प्रदर्शिताः । अथ साधनचतुष्टयस्य पूर्ववृत्तत्वे कर्मणो विरुद्धत्वे वाक्यार्थधिया मोक्षोपायत्वे च हेतुतया समाहारेण प्राक् प्रदर्शितं सामर्थ्यं प्राप्यनिवर्त्यगोचरश्रुतिसमीक्षया निराकर्तुं विस्तरेणानुभाषते— यदप्याहुरित्यादिना आरभ्यत इत्यन्तेन ।

# परमार्थः, तदतिरेकिनानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि

* श्रुतप्रकाशिका *

अस्य ग्रन्थस्य तत्तत्प्रबन्धोक्तसकलार्थगर्भितत्वञ्च दर्शितम् । सर्वे वेदान्ता आरभ्यन्त इति यदप्याहुस्तदनादरणीयमित्युपर्यन्वयः । प्रथमं ब्रह्मैकमेव सत्यमिति प्रतिजानीते ( अशेषेति ) अशेषविशेषाः—वक्ष्यमाणज्ञात्रादयः, विजातीयसजातीयस्वगता वा स्वगतेष्वप्यन्वयिनो व्यावृत्तिरूपाश्च विशेषाः अशेषशब्देन विवक्षिताः; तत्प्रत्यनीकम्—स्वज्ञानेन निवर्तकं, शुक्तिरिव रजतस्येत्यर्थः । निर्विशेषत्वे शून्यता स्यादित्यत्राह ( चिन्मात्रमिति ) चिच्छब्देन तुच्छत्वव्यावृत्तिः, स्वयंप्रकाशत्वं हि चित्त्वं, मात्रचा ज्ञेयत्वव्यावृत्तिः । यद्वा, प्रत्यनीकत्वरूपधर्मोऽपि मात्रचा व्यावर्त्यते । यद्वा, मात्रचा वस्तुतः समस्तविशेषविरहो विवक्षितः, ब्रह्मैवेत्येवकारेण सगुणब्रह्मव्यावृत्तिः । परमार्थः—तत्त्वावेदकप्रमाणविषयः, सगुणवाक्यानां न तत्परत्वं फलविशेषार्थमुपासनेऽन्यपरत्वादिति भावः । कथं ब्रह्मण एव सत्यत्वम्? अन्यदपि हि प्रतीयत इति शङ्कायां ब्रह्मण एव परमार्थत्वसिद्ध्यै तद्व्यतिरिक्तस्य तज्ज्ञान-

७ तत्त्वटीका ७

साधितं त्विह निर्बाधं बाधितं निष्प्रतिक्रियम् ।
तथापि पुनरारम्भश्शत्रुशेषविमर्दवत् ॥ ७ ॥
परपक्षप्रसिद्धत्वं गौरवं व्यक्तभाषणम् ।
बहूनामपि सम्वादो यदप्याहुरितीर्यते ॥ ७ ॥

ब्रह्मपारमार्थ्यं तदन्यमिथ्याभावस्तु तदित्यादिभिरुच्यते । यच्छब्दः परगोष्ठीप्रसिद्ध्यर्थः । अपिर्दूषितादूषितसमुच्चयार्थः, परेष्टगौरवद्योतको वा । आहुरित्यनेककण्ठोक्तिः, तेन बहुव्याख्यातृसम्मतिं तदुक्तकृत्स्नानुवादञ्च सूचयति । अशेषेत्यादि चिन्मात्रेत्यन्तं प्रागुक्तार्थम् ।—

वाक्ययोस्सत्यमिथ्यार्थप्रतिज्ञारूपयोरिह ।
यथार्हं हेतुसाध्यत्वं पदार्थेषु विभाव्यते ॥ ७ ॥

चिद्रूपतया सजातीयाद्यशेषभेदशून्यं परमार्थस्वप्रकाशश्च. तत एव हि तुच्छत्वव्यावृत्तिः । अवधारणेनान्यपरविधिवाक्यसिद्धस्य सगुणत्वस्य कल्पितत्वं मिथ्यात्वसाधकदृश्यत्वस्य व्यतिरेकव्याप्तिश्च व्यज्यते । प्रपञ्चोपलम्भाद्धि [ स्वसदन्तरोपलम्भ-

* श्रुतप्रकाशिका *

निवर्त्यत्वाय च विश्वस्य मिथ्यात्वं प्रतिजानीते ( तदिति ) "अथात आदेशो नेति नेती" त्यादौ 'प्रकृतैतावत्त्व' मिति सूत्रविषये कृत्स्नस्य मिथ्यात्वेन ब्रह्मणोपि मिथ्यात्वं परैः पूर्वपक्षीकृत्य निरस्तमिति तदभिप्रायेणोक्तम् ( तदतिरेकीति ) नेह नानास्तीत्यादिनिषेधवाक्यस्य ब्रह्मव्यतिरेकेपि निषेध्यनानात्वं सिध्यतीति दर्शितम् । ( नानाविधेति ) पूर्वमशेषविशेषशब्दोक्तविशेषविवरणार्थं नेह नानास्तीत्यादिवाक्यगतनानाशब्दविवरणार्थं च नानाविधशब्दवाच्यभेदो विवृतः । ( ज्ञातृज्ञेयेति ) तत्कृतज्ञानभेदः—ज्ञातृज्ञेयावच्छिन्नवृत्तिज्ञानभेदः, अनेन वृत्तिस्फुरितचैतन्य-

* तत्त्वटीका *

वि ]रोधशान्त्यै धीमात्रनिवर्त्यत्वाय चावधारणार्थं व्यनक्ति ( तदतिरेकीति ) स्वतस्सिद्धे तस्मिंस्तु प्रकृतैतावत्त्वमात्रोक्तन्यायेन "अथात आदेशो नेति नेति, सदेव सोम्येदमग्र आसीत्" इत्यादिभिर्न बाधस्स्यादिति तच्छब्दाभिप्रायः । ब्रह्मान्यत्वात् भिन्नत्वात् ज्ञातृत्वात् ज्ञेयत्वादित्यादयस्तदन्यमिथ्यात्वहेतवः । उक्तेषु स्थापितेषु शुक्तिरूप्यादिर्घटादिश्च दृष्टान्तः, नानाविधशब्देन 'नेह नाने'त्यादीनां विषयो दर्शितः । स्वरूपज्ञानव्यावृत्त्यै वृत्तिज्ञानसंगृहीत्यै चन्द्रनीतव्यक्त्यै ज्ञातृत्वज्ञेयत्वतद्विशेषाणां करणभेदकृतस्मृतित्वानुभवत्वादीनां ब्रह्मण्यध्यस्तत्वसिद्ध्यै च तत्कृतशब्दः । कर्मकर्त्रवच्छिन्नं हि ज्ञानमहङ्कारविकारः क्रियास्वरूपः, न त्वात्मस्वरूपं न च तद्धर्मः, अन्तःकरणतद्वृत्तिस्फुरितचैतन्यभेदस्तु जलचन्द्रभेदकल्प इति भावः । यो विशेषः पूर्वोक्तस्तत्र भेदशब्दो योज्यः । तत्रैषु नानाविधत्वमवान्तरविशेषैः । आदिशब्देन गोबलीवर्दनीत्या सुखदुःखतद्धेतुजन्मजरादेः कर्मकर्त्रादिविकल्पान्तराणाञ्च संग्रहः । एकस्मिन्नेवैकथैव मिथो विरुद्धानन्ताध्यासो गगनगन्धर्वनगरनीत्या युक्त इत्यभिप्रायेण 'सर्वमात्मैवाभू' दिति श्रुत्यनुसारात्सर्वे तस्मिन्नेवेत्युक्तम् । एतेन माध्यमिकयोगाचारमताभ्यां विशेषः ख्यापितः, एवकारेण निरधिष्ठानभ्रमायोगात्तुच्छव्यावृत्तस्य तस्यैवाधिष्ठानत्वं युक्तमिति व्यज्यते; निरधिष्ठानश्च भ्रमो न युक्तः । शुक्तिरजतादेरध्यस्तद्रव्यधर्माणाञ्चान्ततः तदेवाधिष्ठानमिति चात्र भावः । निष्कले ब्रह्मण्यविद्यादर्शितानन्तांशेपि परिकल्पनाव्याप्तिसूचनाय परिशब्दः । कल्पितम्—अविद्यमानत्वेप्यस्तीति प्रतीतमसत्यमित्यर्थः । स्वात्यन्ताभाववन्निष्ठतया प्रतिभात-

सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतं [1] "सदेव सोम्येद-मग्र आसीदेकमेवाद्वितीयम्" [2] अथ परा यया तद-क्षरमधिगम्यते- यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुः-

* श्रुतप्रकाशिका *

भेदस्य स्वरूपप्रयुक्तताव्यावृत्तिः। भेदशब्देनैकैककोटिषु अवान्तरभेदा विवक्षिताः, आदिशब्देन निरसनीयदुःखरूपजन्मजरामरणान्युच्यन्ते। (सर्वमिति) वक्ष्य-माणश्रुतिगतसर्वशब्दस्यायमर्थ इति भावः। तस्मिन्निति निराधिष्ठानभ्रमपक्षव्यु-दासः, एवकारेणाधिष्ठानबहुत्वनिषेधः, तथा सति हि प्रपञ्चस्य तज्ज्ञाननिवर्त्यत्व-सिद्धिः। यद्वा, तस्मिन्नित्येकवचनेनाधिष्ठानैकत्वसिद्धिः, नानाध्यासा नानाधिष्ठा-नका दृष्टाः, तत्कथमेकाधिष्ठानकत्वमिति विरोधं स्वयंप्रकाशवस्तुनोऽधिष्ठानत्ववि-रोधं च स्फोरयत्येवकारः। (मिथ्याभूतम्) मिथ्याभाववत्-वक्ष्यमाणमिथ्यात्वलक्षण-वदित्यर्थः। ब्रह्मण एव सत्यत्वे व्यतिरिक्तमिथ्यात्वे च किं प्रमाणमित्यत्राह (सदे-वेति) सदेवेति विजातीयभेदो व्यावर्त्यते, एकमेवेति सजातीयभेदः, अद्वितीय-मिति स्वगतभावाभावरूपभेदः, षड्विधतात्पर्यलिङ्गोपेतसद्विद्यागतत्वादिदं वाक्यं प्रथममुपात्तम्। अथैवकारफलितनिषेधकण्ठोक्तिमत्परविद्यावाक्यमुपादत्ते (अथेति)

* तत्त्वटीका *

मिति यावत्। तत एव मिथ्याभूतम्—सर्वदैव सदसद्व्यावृत्तमिति यावत्। कल्पितत्वे वक्ष्यमाणमिथ्यात्वं हेतुतयोच्यत इति केचित्। एवं युक्तिसूचके प्रतिज्ञाद्वये श्रुतिसूत्रस्मृतीः प्रमाणयति (सदेवेत्यादिना- अभिधानादित्यन्तेन) शाखाग्रे चन्द्र इतिवत् कारणत्वेन ब्रह्मण उपलक्ष्यत्वमभिप्रेत्यादौ शङ्कितदोषनिवर्त्तकेभ्यश्शोधकेभ्यः पूर्वं कारणवाक्योपादानम्. तत्रापि षड्विधतात्पर्यलिङ्गवत्तया बलीयस्त्वात्प्रथमं सद्विद्योपादनम् अत्र सत उत्पत्तिर्यस्य स्थाप्यते तस्य सत्त्वेनानूदितस्यापि असत्यत्वसूचकाभ्यामग्रे इत्युक्तेपि सर्वथा निषेधतत्पराभ्यामवधारणाभ्यामद्वितीय-पदेन चाभिप्रेतेर्थे कण्ठोक्त्या शङ्कनीयविशेषनिषेधोपक्रमं कारणवाक्यान्तरमुपादत्ते (अथेति) अद्रेश्यम्— अदृश्यम्, ऐन्द्रियिकप्रत्यक्षानर्हमित्यर्थः। अग्राह्यम्—अनु-

१— छा. उ. ६- प्र. २- ख. १ वा॥ २— मु. उ. १ मु. १ ख. ६- वा.॥

श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' 'सत्यं

* श्रुतप्रकाशिका *

इदञ्च कारणत्वशङ्कितदोषव्युदासोपक्रमककारणवाक्यं, भूतयोनिमित्युक्त्वा अनन्तरं तस्यैव प्रपञ्चनात्, अद्रेश्यमग्राह्यम्—प्रत्यक्षागोचरोऽनुमानागोचरः, अथवा चक्षुरगोचर इन्द्रियान्तरागोचरः। अगोत्रम्—अनामकम्। अवर्णम्—अनैल्यादिकम्। अचक्षुःश्रोत्रमपाणिपादम्—ज्ञानकर्मेन्द्रियरहितम्। नित्यं विभुम्-कालदेशाभ्यामपरिच्छिन्नम्। सर्वगतम्—सर्वेण जगताऽधिष्ठानतया गतम्—आश्रितं, वस्तुपरिच्छेदरहितमित्यर्थः। सुसूक्ष्मम्—अदृश्यत्वं न तुच्छत्वातिदूरत्वादिना, किन्तु सुसूक्ष्मत्वादित्यभिप्रायः, वाक्यभेदादनेकयत्तच्छब्दान्वयोपपत्तिः। अथ शोधकवाक्यमुपादत्ते (सत्यमिति) अनृतजडपरिच्छिन्नव्यावृत्तनिर्विशेषवस्तुपरमिदं वाक्यं, कारण-

* तत्त्वटीका *

मथापि दुर्ग्रहम्, चक्षुःश्रोत्रादेरगोचर इति वा पदद्वयार्थः। ज्ञानकर्मेन्द्रियानर्हत्वमिह विवक्षितमिति केचित्। अगोत्रम्— अव्यवधानेन देवादिनामभिरस्पृष्टम्, सद्ब्रह्मादिशब्दैरपि लक्षणयैव प्रदर्श्यते। अवर्णम्— सितरक्तादिशून्यं, कुलञ्च ब्राह्मण्यादि च दूरापास्तम्। (अचक्षुःश्रोत्रं तदपाणिपादमिति) इन्द्रियायत्तज्ञानक्रियारहितमिति भावः। नित्यं विभुम्—कालतो देशतश्चानवच्छिन्नम्. एतेन प्रतिज्ञास्थब्रह्मत्वप्रदर्शनम्। सर्वगतम्— स्वव्यतिरिक्तैस्सर्वैरध्यस्तैरधिष्ठानतया श्रितं, वस्त्वन्तराभावाद्वस्तुपरिच्छेदरहितमित्याशयः। सुसूक्ष्मम्—आकाशादिन्यायेन स्पर्शवस्तुप्रतिघातरहितं, दृश्यत्वाद्यनुगुणस्थौल्यादिरहितमिति वा; तेन योग्यानुपलब्धिबाधशङ्कानिरासः। तदव्ययम्— तत्रैवं निरुक्तिः "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥" एतदेव शब्दे योजितं तद्भक्तैः। भूतयोनिम्— अविद्याशबलरूपेण भूतरूपविवर्तोपादानमित्यर्थः। अत्र 'यथोर्णनाभि' रित्यादिना तत्प्रपञ्चः। एवं तटस्थलक्षणलक्षितस्य चिन्मात्रप्रतिज्ञानिर्वाहाय प्रकृष्टप्रकाशश्चन्द्र इतिवदतद्व्यावृत्तिपरेण स्वरूपलक्षणेन शोधनं व्यनक्ति (सत्यमिति)

१- तै. उ. आन. १- अनु. १ वा.॥

ज्ञानमनन्तं ब्रह्म' 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' [1]'यस्याऽमतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्' [2]'न दृष्टेर्द्रष्टारं पश्येः—न मतेर्मन्तारं मन्वीथाः' [3]'आनन्दो

* श्रुतप्रकाशिका *

वाक्यकार्थ्यात् शोधकवाक्यान्तरैकार्थ्यात् सामानाधिकरण्यान्यथानुपपत्त्या चेति वक्ष्यते। निष्कलम्-कला अवयवाः, निरवयवमित्यर्थः। तत्र लिङ्गं निष्क्रियत्वम्। शान्तम्—ऊर्मिषट्करहितम्; अशनायापिपासे शोकमोहौ जरामृत्यू चोर्मयः। निरवद्यं निरञ्जनम्-कर्मसम्बन्धतत्फलरहितम्, अनेन सत्यज्ञानादिवाक्यगर्भि तव्यावृत्तिः स्फुटीकृता। अथ चिन्मात्रशब्दाभिप्रेतां ज्ञेयत्वव्यावृत्तिमाह (यस्येति) अमतमविज्ञातमिति श्रवणमननादिरूपज्ञानाविषयत्वोक्तिः। अथ ज्ञातृत्वनिषेधपरं वाक्यमाह (न दृष्टेरिति) अत्रापि पूर्वोक्तज्ञानावस्थाभेदो विवक्षितः, अस्य पुरुषार्थत्वायासुखाद्व्यावृत्तिरुच्यते (आनन्दो ब्रह्मेति) आनन्दशब्दोऽसुखाद्व्यावृत्तिमात्रपरः। अत एव ह्यानन्दीत्यनुक्तिः, इत्थं ब्रह्मणो निर्विशेषचिन्मात्रत्वे श्रुतिवाक्यजातमुपन्यस्तम्। अथ व्यतिरिक्तमिथ्यात्वे प्रमाणमुपन्यस्यते, तत्र प्रथमं मिथ्याभूतस्य

❁ तत्त्वटीका ❁

अत्र सामानाधिकरण्यादिबलादन्यव्यावृत्तिपरत्वं कल्प्यम्। विशेषतोन्यधर्मव्यावृत्तिकण्ठोक्तिमाह (निष्कलमिति) ब्रह्मणश्चिन्मात्रशब्दसूचितं ज्ञेयत्वनिषेधं कस्यचित् स्तुत्यान्यस्य निन्दया च स्थापयति (यस्येति) मननोपासनाद्यविषय इति भावः। ज्ञातृत्वनिषेधमप्याह (न दृष्टेरिति) दृष्ट्यादिशब्दोपलक्षितज्ञानव्यतिरिक्तज्ञातापि नास्तीति भावः। परमप्रेमास्पदत्वादानन्दरूपो जीवः [स्वप्रकाशत्वान्नित्यप्राप्तस्यापि प्राप्यत्वोपचारः] ज्ञानशक्त्या स्वप्रकाशत्वात्सत्यम्, तेन ब्रह्मणस्सद्वितीयत्वमिति शङ्कानिवृत्त्यर्थञ्चासुखाद्व्यावृत्तिमाह (आनन्द इति) जीवोपि ब्रह्मानतिरिक्ततयैवानन्दरूप इति भावः। न ह्यानन्दस्यानन्दित्वम्, अतश्च निर्गुणत्वसिद्धिः, 'ब्रह्मण

१— श्वे-उ-६-अनु-१९-वा॥
२— के-उ-२-ख ३-वा॥
३— बृ-उ-५-अ-४-ब्रा-२-वा॥
४— तै-उ-भृगु-३ अनु-

ब्रह्म' 'इदं सर्वं यदयमात्मा' [2]'नेह नानास्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' [3]यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति

* श्रुतप्रकाशिका *

जगतो ब्रह्मण्यधिष्ठानेऽध्यस्तत्वं दर्शयति—इदं सर्वं यदयमात्मेति—सामानाधिकरण्येन । अधिष्ठानेनाध्यस्तसामानाधिकरण्यं हि बाधार्थं दृष्टम्, यथा—रज्जुसर्प इति । पूर्वं सर्वं तस्मिन्नेवेति प्रतिज्ञातं ब्रह्मणः सर्वाध्यासाधिष्ठानत्वञ्चानेन वाक्येन दर्शितम् । व्यतिरिक्तनिषेधकण्ठोक्तिं दर्शयति ( नेह नानास्ति किञ्चनेति ) नानापश्यतन्त्वन्ताञ्च इति दर्शयति ( मृत्योरिति ) अत्र मृत्युरविद्या 'तमसो वा एष तमः प्रविशती'तिवत्, इवशब्देन नानात्वस्यापारमार्थ्यं दर्शितम् । मिथ्याभूतं चेत् कदाचिन्निवृत्तिः स्यादित्यत्राह ( यत्र हीति ) यत्र—यदा । द्वैतमिव भवति—इवशब्दः पूर्ववत् । तत्—तदा ।

* तत्त्वटीका *

आनन्द' इति श्रुतेश्चान्यपरत्वम् । सर्वं तस्मिन्नेव परिकल्पितमित्यत्र श्रुतिमाह ( इदं सर्वमिति ) इदङ्कारविषयं कृत्स्नमनूद्य तद्विरुद्धात्मत्वविधौ चोरः स्थाणुरिति वदनूदितं बाधार्थसामानाधिकरण्यं "ब्रह्मैवेदं सर्वम्' आत्मैवेदं सर्वम्' पुरुष एवेदं सर्वम्" इत्यादिषु व्यक्तम् । अत्र बाधार्थत्वमन्यत्र कण्ठोक्त्या दृढयति ( नेहेति ) इह— प्रपञ्चे, 'यस्मिन् पञ्च पञ्चजनाः" इति प्रस्तुते ब्रह्मणि वा; यन्नानात्वेन भाति तन्न सत्यमित्यर्थः । भेददृष्टेः प्रत्यवायोक्त्या भेदनिषेधं दृढयति ( मृत्योरिति ) 'तमसो वा एष तमः प्रविशति' इत्यादिवदविद्यागृहीतः पुनरविद्यां तत्फलं वा प्राप्नोतीत्यर्थः । यदि भेदो नास्ति खपुष्पवन्न दृश्येत, नित्यमसतोपी भ्रान्त्या दृश्यत्वे खनैर्मल्यवन्नित्यं किं न दृश्येतेत्यत्र स्वप्नजागरकल्पबद्धमुक्तदशाया युक्तायुक्तावस्थाया वा नियमोक्तिमाह ( यत्रेति ) कालानुक्तिरियं "नानेव, द्वैतमिव" इतीवशब्दाभ्यां मिथ्यात्वस्य सिद्धवत्कारः । तत्—तदेत्यर्थः । इतरेणेति पूर्वस्मिन् वाक्येऽध्याहार्यम् । परस्मिंस्तु क इति कर्तृकरणादिकल्पना निरस्ता । पश्येद्विजा-

१— बृ-उ-४-अ-४-ब्रा-६-वा ॥
२— बृ-उ-६-अ-४-ब्रा-१९-वा ॥
३— बृ-उ-४-अ-४-ब्रा-१४-वा ॥

यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्तत्केन कं विजानीयात्' [1]'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' [2]'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भय भवति' [3]'न स्थानतोपि परस्यो-

* श्रुतप्रकाशिका *

इतर इतरम्-इतरेण पश्यतीत्यर्थः। केनेति वक्ष्यमाणत्वादितरेणेत्यध्याहारः। (यत्र त्विति) यत्र—यदा। अस्य सर्वमात्मैवाभूत्. तत्-तदा। केन कं पश्येत्. क इत्यध्याहार्यम् इतर इत्युक्तत्वात्. पश्येद्विजानीयादिति ज्ञानपर्वभेदोक्तिः। इदं कृत्स्नमिथ्यात्वं दृष्टान्तेनोपपादयन्तीं श्रुतिमुदाहरति (वाचेति) विकारः- घटादिसंस्थानं नामधेयं च. वाचारम्भणम्- वागालम्बनं, व्यावहारिकमित्यर्थः। तस्मान्मृत्तिकेत्येव सत्यम्। ब्रह्मणि नानात्वं पश्यतः पूर्वोक्तमृत्युशब्दाभिहिताज्ञानकार्यं भयञ्च दर्शयति (यदा हीति) उदरम्—उ अवधारणे. 'तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीना' मितिवत्। दरम्-अल्पम्। यद्वा, उत् अरम् उदित्यस्य भवतीत्यनेनान्वयः "व्यवहिताश्चे"ति सूत्रात्। अरम्- शीघ्रम् यदा ह्येवेत्यादेः पश्चादुपादानं सिद्धान्ते परिहारसौकर्यार्थं, तच्च पूर्वोक्तवाक्यानामेकन्यायपरिहार्यत्वात्, ब्रह्मणो निर्विशेषचिन्मात्रत्वे व्यतिरिक्तमिथ्यात्वे च श्रुतिर्दर्शिता, तत्र निर्विशेषत्वे सूत्रं प्रदर्श्यते (न स्थानत इति)

ꣳ तत्त्वटीका ꣳ

नीयादिति निषेध्यज्ञानावान्तरभेदपरम्, कार्यमिथ्यात्वं कारणसत्यत्वञ्च लोकदृष्ट्या निदर्शितमाह (वाचेति) अत्र दार्ष्टान्तिकमात्रे सत्यत्वस्थापनाय दृष्टान्ते व्यावहारिकसत्यत्वमात्रम्; अतो न विरोधः। अन्वयव्यतिरेकाभ्यां भेदबुद्धेर्भयहेतुत्वेन त्याज्यत्वं दर्शयितुमाह (यदा हीति) अभयहेतुरैक्यधीः पूर्ववाक्योक्ता, उ इत्यवधारणार्थम्. उदरमन्तरं कुरुते—ईषद्भयं मन्यते. उदिति विभज्य उत्कुरुत इति केचित्, उद्भवतीति चान्ये, अरं—द्रुतम् अयथातथा निरूप्येत्यर्थः। अस्य तु निर्विशेषत्वे सूत्रमादत्ते (न स्थानत इति) नोभयलिङ्गमित्यन्वयः। साकारत्वं साकार-

१—छा-६-प्र-१-ख-४-वा ॥
२—तै-उ-आन-७-अनु-२-वा ॥
३—शारी-३अ-२-पा-३-सू ॥

भयलिङ्गं सर्वत्र हि'[1] मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात्'[2] प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥"[3] ज्ञान-

* श्रुतप्रकाशिका *

उभयलिङ्गम्—साकारत्वं साकारानिराकारत्वञ्च, सर्वत्र स्थितस्यापि ब्रह्मणो नास्ति. निराकारमित्यर्थः । अन्यमिथ्यात्वे सूत्रमाह ( मायेति ) स्वाप्नमर्थजातं कात्स्न्र्येन मायामात्रम्. कुत इति चेत्? अनभिव्यक्तस्वरूपत्वात्—दुर्निरूपत्वात्, बाधितत्वादित्यर्थः । स्वाप्नार्थमिथ्यात्वं जगन्मिथ्यात्वदृष्टान्ततया दर्शितम् । अस्मिन्नर्थद्वये उपबृंहणवचनानि दर्शयति ( प्रत्यस्तमितभेदमिति ) प्रत्यस्तमितभेदम्—सजातीयविजातीयभेदरहितम् । सत्तामात्रम्—स्वगतभेदरहितम्, अत एव वचसामगोचरम् । तर्हि तुच्छत्वं स्यात् न सत्तेत्यत्राह ( आत्मसंवेद्यमिति ) स्वयंप्रकाशमित्यर्थः । ( ब्रह्मसंज्ञितमिति ) ब्रह्मेति संज्ञामात्रमेव, न तु ब्रह्मत्वादिगुणयोग इति भावः । निर्विशेषं चेत् कथं जगदवभास इत्याकाङ्क्षायामुपादत्ते ( ज्ञानस्वरूपमिति ) प्रपञ्चमिथ्यात्वमनेन

* तत्त्वटीका *

निराकारत्वञ्च नास्ति, किन्तु निराकारत्वमेवेत्यर्थः । ब्रह्मान्यमिथ्यात्वे सूत्रमाह ( मायेति ) इदं सूत्रं स्वप्नविषयमपि तन्मुखेन दुर्निरूपत्वाविशेषाद्धीमात्रेतरकृत्स्नमिथ्यात्वपुरस्कारकमिति भावः । इदं पाराशर्योक्तमर्थद्वयं पराशरोक्तश्लोकाभ्यां संवादयति ( प्रत्यस्तमितभेदमिति ) सजातीयादिसर्वविशेषरहितमित्यर्थः । तर्हि शून्यं स्यात्? नेत्याह ( सत्तामात्रमिति ) सर्वत्र बाधानुवृत्तं सत्तामात्रं हि न शून्यं स्यात्. गोबलीवर्दनयेन स्वगतो भेदो वा मात्रचा निषिध्यते । अथवा सत्ताशब्दस्य धर्मवाचितया धर्म्यपेक्षया भेदराहित्यञ्च धर्मे मात्रचा व्युदस्यति. स्वाध्यस्तापेक्षया धर्मत्वं धर्मित्वञ्च कल्पितमितिभावः । तथापि सत्तादिशब्दवाच्यत्वं दुस्त्यजमित्यत्राह ( अगोचरं वचसामिति ) निमित्तभूतधर्माभावे गोत्ववन्निमित्तत्वाभावेच कथं शब्दप्रवृत्तिरिति भावः । अनुपाख्यत्वे तुच्छत्वं स्यादित्यत्र स्वप्रकाशत्वमाह ( आत्मसंवेद्यमिति )

१– शारीर- ३. अ. २-पा. ३-सू.
२– वि-पु. ६- अंश- ७. अ. ५३-श्लो.
३– वि-पु. १-२-६.

स्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥'[1]'परमार्थस्त्वमेवैको नान्योस्ति जगतः पते'[2] यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव । भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः । अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् । ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥'
[3] तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् । विज्ञानं पर-

* श्रुतप्रकाशिका *

श्लोकेनोच्यते । अत्यन्तनिर्मलम्—सकलविशेषरहितम् । अर्थस्वरूपेण—जडस्वरूपेण । अर्थनानात्वस्य भ्रान्तिसिद्धत्वादेक एव परमार्थ इति दर्शयति ( परमार्थस्त्वमिति ) एतद्विवृणोति श्लोकद्वयेन ( यदेतदित्यादिना ) भ्रान्तिश्चेत् कस्यचिन्निवर्तेतेत्याकाङ्क्षायां केषाञ्चित्तन्निवृत्तिं दर्शयति ( ये तु ज्ञानविद इति ) ज्ञानसत्यत्वं जडमिथ्यात्वञ्चोक्तम् । अथ ज्ञानाकाराणामात्मनामैक्योक्तिं दर्शयति ( तस्येति )

ꣳ तत्त्वटीका ꣳ

हेतुं व्यनक्ति ( ज्ञानमिति ) ब्रह्मसंज्ञितम्—ब्रह्मत्वाद्यभावेपि ब्रह्मशब्देनोपचरितमित्यर्थः । तर्हि ब्रह्मास्मीति विशिष्टधीः कथमित्यत्रोपसंहारोक्तमेतदुपक्रमानुगुणमित्यभिप्रायेणेमौ घटयति ( ज्ञानस्वरूपमिति ) अजडत्वेन ज्ञेयत्वज्ञातृत्वरहितमिति च भावः । अत्यन्तनिर्मलम्— नित्यास्पृष्टाविद्यादिसर्वदोषम्, तत्रापि हेतुर्ज्ञानस्वरूपत्वम् । अर्थस्वरूपेण—जडरूपदेवादिपिण्डात्मना कृत्स्नप्रपञ्चात्मना वा, अनेनान्यमिथ्यात्वं सिद्धम् । परमार्थ इत्याद्युपादानन्तु पुराणमध्येपि व्यक्त्यैकत्वसाधकाभ्यासलिङ्गस्फूर्त्यर्थम् । नान्योस्तीत्युक्तं विवृणोति ( यदेतदिति ) उक्तमेव ज्ञानस्वरूपमित्यादिना पुनरपि द्रढयति । ये तु ज्ञानविद इत्याद्यपि केषुचिद्बाधप्रदर्शनेन व्यति-

१– वि-पु. १-४-३८. २– वि-पु. २-४-३१
३– वि-पु. १-४-३९-४०-४१.

मार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥' [१] यद्यन्योस्ति परः कोपि मत्तः पार्थिवसत्तम । तदैषोहमयं चान्यो वक्तुमेव मपीष्यते ॥' [२] वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथासौ परमात्मनः ॥' [३] सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् । इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥' [४] विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यति ॥ [५] अहमात्मा गुडाकेश

* श्रुतप्रकाशिका *

एकमयम्–एकम् । आत्मपरनिर्देशकृतभेदशङ्कामपि व्युदस्यति ( यद्यन्योस्तीति ) अत्र दृष्टान्तमाह ( वेणुरन्ध्रेति ) अस्योपपादितस्यार्थस्योपदेशं दर्शयति ( सोऽहमिति ) यथोपदिष्टमकरोदित्याह ( तत्याजेति ) अथात्मनां ब्रह्मणैक्योक्तिं दर्शयति ( विभेदजनक इति ) अथ भगवद्गीतायां सर्वात्मनां परस्परं ब्रह्मणा च सहैक्योक्तिमुदाहरति ( अहमात्मेति ) सर्वभूतशब्देन शरीराण्युच्यन्ते, एतत् स्फुटयति

* तत्त्वटीका *

रेकेण स्थिरीकरणं भ्रमनिवृत्तेर्धीमात्रसाध्यत्वस्यापकञ्च । कर्मशास्त्रनिरूढकर्तृनानात्वोपलम्भविरोधशान्त्यै तत्रैवात्माद्वैतमपि स्थापितमित्याह (तस्येति) (एकमयमिति) मयडिह स्वार्थिकः, आत्मपरशब्दाभ्यां भेदशङ्कां परिहर्तुं यदीति श्लोकः । वेणुरन्ध्रेत्यादिना दृष्टान्तमुखेनात्मभेदस्योपाधिकल्पितत्वोक्तिः । निदर्शितस्यैव निर्द्धार्योपदेशं दर्शयति (सोहमिति) उक्तमर्थं विसंवादिना यथोक्तकरणेन द्रढयति (तत्याज भेदमिति ) भेदमोहमित्यर्थः । जीवानां मिथो भेदधीनिवृत्तिरुक्ता. अथ जीवब्रह्मभेदबुद्धेरज्ञानमूलत्वं तदनुवृत्तौ हेत्वभावात्तन्निवृत्तिश्चाह ( विभेदेति ) स्पष्टार्थतया

१– वि.पु. २-१३-९०.
२– वि.पु. २-१४-३२
३– वि.पु. २-१६-२३.
४– वि.पु. ६-७-१६.
५– गीता. १०-२०

सर्वभूताशयस्थितः" [1] क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' [2] न तदस्ति विना यत्स्यान्मया भूतं चराचरम्" इत्यादिभिर्वस्तुस्वरूपोपदेशपरैः शास्त्रैः-निर्विशेषचिन्मात्रं ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या-इत्यभिधानात् ॥ मिथ्यात्वं नाम-प्रतीयमानत्वपूर्वकयथा-

* श्रुतप्रकाशिका *

( क्षेत्रज्ञश्चेति ) सर्वक्षेत्रेष्वित्यनेन भूतशब्दस्य शरीरपरत्वं स्फुटीकृतम्। तत्रैव व्यतिरिक्तमिथ्यात्वोक्तिं दर्शयति ( न तदस्तीति ) वस्तुस्वरूपोपदेशपरैः, न तूपायपरैः, अनन्यपरैरिति भावः । निर्विशेषचिन्मात्रमिति पूर्ववदर्थः । अभिधानादित्यस्याशेषेत्यादिपूर्वप्रतिज्ञावाक्येन सहान्वयः । ननु किमन्यत्र सतोऽन्यत्र ख्यातत्वं मिथ्यात्वम् ? उतात्यन्तासत्त्वम् ? पूर्वस्मिन् कल्पे क्वचित् पारमार्थ्यमभ्युपगतं स्यात्, द्वितीये तु निवर्त्यमेव नास्तीति शास्त्रवैयर्थ्यम् । अत्यन्तासत्त्वं चानुपपन्नं, ख्यातेः । स्वयंप्रकाशस्य वस्तुनो भ्रमाधिष्ठानत्वं नोपपद्यते, स्वयाथात्म्याप्रकाशमूलो ह्यध्यासः पराधीनप्रकाशस्य जडस्यैव तत्सम्भवः । अतः प्राक् प्रतिज्ञातं प्रपञ्चमिथ्यात्वं ब्रह्मणो भ्रमाधिष्ठानत्वं चायुक्तमित्यस्मिन् चोद्यद्वये प्रथमं परिहर्तुं मिथ्यात्वलक्षणमाह । ( मिथ्यात्वं नामेति ) निवर्त्यत्वमित्युक्ते मुद्गरादिनिवर्त्यघटादावतिव्याप्तिः,

❀ तत्त्वटीका ❀

पुराणोक्तिः पूर्वमुदाहृता. ऐतिहासिकं वाक्यमात्मनां परस्परं ब्रह्मणा चैक्ये तदन्यमिथ्यात्वे च दर्शयति ( अहमात्मेति ) अत्र सर्वभूतशब्दस्य जीवविषयत्वशङ्का सर्वक्षेत्रशब्देन प्रशमिता । न तदस्तीत्यादौ मया विना यत्स्यात्तन्नास्ति मद्व्यतिरिक्तं न परमार्थसदित्यर्थः । ( इत्यादिभिरिति ) भूयसां बलीयस्त्वार्थम्. उपासनविधिपरेषूक्तानां गुणविग्रहादीनां कल्पितत्वव्यक्त्यै वस्तुस्वरूपोपदेशपरैरित्युक्तम् । नन्वेतेषु मिथ्याशब्दो न दृष्टः, नानात्वनिषेधादि तात्पर्यतस्तत्सिद्धावपि किमिदं मिथ्यात्वमसत्त्वम्, अन्यथा धीगोचरत्वम्, सदसदन्यत्वम्, चतुष्कोटिमुक्तत्वं वा ? आद्यान्त्यौ निवर्त्याभावे निवर्तकशास्त्रादिवैयर्थ्यप्रसङ्गान्निर्बाधास्तिबुद्ध्या च निरस्तौ

१- गीता. १३- ३.    १- गीता. १०-३९.

वस्थितवस्तुज्ञाननिवर्त्यत्वम्, यथा—रज्ज्वाद्यधिष्ठान-

* श्रुतप्रकाशिका *

तत्परिहाराय ज्ञानशब्दः, तावतापि शुक्तिमदीश्वरादिसङ्कल्परूपज्ञाननिवर्त्ये वस्तुन्यतिव्याप्तिः, सापि यथावस्थितवस्तुज्ञानमात्रनिवर्त्यत्वस्य विवक्षितत्वात्परिहृता भवति. प्रबलभ्रान्तिज्ञाननिवर्त्यसत्यरजतादिष्वतिव्याप्तिपरिहाराय यथावस्थितशब्दः । यथावस्थितज्ञाननिवर्त्यत्वमित्युक्ते समानाधिकरणधीर्जायेत, तदा भ्रान्तिज्ञाननिवर्त्ये व्यभिचारस्तदवस्थः, तत्र ज्ञानस्वरूपं हि यथावस्थितं विषयस्यैव ह्ययथार्थत्वम्; अतो यथावस्थितं ज्ञानमिति सामानाधिकरण्यशङ्काव्यावृत्त्यर्थं यथावस्थितवस्तुज्ञाननिवर्त्यत्वमित्युक्तम् । ज्ञानप्रागभावे व्यभिचार इति तद्व्युदासार्थं प्रतीयमानत्वपूर्वकपदम्. ज्ञानप्रागभावोऽपि कदाचित् प्रतीयमानत्वपूर्वको निवर्त्येत इति चेन्न, नियमस्य विवक्षितत्वात् । यथा—'सिद्धे शब्दार्थसम्बन्ध' इत्यत्र सिद्ध एवेत्यवधारणस्य विवक्षितत्वान्नित्यत्वसिद्धिः, यथा 'अब्भक्षो वायुभक्ष' इत्यादौ अप एव भक्षयतीत्यवधारणसिद्धिः—तद्वत्. भूदलनज्ञाननिवृत्तस्य रज्जुसर्पस्य यथावस्थितवस्तुज्ञाननिवर्त्यत्वाभावादव्याप्तिरिति चेत्—न, तस्यापि यथावस्थितवस्तु-

ध तत्त्वटीका ध

तव चानिष्टौ, अतएव न द्वितीयः, अधिष्ठानस्य मिथ्यात्वप्रसङ्गादारोप्यस्यान्यत्र सत्त्वप्रसङ्गाच्च । नच तृतीयः— सदसद्विध्योरिव व्याघातादप्रसिद्धेश्च. अन्यच्च न युक्तं पश्याम इत्यत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वाभिप्रायेण प्रतिवक्ति (मिथ्यात्वमिति) नामशब्दश्शुक्तिरूप्यादिषु तत्प्रसिद्धिपरः ।—

ख्यातत्वादसदन्यत्वं बाध्यत्वेन सदन्यता ।
तेनानिर्वचनीयत्वं स्यादित्यत्राभिसंहितम् ॥ ७ ॥

प्रतीयमानत्वमिह प्रकाशमानत्वं तेन वृत्तिविषयत्वमपि । 'साक्षिणः प्रकाशमानायामविद्यायामप्यनुवृत्तेस्तदितरविवक्षयोक्तिरिति तु' मन्दम् । प्रतीयमानत्वपूर्वकतया बाधकधीप्रागभावादिव्यावृत्तिरिति केचित् । नियमश्चात्र विवक्षितः ।

तत्त्वधीप्रागभावादिः प्रतिपन्नोऽन्यथापि च ।
तत्त्वबुद्ध्या निवर्त्येत व्यावर्त्य इह तेन सः ॥ ८ ॥

* श्रुतप्रकाशिका *

ज्ञानेन निवर्तयितुं योग्यत्वात्; अत एव हि निवर्त्यत्वमित्युक्तं, न तु निवृत्तत्वमिति। न च सर्पभ्रमजनिते रज्जुधीनिवर्त्ये परमार्थभूते भयेऽतिव्याप्तिरिति वाच्यम्,— भयस्य क्षणिकतया स्वयमेव निवृत्तस्य रज्जुज्ञाननिवर्त्यत्वाभावात्. रज्जुज्ञानं ह्युत्तरभयोत्पत्तिं प्रतिबध्नाति; अतः प्रतीयमानत्वनियमपूर्वक—यथावस्थितवस्तुगोचरज्ञानमात्रनिवर्तनीयत्वं मिथ्यात्वमित्यर्थः। अनेन लक्षणेन सदसद्वैलक्षण्यं फलितं, तत्र प्रतीयमानत्वपूर्वकेत्यसद्व्यावृत्तिः, शेषेण सद्व्यावृत्तिः। अस्य मिथ्यात्वलक्षणस्य सम्प्रतिपन्नमिथ्याभूतेष्वनुगतत्वं दर्शयति ( यथेति ) अथोक्तलक्षणस्य

* तत्त्वटीका *

असदत्र व्यवच्छेद्यं कैश्चिदिष्टं तदा पुनः।
नास्ति धीगोचरत्वेन धीनिवर्त्यत्वकल्पनम् ॥ * ॥

भ्रान्तिनिवर्त्यसत्यसर्पादिव्यावृत्त्यै लोकदृष्ट्यनुसारेण यथावस्थितशब्दः। सत्यस्य हि निषेधकालस्थितत्वेपि तदिदानीं नास्तीति बुद्ध्याभिमानिकं निवर्त्यत्वं स्यादिति भावः।

व्यवच्छेद्येषु सत्यत्वमन्वारुह्यात्र लक्षणम्।
तन्मुखेन प्रबुद्धस्य तेषां बाधोपि सेत्स्यति ॥ * ॥
लक्ष्यमेव व्यवच्छेद्यं लक्षणस्थपदैर्यदि।
विपक्ष एव पक्षः स्यादस्तु पर्यवसानतः ॥ इति—

वस्तुज्ञाननिवर्त्यत्वमित्यत्र मात्रशब्दो योज्यः। यथार्थबुद्ध्यैव निवर्त्यमित्यर्थः। तेन मन्त्रादिशक्तिविशेषसहितधीनिवर्त्यविषादिव्युदासः। वेद्यगताविरुद्धाकारग्रहणाग्रहणयोर्बाधादिप्रयोजकत्वव्यक्त्यै सामानाधिकरण्यभ्रमजन्यातिप्रसङ्गशान्त्यै च समासविशेषव्यक्त्यर्थो वस्तुशब्दः। दण्डादिनिवर्त्यव्यावृत्त्यै ज्ञानोक्तिः। नाशबाधयोरविशेषाभिमानाद्वा निषेधबुद्ध्यर्हत्वसाम्याद्वा नाश्यबाध्ययोर्निवर्त्यशब्दानुवृत्तिः। निवर्त्यत्वम्— निवर्तनार्हत्वम्; तेन भूरन्ध्रादिभ्रमनिवर्त्यरज्जुसर्पादिष्वव्याप्तिर्निरस्ता। न चात्र बाधकाबाधकधीनिवर्त्यभयादावतिव्याप्तिः, निवर्तमानदुःखस्य क्षणिकतया तन्निवृत्तौ बाधकधीवैफल्यात्, सामग्र्यभावादुत्तरदुःखानुत्पत्तेः। तदिह यन्निष्ठतया प्रतिपन्नं तन्निष्ठात्यन्ताभावप्रतियोगितया तत्त्वज्ञानेन विषयीकारा-

सर्पादेः । दोषवशाद्धि तत्र तत्कल्पनम् । एवं चिन्मात्र-

* श्रुतप्रकाशिका *

पक्षेऽतिदेशे कर्तुमुचितेऽपि स्वप्रकाशे वस्तुन्यध्यासानुपपत्तिरूपं द्वितीयं चोद्यं परिहर्त्तुमाह (दोषवशाद्धि तत्र तत्कल्पनमिति) अजडत्ववज्जडत्वमपि नाध्यासप्रयोजकं, जडेऽपि दोषाभावे सत्यध्यासादर्शनात्, अतो दोष एव हि सर्वत्र कल्पकः, कल्पने दोषाधीने स्वतो वा परतो वा प्रकाशो भ्रमाधिष्ठानत्वोपयोगी । पुरोवर्त्तिनि भासमाने हि रजतभ्रम इति दार्ष्टान्तिके परिहर्तुं दृष्टान्ते कल्पनस्य दोषाधीनत्वमुक्तम्, इत्थं प्रतीयमानत्वपूर्वकं यथावस्थितवस्तुज्ञाननिवर्त्यत्वं मिथ्यात्वं, मिथ्याभूतार्थकल्पनञ्च दोषवशादिति दृष्टान्ते शिक्षितमर्थद्वयं दार्ष्टान्तिकेऽतिदिशन् शङ्काद्वयञ्चार्थान्निराकरोति (एवमिति) अत्यन्तवैसादृश्यरहितकतिपयाध्यास एकाधिष्ठाने दृष्टः । यथा सर्पभूदलनाम्बुधाराद्यध्यासो रज्जुमात्रे । कथमेकस्मिन्नधिष्ठाने युगपन्मिथोऽत्यन्तविसदृशानन्तप्रपञ्चाध्यास इत्येका. ‘ यः सर्वज्ञ ” इत्यादिषु सर्वज्ञतादिगुणकत्वेन प्रतीते ब्रह्मणि कथं वाध्यास इति द्वितीया. चिन्मात्रवपुषीत्यनेन पूर्वोक्तां स्वयंप्रकाशत्वकृतामध्यासानुपपत्तिं स्फोरयति । परे ब्रह्मणीति शङ्काद्वयं परिहृतं भवति, विलक्षणाधिष्ठानत्वात् कृत्स्नाध्यास उपपन्न इति. वैलक्षण्यं च सर्वसाधारणसन्मात्ररूपत्वम्. सर्वज्ञत्वादिगुणा अपरे ब्रह्मणि, परे

* तत्त्वटीका *

हेत्वमिति तु तात्पर्यविश्रमः । उक्तस्य सर्वसम्मत्यर्थमाह (यथेति) ननु सारूप्यतत्त्वाग्रहौ सर्वत्र भ्रान्तिनिदानं, तौ च जडेष्वेव स्तः, न ब्रह्मणि । तस्य निर्विशेषत्वनित्यस्वप्रकाशत्वाभ्युपगमादित्यत्राह (दोषेति) अनिर्वचनीयदृष्टान्तस्थापने [नमित्यत्र] हिः प्रसिद्धौ । दुःखाद्यभावेषु सुखादिभावारोपे सारूप्यतत्त्वाग्रहासम्भवादिति च हेरभिप्रायः । सारूप्यसद्भावेप्यतिरिक्तदोषाभावे भ्रान्त्यभावात् स एव न प्रयोजक इति भावः । निदर्शितं दोषकल्पितत्वं तत्कल्पितमिथ्यात्वलक्षणञ्च पक्षेऽतिदिशति (एवमिति) जडत्वसविशेषत्वपरिच्छिन्नत्वपरत्वादिकं नाध्यासाधिष्ठानत्वे प्रयोजकमित्यभिप्रायेण चिन्मात्रत्वानूक्तिः । तत्त्वाग्रहश्च ब्रह्मणि स्वरूपविषयविशदवृत्तिज्ञानानुदयात्सिद्धः । स्वतो वा परतो वा प्रकाशमानत्वञ्चाध्यासापे-

वपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्य-स्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपावबोध-बाध्यं मिथ्यारूपम् । दोषश्च स्वरूपतिरोधानविविध-

* श्रुतप्रकाशिका *

ब्रह्मणि तु चिन्मात्रतया सर्वज्ञत्वादिगुणानन्वयादध्यास उपपन्न इति चाभिप्रायः । इद-मिति प्रतीयमानताकारपरामर्शिना पदेन, यथावस्थितब्रह्मस्वरूपावबोधबाध्यमितिपदेन च पूर्वोक्तमिथ्यात्वलक्षणमनूदितं भवति । दोषपरिकल्पितमित्यनेन दोषवशादि-त्यादिनोक्तमतिदिष्टम् । विविधकृत्स्नाध्यासं दर्शयति ( देवेति ) मिथ्यारूपम्—मिथ्यात्व-लक्षणोपेतत्वाद्रज्जुसर्पवन्मिथ्येत्युक्तं भवति । दोषः कः ? स किं परमार्थः ? उत अपरमार्थः ? परमार्थत्वे ज्ञाननिवर्त्यत्वं न स्यात् । अपरमार्थत्वे प्रपञ्चवत् कल्पकान्तरा-पेक्षयानवस्था. स किं ब्रह्मण्यतिरोहिते कल्पयति ? उत तिरोहिते ? अति-रोहिते चेदनुपपन्नं, रज्जुत्वे प्रकाशमान इवाध्यासोदयविरोधात् । अविरोधे पश्चा-दप्यनिवृत्तिः । तिरोहिते चेत् , तिरोधानं किं स्वतः ? किं वा परतः ? यदि स्वतः अनि-वर्त्यत्वं, निवृत्तौ स्वरूपोच्छेदो वा. यदि परतः तत्परं वाच्यम् । किञ्च नानाध्यासानां नानादोषमूलत्वं दृष्टम् । अतोऽनेकदोषा अभ्युपगन्तव्या इतीमाः शङ्काः परिहर्तु-माह ( दोषश्चेति ) चः शङ्कानिवर्त्तकः । को दोष इत्यस्य प्रतिवचनम्—अविद्येति ।

☙ तत्त्वटीका ☙

दितं भ्रमविरुद्धत्वेन न शङ्कनीयम्. सर्वज्ञत्वमपि परब्रह्मण्यध्यस्तमिति ज्ञप्त्यै सर्वाध्यासायोग्यत्वाय च परब्रह्मशब्दः । अत्र कल्पितत्वमिदन्त्वञ्च बाध्यत्वे हेतुतया अभिप्रेते । अध्यसनीयत्वे सादृश्यवैसादृश्याल्पत्वादिकं न तन्त्रमिति ज्ञापनार्थं देवेत्यादिना कृत्स्नचिदचिद्भेदोक्तिः । नह्यत्र मिथ्यात्वे साध्ये व्यभि-चारस्थलं, नच प्रत्यनुमानेन सत्यत्वे साध्ये बाह्येषु दृष्टान्तः । ब्रह्मणि तु दृष्टान्ते ऽनुवृत्तसत्यहेत्वसिद्धिः, कल्पितस्तु भासमानत्वादिः खपुष्पादावपि कथञ्चित्स्यादिति भावः । "यदा सर्वाणि भूतानि ह्यात्मैवाभूद्विजानतः । तदा को मोहः कश्शोक एकत्वमनुपश्यतः ॥" इत्यादिपरामर्शेन यथावस्थितेत्यादिक-मुक्तम् । बाध्यम्—नास्तीति वेद्यम् । एवम्—मिथ्यालक्षणयोगात् । मिथ्यारूपम्-

विचित्रविक्षेपकरी सदसदनिर्वचनीया अनाद्यविद्या । [1]"अनृतेन हि प्रत्यूढाः' [2]'तेषां सत्यानां सतामनृतमपि-

* श्रुतप्रकाशिका *

तस्याः पारमार्थ्यापारमार्थ्यविकल्पे सदसदनिर्वचनीयेत्यपारमार्थ्याभ्युपगमः । अनवस्थापरिहारोऽनादीति. तिरोहितातिरोहितविकल्पस्य प्रतिवचनं स्वरूपातिरोधानशब्देन, तच्च किं स्वतः परत इत्यत्र परत इत्यङ्गीकृतं, तिरोधानस्य हेतुनिर्देशात्, नानाध्यासस्यैकदोषमूलत्वमुक्तं विविधेत्यादिना। विक्षेपः—अध्यासः । आच्छादिकाऽविद्या विक्षेपिकाऽविद्येत्यविद्याया एकस्या एवावस्थाद्वयं तदभिमतं तिरोधानविक्षेपहेतुत्ववचनात् सूचितम् । एवम्भूतामविद्यां प्रतिज्ञाय, एतदनुगुणं प्रमाणमाह ( अनृतेनेत्यादिना ) प्रत्यूढाः—प्रतीपं नीताः । प्रत्यूढशब्दवैशद्यार्थमुपादत्ते ( तेषामिति ) नात्र

* तत्त्वटीका *

मिथ्याशब्दवाच्यमित्यर्थः । स्वाधिकरणधीविषयनिष्ठात्यन्ताभावप्रतियोगि वा । एवं भ्रान्तिबाधोक्त्या दोषतिरोधानयोः कल्प्यत्वादर्थापत्तिद्वयसिद्धज्ञानमिति सूच्यते । अन्वतिरोहिताकारे नाध्यासः, तिरोधौ स्वरूपतदतिरिक्तप्रकाशविकल्पेन स्वप्रकाशात्मस्वरूपनिवृत्तिः सविशेषत्वं वा स्यात्; अतस्तिरोधानार्थमविद्यान्तरं कल्प्यम्. सदसदादिविकल्पदुस्स्था चासौ. तस्य च कल्पितत्वे दोषान्तरापेक्षयानवस्था । अकल्पितस्तु ब्रह्मस्वरूपान्यत्वानन्यत्वादिविकल्पासहः । न च दोषत्वेन लोकवेददृष्टः कश्चिद्ब्रह्मणि सम्भाव्यते । एकश्च दोषो न सर्वाध्यासकृत् इत्याशङ्क्याह ( दोषश्चेति ) स्वरूपतिरोधानेत्यादिना क्रमात् शङ्कोद्धारः, अहन्त्वेदन्त्वादिभिस्तदवान्तरैश्च विक्षेपस्य विचित्रत्वम् । स्वरूपतः स्वभावतश्चेति केचित् । आच्छादिका विक्षेपिका चेति विभागश्चैकस्या एवाकाराभेदादिति केचित् । विक्षेपिका—विशेषप्रतिभासिकेत्यर्थः । दुर्घटस्वभावाविद्यामाहात्म्यात्सर्वमिदं समाहितम् । युगपत्कोटिद्वयारोपात्मकसंशयविशेषहेतुदोषाद्विचित्राध्यासोपपत्तिः । विरुद्धसमुच्चयभ्रमजनकानेकान्तवादवच्च तिरोधानमपि न वास्तवम् । परमार्थद्वित्वमर्थक्रियाविरहं च परिहर्तुं सदसद्वैलक्षण्योक्तिः । तस्याः स्वरूपं ब्रह्मदोषत्वं तत्फलञ्च श्रुत्यैव स्थापयति ( अनृतेनेति )

1– छा. उ. ८. प्र. ३. ख. २. वा. 2– छा. उ. ८. प्र. ३. ख. १. वा.

धानम्' 'नासदासीन्नो सदासीत्तदानीं तम आसीत्तमसा गूढमग्रे प्रकेतम्' [1]'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' [2]'इन्द्रो मायाभिः पुरुरूप ईयते' [3]

* श्रुतप्रकाशिका *

बहुवचने तात्पर्यम् 'अदितिः पाशान् प्रमुमोक्तु' इतिवत् , अस्याः सदसदनिर्वचनीयत्वमुच्यते (नासदासीन्नो सदासीदिति) किमासीदित्यत्राह (तम इति।) तमश्शब्देनाच्छादकत्वं विवक्षितम्. तमो नाम 'अक्षरं तमसि लीयत' इति प्रकृतिरुच्यत इति शङ्कायामुदाहरति। (मायान्तु प्रकृतिमिति) विविधाध्यासहेतुत्वं दर्शयति ( इन्द्रो मायाभि-

ॐ तत्त्वटीका ॐ

प्रत्यूढाः– प्रतीपं प्रापिता , प्रतिरुद्धा इत्यर्थः । तरङ्गचन्द्रवत्कल्पितजीवभेदविवक्षया बहुवचनं, पाशवदविवक्षितार्थं वा । 'एतं ब्रह्मलोकं न विदन्ती' त्यत्र प्रत्यूढत्वं हेतुः । इदं पूर्ववाक्योक्तेन विवृणोति (तेषामिति) 'त इमे सत्याः कामा अनृतापिधाना' इत्युक्तानां तत्तत्कामोपाधिप्रतियोगिभूतकल्पितार्थव्यावृत्तिरूपाणां ब्रह्मस्वभावानां तदभिन्नतया प्रामाणिकानां सतां मिथ्याभूतमज्ञानमाच्छादकमित्यर्थः। व्यावृत्त्यभेदेन व्यावृत्तिभेदकल्पनमात्रबहुत्वोक्तिः 'पूर्ववत्पाशन्यायेन वेति' केचित्। अविद्याया अनिर्वाच्यत्वं दर्शयति ( नासदासीदिति ) नात्र निषेधमात्रे पर्यवसानम् उभयनिषेधेन तम आसीदिति विहितमुभयविलक्षणमेव हि स्यादिति भावः । केचिदाहुः—बन्धमूलमज्ञानं कर्मरूपम्। प्रवाहानादिभ्रान्तिज्ञानमूलन्त्वज्ञानम् इन्द्रियादिदोषाधिष्ठानयाथात्म्यज्ञानप्रागभावश्चेत्येतत्सर्वं, तत्कार्याणि च सदसद्विलक्षणानि । सर्वमूलाविद्यात्वर्थपञ्चमाकारा, तन्निवृत्तिर्हि पञ्चमाकारेति । तमश्शब्देन ज्ञानविरोधित्वं तिरोधायकत्वञ्च व्यज्यते । तमसा गूढम्— अज्ञानेनावृतम् । अत्र प्रकेतमिति विशेष्यं ब्रह्म । ननु सुबालश्रुतौ तमश्शब्देनातिसूक्ष्ममूलप्रकृतिरुच्यते न त्वविद्याविद्येत्यत्र प्रकृतेर्मायात्वेन मिथ्यात्वमीश्वरस्यापि मायाकल्पितत्वं श्रुतमित्याह ( मायां त्विति ) प्रकृतिं मायां विद्यादिति विपर्यस्तान्वयः । एकस्य सतो मायामरीचिका-

१- यजु. २. अष्ट. ८- प्र. ९- अनु. | ३– बृ- उ- ४. अ. ५- ब्रा. १९- वा.
२– श्वे. उ. ४. अ. १०- वा.

[1]"मम माया दुरत्यया" [2]"अनादिमायया सुप्तो यदा जीवः प्रबुद्ध्यते" इत्यादिभिर्निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगत-

* श्रुतप्रकाशिका *

रिति ) अस्या ऐक्यज्ञानेन विना अनिवर्त्यत्वमाह । ( ममेति ) अनादित्वमाह ( अनादीति ) अत्रेशितव्यसापेक्षमहेश्वरत्वेन्द्रत्वबहुवचनश्रवणाद्विजातीयसजातीयस्वगतभेदसाहित्यं प्रतिपन्नमिति तदपनुत्तये व्याचष्टे ( निर्विशेषेति ) सगुणत्वे प्रतिपन्नेऽपि स्वरूपपरवाक्यानुगुण्याद्दोषप्रतिपादनतत्पराणां वाक्यानां न प्रतिपन्नभेदे तात्पर्यमिति भावः । ब्रह्मैव—इन्द्रादिशब्दप्रतिपन्नमपि स्वरूपपरवाक्योपदिष्टं ब्रह्मैवेति भावः । अनादित्वसदसदनिर्वचनीयत्वतिरोधायकत्वविविधाध्यासकरत्वान्युपात्ततत्तद्वाक्यप्रतिपन्नान्याह ( अनाद्यविद्ययेत्यादिना ) स्वगतशब्देनाधिष्ठानतया सम्बन्धो

* तत्त्वटीका *

वीचिकाभिर्विविधत्वेन भानमाह ( इन्द्रो मायाभिरिति ) अत्र इन्द्रस्सर्वदृगीश्वरः "रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय" इति पूर्ववाक्यस्वारस्यात् "स त एतमेवं पुरुषं ब्रह्म तमपश्यदिदमदर्शमिति तस्मादिन्द्रो नाम इन्धो ह वै नामैष योयं दक्षिणेऽक्षिन् पुरुषः तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण" इत्युपनिषदेव तद्विषयत्वेन निरुक्तेश्चेति भावः । "ज्ञानवान् मां प्रपद्यते' वासुदेवः सर्व"मित्युक्तैक्यज्ञानमन्तरेणास्या मायाया दुस्तरत्वं गीतामित्याह ( मम मायेति ) तदनादित्वं तया तिरोधानं कदाचित्तन्निवृत्तिश्च समर्थ्यत इत्याह ( अनादीति ) आदिशब्देन "अविद्यया मृत्युं तीर्त्वा' भूयश्चान्ते विश्वमायानिवृत्तिः' गुणमायासंवृतः' यन्त्रारूढानि मायया" इत्यादिसङ्ग्रहः । स्वरूपविधिवाक्यसिद्धाकारानुरोधेन दोषविधिपरेषु महेश्वरादिशब्दा बहुवचनञ्च मायोपश्लिष्टविषयतया न त्रिविधभेदसत्यत्वं स्थापयितुं क्षमन्त इत्यभिप्रायेणानुदाहृतानेकवाक्यसङ्कलितार्थस्य निर्विशेषत्वादेरनूक्तिः । 'तदैक्षत बहुस्याम्' एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादिप्रमाणं सर्वार्थानां च सच्चिदनुवेधेन भानञ्चानुसरन् शुक्तिरूप्यादिवद्भ्रमस्य

१– गीता. ७-अ- १४-श्लो- ॥ २– माण्डू- उ- २- ख- २१- वा ॥

नानात्वं पश्यतीत्यवगम्यते । यथोक्तम्—[1]"ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥ यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् । तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तु-

* श्रुतप्रकाशिका *

विवक्षितः । न तु सजातीयविजातीयसहपठितस्वगतनानात्वम् । एवं दोषवाचिवाक्यगतमिन्द्रमहेश्वरादिपदजातमर्थस्वारस्येन स्वरूपपरवाक्यप्राबल्यान्निर्विशेषवस्तुपरं व्याख्यातम् । अथ दोषवाचिभिरेवोपबृंहणवाक्यैर्निर्विशेषस्य वस्तुन एव दोषसम्बन्धित्वमुक्तमिति दर्शयति ( यथोक्तमिति ) चिन्मात्रब्रह्मणोऽज्ञानविजृम्भितत्वं जगतः प्रतिज्ञायते ( ज्ञानस्वरूप इति ) न तु वस्तुभूतः— वक्ष्यमाणशैलाब्धिधरादिवस्तुभूतो न भवतीत्यर्थः । ( विज्ञानविजृम्भितानीति ) विज्ञानशब्देन विविधं ज्ञायतेऽनेनेति करणव्युत्पत्त्याऽविद्याऽभिधीयते, प्रतिज्ञातं प्रपञ्चस्याविद्याकल्पितत्वं व्यतिरेकमुखेनोपपादयति ( यदेति ) शुद्धम्—अविद्यारहितम् । निजरूपि—

* तत्त्वटीका *

विषयाश्रयभेदशङ्काञ्च व्युदस्यति ( स्वगतनानात्वमिति ) स्वाध्यस्तं चिदचिद्भेदं वृत्तिसम्भेदेन स्मृतित्वानुभवत्वादिधर्मभेदं चेत्यर्थः । दोषविषयतयोदाहृतश्रुतीनां महेश्वरादिशब्दैरन्यपरत्वशङ्कां निरसितुं श्रुतितदर्थापत्तिसिद्धमर्थं निर्विशेषवस्तुदोषविषयोपबृंहणेन व्यनक्ति ( यथोक्तमिति ) निर्विशेषेपि भगवानित्युपचारः । अशेषमूर्त्तिः—सर्वत्वेन भ्रान्तिसिद्ध इत्याशयः । न तु वस्तुभूतः— 'पुमान् न देवो न नरो न पशुर्न च पादपः । चतुर्विधोपि भेदोऽयं मिथ्याज्ञाननिबन्धनः" इत्यादिवादान्न देवादिजडवस्तुरूपः । यद्वा—वक्ष्यमाणशैलादिकृत्स्नजगद्वस्तुरूपः । अत्र स्वरूपसाक्षिवृत्तिज्ञानानां प्रपञ्चरूपविकृतयोगाद्विज्ञानशब्दो विविधं ज्ञायतेऽनेनेत्यविद्याविषयः । विजृम्भितानि— अध्यस्तानि । भेदस्य दोषकल्पितत्वं व्यतिरेकेण द्रढयति ( यदेति ) शुद्धम्—अविद्यामुक्तम् । निजरूपि—तन्मूलभेददृष्टिशून्यम् । तत एव, सर्वकर्मक्षये—

१— विष्णु- पु- २- १२. ३९- ४० ॥

भेदाः ॥ [1]"तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद्द्विज वस्तुजातम् । विज्ञानमेकं निजकर्मभेद-विभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं

* श्रुतप्रकाशिका *

भेददर्शनरहितं, तन्निमित्तकर्मक्षये अपास्तरागादिदोषम् । समन्तात् कल्प्यतेऽनेनेति सङ्कल्पः--अविद्या । वस्तुषु-- धर्मिभूतपदार्थेषु । वस्तुभेदाः--आकारभेदाः । मध्ये 'वस्त्वस्ति किं 'महीघटत्व'मिति श्लोकद्वयं जगदुपलब्धिप्रकारेण वस्तुभेदासत्यत्वोपपादकत्वेनोपपाद्य प्रमेयाधिक्याभावादत्रानुपात्तं, तच्च सिद्धान्ते दर्शयिष्यते । विजातीयभेदाभावमुपसंहरति--तस्मादिति पूर्वार्द्धेन । अथात्मबहुत्वस्य काल्पनिकत्वमुच्यते--विज्ञानमित्यर्द्धेन । पूर्वोक्तमात्मैक्यमेकं सदैकमित्यत्र एकशब्देनानूद्य स्वगतनानात्वं निषिध्य परमपरेशादिशब्दानामपि वस्तुमात्रपरत्वं प्रतिपादयति ( ज्ञानमिति ) विशुद्धमित्यादिपदैरविद्याराहित्यं तत्कृतभेददर्शनवैधुर्यं तन्मूलशोकलोभादिविधुरता चोच्यते । सदैकम्--जन्मवृद्ध्यादिरहितम्, यतोऽन्यन्नास्ति तद्य-

❀ तत्त्वटीका ❀

अपास्तदोषम्---कर्मसाध्यक्लेशादिरहितम् । सङ्कल्पः---इहाविद्या 'अविद्यातरुसम्भूती'त्येतत्स्थाने दर्शनात् विज्ञानविजृम्भितानीत्युक्तस्यैव चात्र परामर्शात्, समन्तात् ब्रह्मणा एकीकृत्य वा कल्प्यन्तेऽनेन भेदा इति व्युत्पत्तिसम्भवाच्च । वस्तुषु वस्तुभेदाः--वस्तुत्वेन पृथग्भूतेषु देवादिपिण्डेषु कल्पितेषु जीवेषु वा तद्वद्ज्ञाता देवत्वादयो देवादिपिण्डाश्च न भवन्ति देवादिप्रातिभासो न स्यादित्याशयः । उक्तप्रदर्शनमात्रार्थतया वस्त्वित्यादिश्लोकद्वयमत्र नोपात्तम् . श्लोकचतुष्टयोक्तं विजातीयभेदाभावं निगमयति ( तस्मादिति ) ज्ञानमात्रात्मनि यथादर्शनं तत्तद्वादिभिरुक्तस्सजातीयभेदोपि भ्रान्तिसिद्धतया मिथ्याभूत इत्याह ( विज्ञानमिति ) विज्ञानशब्दाविह स्वप्रकाशानन्दरूपविलक्षणज्ञानपरौ, तथापि निरसनीयत्वेनाभिमताः स्वगता भेदाः दुस्त्यजा इत्यत्राह ( ज्ञानमिति ) विशुद्धम्--अविद्योज्झितम् । अतएव, विमलम्--भेददृष्टितन्मूलकर्मरहितम् । विशोकम्--कर्माभावादेव तत्फलभूतशोकमोहादिशून्यम् ।

---

1-- वि-पु. २-१२-४३-४४-४५ ॥

विशोकमशेषलोभादिनिरस्तसङ्गम् । एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥ सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् । एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥" इति । अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञा-

* श्रुतप्रकाशिका *

थोक्तस्वरूपमित्यर्थः । एतन्न परमतमित्याह ( सद्भाव इति ) एतद्भुवनाश्रितम्—भुवनेनाधिष्ठानतयाऽऽश्रितं ज्ञानं, संव्यवहारभूतम्— समन्ताद्व्यवहारविषयभूतं यद्वर्तते तत्रापि कारणमविद्येत्युक्तं, तच्च न परमतं सद्भाव एवोच्यत इत्यर्थः । एवं सिद्धपरवाक्यपर्यालोचनया ब्रह्मण एव सत्यत्वं व्यतिरिक्तस्याविद्यापरिकल्पितत्वञ्च तत्त्वमित्युक्तम् । ततः किं प्रस्तुतस्य कर्माङ्गकत्वानर्हवाक्यार्थज्ञानमोक्षोपायत्वस्येति शङ्कायामुपायपरवाक्यानामपि सिद्धपरवाक्यप्रतिपन्नार्थानुगुणोपायपरत्वमाह ( अस्या इति ) चः शङ्कानिवर्तकः । अस्या इत्यनेन सदसदनिर्वचनीयत्वादिविशेषणविशिष्टता

छ तत्त्वटीका छ

एकमिति पूर्वोक्तात्मानुवादः । सदैकम्— सर्वदानाघ्रातविकारषट्कम् । ईदृशस्योत्पत्त्यादिकमपि अन्तःकरणवृत्तिसम्भेदादध्यस्तम् , मिथ्यात्वादेवात्र वृद्धिह्रासादिकं निषिध्यते । स्फटिकरागकल्पस्याविद्यादेरवस्तुत्वेपि स्वाप्नसर्पादिनीत्या निराचिकीर्षादिकमपि न विरुद्धमिति भावः । 'परमः परेशः' इत्यादिना सामानाधिकरण्येन जीवेश्वरभेदस्यापि कल्पितत्वोक्तिः । किमसौ दुरारोपः पूर्वपक्ष इत्यत्राह ( सद्भाव इति ) भेददृष्टेरविद्याजन्यत्वशङ्कया निश्शेषोन्मूलनाय निगमयति ( एतदिति ) एतत्—ज्ञानमात्रस्वरूपं ब्रह्म स्वप्नप्रपञ्चकल्पेन भुवनेनाधिष्ठानतयाश्रितम् । संव्यवहारभूतम्— समन्तादेकीकृत्य वा व्यवहारकर्मभूतमिति यत् तत्रापि कारणमविद्येति चोक्तमित्यर्थः । चकारः सद्भाव इत्यनेन भ्रमहेतूक्तेस्समुच्चयार्थः । एवं वा योजना,—संव्यवहारभूतं भुवनकोशादिकं तत्राप्येतदेवाध्यासतो भुवनाश्रितं ज्योतींषीत्यादिना तवोक्तमिति । यद्वा, एतत्तु भुवनगतं संव्यवहारभूतं संव्यवहारेण प्राप्तं व्यावहारिकं सत्यत्वं यत् तत्राप्यध्यास एव कारणभूतमिति तथाच परेष्टानुवादे

नेन निवृत्तिं वदन्ति "न पुनर्मृत्यवे 'तदेकं पश्यति' न पश्यो मृत्युं पश्यति' यदा ह्येवैष एतस्मिन्नदृश्ये ऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ

* श्रुतप्रकाशिका *

विवक्षिता । तस्या निवृत्तौ प्रमाणं दर्शयति ( न पुनरिति ) मृत्युरत्राविद्या, तन्निवृत्तिश्चैक्यज्ञानादित्याह ( तदेकं पश्यतीति ) मृत्युकार्यस्य रोगादेरपि निवृत्तिं ज्ञापयति ( न पश्यो मृत्युमिति ) न रोगं नोत दुःखतामिति तच्छेषः, निर्विशेषवस्तुज्ञानानन्तरमेवाभयप्राप्तिं दर्शयति । ( यदा हीति ) अदृश्ये– प्रत्यक्षाद्यविषये । अनात्म्ये–आत्म्यं व्याप्यं शरीरम्, अशरीरे । अनिरुक्ते–अनिर्वचनीये । अनिलयने–अनाधारे । अभयम्–अभयार्थम्, अव्ययीभावसमासः । प्रतिष्ठा–निष्ठा । त्वादिभिर्बन्धमूलत्वेनाभ्युपगतस्य कर्मणोऽप्यविद्याकल्पितत्वात् तस्यापि

* तत्त्वटीका *

भाषिष्यते 'तस्य भुवनादेस्सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्टम्' इति । चस्त्वर्थः । एतावता परमप्रकृते किमायातमित्यत्र मुक्त्युपायस्य कर्मनैरपेक्ष्यं सिद्धपरवाक्यानुविधायिमोक्षोपायपरवाक्यशक्त्या व्यनक्ति ( अस्या इति ) अनिर्वाच्यत्वादिविशिष्टाया इत्यर्थः । तत एव ज्ञानमात्रविवर्त्यत्वं ब्रह्मात्मैकत्वं महावाक्यार्थः । ऐक्यदर्शनमविद्यानिवर्त्तकमित्याह ( न पुनरिति ) ( एकं पश्यतीति ) यत्तदो न पुनर्मृत्यव इति योजना । य इति वाध्याहारः । तदेकं पश्यतीत्यत्र कर्तृकर्मभेदव्युदासोप्यभिप्रेतः । शब्दजन्यप्रत्यक्षाभिप्रायेण पश्यतीत्याद्युक्तिः । दृगधीनसिद्धेरविद्यायास्तत्कार्याणाञ्च रोगादीनामदर्शनमत्र साध्यमित्याह ( न पश्य इति ) निर्विशेषात्मैक्यबुद्धिदार्ढ्यानन्तरमेव भयनिवृत्त्या तत्कारणाविद्यानिवृत्तिसूचनमाह ( यदा हीति ) अदृश्ये— दृक्कर्मत्वरहिते । अनात्म्ये– अशरीरे, आत्मना व्याप्यं हि शरीरमात्म्यम् । अनिरुक्ते-— अशब्दगोचरे । अनिलयने—अनाधारे. यद्वा, निलीयतेऽस्मिन्नध्यस्तैरिति निलयनमविद्या, तद्रहिते । अभयमिति प्रतिष्ठाविशेषणम् । लिङ्गव्यत्ययश्छान्दसः, क्रियाविशेषणं वा, अव्ययीभावेन भयाभावायेति वा । 'अथ सोभयङ्गतः' इति फलोक्तिसम्वादात् । प्रतिष्ठाम्–ऐक्यबुद्ध्या स्थितिमित्यर्थः ।

सोऽभयङ्गतो भवति' [1]"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'॥ [2]'ब्रह्म वेद ब्रह्मैव भवति' [3]'तमेवं विदित्वातिमृत्युमेति नान्यः पन्थाः" इत्याद्याः श्रुतयः॥ अत्र मृत्युशब्दे-

* श्रुतप्रकाशिका *

ज्ञानेन निवृत्तिमाह ( भिद्यत इति ) हृदयग्रन्थिरविद्या। पूर्ववाक्येषु किञ्चिद्भेदः प्रतीयत इव भातीति तद्व्यावृत्तये ज्ञानस्य ऐक्यविषयत्वज्ञापनाय ऐक्यापत्तिं फलं दर्शयति ( ब्रह्म वेदेति ) यथोपासनं हि फलम्। अत ऐक्यज्ञानमेव बन्धनिवर्तकमिति भावः। उपायान्तरनिषेधार्थमुदाहरति ( तमेवमिति ) नात्राविद्यानिवृत्तिः प्रतीयते, तद्वाचिशब्दाश्रवणादित्यत्राह ( अत्रेति ) 'मृत्युर्धावति पञ्चम' इत्यादौ मृत्युशब्दस्य यमादिषु प्रयोगदर्शनात्तद्व्यावृत्त्यर्थमुक्तम्। अत्रेति—बन्धनिवृत्तिपरवाक्ये-

ᘓ तत्वटीका ᘓ

बन्धकतया सिद्धान्तीष्टानां कर्मपर्यन्तानामपि धीनिवर्त्यत्वेन मिथ्यात्वं दर्शयति ( भिद्यत इति ) हृदयग्रन्थिः—अविद्या। संशयादितत्कार्यमिति साकाराविद्यानिवृत्तिरिहोक्ता। ननु "'तादृगेव भवति' निरञ्जनः परमं साम्यमुपैति' सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"त्यादिषु फलदशायां तादृक्साम्यभेदोक्तिस्वारस्यात् 'पृथगात्मान'मित्युक्तेश्च भेदज्ञानमेव मुक्तिहेतुः स्यादित्यत्राह ( ब्रह्म वेदेति ) अत्राविद्याकृतभेदनिवृत्तिरवधारणद्योत्या. न ह्यत्र तद्भूतस्यातद्भूतस्य वा तद्भावस्साध्यः। कर्मसमुच्चयादिनिरासार्थमैक्यज्ञानेनाविद्यातरणव्यक्त्यर्थञ्चाह ( तमेवमिति ) 'वेदाहमेतं पुरुषं महान्त'मिति सर्वलोकप्रत्यक्षसिद्धजीवैक्येन प्रकृतो ह्यत्र तमिति परामृश्यत इति भावः। इदं वाक्यद्वयं ज्ञानस्यैव साक्षान्मोक्षसाधनत्वाय प्रागुपात्तम्. इह त्वविद्यानिवृत्त्यतिरिक्तसाध्यानिरासार्थम्. नान्यः पन्था इति तु निषेधपरम्. आदिशब्देन "ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुपयाहि विद्वन्" इत्यादिसङ्ग्रहः। ( श्रुतय इति ) प्रकृत्या बहुवचनेन च श्रुतस्यैव प्राबल्यं मिथस्संवादेन दार्ढ्यञ्च सूच्यते। उपात्तवाक्येष्वविद्यानिवृत्तिर्न भाति, मृत्युशब्दस्त्वर्थान्तरेऽपि स्यादित्यत्राह

१- मु. उ. २. ख. ८. वा॥ २- मु-उ. ३-मु. २- ख. ९- वा॥ ३-

नाविद्याऽभिधीयते। यथा सनत्सुजातवचनम्- [1]"प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि" इति। [2]'सत्यं ज्ञानमनन्तं ब्रह्म' [3]'विज्ञानमानन्दं ब्रह्म' इत्यादि-शोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानञ्च [4]"अथ योऽन्यां देवतामुपास्ते ऽन्यो ऽसावन्यो ऽह-

* श्रुतप्रकाशिका *

ष्वित्यर्थः। तत्र प्रयोगं दर्शयति। (यथेति) प्रमादं वै इति वचनात् पूर्वत्र मोहो मृत्युः सम्मतो यः कवीनामित्युक्तम्. मोहो विपरीतज्ञानं तन्मृत्युरिति परमतं, सनत्सुजातस्य तु प्रमादो मृत्युर्मतः। प्रमादो यथावदप्रतिपत्तिः, स्वरूपाग्रहणे हि अन्यथाप्रतिपत्तिः, तस्मान्मोहस्यापि हेतुरात्मन्यनवधानरूपः प्रमाद इति तद्धेतु-भूताविद्यैव प्रमादशब्देन विवक्षितेति सैव मृत्युरित्यभिप्रायः। उपात्तेषु वाक्येषु ज्ञानस्याविद्यानिवर्त्तकत्वं प्रतिपन्नं ब्रह्मणो निर्विशेषचिन्मात्रत्वं तेनात्मन एकत्व-ज्ञानं निवर्त्तकमिति च न प्रतिपन्नमित्यत्राह (सत्यं ज्ञानमिति) सत्यज्ञानादिवाक्यं सर्वतो व्यावृत्तत्वप्रदर्शनार्थमुपात्तं, पुरुषार्थत्वायासुखाद्यावृत्तिज्ञापनार्थमुपात्तं विज्ञान-मानन्दमिति. आदिशब्देनास्थूलमित्यादि गृह्यते, एवं ब्रह्मणो निर्विशेषत्वे शोधक-वाक्यान्युदाहृतानि। अथ ब्रह्मात्मैक्यप्रतिपत्तौ श्रुतिमुपादत्ते (अथ य इति)

७ तत्त्वटीका ७

(अत्रेति) मोक्षोपायवाक्येषु ज्ञाननिवर्त्यविषयत्वौचित्यादस्याविद्यात्वमिति भावः। प्रसिद्धिविरोधिशङ्कां निरस्यति (यथेति) प्रमादः—अनवधानता अज्ञानम्, कार्येण वा कारणलक्षणा। अप्रमादम्—अविद्यानिवृत्तिम्, यद्वा—अत्रामृतत्वसाधनतयोक्तो-ऽप्रमादः तत्त्वज्ञानं, तत्प्रतिपक्षः प्रमादोऽप्यत्राज्ञानमेव। अहं ब्रवीमीति तत्त्ववित्-सिद्धान्तख्यापनम्। ब्रह्मणो निर्विशेषत्वं जीवतादात्म्यमैक्यज्ञानस्य मुक्तिहेतुत्वञ्च नैतेषु व्यक्तं भातीत्यत्र शोधयन्निर्विशेषत्वमुपायपरवाक्यैस्तत्त्वनिर्देशैस्तदनुसन्धानपरैश्च वाक्यैर्जीवैक्यज्ञानसिद्धिञ्चाह (सत्यमिति) 'त्वं वा' इत्यादिना देवतां प्रत्युक्त-

१– भारत. उद्योगपर्व. ४१-अ. ४- श्लो.
२– तैत्त. आनं १ अनु. १- वा.
३– बृ. उ. ६- अ. १- ब्रा २८- वा.
४– बृ. उ. ३- अ ४- ब्रा. १०- वा.

मस्मीति न स वेद" [1]'अकृत्स्नो ह्येष आत्मेत्येवोपासीत' [2]'तत्त्वमसि–' 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मि" इत्यादिवाक्यसिद्धम् । वक्ष्यति चैतदेव— [3]"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । तथा च वाक्यकारः [4]'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इति । अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य

* श्रुतप्रकाशिका *

अथ योऽन्यामित्यैक्योपासनविधिर्भेदवासनानिरासार्थः, विहितोपासनस्यैक्यविषयतां ज्ञापयितुमैक्योपदेशं दर्शयति ( तत्त्वमसीति ) उपदेशानुगुणमुपासको देवतां प्रत्याह ( त्वं वेति ) उपदिष्टार्थमात्मन्यनुसन्धत्ते । ( तद्योऽहमिति ) अस्यार्थस्य श्रुतिविवक्षितत्वसिद्धये सूत्रं दर्शयति ( वक्ष्यति चेति ) 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' 'आत्मेत्युपासीत' तथा ह्युपगच्छन्ति- मुमुक्षव उपासत इत्यर्थः । ग्राहयन्ति च– ज्ञापयन्ति च तथा शास्त्राणि, । सूत्रकाराभिप्रायविदां वाक्यं दर्शयति ( तथा चेति ) तन्निष्पत्तेः– तत्र कल्पितत्वादित्यर्थः । न केवलं श्रुतिः, तदनुग्राहकतर्कोऽप्यस्तीत्याह ( अनेन चेति ) चः समुच्चये । कर्मनिरपेक्ष- ज्ञाननिवर्त्यत्वायाह ( मिथ्यारूपस्येति) हेतुत्वं गर्भितम् । सकारणस्य–अविद्याभेद-

* तत्त्वटीका *

स्यैव तदर्थस्य 'तद्योह'मित्यादिना स्वस्मिन्ननुसन्धानं स्थापयति । उक्तस्य सूत्रकृदिष्टत्वमाह ( वक्ष्यतीति ) ( एतदेव ) न त्वादिष्टमिति भावः । ( आत्मेति ) स्वानन्यत्वेनेति यावत् । सूत्राभिप्रेतं तद्विदुक्त्या स्पष्टयति ( तथेति ) सर्वस्य तन्निष्पत्तेः–भातस्य सर्वस्य तस्मिन्नध्यस्तत्वादित्यर्थः । बाधावस्थायामधिष्ठानभूतब्रह्मात्मतया परिशिष्टत्वादितिभावः । अद्वैतधीकरणस्य वाक्यस्य सूत्रवाक्याभ्यां सूचित-

१—बृ- उ. ३. अ- ब्रा- ७- वा.
२—छा- उ. ६-प्र. ८. ख- ७- वा.
३—शारीर. ४- अ. १- पा. ३- सू.
४— वाक्यम्.

सकारणस्य बन्धस्य निवृत्तिर्युक्ता ॥ ननु च सकल-भेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते ? कथंवा 'रज्जुरेषा न सर्प' इति ज्ञानेन प्रत्यक्ष-

* श्रुतप्रकाशिका *

दर्शनसहितस्य। बन्धस्य निवृत्तिर्युक्ता- न हि मिथ्यासर्पनिवृत्तौ नायं सर्पो रज्जुरेषेति ज्ञानादृते कर्मापेक्षेति भावः । अथानुमानागमयोर्व्याप्तिग्रहणलिङ्गदर्शन-धर्मिप्रतिपत्त्यर्थं व्युत्पत्त्यर्थं च प्रत्यक्षसापेक्षत्वादनुग्राणो ऽयमग्निर्द्रव्यत्वात् "आदित्यो यूपः" "यजमानः प्रस्तरः" इत्यादिषु अनुमानागमौ प्रत्यक्षाविरुद्धार्थप्रतिपाद-नाशक्तौ दृष्टौ, तस्मान्न प्रत्यक्षविरुद्धार्थप्रतिपादनक्षमा श्रुतिरित्यभिप्रायेण भेदवादी चोदयति ( ननु चेति ) श्रुतिवाक्येष्ववान्तरचोद्येषु परिहृतेष्विदमपि चोद्यम-स्तीति चार्थः ,स्वप्नादिषु सर्पभूदलनादिषु च कतिपयभेदनिवृत्तिर्दृष्टा, तद्व्यावृत्त्यर्थः सकलशब्दः । अत्र किं प्रत्यक्षत्वान्न बाध्यत्वम् ? उत परोक्षत्वान्मूलित्वाच्च न बाधकत्वम् ? इति शङ्काद्वयं हृदि निधाय प्रथमं प्रत्यक्षत्वादबाध्यत्वमित्येतत्परिहरति। (कथं वेति) स तु प्रत्यक्षाभास इति चेत् न; प्रतीतिदशायामाभासत्वानवगमात् . पश्चात्प्रमाणबाधेन ज्ञायत इति चेत् तत् प्रपञ्चग्राहिप्रत्यक्षस्यापि तुल्यं,भेदस्य श्रुति-

७ तत्त्वटीका ७

मनुग्राहकं वचः सन्मूला इत्यादिना प्रागुक्तमेव चोद्योत्थापनायाह (अनेनेति) सत्य-भेदस्वरसतेति भावः । चः पूर्ववदुभयार्थः । द्वितीयाद्वै भयं भवतीत्यादिसूच-नाय ब्रह्मात्मैकत्वोक्तिः । मिथ्याभूतस्य ज्ञानेतरकर्मनिवर्त्यत्वे सत्यत्वं स्यात् तच्च मानविरुद्धं, नच रज्जुसर्पादिनिवृत्तौ मन्त्रौषधगरुडघाताद्यपेक्षेति भावः । अपुनर-ङ्कुरत्वाय सकारणत्वोक्तिः । आस्तामनुकूलस्तर्कः प्रतिकूलस्तु सिद्ध इत्यभिप्रायेण चोदयति ( ननु चेति ) बाधकतयेष्टयोश्शास्त्रानुमानयोः शब्दार्थस्वरूपतद्व्युत्पत्तीनां व्याप्तिधर्मलिङ्गादीनां च सिद्ध्यर्थमुपजीव्यं प्रत्यक्षं न ताभ्यां बाध्येत, अन्यथा आदित्यो यूपः पावकोऽनुष्णः इत्यादेरपि प्रत्यक्षबाधकत्वं स्यात्, चन्द्रादिभेदबाध-कस्य तु तन्नोपजीव्यमित्यभिप्रायेण सकलशब्दः - सर्वभेदबाधेष्नुपजीव्य-बाधोऽप्यन्तर्गतः । कथमिव — न कथञ्चित् । प्रत्यक्षविरुद्धं शास्त्रमेव बाधित-

विरुद्धा सर्पनिवृत्तिः क्रियते ? तत्र द्वयोः प्रत्यक्षयो-र्विरोधः, इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेत; तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः ? पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्यामिति चेत; शास्त्र-

* श्रुतप्रकाशिका *

बाधादित्येतदत्राभिप्रेतम् मूलित्वात्परोक्षत्वाच्च न बाधकं शास्त्रमिति शङ्कते ( तत्रेति ) ( इह त्विति ) तुल्यत्वव्यावृत्तये तुशब्दः ( प्रत्यक्षमूलस्येति )मूलित्वान्न शास्त्रं बाधकमितिभावः । ( शास्त्रस्येति ) परोक्षत्वान्न बाधकमिति भावः । तुल्यत्वे प्रयोजके सति बाध्यबाधकभावो विपर्ययेणापि स्यादिति तदप्रयोजकम्, अतस्तत्र बाध्यबाधकभावे प्रयोजकान्तरं त्वया वक्तव्यं, तदेवास्माकमपि प्रयोजकमित्यभिप्रायेणाह ( तुल्ययोरिति ) बाध्यबाधकभावानियमव्यावृत्तये भेदवाद्यभिमतत्वेन प्रयोजकान्तरं शङ्कते ( पूर्वोत्तरयोरिति ) पूर्वोत्तरयोः—बाध्यबाधकयोः । त्वदुक्तं प्रयोजकमत्रापि तुल्यमित्याह ( शास्त्रेति ) मूलमूलित्वादि-

* तत्त्वटीका *

मुख्यार्थं भाक्तं नेयमिति भावः । अत्र किं प्रत्यक्षत्वान्न बाध्यत्वम्, उत परोक्षत्वान्मूलित्वाच्च न बाधकत्वम् ? इति शङ्काद्वये प्रथमं परिहरति ( कथं वेति ) प्रत्यक्षशब्द इहापरोक्षमात्रपरः । बाधात्पूर्वमनाभासत्वाभिमानो बाधश्च प्रपञ्चरज्जुसर्पभ्रमयोस्सम इति भावः । मूलित्वादिना न शास्त्रं बाधकमिति शङ्कते ( तत्रेति ) प्रत्यक्षयोः— अपरोक्षयोरित्यर्थः । इदञ्च मूलमूलित्वरहितयोः प्रत्यक्षपरोक्षयोरप्युपलक्षणम् । अत एवेह दूष्यं निष्कृष्यानुवक्ति ( इहेति ) सकलभेदनिवृत्ताविरयर्थः । वैषम्यव्यक्त्यै तुशब्दः । प्रत्यक्षशब्दोत्र प्रत्यक्षप्रमाणविषयः । द्वयोः प्रत्यक्षयोरित्युक्तस्य तुल्यबलत्वस्य बाधं प्रत्यप्रयोजकत्वात्, अन्यथा प्रकरणसमेति प्रसङ्गाद्विपरिवर्त्तप्रसङ्गाच्चान्यत्प्रयोजकं शिक्षयितुमाह ( तुल्ययोरिति ) चोद्यत्रयनिवृत्त्यै सिद्धान्तीष्टं प्रयोजकं शङ्कते ( पूर्वे ) पूर्वोत्तरयोरिति क्रमो न नियतः । उक्तं प्रयोजकत्वमपि प्रस्तुते तावदस्तीत्याह ( शास्त्रेति ) शास्त्रशब्द इह तज्जन्मधीलक्षकः, धीद्वयविवेकार्थं विशेषविवक्षया वा तत्करणान्वयोक्तिः । एतत्—वैषम्य-

प्रत्यक्षयोरपि समानमेतत् ॥ एतदुक्तं भवति–बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम्, ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात् । तत्र हि

* श्रुतप्रकाशिका *

सद्भावे मूलस्य प्रत्यक्षस्य च बाधकत्वम्, इतरस्य बाध्यत्वं च दृष्टम्, अतो मूलमूलित्वपरोक्षत्वापरोक्षत्वादिवैषम्यराहित्ये सति दुष्टकारणजन्यत्वतदभावौ बाध्यबाधकभावे प्रयोजकाविति शङ्कायामाह ( एतदुक्तमिति ) तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावौ न प्रयोजकावित्यभिप्रायेण तुल्यशब्दः प्रयुक्तः, विशिष्टस्य हेतुत्वे विशेषणांशस्यापि हेतुत्वात्तुल्यशब्देनैकदेशोपादानम्, दुष्टकारणजन्यत्वतदभावविशेषणीभूतं तुल्यत्वं विवक्षितम् तुल्यत्वे सति-विपरीतप्राबल्यदौर्बल्यकारणाभावे सति दुष्टकारणजन्यत्वतदभावौ न प्रयोजकावित्यर्थः । सापेक्षत्वं निरपेक्षत्वं मूलमूलिभावः । आदिशब्देन परोक्षापरोक्षभावविलम्बाविलम्बा विवक्षिताः, श्रुतिलिङ्गादिषु विलम्बाविलम्बाभ्यां हि प्राबल्यदौर्बल्ये । यद्वा अप्रयोजकत्वेनोक्तं तुल्यत्वं दृष्टान्ततयाऽनूदितम्. वैषम्यान्तराभावे सति दुष्टकारणजन्यत्वतदभावावप्यादिशब्देन विवक्षितौ, एतेषामप्रयोजकत्वमेकेन दृष्टान्तेनोपपादयति ( ज्वालेति ) अन्यथेत्यध्याहर्तव्यम् ( प्रत्यक्षोपमर्दायोगादिति ) अयोगप्रसङ्गादित्यर्थः । ज्वाला-

* तत्वटीका *

मित्यर्थः । ननु दुष्टहेतुजत्वस्य बाध्यताहेतुत्वमुपजीव्यत्वाद्यभावेन तुल्यत्वे सति स्यात्, उपजीव्यबाधे चाधर्मत्वसाधकहिंसाद्यपि प्रमाणं स्यादित्यत्राह ( एतदुक्तमिति ) तुल्यत्वोक्तिर्दृष्टान्तार्था । तद्विशिष्टं वा दुष्टहेतुजन्यत्वादिकं विवक्षितम् । आदिशब्देनोपक्रमापच्छेदाधिकरणोक्तनियतानियतपौर्वापर्यादेः परोक्षत्वादेश्च सङ्ग्रहः । अकारणम्– अप्रयोजकम् । अव्याप्तैरिति शेषः । उक्तमर्थमुदाहरणस्थेन तर्केण द्रढयति ( ज्वालेति ) कारणञ्चेदिदमध्याहार्यम्, अयोगादिति प्रसज्यमानोक्तिः । ननु प्रत्यक्षं प्रवर्तमानग्राहित्वाज्ज्वालास्वरूपं गृह्णाति, भिन्नसन्ततावि सूक्ष्मदृशामेकसन्ततावपि ज्वालाभेदः प्रत्यक्षसिद्ध इत्यत्राह ( तत्रेति ) प्रत्यक्षशब्द इह प्रत्यभिज्ञाख्यविशेषविषयः, सा चात्र भ्रान्तिरूपा । पटुतरदृष्टीनामपि पूर्वापरकालवर्त्यैक्य-

ज्वालैक्यं प्रत्यक्षेणावगम्यते । एवञ्च सति द्वयोः प्रमाणयोर्विरोधे यत्सम्भाव्यमानान्यथासिद्धि, तद्बाध्यम्; अनन्यथासिद्धमनवकाशमितरद्बाधकमिति सर्वत्र बाध्य-

* श्रुतप्रकाशिका *

भेदानुमाने हि मूलमूलिभावोऽस्ति विलम्बाविलम्बौ च, प्रत्यक्षसापेक्षत्वादनुमानस्य तुल्यत्वे सति दुष्टकारणजन्यत्वतदभावयोः प्रयोजकत्वमप्यनेन व्युदस्तं भवति. तद्ग्राहित्वेऽपि बाध्यबाधकभावदर्शनात् । तत्र किं विषयं प्रत्यक्षं बाध्यमित्यत्राह ( तत्र हीति ) ऐक्यग्राहिप्रत्यक्षं बाध्यमित्यर्थः । तर्हि किं प्रयोजकम् ? इत्यत्राह ( एवञ्चेति ) तुल्यत्वादीनां प्रयोजकत्वेऽनुपपन्ने सति ( द्वयोरिति ) प्रत्यक्षयोरनुमानयोरागमयोः प्रत्यक्षानुमानयोरनुमानागमयोः प्रत्यक्षागमयोर्वेत्यर्थः । ( यत्सम्भाव्यमानान्यथासिद्धीति ) सावकाशत्वादन्यथासिद्धमित्यर्थः । अनन्तरमनन्यथासिद्धमनवकाशमित्युक्तेः, विषयान्तरलाभोऽप्रमाणकोटिनिवेशो वा सावकाशत्वं, तेन स्वोपस्थापितार्थविषयप्रामाण्यं विनापि सम्भावितोदयत्वमन्यथासिद्धत्वम्. विरुद्धार्थप्रमाणाबाधेनापि सम्भवदुदयत्वमिति यावत् । ( अनन्यथासिद्धमनवकाशमिति ) अनन्यथासिद्धत्वं नाम—तदर्थप्रमाणतां विनाऽनुदयत्वं, विरुद्धार्थप्रमाणाबाधेनानुदयत्वमिति यावत्, तच्चानवकाशत्वात् । अनवकाशत्वं नाम— विषयान्तरा-

* तत्त्वटीका *

विषयात्यन्तसौसादृश्यावसाय अन्यादृश्यादिभिर्ज्ञायत एव, अतो विरोधो बाधश्चात्र सिद्ध इति भावः । तर्हि प्रसिद्धस्याप्रयोजकत्वे प्रयोज्यं निष्कारणं स्यादित्यत्राह ( एवञ्च सतीति ) चः शङ्कानिवृत्त्यर्थः समुच्चयार्थो वा । अव्याप्त्या च सह तद्बाधे च सतीति यावत् । सजातीययोर्विजातीययोर्वेति न निर्बन्ध इत्यभिप्रायेण द्वयोरित्युक्तम्. प्रमाणयोर्बलविमर्शात्पूर्वं मानत्वेन भातयोरित्यर्थः । विरोधे—मिथोपरिहाररूपे । अन्यथासिद्धिः— स्वविषयसत्यत्वमन्तरेणापि स्वरूपलाभः । तत्र हेतुत्वेन सावकाशत्वमाकृष्टव्यम्; तच्च द्विचन्द्रादिधीवदप्रमाणकोटिनिवेशार्हत्वाद्वा पदाहवनीयादिनयेनाविरुद्धविषयलाभाद्वा स्यात् । अनन्यथासिद्धम्—स्वविषयमिथ्यात्वे अनुपपन्नस्वरूपमविरुद्धम्, अबाधितस्वोत्पत्तुमर्हत्वाद्वा । तत्रहेतुः, अनवकाशत्वम्.

बाधकभावनिर्णय इति। तस्मादनादिनिधनाविच्छिन्नसं-
प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्वि-

* श्रुतप्रकाशिका *

लाभोऽप्रमाणकोटिनिवेशाभावो वा, अप्रमाणकोट्यनन्तर्भावविषयान्तरालाभाभ्यां विरुद्धार्थोपस्थापकप्रमाणाबाधेनानुदयत्वमित्यर्थः । ( इति सर्वत्र ) उक्तप्रकारेण सजातीययोर्विजातीययोर्वा प्रमाणयोर्विरोध इत्यर्थः । एवं बाध्यबाधकभावे प्रयोजकमस्तु, ततः किं प्रस्तुतशास्त्रप्राबल्यस्येत्यत्राह ( तस्मादिति ) तस्मात्— अन्यथासिद्धत्वानन्यथासिद्धत्वयोरेव बाध्यबाधकभावे प्रयोजकत्वात् । ( अनादिनिधनाविच्छिन्नसम्प्रदायेति ) अविच्छिन्नसम्प्रदायत्वादनादिनिधनम्. सम्प्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वं ह्यपौरुषेयत्वसाधकम् । “ अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ॥ ” “ अनादिनिधनं ब्रह्म ” इत्यादिवचनानि चानादिनिधनशब्देन स्मारितानि, अत एव असम्भाव्यमानदोषम् . पौरुषेयत्वप्रयुक्तं हि भ्रमविप्रलिप्साप्रमादाशक्तिरूपदोषचतुष्टयवत्त्वम् । अत एव अनवकाशम् । शास्त्रजन्यशब्दस्यावबोधशब्देनान्वयः । बाध्यबाधकभावाङ्गीकारस्य

* तत्त्वटीका *

तच्च पूर्वोक्तद्वयावकाशाभावसमुच्चयरूपम् । इतरत्—अनादृतसाजात्यादिविशेषमिति भावः । सर्वत्र— तुल्यातुल्योदाहरणेषु तार्त्तीयबाधस्थलेषु चेत्यर्थः । निर्णयः— प्रमाणतर्कसिद्धोऽध्यवसायः । इतिशब्दः पूर्वहेतौ, उत्तरस्समाप्तौ । समानमित्यत्राभिप्रेतं शास्त्रप्राबल्यं विवृण्वन्नेतदुक्तमिति प्रक्रान्तं निगमयति ( तस्मादिति ) अस्मदुक्तस्यैव प्रयोजकत्वादित्यर्थः । यद्यप्यविद्यानिवृत्तौ वेदोपि न स्यात्. तथापि सर्गप्रलयकालेषूत्पत्तिनाशाभावादनादिनिधनत्वोक्तिः, तद्विषयैव ‘अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा’ इति स्मृतिरिति भावः । अविच्छिन्नसम्प्रदायत्वोक्त्या मन्वन्तरादिष्वविच्छेदेन विप्लवासम्भवस्सूच्यते ‘ प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते’ इत्येतदपि कालविशेषाद्यनुगुणशाखाविशेषप्रवर्त्तनपरम्, अन्यथा ‘ब्रह्मस्वयम्भ्वभ्यानर्ष’ दित्यादिभिर्विरोधात् । स्मर्त्तव्यत्वे सत्यस्मर्यमाणकर्तृकत्वादित्यपौरुषेयत्वसाधकमत्र सूचितम्, अतएव वक्तृदोषासम्भवः । मन्वाद्याप्तवाक्यानां श्रुतिविरोधे क्वचिद्बाध

शेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविध विकल्परूपबन्धनिवृत्तिर्युक्तैव । सम्भाव्यते च विविध-

* श्रुतप्रकाशिका *

विरोधसापेक्षत्वाद्विरोधं दर्शयति ( निर्विशेषेत्यादिना ) नित्यम्—कालापरिच्छिन्नम् । शुद्धम्—अविद्यारहितम्. तत एव मुक्तशब्दोऽविद्याकृतजन्मादिराहित्यपरः । बुद्धम्—भासमानम् । स्वप्रकाशशब्दः पूर्वं बुद्धशब्दोक्तभासमानत्वस्य पराधीनत्वव्युदासार्थः । स्वयमेव प्रकाशस्वभावत्वं स्वप्रकाशत्वम्, तच्च चिन्मात्रशब्दवाच्यत्वात्, स्वयंप्रकाशत्वं हि चित्त्वं, चित्स्वरूपत्वञ्च श्रुतिसिद्धम्. मात्रशब्दो ज्ञेयत्वव्युदासपरः । ब्रह्मात्मभावावबोधेन—एवम्भूतस्य ब्रह्मणः स्वस्य चैक्यावबोधेनेत्यर्थः । ( सम्भाव्यमानेति ) सम्भाव्यमानदोषत्वात्, सावकाशम्—अप्रमाणकोटौ लब्धनिवेशम् । अत एवान्यथासिद्धत्वमपि फलितम् । अन्यथासिद्धत्वं विपरीतप्रमाणमबाधित्वाप्युदयसम्भवः ( प्रत्यक्षादीति ) आदिशब्दादनुमानादिकमुच्यते ( विविधेति ) देवादिरूपेण स्वकार्यजन्मजरामरणादिरूपेण च विविधो ज्ञातृज्ञेयादिविकल्पः, स एव बन्धः, तन्निवृत्तिरित्यर्थः । सम्भाव्यमानश्च दोषः कः ? इत्यत्राह (सम्भाव्यते चेति)

ॐ तत्त्वटीका ॐ

इष्टः, न तथात्रेत्यभिप्रायेण गन्धशब्दः । एवमप्रमाणकोटिनिवेशोपास्तः, विरुद्धविषयोऽपि नास्तीति व्यक्त्यै निर्विशेषत्वाद्युक्तिः, नित्यशब्दश्शुद्धत्वादौ सर्वत्र योज्यः अबाधपरो वा । शुद्धम्—अविद्यासाक्षित्वावस्थायामपि वस्तुतस्तद्रहितम् । तेन बुद्धम्—अतिरोहितनित्यप्रकाशम् । ततएव, मुक्तम्—सर्वदा कर्मतत्फलवियुक्तम् । स्वप्रकाशम्—मिथ्यात्वप्रयोजकदृश्यत्वोज्झितम् । तत्र हेतुश्चिद्रूपत्वम् । अत्र निषेधकज्ञानाश्रयत्वस्यापि मिथ्यात्वव्यक्त्यै मात्रशब्दः । ब्रह्मात्मभावः— ब्रह्मणएव प्रत्यगात्मत्वम् । प्रत्यक्षस्य सम्भाव्यमानदोषत्वं प्राचुर्येणान्यत्र दोषदर्शनादन्यत्रापि दोषशङ्कार्हत्वं, तत एवानुमानादेरपि शङ्कितदोषत्वादत्रादिशब्दः । देवादिभेदैस्तदवान्तरैश्च बन्धस्य विविधविकल्परूपत्वम् । विशेषतः कल्प्यत इति विकल्पः । एवकारः प्रतिकूलतर्कासम्भवपरः । ननु काचाद्यभावान्निर्दोषत्वेन प्रसिद्धे प्रत्यक्षे दोषो दुर्वचः

विकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपा-
विद्याख्यो दोषः । ननु अनादिनिधनाविच्छिन्नसम्प्र-

* श्रुतप्रकाशिका *

भेदप्रपञ्चः—भेदसमुदायः, यद्वा भेदरूपः प्रपञ्चः । विविधविकल्पशब्दः प्रपञ्च-विशेषणं भेदविशेषणं वा. भेदः— ज्ञातृज्ञेयादिः, स च ब्राह्मणादिरूपेण विविधः देवमनुष्यादिरूपेण विकल्पवान् । अर्वाचीनाः केचित् काचतिमिरादिकं दोषमाचक्षते तदयुक्तं, तस्य काचित्कत्वात्. काचादिदुष्टप्रत्यक्षं सपक्षीकृत्य व्यतिरिक्तस्य काचादि-दुष्टत्वमनुमीयत इति चेत्— न; अतिप्रसङ्गात् । अनादिनिधनत्वेन यच्छास्त्रमुक्तं तस्यापि शब्दत्वादित्यादिना दुष्टकर्तृकत्वानुमानं हि सुशकं, तत्र कर्त्रयोग्यानुपलम्भ-निरस्त इति चेत्, तदत्रापि तुल्यमिति काचादेर्दोषत्वकल्पनानुपपत्त्या तद्व्यावृत्त्यर्थ-माह (अनादीत्यादि) भेदवासनादिरूपा— आदिशब्देन भेदवासनाहेतुभूतं भेददर्शनं विवक्षितम् । अनयोर्हेतुहेतुमद्भावेऽन्योन्याश्रयपरिहाराय अनादिशब्दः, बीजाङ्कुरन्यायादिति भावः । भेददर्शनं भेदवासना च हि कार्याविद्या, अत उक्तम् भेदवासनादिरूपाविद्येति । 'आदित्यो यूपः' इत्यादिषु यूपादित्याद्यैक्याद्यप्रतिपादनं न प्रत्यक्षविरोधात्, किन्त्वन्यपरत्वात्. 'यत्परः शब्दः स शब्दार्थ' इति हि न्यायविदः, अन्यपरत्वञ्च तात्पर्यलिङ्गाभावादवगम्यते. आदित्यो यूप इतिवाक्यं यूपाञ्जनविधि-शेषत्वादन्यपरमिति परस्याभिप्रायः । यन्निर्दोषमुक्तं तत्रापि बाध्यबाधकभावनिमित्त-भूतोऽर्थविरोधोस्ति, अतोऽवश्यमन्यतरस्य बाध्यत्वं स्यात्. तत्र यद्बाध्यत्वे प्रयोजकं दुष्टकारणजन्यत्वं तत्तु नास्ति. कथमत्र निर्वाह इत्याशयेन चोदयति (नन्विति) प्राबल्यदौर्बल्यहेतुर्नास्तीत्याह (अनादीति) अपिर्विरोधसूचकः । अर्थविरोधं

ॐ तत्त्वटीका ॐ

तज्जातीये दोषदृष्ट्यान्यत्रापि तत्क्लृप्तौ वेदे वाक्यत्वादिभिस्तथा क्लृप्तिः स्यादित्यत्राह (सम्भाव्यत इति) चः शङ्कानिवृत्त्यर्थः, बाधकप्रत्ययेन सह कारण-दोषद्वयस्य समुच्चयार्थो वा (प्रत्यक्षस्येति) भेदग्राहकमात्रस्योपलक्षणम्. आदि-शब्देन मूलाविद्यां भेददृष्टिञ्च संगृह्णाति । एतेषु यथार्हमन्योन्याश्रयादिनिरासायानादि-शब्दः । एतेषां दोषत्वं "वासनारेणुकुण्ठितः' अविद्यासञ्चितं कर्म" इत्यादि-

दायतया निर्दोषस्यापि शास्त्रस्य "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत । सत्यम्;— पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्ष-

* श्रुतप्रकाशिका *

दर्शयति (भेदावलम्बिन इति) सत्यमित्यर्द्धाङ्गीकारे. भेदावलम्बिनो बाध्यत्वमङ्गीकृतं, दुष्टकारणजन्यत्वेऽनङ्गीकारः, अन्यथासिद्धत्वानन्यथासिद्धत्वयोरेव बाध्यबाधकभावे प्रयोजकत्वम्. पूर्वोक्तं दुष्टकारणजन्यत्वमपि हि अन्यथासिद्धत्वप्रकारविशेषः । अत्रापि मुखभेदेनान्यथासिद्धिमुपपादयति (पूर्वापरेत्यादिना) अपच्छेदन्यायाद्बाध्यत्वं प्रत्यक्षस्यापि तुल्यं, तत्र दोषमूलत्वं च बाध्यत्वेऽधिकहेतुः, अपच्छेदे पूर्वापरशास्त्रयोः पौर्वापर्यमित्युत्पत्तिक्रमात्, न पाठक्रमात् "पञ्चर्त्विजः समन्वारब्धाः प्रसर्पन्ति अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मा ब्रह्माणं यजमानः" इति विहितस्यान्वारम्भणस्य विच्छेदे प्रायश्चित्तमुच्यते "बहिष्पवमानं प्रसर्पतां यद्युद्गाताऽपच्छिद्येत अदक्षिणः स यज्ञः संस्थाप्यस्तेन पुनर्यजेत तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात् अथ प्रतिहर्त्तापच्छिद्येत सर्ववेदसं दद्यात्" इति । तदिदं शास्त्रद्वयं विषयः, अत्रोद्गातृप्रतिहर्त्रोः प्रयोगभेदेनापच्छेदे स्वं स्वं प्रायश्चित्त-

७ तत्त्वटीका ७

सिद्धम्। भेदग्राहकप्रत्यक्षादीनामद्वैतश्रुतिविरोधाद्बाध्यत्वमुक्तम्, तत्रातिप्रसक्त्या चोदयति (नन्विति) अपिस्सदोषत्वनिर्दोषत्वसमुच्चयार्थो विरोधार्थो वा. बाध्यत्वप्रयोजकभेदावलम्बित्वव्यक्त्यै ज्योतिष्टोमाद्युक्तिः । द्वैतीयभेदावलम्बिनी तृतीयादिदशाध्यायी. आदिशब्देन कर्मविध्यन्तरसङ्ग्रहः । बाध्यत्वोक्त्या प्रमाणलक्षणविरोधोपि सूचितः । तत्र धर्मप्रामाण्यस्य साकल्येनांशतोऽपि वा पादेन वा त्रिपाद्या वा बाधप्रामाण्यमपाकृतम् । इष्टप्रसङ्गोयमित्याह (सत्यमिति) यद्वा, बाध्यत्वमस्ति तावता सदोषत्वमप्रामाण्यञ्च न स्यादित्यर्धाङ्गीकारः । मिथ्यात्वेपि दृष्टिविधिनयात् साध्यसाधनभावे व्यावहारिकं प्रामाण्यमिति भावः । अङ्गीकृतं निर्दोषस्य बाध्यत्वांशम्, पौर्वापर्यविशेषेपि स्वोक्तबाधप्रयोजकव्याप्तिश्च श्रौतदृष्टान्तेन विवृणोति (पूर्वेति) मोक्षशास्त्रस्य बन्धरूपभेदनिवर्त्तकत्वावेदकवेदवाक्यस्येत्यर्थः । "पञ्च

* श्रुतप्रकाशिका *

शास्त्रं प्रवर्तते, एकस्मिन् प्रयोगे यौगपद्येनापच्छेदे सति उद्गातुः प्रायश्चित्तं प्रवर्तते तस्य वर्गप्रधानत्वात्, प्रधानापच्छेदस्यैव समाधेयत्वात्, विकल्पेनानुष्ठानं वा एकस्मिन्नेव पौर्वापर्येणापच्छेदे पूर्वस्य प्रायश्चित्तशास्त्रस्य दौर्बल्यं परस्य प्राबल्यं च कर्ममीमांसायामुक्तं "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति । अत्रासञ्जातविरोधित्वेन पूर्वमुदयात्पूर्वस्य प्राबल्यं, परस्य सप्रतिपक्षतयैवोदयाद्दौर्बल्यमिति पूर्वपक्षः । राद्धान्तस्तु,—पूर्वस्योत्पत्तिकाले विरोध्यभावात्तदबाधेनाप्युदयः सम्भवति, उत्तरस्य तु स्वोत्पत्तिकाले विरोधिसद्भावात्तदबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधित्वेवोत्पन्नमित्यनन्यथासिद्धत्वादुत्तरस्य प्राबल्यमिति पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यतीति हि न्यायविदः ननूत्तरशास्त्रमुदयेत चेत् पूर्वाबाधेनानुदयः स्यात्. पूर्वशास्त्रमुत्तरोत्पत्तिप्रतिबन्धकं किं न स्यात्? नैवम्;—निमित्तस्योत्पन्नत्वान्नैमित्तिकं शास्त्रमुदितमेवेति तत्रोत्तरस्योद्यतः पूर्वाबाधेनोत्पत्त्यनुपपत्त्या पूर्वं बाधितमेव । किञ्च यथोदितदक्षिणाकत्वेन कर्मसमापनं हि शास्त्रेण पूर्वमेव स्वतः प्राप्तम्, तत्तु प्रायश्चित्तशास्त्रेणानान्यथाकृतम्, एवं पूर्वसिद्धा-

❁ तत्त्वटीका ❁

ऋत्विजस्समन्वारब्धाः प्रसर्पन्ति अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गाता उद्गातारं ब्रह्मा ब्रह्माणं यजमानः" इत्यस्मिन् प्रयोगे "यदि बहिष्पवमानं प्रसर्पतां प्रस्तोतापच्छिद्येत" इत्यादिनापच्छेदप्रायश्चित्तविधौ "यदि प्रतिहर्ता पशुभिर्यजमानोव्यृध्येत सर्ववेदसं दद्यात् यद्युद्गाता यज्ञेन यजमानोव्यृध्येत अदक्षिणस्स यज्ञस्संस्थाप्यः" इत्युक्तम् । तदिदं नैमित्तिकमेकस्मिन् प्रयोगे विरुद्धम्; तत्र युगपदपच्छेदे उद्गातृप्रायश्चित्तं वा प्रतिहर्तृप्रायश्चित्तं वा कार्यम् । पूर्वापरापच्छेदे यो जघन्योपच्छिद्येत, तस्य प्रायश्चित्तमेवेति व्यवस्थापितम् । तदुक्तं "पूर्वापरापच्छेदे पूर्वदौर्बल्यं प्रकृतिवत्" ( ६-५-५४ ) इति । अत्रैवं पूर्वपक्षः,—उपक्रमनयेनासञ्जातविरोधिनयोदितत्वात् पूर्वस्य प्राबल्यं परस्य तूदितविपक्षसन्निधावेव प्रवृत्तेर्दौर्बल्यमिति । सिद्धान्तस्तु- परस्मिन्ननुत्पन्ने तदसन्निधानात् परमबाधित्वा पूर्वस्योदयः, इतरस्य तु पूर्वोदितविरोध्यबाधेनोदयायोगान्निमित्तोदये नैमित्तिकशास्त्रोदयावश्यम्भावाच्च परप्राबल्यम्. उपक्रमोपसंहारयोस्तु विरुद्धस्य परस्यानुदय एवेति. इह तु कार्मिणां भुक्तौ पूर्वप्रावण्येनार्थक्रमात्तदनुगुणपाठक्रमाच्चापच्छेदवत्पूर्ववृत्तकर्म-

शास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव । वेदान्तवाक्ये-ष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात्परस्य ब्रह्मणः । ननु च [1]"यः सर्वज्ञः सर्ववित्"

* श्रुतप्रकाशिका *

र्थान्यथाकरणप्रकरणत्वादत्रापि पूर्वमेव बाध्यमिति कर्मविचारे निश्चितम् । एव-मुत्तरशास्त्रस्येव मोक्षशास्त्रस्य निरवकाशत्वात् भेदावलम्बि शास्त्रं पूर्वशास्त्रवद्बाध्यत इत्यर्थः । परत्वञ्च पाठक्रमादर्थक्रमाच्च त्रिवर्गफलत्वेन हि कर्मणि प्रथमप्रावण्यम्. निरूपकस्य तत्त्वपरस्य हि मुमुक्षा, तादृशपौर्वापर्यरहितेषु विरोधगर्भेषु वेदान्तवाक्येषु सगुणोपासनपरेषु कथं निर्वाहः ? इत्यत्राह ( वेदान्तवाक्येष्वपीति ) अपिस्समुच्चये पूर्वोत्तरभागयोर्विरोधः परिहृतः, उत्तरभागे च विरोधः परिह्रियत इत्यर्थः । कथ-मत्रापच्छेदनायावतारः ? इत्यत्राह ( निर्गुणत्वादिति ) परशब्देनार्वाचीनसगुण-ब्रह्मव्यावृत्तिः । अपच्छेदन्यायावतरणफलभूतनिर्गुणत्वबोधदर्शनादपच्छेदनयो--ऽवतीर्ण इति बोद्धव्यमित्यर्थः । "जक्षन् क्रीडन् रममाणः" इत्यादिफलश्रुते-

❀ तत्त्वटीका ❀

शास्त्रोपमर्देन भोगनिवृत्तिरूपमुक्तिशास्त्रोदयः । ईदृशोदाहरणेष्वेव " पूर्वबाधेन नोत्पत्ति रुत्तरस्य हि सिध्यति" इत्युच्यते । एवमुत्सर्गापवादाद्युदाहरणान्तरेष्वपि निर्दोष-वाक्यसिद्धस्य निरवकाशेन बाधो निदर्शनीयः ॥ ननु वेदान्तेष्वपि सगुणोपास्ति-विधीनाञ्च भेदावलम्बित्वं सिद्धम्, न च तेषां निर्गुणवाक्यापेक्षया पूर्वत्वनियमः, अत-स्तेषु नापच्छेदनीतिरित्यत्राह ( वेदान्तेति ) सगुणब्रह्मोक्तिर्दहृष्ट्यादेरुपलक्षणार्था । उपासनपराणामित्यनेन सिद्धे तात्पर्यं नास्तीति व्यज्यते. पौर्वापर्याभावेपि तत्फलभूत-बाधस्य तात्पर्यलब्धत्वदर्शनादयमेव न्याय इत्युक्तम् । 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठ-न्ति जक्षन् क्रीडन्' इत्यादिसांसारिकफलोक्त्या तादृशविधानां मोक्षशास्त्रापेक्षया कर्म-शास्त्रवदार्थत्वं पूर्वत्वञ्च सिद्धम् । यद्वा, निर्दोषत्वेपि निरवकाशवाक्येन बाधकस्या-दित्युक्त एव न्याय इत्यर्थः । गुणविधिरेवात्रालम्भविधिन्यायान्निरवकाश इत्यत्राह ( निर्गुणत्वादिति ) निर्विशेषस्वरूपपरतया निरवकाशवाक्यैर्गुणबाधादिति भावः ।

१- मु. उ. २- मु. २- ख. ७- वा..

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' "सत्यकामः सत्यसङ्कल्पः" इत्यादिब्रह्मस्वरूपप्रतिपादनपराणां शास्त्राणां कथं बाध्यत्वम् ? निर्गुणवाक्यसामर्थ्यादिति ब्रूमः ॥ एतदुक्तं भवति "अस्थूलमनण्वह्रस्वमदीर्घम्" सत्यं ज्ञानमनन्तं ब्रह्म "निर्गुणं निरञ्जनम्" इत्यादिवाक्यानि निरस्तसमस्तविशेषकूटस्थनित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति; इतराणि च

---

* श्रुतप्रकाशिका *

स्तात्त्विकत्वातात्त्विकत्वनिरूपणानादरेण प्रथमं सगुणोपासने प्रावण्यम्, निरूपको हि निर्गुणपरब्रह्मवेदनाधिकारीति पौर्वापर्यमिति भावः । उपासनपरसगुणनिर्गुणवाक्ययोः फलद्वारा पौर्वापर्यमुक्तम्, तत्तु स्वरूपपरसगुणनिर्गुणवाक्ययोर्नास्तीति कथं तत्र बाध्यबाधकभावः ? इति चोदयति ( ननु चेति ) विधिनिषेधरूपं पौर्वापर्यं हृदि निधायाह ( निर्गुणेति ) कानि निर्गुणवाक्यानि, कथं तेषां सामर्थ्यम् ? इत्यत्राह ( एतदुक्तमिति ) अस्थूलेत्यादिवाक्यं गुणविशेषनिषेधपरं सत्यज्ञानादिवाक्ये व्यावृत्तिर्गर्भिता, निर्गुणमित्यादिवाक्यं गुणसामान्यनिषेधपरम्. आदिशब्देन यत्तदद्रेश्यमित्यादि गृह्यते । विरोधं स्फोरयति । ( निरस्तेति ) कूटस्थशब्दो निर्विकारत्ववाची सर्वाधिष्ठानत्ववाची वा. कूटवत्तिष्ठतीति हि कूटस्थः, नित्यचैतन्यमित्यन्तैः पदैरुदाहृतनिर्गुणश्रुत्यर्थः सङ्क्षिप्तः । ( इतराणि ) यः सर्वज्ञः

* तत्त्वटीका *

विधिपदानन्वयेन सिद्धविषयाणां सगुणवाक्यानां पूर्वत्वान्यपर्ययोरयोगान्न बाध्यत्वं स्यादित्यभिप्रायेण चोदयति ( ननु चेति ) कथमिति प्रतिक्षेपवचनं प्रश्नवद्भावयन् पौर्वापर्यमभिसन्धाय प्रतिवक्ति ( निर्गुणेति ) अनन्यपरसगुणवाक्यबाधसमर्थानि कानि वाक्यानि ? तेषाञ्च तद्भावे कीदृशं सामर्थ्यमित्यत्राह ( एतदुक्तमिति ) कूटस्थम्—विश्वविकाराध्यासे तन्निवृत्तौ च स्वयं कूटवत् स्थितम्. कूटे ऽध्यसनीये स्वयं सत्यतया सर्वाधिष्ठानत्वेन स्थितं वा । इतराणि— उपात्तानि 'यस्सर्वज्ञ' इत्यादीनि

सगुणम् । उभयविधवाक्यानां विरोधे तेनैवापच्छेद-न्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किञ्चिदपहीनम् ॥ ननु च "सत्यं ज्ञानमनन्तं ब्रह्म" त्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते ॥

* श्रुतप्रकाशिका *

इत्यादीनि पूर्वोपात्तानि वाक्यानि. चस्समुच्चये. सगुणनिर्गुणपरत्वादुभयविधवाक्यविरोधः। (तेनैव) पूर्वोत्तरभागविरोधे य उत्तरस्य प्राबल्यहेतुरुक्तस्तेनैवेत्यर्थः। निर्गुणवाक्यबलीयस्त्वं कुतः? इत्यत्राह (गुणापेक्षत्वेन परत्वादिति) निषेध्यविषयो हि निषेध उदेति, न हि निर्विषयो निषेधः, प्रागेव प्रसक्तस्य विषयस्य प्रतिषेध्यत्वम्। अतो निषेध्यसापेक्षत्वेन निषेधस्य परत्वमित्यर्थः। सगुणवाक्यवैय्यर्थ्यमप्युपासनविषयत्वात् परिहृतमित्यभिप्रायेण न किञ्चिदपहीनमित्युक्तम् ॥ यद्वा– यः सर्वज्ञ इत्यादिवाक्यानामप्युपासनशेषत्वाभिप्रायेणाह– वेदान्तवाक्येष्वपीत्यादि । उपासनपराणामिति । तान्यपि वाक्यानि फलविशेषार्थमुपासनपराणि, न तु तत्त्वपराणीति भावः । अपच्छेदन्यायावतारमुपपादयति– निर्गुणत्वादिति । पूर्ववदर्थः । निर्गुणत्वमसिद्धं–पूर्वापरभावाभावेनापच्छेदनयानवकाशात् गुणानां बाध्यत्वासिद्धेः । अत एव सगुणवाक्यानां वैय्यर्थ्यपरिहारश्च न घटते. स्वरूपपरतयैव प्रतिपन्नानामुपासनपरत्वकल्पनं हि बाध्यत्वसिद्ध्यधीनमिति चोदयति— ननु चेति । परिहरति-निर्गुणेति । अन्यत्सर्वं पूर्ववदेव ॥ निर्गुणवाक्यैः सहोपात्तस्य सत्यज्ञानादिवाक्यस्य सगुणपरत्वबुद्ध्या चोदयति (ननु चेति) चश्चोद्यसमुच्चये. सत्यज्ञानादयो गुणाः

ঌ तत्त्वटीका ঌ

तादृशान्यपि । चस्त्वर्थः, विरुद्धवर्गद्वयसमुच्चयपरो वा । तेनैव–भुक्तिमुक्तिशास्त्रयोरिह प्रदर्शितेनैवेत्यर्थः । निषेध्यप्रसञ्जकापेक्षया निषेधकस्य परत्वमर्थसिद्धमित्यभिप्रायेण गुणापेक्षत्वेनेत्युक्तम्. सगुणवाक्यानां निर्दोषत्वेनाप्यार्थेन पूर्वत्वेन बाध्यत्वमुपास्तिविधिशेषत्वक्लृप्त्या साफल्यात् कथञ्चित्प्रामाण्यञ्च स्यादित्यभिप्रायेणाह (न किञ्चिदिति) अत्र सत्यत्वादिविशिष्टपरं वाक्यं कथं निर्गुणवाक्यतयोपात्तमिति चोदयति (ननु चेति) सत्यज्ञानादयः– 'द्व्येकयो'रितिवद्भावप्रधानोक्तिः। आनन्त्यमव्यापित्व-

* श्रुतप्रकाशिका *

प्रतीयन्त इत्यत्र सत्यज्ञानशब्दौ सत्यत्वज्ञानत्वपरौ, यथा "द्व्येकयोर्द्विवचनैकवचने" इतिपाणिनिसूत्रस्थद्व्येकशब्दौ द्वित्वैकत्वपरौ, अन्यथा द्व्येकेष्विति वक्तव्यम् । तथा श्रीवत्साङ्कमिश्राः—"गुणाः सत्यज्ञानप्रभृतय उत" इति ॥ एतद्वाक्यवैशद्याय प्रथमं सामानाधिकरण्यं निरूप्यते, तद्धि विशदतरमुपन्यस्तं प्रमेयमालायामाचार्यपादैः । तथा हि भगवता पतञ्जलिना "लटः शतृशानचावप्रथमासमानाधिकरणे" 'तत्पुरुषः समानाधिकरणः कर्मधारय" इत्यादिसूत्रस्थसमानाधिरणशब्दविवरणार्थं सामानाधिकरण्यलक्षणमुक्तम् "भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति । अस्यार्थः— प्रवृत्तेर्निमित्तं प्रवृत्तिनिमित्तं, प्रकृष्टा वृत्तिः प्रवृत्तिः, शब्दस्यार्थे वृत्तिर्नाम तद्बोधनं, तत्र विशेष्यभूतप्रधानार्थविषया वृत्तिः प्रवृत्तिः, विशेष्यप्राधान्यं च गुणानां प्रतिपत्तिर्हि गुणिप्रतिपत्त्यर्थेत्यनेन सिद्धम्, तस्याः प्रवृत्तेर्निमित्तं द्वारं 'निमित्तमात्रं भव सव्यसाचिन्' इत्यादिप्रयोगात्. तच्च विशेषणीभूतजातिगुणादिकं, समानम्—एकम्. अधिकरणं विशेषणानामाधारभूतं विशेष्यम् । एकस्मिन्नर्थे वृत्तिरित्येकशब्देन समानशब्दस्य सदृशार्थपरत्वं व्युदस्तम्, समानशब्दसामर्थ्यादेकशब्दः साधारणपरः, समानशब्दो हि साधारणे प्रयुज्यते 'समानकर्तृकयोः पूर्वकाल" इति । अर्थशब्दश्च विशेष्यभूतप्रधानाभिधेयपरः, अनेनाधिकरणशब्दो विशेष्यपरत्वेन व्याख्यातः । एतदुक्तं भवति—त्रिविधाः शब्दाः, केचिद्विशेषणतो विशेष्यतश्चैकार्थाः, यथा—घटः कुम्भः नीलं कृष्णमित्यादयः । केचिच्चोभयतश्च भिन्नार्थाः, यथा— गौरश्वो महिषः नीलं शुक्लं पटमित्यादयः । केचिच्च विशेषणतो भिन्नार्थाः विशेष्यतश्चैकार्थाः, यथा—नीलमुत्पलं देवदत्तः श्यामो युवा लोहिताक्ष इत्यादयः । तत्र पूर्वकोटिद्वयव्यावृत्ततृतीयकोटिनिविष्टानां शब्दानां सामानाधिकरण्यम्. तत्र भिन्नप्रवृत्तिनिमित्तानामित्यनेन विशेषणतो विशेष्यतश्चैकार्थानां घटः कुम्भ इत्यादीनां न सामानाधिकरण्यमित्युक्तम् । एकस्मिन्नर्थे वृत्तिरित्यनेनोभयतो भिन्नार्थानां गौरश्वो महिष इत्यादीनां न सामानाधिकरण्यमित्युक्तम् ; तस्माद्विशेषणतो भिन्नार्थानां विशेष्यतश्चैकार्थानां नीलमुत्पलमित्यादीनामेव सामानाधिकरण्यमिति । तत्र प्रवृत्तिनिमित्तशब्दयोरेवं वार्थः—प्रवृत्तिरभिधानं, निमित्तमभिधेयम्. अर्थशब्दश्चाभिधेयवचनः, भिन्नाभिधेयानां शब्दानामेकस्मिन्नभिधेये

* श्रुतप्रकाशिका *

वृत्तिः सामानाधिकरण्यमिति भिन्नविशेषणाभिधायिनां शब्दानामेकस्मिन् विशेष्ये वृत्तिः पर्यवसानं सामानाधिकरण्यमित्युक्तं भवति । भिन्नपदसामर्थ्येन निमित्तशब्दनिर्दिष्टं विशेषणभूतमभिधेयम्. एकशब्दसामर्थ्येन चार्थशब्दनिर्दिष्टं विशेष्यभूतमभिधेयमित्यवगम्यते; अत उभयथाप्यनेकविशेषणाभिधायिनां शब्दानामेकस्मिन् विशेष्ये पर्यवसानं सामानाधिकरण्यमिति भिन्नप्रवृत्तिनिमित्तानामित्यादिना सामानाधिकरण्यलक्षणवाक्येनोक्तं भवति । उक्तादर्थादपि पूर्वोक्तस्साधीयान्. समानधिकरणपदेषु प्रातिपदिकं विशेषणान्वयपरं, तत्समानविभक्तिर्विशेष्यैक्यपरा. समानविभक्त्यैक्यबोधनं वृत्तिशब्देन विवक्षितम्, तेन राजा तस्य पुत्रश्च दर्शनीयावित्यत्र राजतच्छब्दयोः सामानाधिकरण्यानिवृत्तिः, तत्र हि प्रकृतपरामर्शितच्छब्दप्रातिपदिकादैक्यावगमः, न तु समानविभक्त्या । ननु नीलान्युत्पलानीत्यत्र सामानाधिकरण्यं न स्यात्, विशेष्यबहुत्वादेकार्थवृत्तित्वानुपपत्तेः । नैवम्—एकस्मिन्निति पदस्य समभिव्याहृतपदान्तरोपस्थापिताकारानधिकरणत्वव्यावृत्त्यर्थत्वात्. तत्तत्पदोपस्थापितानेकविशेषणापेक्षया साधारणत्वं ह्येकशब्दार्थः, न हि नीलान्युत्पलानीत्यत्र नीलत्वानधिकरणेषूत्पलत्वं वर्तते; अतस्तत्र सामानाधिकरण्यमुपपन्नम्. अतस्सामानाधिकरण्यलक्षणग्रन्थस्य यथोक्त एवार्थ इति । अत्र मृषावादिन आहुः—सामानाधिकरण्यवाक्यमखण्डार्थं, तथा हि, सामानाधिकरण्यस्य तावदेकार्थपरत्वमविगीतं, तत्र समानाधिकरणपदानि किं विशेषणमात्रपराणि, उत विशेषणविशिष्टपराणि, उत स्वरूपमात्रपराणीति विवेचनीयम्. न तावद्विशेषणमात्रपराणि, विशेषणानामनेकार्थत्वादेकार्थत्वासिद्धेः, नापि विशिष्टपराणि, विकल्पासहत्वात्. किं क्रमेण युगपद्वा विशिष्टार्थप्रतिपादनं पदानाम् ? न तावत्क्रमेण । तत्र किं प्रथमपदप्रतिपन्नविशिष्टस्य पदान्तरं स्वोपस्थापितविशिष्टेन तादात्म्यं विदधाति; उत विशेषणान्तरान्वयम् ? प्रथमे विशिष्टैक्ये विधीयमाने विशेष्यांशयोरिव विशेषणांशभूतयोर्जातिगुणयोरप्यैक्यं प्रसजेत् । द्वितीये च विशेषणानामन्योन्यसमवायप्रसङ्गः, प्रथममेकेन विशेषणेन विशिष्टतयावगतस्य वस्तुनः पश्चाद्विशेषणान्तरविशिष्टतया बोधनं हि विशेषणान्तरान्वयप्रतिपादनम्; तत्र विशिष्टं प्रति विशेषणतयान्वीयमानं पूर्वविशेषणस्यापि विशेषणं भवतीति विशेषणानामन्योन्यविशेषणविशेष्यभावप्रसङ्गो हि

* श्रुतप्रकाशिका *

दुर्वारः । अवर्जनीयं च पदानां क्रमेणार्थप्रतिपादनं, कुतः ? उद्देश्योपादेयविभागवत्त्वात् सर्ववाक्यानाम्, नापि युगपत्. उद्देश्योपादेयविभागहानिप्रसङ्गेन युगपत् प्रतिपादनासम्भवात्. सम्भवेपि विशेषणानां परस्परैक्यप्रसङ्गाच्च. तथाहि—प्रातिपदिकानां विशिष्टार्थपरत्वे प्रातिपदिकार्थैक्यपरस्य समानविभक्तिनिर्देशस्य विशिष्टैक्यपरत्वमवश्याश्रयणीयमिति विशेष्यैक्यवद्विशेषणानामप्यैक्यं प्रतिपाद्यं स्यात् ; तदनुपपत्त्या विशेष्यस्यापि नैक्यं प्रतिपादयितुमलं समानविभक्तिनिर्देशः । किञ्च विशिष्टपरत्वे विशेषणविशेष्याभ्यामनेकार्थत्वं विशेषणबहुत्वाच्चानेकार्थत्वम्, ततश्च सामानाधिकरण्यं न सिध्यति । किञ्च विशेषणानां व्यावर्तकत्वस्वाभाव्याद्विशेषणभेदेन विशेष्यभेदप्रसङ्गो दुर्वारः । तथाहि—भेदकं विशेषणं भेद्यं विशेष्यमिति हि विशेषणविशेष्ययोस्स्वरूपविवेकः, दृश्यते च विशेषणानां विशेष्यभेदकत्वम् ; यथा खण्डो मुण्डः घटः पट इत्यादिषु । ननु नीलमुत्पलं देवदत्तः श्यामो युवेत्यादिषु विशेषणभेदेपि विशेष्यैक्यं दृश्यते । नैष दोषः, अत्र हि स्वतः प्राप्तं विशेषणानां विशेष्यभेदकत्वं प्रत्यक्षविरोधेनापोह्यते, प्रत्यक्षागोचरे तु ब्रह्मणि विशेषणभेदप्रयुक्तो विशेष्यभेदः केन वार्यते ? तस्माद्वस्तुमात्रपरमेव समानाधिकरणवाक्यम् । नीलमुत्पलमित्यादिवाक्य इव सत्यादिवाक्येप्येकवचनान्तधर्मिवाचिपदैक्येन विशेष्यैक्यसिद्धिरिति चेन्न, खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्र विशेष्यभेदात् । ननु विशेषणभेदो न विशेष्यैक्यविरोधी, प्रत्यक्षमेव तु तद्विरोधि, प्रत्यक्षागोचरे ब्रह्मण्येकवचनान्तधर्मिवाचिपदैक्येन स्वतःप्राप्तमेकत्वं दुर्निवारमिति चेन्न; खण्डो मुण्डः पूर्णशृङ्गो गौरिति परोक्षविषयवाक्येपि विशेष्यभेदप्रतीतेः, अतो न धर्मिवाचिपदैक्यं परोक्षब्रह्मण्यैक्यप्रतिपादनक्षमम्; तस्माद्विशेषणभेदप्रयुक्तो विशेष्यभेदो दुर्वारः, ततश्चैकार्थत्वं न सिध्यति, अतः पारिशेष्यात् समानाधिकरणपदानां स्वरूपमात्रप्रतिपादनपरत्वमास्थेयम् । एवं तर्हि पदानां पर्यायत्वम् एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यं प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च प्रसजेत् । नैवम्—एकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन पदानामर्थवत्त्वमपर्यायत्वं निमित्तभेदलाभात् सामानाधिकरण्यलक्षणसिद्धिश्च ; अत एव जगत्कारणत्वशङ्किताऽनृतत्वजडत्वपरिच्छिन्नत्वदोषव्यावृत्तिः सत्यज्ञानादि-

नेत्युच्यते, सामानाधिकरण्येनैकार्थत्वप्रतीतेः । अनेक-

* श्रुतप्रकाशिका *

वाक्येन क्रियते । न च व्यावृत्तिरूपधर्मवत्त्वं ब्रह्मणः प्रसज्येत, ब्रह्मस्वरूपस्यैव सकलेतरव्यावृत्तिरूपत्वात्. यथा—शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्पदार्थस्वरूपमेव, न धर्मान्तरम्. धर्मान्तरानुपलम्भात्, तदभ्युपगमेऽनवस्थानाच; अतः कार्ष्ण्यव्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमितिपदानां शौक्ल्यस्वरूपमात्रविषयाणां व्यावर्त्यभेदेन यथा न पर्यायत्वमर्थवत्त्वमेकार्थत्वञ्च. अत एव सामानाधिकरण्यलक्षणवत्त्वं च, तथा सत्यादि-पदानामपि व्यावर्त्यभेदेन न पर्यायत्वदोषप्रसक्तिः । नन्वेवं तत्तत्पदार्थविरोधि-व्यावृत्तपरत्वे लक्षणा स्यात् । नैवम्, अवाच्योपस्थापने हि लक्षणा, यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गङ्गापदस्य कूलोपस्थापने, न हि कूलं गङ्गापदवाच्यम्, अत्र तु सत्यादिपदानां वाच्यैकदेशभूतविशेषणपरित्यागेऽपि, वाच्यप्रधानांशभूतविशेष्य-स्वरूपप्रतिपादनान्न लक्षणाप्रसङ्गः, तथापि विशिष्टवाचिनः शब्दस्य विशेष्यमात्र-परत्वे स्वारस्यभङ्ग इति चेत्, नैष दोषः, समानाधिकरणवाक्येष्वेकार्थपरत्वबलात् विशेषणपरित्यागेन स्वरूपमात्रपरत्वमेव पदानां स्वारसिकं, तथा व्युत्पत्तेः,. व्यधि-करणवाक्येषु पदानां विशिष्टपरता स्वारसिकी, लक्षणाभ्युपगमेऽपि न दोषः, वाक्यतात्पर्यानुगुणा हि लक्षणा तद्विरोधिमुख्यवृत्तेर्बलीयसी दृष्टा, यथा गङ्गापदे समानाधिकरणवाक्यस्य हि ऐक्य एव तात्पर्यमिति सर्वसम्मतम् । ननु सर्वपदानां लक्षणा न दृष्टा अयुक्ता च. केनचिन्मुख्यवृत्तेन तात्पर्ये निश्चिते हि पदान्तरलक्षणा युक्ता, सर्वपदलक्षणाङ्गीकारे किं तात्पर्यनिश्चायकम् ? उच्यते,—दृष्टा तावत् 'विषं भुङ्क्ष्वे'त्यादिषु सर्वपदलक्षणा, तत्र विषपदं निषिद्धभोज्यं लक्षयति, भुङ्क्ष्वेति भोजननिवृत्तिं, तत्र योग्यतादिवशाद्वाक्यतात्पर्यनिश्चयः, सत्यादिवाक्येषु समान-विभक्तिबलादैक्यतात्पर्यनिश्चयः, तदविरोधाय प्रातिपदिकानां लक्षणा स्वीकृता, एकपदलक्षणायामपि वाक्यतात्पर्यविरोध एव हि हेतुः, यथा गङ्गायां घोष इत्यादिषु. तदविरोधे एकस्यापि न दृष्टा, यथा गङ्गायां मत्स्याः प्रतिवसन्तीत्यादिषु, अतो वाक्यतात्पर्याविरोधाय एकस्येव सर्वपदानां लक्षणा न दोषः, तस्मात्समानाधि-करणवाक्यं वस्तुमात्रपरमेवेति । एतदभिप्रायेण प्रत्यवतिष्ठते ( नेत्युच्यत इति )

गुणविशिष्टाभिधानेऽप्येकार्थत्वमविरुद्धम्—इति चेत्; अनभिधानज्ञो देवानां प्रियः। एकार्थत्वं नाम– सर्व-

* श्रुतप्रकाशिका *

सत्यज्ञानादयो गुणाः प्रतीयन्त इति चोदिते नेत्युच्यत इति वदतोऽयं भावः प्रतीयन्त इति आपातप्रतीतिमात्रविवक्षा चेत्तथा न किञ्चित्प्रयोजनं, प्रमितिविवक्षा चेत् न तु प्रमितिर्जायत इत्युपपाद्यत इति। कुतः? इत्यत्राह (सामानाधिकरण्येनैकार्थत्व-प्रतीतेरिति) शङ्कते–(अनेकेति) यथा व्यधिकरणवाक्येषु भिन्नार्थपर्यवसायि-कारकपदार्थापरित्यागेऽपि प्रधानार्थकार्यस्यैकत्वम् "अर्थैकत्वादेकं वाक्यम्" इत्यत्र निश्चीयते. तथा समानाधिकरणवाक्येष्वपि विशेषणभूतगुणवाचिशब्दार्था-परित्यागेऽपि विशेष्यैक्यं सिद्ध्यतीत्यर्थः। चोदयन्तमुपालभते (अनभिधानज्ञ इति) व्यधिकरणसमानाधिकरणवाक्ययोरभिधानविशेषानभिज्ञ इत्यर्थः। देवानां प्रियः–मेषः, अज्ञ इत्यर्थः। परिहरति (एकार्थत्वमिति) एकार्थत्वं नाम–सर्वपदाना-मेकाभिधेयपर्यवसानं, न तु वाक्यस्येत्यर्थः। पृथक्पृथगर्थपर्यवसायिनां पदानामेक-

* तत्त्वटीका *

रूपो गुण इति बुद्ध्या बहुवचनम् । अयं भावः,— अत्र गुणप्रतीतिर्नापह्नोतुं शक्या, तस्याश्च बाधाभावात् स्वतःप्रमात्वं सुस्थमिति । सेयं प्रमितिरिति युक्त्या स्थापयिष्यत इत्याह (नेत्युच्यत इति) एकार्थतात्पर्याहेत्वरूपवृत्त्या गुण-भेदधीर्बाध्येत्याह (सामानाधिकरण्येनेति) कारकभेदक्रियैक्यबुद्ध्योरिव विशे-षणभेदविशेष्यैक्यधियोरविरोधान्न बाध्यबाधकतेति चोदयति (अनेकेति) सामा-नाधिकरण्यव्यधिकरणपदानां वृत्तिवैषम्यमेकार्थशब्देनान्वययोगव्यवच्छेदश्च न जाना-सीत्युपालम्भमुखेन वक्ति (अनभिधानेति) देवानां प्रिय इति अज्ञातनाम्नामुपचार-प्रयोगः, इह त्वप्रख्यात इत्यर्थः। छाग इत्येके, तदाप्यज्ञ इति यावत् । तदज्ञातं स्वाभिप्रेतं विवृणोति (एकार्थत्वमिति) त्रेधा पदानामर्थैक्यं, प्रकृतिप्रत्ययसमुदाय-बोध्यप्रातिस्विकविशेष्यैक्यम् 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इत्येता-वता मिथोऽन्वितार्थपदजातबोध्यप्रधानैक्यं पदभेदेऽर्थभेदाभावश्चेति. तेष्वाद्यं पदमात्रे, द्वितीयं व्यधिकरणवाक्ये, तत्र तृतीयमिह मदुक्तं. तच्च 'भिन्नप्रवृत्तिनिमित्तानां शब्दाना-

## पदानामर्थैक्यम्; विशिष्टपदार्थाभिधाने विशेषणभेदेन

* श्रुतप्रकाशिका *

प्रधानार्थोन्वयादर्थैकत्वं व्यधिकरणवाक्य एव, समानाधिकरणवाक्ये तु पदानामेवैकार्थपर्यवसायित्वमुक्तं भवति। ततः किमित्यपेक्षायां समानाधिकरणपदानां विशेषणमात्रपरत्वे विशिष्टपरत्वे च दूषणमेकग्रन्थेनाह (विशिष्टेति) विशिष्टेत्यादिना कृत्स्नवाक्येन विशिष्टपक्षे दूषणमुक्तम्। विशेषणभेदेन—विशेषणानामन्योन्यतो विशेष्याच्च भेदेन। विशेषणैर्विशेष्येण चानेकार्थत्वं स्यादित्यर्थः। किञ्च अर्थशब्दो विशेष्यपरतया च विवक्षितः, तेन विशेषणभेदेन विशेष्यभेदः स्यादिति दूषणान्तरमुक्तं भवति। किञ्च विशेषणभेदेन विशेष्यभेद इत्युक्ते व्यतिरेकवशाद्विशेष्याभेदे विशेषणाभेदश्च स्यादित्युक्तं भवति। विशिष्टैक्यप्रतिपादिका समानविभक्तिर्हि अविशेषेण विशेष्यैक्यवद्विशेषणैक्यमपि प्रतिपादयतीत्यभिप्रायः। एवं विशिष्टपरत्वे युगपदभिधानपक्षे दूषणमुक्तं भवति, उद्देश्योपादेयविभागहानिप्रसङ्गश्चार्थसिद्धः, क्रमेणाभिधाने अन्योन्यसमवाय आनन्दमयाधिकरणे वक्ष्यते, विशेषणभेदेनार्थभेद इत्येतावतांशेन विशेषणमात्रपरत्वे च दूषणमुक्तं भवति, विशेषणानामनेकत्वादेकार्थत्वहानिरित्यर्थः।

७ तत्त्वटीका ७

मित्यादिपतञ्जलिवाक्यप्रसिद्धमित्यभिप्रायेण नामशब्दः। एवमप्यस्य प्रधानप्रतिपाद्यविशेष्यभेदाभावमात्रपरत्वे को विरोध इत्यत्राह (विशिष्टेति) विशेषणभेदेनेत्येतद्बहुधा योज्यं, विशेषणानां मिथो विशेष्याच्च भेदेन विशेषणभेदेनैव विशिष्टभेदात् विशेष्यभेदप्रसङ्गेन चेति—

भेदकं हि स्वभावेन प्रत्यक्षाद्यनिराकृतम्।
विशेषणान्तराधारात् स्वाधारं भेत्तुमर्हति ॥ ७ ॥

श्यामो युवा इत्यादौ दृष्टत्वादेव विशेषणानां भेदकत्वस्वभावोपोदितः। इह तु भेदकं विशेषणं भेद्यं विशेष्यमिति व्यवस्थाया नित्यातीन्द्रिये शब्दोपस्थाप्ये कः प्रतिरोद्धा? अनावृत्त एकवचनान्तो विशेष्यशब्द इति चेन्न. जात्यैकत्वविवक्षयापि तदुपपत्तेः, यथा खण्डो मुण्डो गौरिति। प्रत्यक्षबलात्तत्र भेद इति चेन्न, अप्रत्यक्षेपि तथोक्तौ व्यक्तिभेदबुद्धेः, तद्वद्गत्राणि। किञ्च, तेन तेन पदेनोद्दिष्टे विशिष्टे

पदानामर्थभेदोऽवर्ज्जनीयः; ततश्चैकार्थत्वं न सिद्ध्यति। एवं तर्हि सर्वपदानां पर्यायता स्यात्, अविशिष्टार्थाभिधायित्वात्। एकार्थाभिधायित्वेऽपि अपर्यायत्वमव-

* श्रुतप्रकाशिका *

एवं पदानां प्रतिपाद्यभेदः प्रसञ्जितः। ततः किमित्यत्राह। (ततश्चैकार्थत्वं न सिद्ध्यतीति) सामानाधिकरण्यलक्षणासिद्धिरित्यर्थः। अतो वस्तुमात्रपरमिति परिशेषसिद्धम्, तदनुवादेन चोदयति (एवमिति) एवं तर्हि—वस्तुमात्रपरत्वे। कुत इत्यत्राह (अविशिष्टार्थाभिधायित्वादिति) अनेन ततश्चैकार्थत्वं न सिद्ध्यतीत्यत्र फलितोऽर्थो विवृतः। अत्र पर्यायत्वचोद्ये प्रवृत्तिनिमित्तभेदाभावात् सामानाधिकरण्यलक्षणहानिः, एकतरपदवैयर्थ्यं चेति चोद्यद्वयमभिप्रेतं, परिहरिष्यमाणत्वात्। उक्तचोद्यत्रयं परिहर्तुमाह (एकार्थेति) अवहितमनाः शृणु—प्रतिवचनस्यानेकवाक्य-

७ तत्त्वटीका ७

पदान्तरार्थविधौ विशेषणानां मिथस्समवायस्स्यात्, उपादेयस्य यावदुद्देश्यव्यापित्वात् तथाच तेषां विशेषणस्वरूपात् भेदेन नानाविशिष्टापत्तिः। किञ्च—

विशिष्टार्थाभिधेयित्वे भेदकेष्वपि भेद्यवत्।
अन्योन्यसमवायैक्यप्रसङ्गौ चात्र तन्त्रितौ ॥ ७ ॥

तथाहि,--विशेषणभेदेन विशेषणानां परस्परसमवायतादात्म्याभ्यामन्यथाभावेन पदानामप्युत्पन्ना प्रामाणिकार्थभेदः, विशिष्टविधावपि समानविभक्तिर्विशेष्यांशमिव विशेषणांशमप्यैकीकुर्यात्, प्रकृत्युपस्थापितैक्यपरत्वात् तदापि स्वान्यैक्याद्विशेषणानां स्वस्माद्भेदः स्यात्, इत्यादयः प्रसङ्गा इहाभिप्रेताः। एतैः फलितं प्रसङ्गान्तरमाह (तत इति) विशिष्टस्यैवमनभिधेयत्वे विशेषणमात्रोक्तिर्दूरापास्तेति मत्वा विशेष्यमात्रपक्षे चोदयति (एवं तर्हीति) उक्तप्रकारेण विशेष्यमात्रपरत्वे सतीत्यर्थः। भिन्ननिमित्तानामनुपपत्त्या निमित्तत्यागे कथं पर्यायत्वमित्यत्राह (अविशिष्टेति) एकपदोक्तमात्राभिधायित्वादिति यावत्। अतएव पदान्तरवैयर्थ्यात् पर्यायत्वं सामानाधिकरण्यभङ्गश्च स्यात्। आहुश्च "नातत्त्वं मन्यसे तावत् न तत्त्वमपि मंस्यसे। सामानाधिकरण्यं हि रूपभेदमपेक्षते"॥ इति। विवक्षितस्य लोकोत्तीर्णत्वान्नैतत्त्वरमाणेऽत्र

**हितमनाः शृणु; एकत्वतात्पर्यनिश्चयादेकस्यैवार्थस्य तत्तत्पदार्थविरोधिप्रत्यनीकत्वपरत्वेन सर्वपदानामर्थवत्त्वमेकार्थत्वमपर्यायता च ॥**

* श्रुतप्रकाशिका *

साध्यत्वान्मध्ये न चोदनीयं, किन्त्वर्थस्य गहनत्वादवधातव्यमिति भावः । अनुपपत्तित्रयं परिहरति ( एकत्वेत्यादिना ) एकत्वतात्पर्यनिश्चयः समानविभक्त्या। अर्थवत्त्वम्—प्रयोजनवत्त्वम् । व्यावर्त्यभेदकृतव्यावृत्तिभेदादपर्यायत्वं व्यावृत्तिरूपप्रवृत्तिनिमित्तलाभात् सामानाधिकरण्यसिद्धिर्व्यावृत्तिबहुत्वात् पदानां तत्तद्व्यावृत्तिरूपप्रयोजनवत्त्वं चेत्यर्थः ॥

ननु तत्त्वमस्यादिवाक्यवदन्वयमुखेनोपलक्षणं स्यात्, किमर्था व्यावृत्तिः ? व्यावृत्तिबहुत्वादनेकार्थत्वमापतितं, व्यावर्त्याकारानन्त्यात् कतिपयपदैर्न तद्व्यावृत्तिः शक्यते कर्तुं, ब्रह्मणो येभ्यो व्यावृत्तिः—कानि तानि वस्तूनि ? ब्रह्मणोऽनेकव्यावृत्तिमत्त्वात्

ः तत्त्वटीका ः

लभ्यमित्यवहितेन क्रमेणेदं बोद्धव्यमित्यभिप्रायेणाह ( एकार्थाभिधायित्वेपीति ) उक्तप्रसञ्जकानुवादोयम्. तेन त्वदुक्तं न प्रसज्यत इत्याह ( एकत्वेति ) अयं भावः,—वाक्यतात्पर्यानुसारेण हि सर्वत्रोपचारः, अत्र च स्वरूपप्रबुभुत्सया समानविभक्त्या चार्थैक्ये तात्पर्यं निश्चितम्, तेन विशेषणाभिधानं त्यक्तं, तत्फलभूतव्यावृत्तिपरत्वन्तु स्थितं, तदिह विरोधिव्यावृत्तिभेदैः प्रतिपदं प्रयोजनं सामानाधिकरण्यलक्षणानुगुणमैकार्थ्यं निमित्तभेदव्युत्पत्तिफलैः पर्यायत्वनिरासश्च स्यादिति । उक्तञ्च सुरेश्वराचार्यैः— "प्रतिपद्य पदार्थं हि विरोधात्तद्विरोधिनः । पश्चादभावं जानाति वध्यघातकवत्पदात् ॥ शब्दात्प्रतीयते तावत्सङ्गतिर्धर्मधर्मिणोः । मानान्तरादपोहस्तु न शाब्दस्तेन संस्मृतः ॥ तत्रानन्तोनन्तवस्तुव्यावृत्त्यैव विशेषणम् । स्वार्थार्पणप्रणाड्यैव परिशिष्टो विशेषणम् ॥" इति । तद्विरोध्यभेदिनश्चाहुः— "व्यावर्त्याभाववत्त्वैव भाविकी हि विशेष्यता" इति ।

ननु एकत्वतात्पर्येपि तत्त्वमस्यादिवदुपलक्षणमुखेन स्वरूपैक्यपरत्वमस्तु. सर्वेभ्यश्च व्यावृत्तिर्विशेषतो दुर्वचा. अप्रयोजकत्वेन सङ्ग्रहेप्येकेनालं, व्यावृत्तीनां

एतदुक्तं भवति—लक्षणतः प्रतिपत्तव्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम् । तद्विरोधिरूपं सर्वमनेन पदत्रयेण फलतो व्युदस्यते । तत्र सत्यपदं विकरास्पदत्वेना-

* श्रुतप्रकाशिका *

सधर्मत्वम्, व्यावृत्तीनां धर्मत्वानभ्युपगमे पदानां पर्यायत्वमित्याद्यनेकशङ्कापरिहारार्थमाह (एतदुक्तं भवतीति) लक्षणतः—स्वरूपलक्षणतः, न तु तटस्थलक्षणतः । अनेन जगत्कारणत्वशङ्कितदोषव्यावृत्तये ब्रह्मणः सकलेतरविरोधित्वं प्रतिपादयदिदं शोधकवाक्यं व्यावृत्तिपरं भवितुं युक्तमित्युक्तं भवति । बहुव्यावृत्तिभिरनेकार्थत्वप्रसङ्गं परिहरति (तद्विरोधिरूपमिति) (फलतो व्युदस्यत इति) इदं वाक्यं स्वरूपमात्रपरमेव, अत ऐकार्थ्यं, व्युदासस्तु फलित इति भावः । व्यावर्त्याकारबहुत्वात् कतिपयपदैर्व्यावृत्तिर्न शक्येत्येतत्परिहरति (सर्वमनेन पदत्रयेण फलतो व्युदस्यत इति) प्रयोजकरूपेण व्युदासे सर्वमपि व्युदस्तं भवतीत्यर्थः । विरोधीनि कानीत्यत्राह (तत्रेति) जगत्कारणत्वेन तुच्छता व्यावृत्ता । किमर्थमसत्यव्यावृत्ति-

* तत्त्वटीका *

धर्मत्वे ताभिः प्रतिपदोपस्थापितव्यावृत्तिभेदात्सविशेषणत्वं तद्बहुत्वादैकार्थ्यभङ्गो विशेष्यभेदप्रसङ्गश्च, स्वरूपत्वे तु प्रयोजनभेदाभाव इत्याशङ्क्याह (एतदुक्तमिति) ब्रह्मविदाप्नोति परमिति प्रस्तुतं ब्रह्म किमिति बभुत्सिते कारणत्वस्य तटस्थतया स्वरूपलक्षणतोप्यत्र तत्स्वरूपं शोध्यते. तत्र विशेषणोक्तिराम्रप्रश्ने कोविदारप्रत्युक्तिवत् स्यात् . लक्षणञ्च सर्वत्र व्यावृत्त्यर्थमेवेत्यभिप्रायेणाह (लक्षणत इति) रूपमिह स्वरूपम् . निश्शेषव्यावृत्तिः प्रयोजकेन सङ्ग्रहात्सुवचेत्याह (तद्विरोधीति) अत्र रूपं स्वरूपं वानृतत्वादिः ब्रह्मेतरव्यासधर्मो वा । अनेन— प्रत्येकं कृत्स्नव्युदासक्षमेण । नहि पदान्तरमेवंविधमस्तीत्यभिप्रायेण पदत्रयोक्तिः । एकेन पर्याप्तेपि प्रयोजनकार्त्स्न्यार्थमेतावद्वक्तव्यम्, आनन्दपदस्य तु उपलक्षणमेतत् . फलतः— विरोधिव्युदासस्य फलत्वान्नात्र स्वरूपमात्रत्वं विरोध इति भावः । पदानां पृथक् प्रयोजनानि व्यनक्ति (तत्रेति) तस्मिन्— पदत्रय इत्यर्थः । प्राकरणिकेन कारणत्वेन तुच्छत्वव्यावृत्तौ सिद्धायां शङ्कितं विकारित्वेनानृतत्वमत्र सत्यपदेन व्युदस्तम् . वस्तुशब्दोत्र व्याव-

सत्याद्वस्तुनो व्यावृत्तब्रह्मपरम्, ज्ञानपदं चान्याधीनप्रकाशजडरूपाद्वस्तुनो व्यावृत्तपरम् । अनन्तपदं च देशतः कालतो वस्तुतश्च परिच्छिन्नव्यावृत्तपरम् । न च व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः, अपि तु सकलेतरविरोधि ब्रह्मैव । यथा शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिस्तत्पदार्थस्वरूपमेव, न धर्मान्तरम् । एव-

* श्रुतप्रकाशिका *

रित्यत्रोक्तम्—विकारास्पदत्वेनासत्यादिति. स्तब्धशीतादिसाधारणजडशब्दविवरणार्थमन्याधीनप्रकाशशब्दः । यद्यपि सत्यादिष्वेकैकपदेन समस्तव्यावृत्तिसिद्धिः, तथाऽपि ब्रह्मणि शङ्कितस्वेतरपदार्थगतविरोध्याकारस्यैकपदेनानिवर्त्तनात् पदत्रयसाफल्यम् । व्यावृत्तिभिः सधर्मकत्वं परिहरति ( नचेति ) प्राभाकरपक्षे सिद्धान्तिमते च भावरूपधर्मः, वैशेषिकादिमते त्वभावरूपधर्मः, तस्माद्भावरूपोऽभावरूपो वेत्युक्तम् । व्यावृत्तिर्धर्मो न चेत् किं स्यादित्यत्राह ( अपि त्विति ) शुक्त्यादौ हि धर्मस्य व्यावृत्तित्वं रजतादिविरोधित्वादभ्युपगम्यते, एवं ब्रह्म सकलेतरविरोधित्वात्स्वयमेव व्यावृत्तिरित्यर्थः । स्वरूपस्यैव व्यावृत्तित्वे दृष्टान्तमाह ( यथेति ) शौक्ल्यादेः कार्ष्ण्यादिव्यावृत्तिर्न धर्मान्तरम्, अनुपलम्भात्, धर्मान्तरत्वेऽनवस्थानाच्चेत्यभिप्रायः । तर्हि पदानां पर्यायत्वं स्यादित्याशङ्क्य कार्ष्ण्यव्यावृत्तं पीतिम-

* तत्त्वटीका *

हारिकसत्यार्थः, अन्याधीनप्रकाशत्वं जडशब्दार्थः । असङ्कोचादनन्तपदेन त्रिविधपरिच्छेदव्यावृत्तिरुक्ता । यदि व्यावृत्तयो भावरूपा धर्मास्तदा सत्यत्वादीन्येव स्युः, अभावरूपा अपि तत्तुल्यचोद्या इत्यत्राह ( न चेति ) तदापि नैष्फल्यप्रसङ्गं परिजिहीर्षुराह ( अपि त्विति ) व्यावृत्तिर्हि यथा स्वत एव स्वेतरव्यावृत्तिस्तद्वद्ब्रह्मस्वरूपमेव सकलेतरविरोधित्वात् स्वयं सर्वव्यावृत्तिः भावाद्वैतपक्षस्तु भीरुकल्पित इति भावः । भावस्याभावत्वमेकस्यानेकत्वञ्च कथमित्यत्र भावान्तराभावपक्षे तिष्ठन्निदर्शयति ( यथेति ) अवधारणेन धर्मान्तरमुपलम्भं व्यनक्ति अन्यथानवस्थामभिप्रेत्याह

मेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थ-वत्तरमेकार्थमपर्य्यायञ्च पदत्रयम् ॥

तस्मादेकमेव ब्रह्म स्वयंज्योतिर्निर्धूतनिखिलविशेष-

* श्रुतप्रकाशिका *

व्यावृत्तं रक्तिमव्यावृत्तं शौक्ल्यमिति दृष्टान्तवाक्याभिप्रायेण परिहरति (एकस्येति) व्युदसनीयव्युदासभेदेन पदानां प्रयोजनवत्त्वम्, तत एवापर्यायत्वमित्यर्थः । प्रतियोग्यवच्छिन्नवेषेण प्रवृत्तिनिमित्तलाभात् सामानाधिकरण्यलक्षणासिद्धिश्चेत्य-भिप्रेतम् । पर्यायत्वादिप्रसङ्गपरिहार ऐकार्थ्याविरोधेन कृत इत्यभिप्रायेणोक्तम्—एका-र्थमिति. स्वरूपमात्रपरत्वादैकार्थ्यं हि रक्षितम् । (अर्थवत्तरमिति) तरप्प्रत्ययेन दृष्टान्ताच्छौक्ल्यात् भेदवाद्यभिमतगुणपरत्वाच्च प्रयोजनाधिक्यमभिप्रेतम् । अपरोक्ष-भूतो हि शौक्ल्यादिदृष्टान्तः, तत्र स्पष्टार्थं कार्ष्ण्यादिव्यावृत्तमित्यादिपदप्रयोगः । प्रत्यक्षागोचरे तु परे ब्रह्मणि सकलेतरव्यावृत्तिवचनमधिकप्रयोजनमिति दृष्टान्तात् प्रयोजनाधिक्यम्. जगत्कारणभूतस्य ब्रह्मणः शङ्कितदोषव्यावृत्तिरेवापेक्षिता, न तु गुणान्तरमिति भेदवादिपक्षात् प्रयोजनाधिक्यम् ।—

एवं सत्यज्ञानादिवाक्यस्यानुग्राहकस्तर्क उक्तः, तर्कानुगृहीतेन वाक्येन कोऽर्थः प्रति-पन्न इत्यत्राह (तस्मादिति) तस्मात्-उक्तन्यायानुगृहीतत्वादस्य वाक्यस्येत्यर्थः । (एक-

* तत्वटीका *

(न धर्मेति) एवमेकस्यैव सर्वव्यावृत्तिरूपत्वे व्यावृत्तेरपि पदबोध्यत्वे पदान्तर-वैयर्थ्यं स्यादित्यत्र दृष्टान्तोक्तं दार्ष्टान्तिके ऽतिदिशति (एकस्येति) शौक्ल्यं कार्ष्ण्यमित्यादि प्रतिबन्दिरिहाभिप्रेता. तत्रानन्तपदे तावद्व्यावृत्तिबोधकत्वं सिद्धम्, पदान्तरयोरपि तथात्वे को विरोध इतिभावः । प्रतिबन्दिवाक्यमिह प्रत्यक्षानुवा-दित्वान्मन्दफलम्, इदन्तु न तथा, गुणपरत्वे चात्र निमित्तमात्रलाभः । तत्परित्यागे तु तात्पर्यार्थस्सिद्धः, अतः— अर्थवत्तरमित्युक्तम् । व्युत्पत्तिभेदं प्रयोजकभेदं चाभिसन्धायापर्यायत्वोक्तिः, पर्यायशब्दोऽत्र भावप्रधानः पर्यायत्वं यस्य नास्ति तदपर्यायमिति गतिः, यस्य पदत्रयस्य मिथः पदानि पर्याया न भवन्ति तदपर्यायमिति वा ।अपर्यायत्वमिति केचित् पठन्ति ।—

मित्युक्तं भवति । एवं वाक्यार्थप्रतिपादने सत्येव 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादिभिरैकार्थ्यम् । 'यतो वा इमानि भूतानि जायन्ते' 'सदेव सोम्येदमग्र आसीत्' 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादिभिर्जगत्कारणतयोपलक्षितस्य ब्रह्मणः स्वरूप-

* श्रुतप्रकाशिका *

मिति) समानविभक्तिनिर्देशफलितमैक्यमुक्तम्, एवकारेण स्वरूपत ऐक्यं, गुणतो भेद इत्यंशतो ऽनेकार्थत्वव्यावृत्तिः । एतद्विशदयति (निर्धूतनिखिलविशेषमिति) निर्विशेषस्य तुच्छताव्यावृत्त्यर्थम्—स्वयंज्योतिरितिपदम् । (इत्युक्तमिति) सत्यज्ञानादिवाक्येनेति शेषः । इत्थं सामानाधिकरण्यान्यथानुपपत्त्या सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम् ॥ अथ कारणवाक्यैकार्थ्येन शोधकवाक्यान्तरैकार्थ्येन हेतुद्वयेन वस्तुमात्रपरत्वमुपपाद्यते (एवमित्यादिना) तत्र प्रथमं कारणवाक्यैकार्थ्ये हेतुरुच्यते (एवमिति) एवम्—निर्विशेषपरत्वेन निर्वाहे सत्येव, कारणवाक्यैकार्थ्यमित्यर्थः । कारणवाक्यैकार्थ्यं कुतोऽपेक्षितम् ? ऐकार्थ्ये सति कथं वा निर्विशेषपरत्वम् ? इत्यत्राह (यत इत्यादि) यतो वा इमानीत्यादि लक्षणवाक्यम् । एतस्य कारणत्वानुवादेन लक्षणपरत्वात् कारणत्वप्रापकं वाक्यमाह (सदेवेति) उपलक्षि-

* तत्त्वटीका *

नात्र किञ्चिद्बाधकमित्यभिप्रायेणाखण्डपरत्वं सहेतुकं निगमयति (तस्मादिति) तात्पर्यप्राबल्यात् शङ्कितचोद्यनिस्ताराच्चेत्यर्थः । एकमेव ब्रह्मेत्यनेन विशेष्यभेदस्य प्रसङ्ग एवापास्त इत्यभिप्रेतम्. इदमपि वाक्यं नाबुद्धबोधार्थम्, किन्तु स्वतस्सिद्धपरामर्शेन कल्पितविरोध्याकारनिषेधार्थमित्यभिप्रायेण स्वयंज्योतिरित्याद्युक्तम् । सत्यत्वादीनामनृतत्वादीनां तद्व्याप्यस्थूलत्वादीनां तद्वृत्तीनाञ्च निखिलशब्देन सङ्ग्रहः । उक्तानभ्युपगमे कारणवाक्यविरोधस्स्यादित्याह (एवमिति) ननु यो वेदेत्युपास्त्यन्वयेन सगुणपरत्वान्माभूदैकार्थ्यं तत्राह (यतो वा इति) कारणत्वानुवादितटस्थलक्षणवाक्यमिदं, सदेवेत्यादि तु तत्प्राप्त्यै लक्ष्यस्य निर्विशेषत्वव्यक्त्यै च पुनर्गृहीतम्. (जगत्कारणतयोपलक्षितस्य) शाखयेव चन्द्रस्य दूरे स्थित्वा दर्शितस्येत्यर्थः ।

मिदमुच्यते— सत्यं ज्ञानमनन्तं ब्रह्मेति ॥ तत्र सर्वशाखाप्रत्ययन्यायेन कारणवाक्येषु सर्वेषु सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मावगतम्, जगत्कारण-

* श्रुतप्रकाशिका *

तस्य--उपलक्षणं नाम चन्द्रस्य शाखेव तटस्थं ज्ञापकं (सत्यं ज्ञानमनन्तं ब्रह्मेतीति) अनेन वाक्येनेत्यर्थः । कारणवस्तुनः स्वरूपशोधकत्वात् कारणवाक्यैकार्थ्यमस्यापेक्षितमित्युक्तं भवति । अस्तु कारणवाक्यैकार्थ्यं, तत्तु सगुणब्रह्मकारणत्ववादिभिः "यस्सर्वज्ञः सर्ववित्" 'यस्य ज्ञानमयं तपः' 'तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते' 'तमीश्वराणां परमं महेश्वरम्' 'स कारणं करणाधिपाधिपः' इत्यादिवाक्यैरेव स्यादित्यत्राह । (तत्रेति) तत्र—कारणवाक्यैकार्थ्येऽपेक्षिते । सर्वशाखाप्रत्ययन्यायोऽह्यनुक्तार्थस्वीकारफलः, तेनात्रानुक्तस्योपनिषदन्तरोक्तस्यार्थस्य स्वीकर्तव्यत्वे सति सगुणमात्रपरासूपनिषत्सु निर्गुणमपि ब्रह्मोक्तं भवति । तत्रापच्छेदन्यायेन निर्गुणवाक्यानां बलीयस्त्वात् सर्वत्र सजातीयविजातीयव्यावृत्तमद्वितीयं ब्रह्मैव प्रतिपादितं भवतीत्यभिप्रायः । ततः किमित्यत्राह (जगदिति) जगत्कारणे-

☙ तत्त्वटीका ☙

कारणवाक्योक्तस्वरूपशोधकस्य तच्छेषतया तदेकार्थत्वं युक्तम् । यो वेदेत्येतच्च यच्छब्दान्वितवाक्यस्थतया नोपास्तिपरमिति भावः । यस्सर्वज्ञस्सर्वविदित्यारभ्य—तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते' इति कारणवाक्यान्तरे गुणोक्त्या तदैकार्थ्यं स्यात्, नेत्याह (तत्रेति) कारणशोधकवाक्ययोरैकार्थ्यं सिद्धं मिथः कारणवाक्यानां किमुतेत्याशयः । कर्तव्ये दर्शितश्शाखान्तरनयस्सिद्धेपि समः, तेनैव सर्वेषु गुणपरत्वं किं न स्यादित्यत्रोक्तं (सजातीयेत्यादि) अपच्छेदनीत्या हि निषेधप्राबल्यं स्थापितम् । परास्य शक्तिरिति वाक्यविशेषवद्गुणपरतैव किं न स्यात्? माभूत्तस्य शोधकवाक्यत्वमित्यत्राह (जगदिति) अद्वितीयेत्यादि हेतुपरम्; पूर्ववाक्ये सामान्यतः प्रस्तुतस्य व्यावृत्ततया प्रतिपित्सितस्य 'तदेषाभ्युक्ते'तिप्रतिपिपादयिषितत्वात्तस्य चाद्वितीयत्वेन तदन्यस्य गुणस्यावक्तव्यत्वादिति कारणवाक्येषु निर्गुणत्वं न कण्ठोक्तम्. अवधारणयोरन्यथाप्युपपत्तेः, अद्वितीयोक्तिस्तु सम्राड-

तयोपलक्षितस्य ब्रह्मणोऽद्वितीयस्य प्रतिपिपादयिषितं स्वरूपं तदविरोधेन वक्तव्यम् । अद्वितीयत्वश्रुतिर्गुणतोऽपि सद्वितीयतां न सहते । अन्यथा 'निरञ्जनम्' 'निर्गुण'मित्यादिभिश्च विरोधः, अतश्चैतल्लक्षणवाक्य-

* श्रुतप्रकाशिका *

त्यादिपदैः कारणवाक्योक्तमर्थमनुवदति । प्रतिपिपादयिषितम्—तात्पर्यभूमिः, वस्तुमात्र एव तात्पर्यमित्यर्थः । तदविरोधेन वक्तव्यम्—कारणवाक्यप्रतिपन्नब्रह्मस्वरूपशोधकत्वात्तदविरोधेनानेन वाक्येन वक्तव्यमित्यर्थः । नरपतिरद्वितीय इत्यादिवत्समाभ्यधिकराहित्येऽप्यद्वितीयत्वमुपपन्नमिति तदैकार्थ्येऽपि न निर्गुणपरत्वसिद्धिरित्यत्राह (अद्वितीयत्वश्रुतिरिति) सदेव एकमेवेति विजातीयसजातीयव्यावर्तकावधारणद्वयसमभिव्याहृतत्वादिदमद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहत इत्यभिप्रायः । एवं कारणवाक्यैकार्थ्यात् सत्यज्ञानादिवाक्यस्य वस्तुमात्रपरत्वमुपपादितम् ॥ अथ शोधकवाक्यान्तरैकार्थ्यं हेतुरुच्यते (अन्यथेति) अन्यथा-सत्यज्ञानादिवाक्यस्य विशिष्टपरत्वे; निरञ्जनं निर्गुणमित्यादिभिर्विरोधः स्यात्, अतस्तदविरोधायेदं वाक्यं निर्विशेषवस्तुमात्रपरमित्यर्थः । अन्यथा निर्गुणं निरञ्जनमित्यादिभिर्विरोधश्चेत्यनेनाद्वितीयत्वश्रुतेर्गुणतोऽपि सद्वितीयतानिषेधपरत्वं चार्थादुपपादितं भवति । हेतुत्रयेणोपपादितमर्थं निगमयति (अतश्चेति) अतः—पूर्वोक्तसामानाधिकरण्यान्यथाऽनुपपत्त्या पश्चादुक्तकारणवाक्यशोधकवाक्यान्तरैकार्थ्यरूपहेतुद्वयेन चेत्यर्थः । एत-

* तत्त्वटीका *

द्वितीय इति वत् समं निषेधार्थस्स्यादित्यत्राह (अद्वितीयेति) अवधारणाभ्यां सजातीयादिनिरासौचित्यात्समनिषेधे सिद्धे परिशेषाद्बहुत्साक्रमेणात्र गुणनिषेधः प्राप्त इति भावः । गुणपरत्वे शोधकान्तरञ्च विरुद्ध्येतेत्याह (अन्यथेति) निर्गुणशब्दो हि स्थूलत्वादिवत्सत्यत्वादिकमपि निषेधेदिति भावः । ननु सर्वत्र लक्षणवाक्यं स्वार्थं समर्प्यैवान्यद्व्यावर्त्तयति, तद्वदिहापि स्यादित्यत्राह (अत इति) चस्समुच्चये. सामानाधिकरण्यसामर्थ्यात्कारणवाक्यैकार्थ्याच्छोधकवाक्यान्तरैकार्थ्याच्चेत्यर्थः । एतल्लक्षणवाक्यमित्यनेन धर्मसमर्पकलक्षणवाक्यान्तरेभ्यो व्यावृत्तिस्सूच्यते । अस्व-

मखण्डैकरसमेव प्रतिपादयति ॥ ननु च—सत्यज्ञानादिपदानां स्वार्थप्रहाणेन स्वार्थविरोधिव्यावृत्तवस्तुस्वरूपोपस्थापनपरत्वे लक्षणा स्यात् । नैष दोषः, अभिधानवृत्तेरपि तात्पर्यवृत्तेर्बलीयस्त्वात् । सामानाधिकरण्यस्य

* श्रुतप्रकाशिका *

क्षणवाक्यम्—स्वरूपलक्षणवाक्यम् । अखण्डैकरसम्—निर्विशेषतैकस्वभावमेव प्रतिपादयतीत्यर्थः । अथ मुख्यार्थपरित्यागेन लक्षणास्वीकारदोषमुद्धाटयति । ( ननु चेत्यादिना ) स्वार्थप्रहाणेन—स्वार्थो हि विशेषणद्वारकं विशेष्यं, तत्प्रहाणेनेत्यर्थः । लक्षणात्वमभ्युपगम्यादोषतां प्रतिजानीते । ( नैष दोष इति ) मुख्यार्थत्वमुत्तरत्राभिधास्यते । हेतुमाह ( अभिधानवृत्तेरपीति ) तात्पर्यवृत्तिर्नाम—तात्पर्यादागता वृत्तिः तत्परत्वरूपा वा, सा चात्र लक्षणावृत्तिर्विवक्षिता, वाक्यतात्पर्यविरोधिमुख्यवृत्तेरपि वाक्यतात्पर्यानुगुणलक्षणावृत्तेर्बलीयस्त्वादित्यर्थः । कस्मिन्नर्थे तात्पर्यम्, यदनुरोधाय लक्षणास्वीकारः ? इत्यत्राह ( सामानाधिकरण्यस्येति ) ( ऐक्य एव तात्पर्य-

ॐ तत्त्वटीका ॐ

ण्डैकरसम्— नित्यनिर्विशेषस्वप्रकाशस्वभावमित्यर्थः । ब्रह्मविदाप्नोति परमित्यनन्यथासिद्धफलकरणदर्शनकल्पितविधिशेषतया विशिष्टविधितात्पर्ये सम्भवति न लक्षणा न्याय्येत्यभिप्रायेण चोदयति ( ननु चेति ) यद्यपि वाच्ये विशेष्यांशो न त्यक्तः, तथापि द्वारत्यागान्न तस्य शक्तिगोचरत्वमिति भावः । अत्र वाच्यबहिर्भूते वृत्तिस्तावन्नास्ति वाच्यैकदेशे प्रधानभूते विशेष्ये वृत्तिस्तु न लक्षणा । इह जहदजहल्लक्षणा वा स्यात्. सा चात्र न दोषः, प्रत्युत विध्यनर्हवाक्यार्थज्ञानानुवादितया अन्यथासिद्धे वाक्ये विधिक्लृप्त्ययोगात्तदर्थमुख्यासम्भवे लक्षणानुगुणैवेति दर्शयितुमाह ( नैष दोष इति ) तात्पर्यविषये शब्दस्य प्रधानतः प्रामाण्यात्तद्विरोधे सर्वत्र मुख्यवृत्तिदौर्बल्याल्लक्षणाप्राबल्यमाह ( अभिधानेति ) स्वतस्सिद्धस्वरूपे कथं शब्दतात्पर्यम् ? अतो गुणविवक्षा स्यादित्यत्र तद्विरुद्धे प्रागुक्तं तात्पर्यं व्यनक्ति ( सामानाधिकरण्यस्येति ) स्वप्रकाशस्यापि निमित्तभेदवदनेकपदपरामृष्टस्यापि विशेष्यस्यान्यसंसर्गासहमैक्यमिह समानविभक्तिवेद्यम् । तच्च कल्पितभेदनिवृत्त्यर्थम्, प्रकृतिभि-

**ह्यैक्य एव तात्पर्यमिति सर्वसम्मतम् । ननु च— सर्वपदानां लक्षणा न दृष्टचरी । ततः किम्? वाक्यतात्पर्याविरोधे सत्येकस्यापि न दृष्टा; समभिव्याहृतपदसमुदाय-**

* श्रुतप्रकाशिका *

मिति ) तात्पर्यनिश्चायिका समानविभक्तिरिति भावः । आनन्दमयाधिकरणे सिद्धान्तिना ह्येतदुच्यते । ( सर्वसम्मतम् ) विशिष्टैक्यवादिभिरन्यैश्च सम्मतमित्यर्थः । गङ्गायां घोष इत्यादिषु सर्वपदलक्षणा न दृष्टेति चोदयति ( ननु चेति ) तात्पर्यनिश्चायककतिपयमुख्यवृत्त्या तदनुगुणमन्येषां पदनां लाक्षणिकत्वमाश्रयणीयम् , सर्वपदलक्षणायां तु तन्न सम्भवतीत्यभिप्रायः । तात्पर्याविरुद्धपदमुख्यार्थस्वीकारस्तात्पर्यविरुद्धपदलक्षणास्वीकारस्याविरुद्ध इत्याशयेनाह ( ततः किमिति ) । ततः किमित्यभिप्रेतं विवृण्वन् प्रतिबन्दिमुखेन विपक्षिताथं दर्शयित्वा परिहर्तुं विपक्षे बाधगर्भां प्रतिबन्दीमाह ( वाक्यतात्पर्येति ) यद्यविरुद्धपदमुख्यार्थत्वं विरुद्धपदलक्षणाविरोधि, तर्हि गङ्गायां मत्स्याः प्रतिवसन्तीत्यादिषु अविरोधेन एकस्यापि पदस्य लक्षणानङ्गीकारात् गङ्गायां घोष इत्यादिष्वेकस्यापि पदस्य लक्षणा न स्यादित्यभिप्रायः । गङ्गायां मत्स्या इति वाक्ये विरोधाभावाल्लक्षणानङ्गीकारः, गङ्गायां घोष इत्यत्र विरोधाल्लक्षणा न दोष इति चेत् तदत्रापि तुल्यमित्याह ( समभिव्याहृतेति ) सर्वपद-

* तत्त्वटीका *

स्तु कल्पितान्याकारनिवृत्तिः प्राग्दर्शितेत्युक्तम् । सर्वसम्मतम्--त्वयापि दुस्त्यजमिति यावत् । त्वदीयप्रक्रिययात्र तात्पर्यस्थापकाभावाल्लक्षणैव न स्यादित्यभिप्रायेण पुनश्चोदयति ( ननु चेति ) मुख्येन केनचिदंशेन क्वचित्तात्पर्यसिद्धावंशान्तरे ह्युपचारो दृष्ट इत्याशयः । अविरुद्धेऽन्यत्रादर्शनमकिञ्चित्करमित्यभिप्रायेण प्रतिवक्ति ( ततः किमिति ) अभिप्रेतं विवृण्वन् प्रतिबन्दिञ्च सूचयति ( वाक्येति ) एकपदलक्षणाया अप्यन्यत्रादर्शनमस्ति, अतस्तस्या अपि त्यागप्रसङ्ग इति भावः । तात्पर्यमुख्यार्थबाधयोरेव प्रयोजकत्वं पदैकत्वद्वित्वादेरप्रयोजकत्वं द्वित्रादिपदप्रतिबन्दिञ्चाभिप्रेत्याह ( समभिव्याहृतेति ) एकद्व्यादिपदलक्षणावत्सर्वपदलक्षणापि 'विषं भुङ्क्ष्वे'त्यत्र दृष्टेत्यभिप्रायेण सर्वेषां वेत्युक्तम् । इदं हि पदद्वयं निषिद्धभोज्यं

स्यैतत्तात्पर्यमिति निश्चिते सति द्वयोस्त्रयाणां सर्वेषां वा तदविरोधाय एकस्यैव लक्षणा न दोषाय । तथा च शास्त्रस्थैरभ्युपगम्यते । कार्यवाक्यार्थवादिभिर्लौकिकवाक्येषु सर्वेषां पदानां लक्षणा समाश्रीयते, अपूर्वकार्य एव लिङादेर्मुख्यवृत्तत्वात् लिङादिभिः क्रियाकार्यं लक्षणया प्रतिपाद्यते । कार्यान्वितस्वार्थाभिधायिनाश्चेतरेषां

* श्रुतप्रकाशिका *

लक्षणा च विषं भुङ्क्ष्वेत्यादिषु दृष्टेत्यभिप्रायः । ( एतत्तात्पर्यमिति निश्चिते सतीति ) अपवादकरहितसमानविभक्तिनिर्देशो निश्चायक इति भावः । ( द्वयोस्त्रयाणामित्यादि ) अविरोधविरोधावेव मुख्यलक्षणावृत्तिस्वीकारप्रयोजकौ, न तु पदानामेकत्वद्वित्वादिकमित्यर्थः । न केवलं विषं भुङ्क्ष्वेत्यादिषु लौकिकप्रयोगेष्वेव सर्वपदलक्षणाऽगत्याश्रिता , अन्यैरपि परीक्षकैराश्रितेत्याह ( तथा चेति ) तथा— सर्वपदलक्षणाया अदोषत्वम् । अभ्युपगम्यते—अभ्युपगमहेतुसद्भावादभ्युपगमः फलित इति भावः । कैः परीक्षकैः केषु वाक्येषु सर्वपदलक्षणाश्रितेत्यत्राह ( कार्यवाक्यार्थेति ) लौकिकवाक्येषु सर्वपदलाक्षणिकत्वमुपपादयति ( अपूर्वकार्य एवेति ) क्रियाकार्यं लाक्षणिकमस्तु, तत्कथं सर्वपदलक्षणा ? इत्यत्राह ( कार्यान्वि-

* तत्त्वटीका *

तदुक्तेरकर्तव्यत्वञ्च लक्षयति. तत्र प्रत्ययितोक्तौ युक्तायुक्तविमर्शात्तात्पर्यनिश्चयः । इह तु समानविभक्तिसामर्थ्यादबुभुत्सितबोधनानुपपत्त्या चेति विकल्पः । स्वोक्तं परीक्षकसम्मतमित्याह (तथा चेति) चोवधारणे । यद्वा--ब्रह्मप्रतिपादनाप्रविष्टैरभ्युपगतमित्युच्यते, तैरनुक्तमपि तदुक्तसामर्थ्यादभ्युपगमनीयमिति भावः । कैरियं कुत्राभ्युपगतेत्यत्राह । ( कार्येति ) अत्र तदुक्तं विवक्षितस्य द्वारं तावदाह ( अपूर्वेति ) वृद्धव्यवहारोपक्रान्ता वेदावसाना कार्यव्युत्पत्तिरेवंप्रकारेण तैस्स्थापितेत्यर्थः । अपूर्वमेव कार्यमपूर्वकार्यम्; क्रियाकार्यमुखेनापूर्वकार्यव्युत्पत्तिः । एवं तदुक्तनयेन सर्वपदलक्षणायाः फलितत्वमाह ( कार्यान्वितेति ) अयं भावः,— गङ्गायां घोष इत्यादौ

* श्रुतप्रकाशिका *

तेति ) पदानामन्विताभिधायित्वेन कारकपदानामपूर्वकार्यान्विताभिधायिनां तदन्वित एव मुख्यार्थ इति तदन्वयपरित्यागे लक्षणैवेत्यर्थः । ननु गङ्गायां घोषः प्रतिवसतीत्यादिषु गङ्गापदस्य लाक्षणिकार्थत्वेऽपि तदन्विताभिधायिनां पदान्तराणाममुख्यत्वं न दृष्टमिति चेन्न, गङ्गापदलक्षितस्य कूलस्य वाक्यार्थत्वाभावात्, इह तु वाक्यस्य प्रधानप्रतिपाद्यभूतकार्यार्थसमर्पकपदस्य लाक्षणिकत्वात्तदन्विताभिधायिनां पदानां लक्षणा स्यादेव, अत एव कार्यवाक्यार्थवादिभिरित्युक्तम् । ननु "कमलानि निमीलन्ति कुमुदान्युन्मिषन्ति च" इति वाक्यार्थभूतनिमीलनादेर्लाक्षणिकत्वेऽपि तदन्विताभिधायिनां कमलादिपदानां न लाक्षणिकत्वं दृष्टमिति चेत्, अनभिप्रायज्ञश्चोदयति भवान्, सर्वपदानां निमीलनरूपवाक्यार्थपरत्वस्य कैश्चिद्व्यवस्थापितत्वाभावान्निमीलनोपस्थापकपदलक्षणायामपि न तदन्विताभिधायिनां लाक्षणिकतापत्तिः, त्वया तु सर्वपदानां कार्यपरत्वाभ्युपगमात्तत्कार्यसमर्पकपदलाक्षणिकत्वे तदन्वितार्थाभिधायिनां लक्षणा प्राप्नोति । तथा हि—कार्यवाक्यार्थवादिना पदानां किं विशिष्टकार्यैकदेशे पदशक्तिर्निश्चीयते ? उत विशिष्टस्थायिकार्यैकदेशे ? प्रथमे विशिष्टकार्यैकदेशत्वाविशेषात् स्वार्थेषु कारकपदानामिव लिङादेः क्रियाकार्ये मुख्यत्वप्रसङ्गः । द्वितीये विशिष्टस्थायिकार्यैकदेशपरत्वप्रहाणस्य सर्वपदानामविशिष्टत्वात् लिङादेः क्रियाकार्य इव कारकपदानां क्रियाकार्यान्वितपरत्वे लक्षणा स्यात्, पदानां विशिष्टकार्यैकदेशपरत्वे तुल्येपि लिङादेः क्रियाकार्ये लाक्षणिकत्वम्, कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिति चेत्, यदि कार्यान्वितमात्रे कारकपदानां मुख्यत्वमिष्टं, क्रियाकार्ये लिङादेर्लाक्षणिकत्वं कथं स्थायिकार्यपरत्वेन वेदप्रयुक्तत्वानिश्चयाल्लक्षणयापि क्रियाकार्यबोधनसम्भवादिति चेत्, कारकपदानामपि स्थायिकार्यान्वितपरत्वेन वेदप्रयोगदर्शनात् लक्षणयापि क्रियाकार्यान्वितबोधनोपपत्तेः क्रियाकार्यान्वितप्रतिपादनं लाक्षणिकं स्यात् । ननु गोपदस्य सास्नादिमन्मात्रमुख्यत्वेऽपि प्रमाणान्तरेण खण्डादिसिद्धिवल्लिङादेः कार्यमात्रपरत्वे कार्यविशेषस्य प्रमाणान्तरेण सिद्ध्यभावादुभयत्रैकशक्तिकल्पनायोगाच्छक्तिद्वयकल्पने गौरवाच्च लिङादेरपूर्वकार्ये मुख्यत्वमिति क्रियाकार्यप्रतिपादनं लाक्षणिकम्, अन्यथा शब्दशक्तेः कार्यमात्रविषयत्वात् प्रत्यक्षाद्यविषयत्वाच्च कार्यविशेषो निष्प-

पदानामपूर्वकार्यान्वित एव मुख्यार्थे इति क्रियाकार्या-

* श्रुतप्रकाशिका *

माणकः स्यादिति चेन्न, कार्यविशेषस्य प्रामाणिकत्वे तत्र शक्तिकल्पनम्, शक्ति-कल्पने तस्य प्रामाणिकत्वमित्यन्योन्याश्रयप्रसङ्गात् । किञ्च यदि कार्यविशेषस्याप्रामाणिकत्वपरिहाराय तत्र शक्तिकल्पनं, तर्हि कारकपदानां कार्यान्वितमात्रपरत्वे कार्यविशेषान्वयस्य प्रमाणान्तरागोचरत्वादुभयत्र शक्तिकल्पने गौरवाच्च कार्यविशेषान्वये प्रमाणं न स्यादिति तत्परिहाराय कार्यविशेषान्वये कारकपदानां मुख्यत्वमिति क्रियाकार्यान्वितपरत्वं लाक्षणिकं स्यात् , लिङादिसमभिव्याहारबलात् कारकपदानां कार्यविशेषान्वयपरत्वसिद्धिरिति चेत् , तर्हि स्वर्गकामपदसमभिव्याहारबलाल्लिङादेः कार्यविशेषपरत्वसिद्धिरिति लिङादिः कार्यमात्रपरः स्यात्, तस्माल्लिङादेरपूर्वकार्य एव मुख्यवृत्तत्वेन क्रियाकार्यस्यामुख्यत्वे कारकपदानामपि क्रियाकार्यान्वितपरत्वं लाक्षणिकमित्येवाभ्युपगन्तव्यम्. कारकपदानामन्वयांशे लक्षणा, न सर्वत्रेति चेत्, समानाधिकरणवाक्येऽपि पदानां प्रातिपदिकांश एव लक्षणा

७ तत्वटीका ७

तु लक्ष्यस्य प्राधान्याभावात्तदन्विताभिधायिनां न लक्षणा । एवं कमलानि निमीलन्तीत्यादिषु प्रधानेपि निमीलने सर्वशब्दानां तत्परत्वव्युत्पत्त्यभावात्पदान्तराणां तदनुसारो न युक्तः । यद्यपि गङ्गाद्यप्रधानपदलाक्षणिकतया घोषादिपदेष्विव कमलानि निमीलन्तीत्यत्र निमीलन्तीत्यवान्तरपदलक्षणया कमलादि [ पद्मादि ] पदेषु लक्षणा न स्यात् । तथापि लोकोपक्रमवेदावसानकार्यप्रधानव्युत्पत्तिबलादन्यान्वितमात्रे क्रियाकार्यान्विते कार्यमात्रान्विते वा पदान्तराणां शक्तिकल्पनानभ्युपगमात्तेषामपूर्वकार्यान्वित एव शक्तेर्लौकिकवाक्येषु सर्वेषु तदभावात् सर्वपदलक्षणा स्वीकर्तव्येति । न चान्यान्वितमात्रे पदान्तरशक्तिः, कार्यपरतयैव व्युत्पत्त्यङ्गीकारात् । नापि कार्यमात्रान्विते शक्तिः स्यात्, तथासति लिङादेरपि कार्यमात्रे मुख्यत्वप्रसङ्गात् । नच तद्युक्तम् , अपूर्वाख्यविशेषे लिङादिशक्तेरसिद्धौ मानान्तराभावाच्च तस्याप्रामाणिकत्वापातात् । एवं कार्यमात्रान्विते शक्तानां पदान्तराणां वेदे कार्यविशेषान्वयेपि सिद्ध्येत् । स्वर्गकामपदसमभिव्याहारात्सिद्धावपूर्वमपि तथा सिद्ध्येदिति न तद्वाच्यत्वादिक्लृप्तिस्स्यात्; तस्माल्लौकिकवाक्येषु विशिष्टापूर्वस्थायिकार्यपरत्वा-

न्वितप्रतिपादनं लाक्षणिकमेव । अतो वाक्यतात्पर्या-विरोधाय सर्वपदानां लक्षणापि न दोषः । अत इदमेवार्थजातं प्रतिपादयन्तो वेदान्ताः प्रमाणम् ॥

प्रत्यक्षादिविरोधे च शास्त्रस्य बलीयस्त्वमुक्तम्, सति

* श्रुतप्रकाशिका *

न समानविभक्ताविति तुल्यम् । सर्वपदलक्षणानुपपत्तिपरिहारमुपसंहरति (अत इति) अतः—सर्वपदलक्षणाया उपपत्तिसिद्धत्वाल्लौकिकैः परीक्षकैश्चाङ्गीकृतत्वाच्चेत्यर्थः । यदप्याहुरित्यारभ्य कृतां शास्त्रेण स्वाभिमतार्थसिद्धिमुपसंहरति ( अत इदमेवेति ) अतः—निर्विशेषे वस्तुनि तस्यैव पारमार्थ्ये व्यतिरिक्तस्य मिथ्यात्वे तस्य दोषपरि-कल्पितत्वे दोषस्य च सदसदनिर्वचनीयत्वे ज्ञानमात्रनिवर्त्यत्वे चोक्तैरुपपत्ति-सहितैः श्रुतिवाक्यैरित्यर्थः । इदमेवार्थजातम्—पूर्वोद्दिष्टमेवार्थजातं, न तु सगुणवस्त्वा-दिकम् । (प्रतिपादयन्तो वेदान्ताः प्रमाणमिति) वाक्यान्तराणां काल्पनिकार्थपरत्वेन तत्त्वावेदकत्वाभावादुक्तार्थविषयमेव वाक्यजातं तत्त्वे प्रमाणमित्यर्थः ॥

पूर्वं प्रत्यक्षविरोधे शास्त्रप्राबल्यं, शास्त्रे च भेदावलम्बिनां बाध्यत्वं चोक्तम् । अथ प्रत्यक्षविरोधो नास्तीत्युपपादयितुं प्रक्रमते (प्रत्यक्षादीति) शास्त्रप्रत्यक्षविरोधे शास्त्र-प्राबल्यप्रतिपादकग्रन्थेन वक्ष्यमाणार्थसङ्गतिरिति भावः । चः समुच्चये । अवि-

৩ तत्त्वटीका ৩

भावाल्लिङादेरमुख्यार्थत्वमित्युक्तोपपत्त्या सर्वपदलक्षणाया अदोषत्वं निर्बाधत्वा-भिप्रायेण निगमयति ( अत इति ) युक्तिबलात्परीक्षकैरभ्युपगतत्वाच्चेत्यर्थः । एवं प्रत्यक्षस्य सम्भावितदोषत्वाच्छास्त्रस्य निर्दोषत्वात्तद्विरुद्धार्थत्वाच्च परमप्रकृतं शास्त्रप्राबल्यमुपसंहरति ( अत इति ) ( इदमेव ) प्रत्यक्षादिविरुद्धमेवेत्यर्थः । भेदपरत्वे अनुवादित्वं स्यादिति चाभिप्रेतम् । इदमेवार्थजातम्-प्रमाणागोचरस्वप्रकाशनिर्विशेषसत्य त्वतदन्यमिथ्यात्वानिर्वचनीयाविद्यास्वरूपतन्मूलतिरोधानाध्यासधीनिवर्त्यत्वादिकम् ॥

पक्षान्तरमथादित्सुश्शास्त्रप्राबल्यमीरितम् ।
प्रत्यक्षस्य विरुद्धत्वमन्वारुह्येति भाषते ॥ ৩ ॥

( प्रत्यक्षादीति ) चोऽप्यर्थः । तत्त्वविद्भ्यो विषयविरोधाभावाद्बलीयस्त्वं न

च विरोधे बलीयस्त्वं वक्तव्यम्, विरोध एव न दृश्यते, निर्विशेषसन्मात्रब्रह्मग्राहित्वात्प्रत्यक्षस्य। ननु च- घटोऽस्ति पटोऽस्तीति नानाकारवस्तुविषयं प्रत्यक्षं कथमिव सन्मात्रग्राहीत्युच्यते। विलक्षणग्रहणाभावे सति सर्वेषां ज्ञानानामेकविषयत्वेन धारावाहिकविज्ञानवदेकव्यवहारहेतुतैव स्यात्। सत्यम्; तथैवात्र विविच्यते।

* श्रुतप्रकाशिका *

रोधपक्षस्य च बुद्धिस्थत्वात्तस्य चान्वारुह्योक्तस्य च समुच्चयः, विरोधाभ्युपगमेऽपीत्यर्थः। (सति चेति)अत्र चशब्दो हिशब्दार्थः। अविरोधं प्रतिजानीते (विरोध एव न दृश्यत इति) हेतुमाह (निर्विशेषेति) विषयविषयिभावरूपभेदव्यावृत्त्यर्थं सन्मात्रब्रह्मेत्युक्तम्। प्रतीतिविरोधेन चोदयति। (ननु चेति) विरोधमुपपादयति (घटोऽस्तीत्यादिना) न हि केवलमस्तीति प्रतीतिः, अपि तु घटोऽस्ति पटोऽस्तीत्येव हि प्रतीतिरित्यर्थः। प्रतीतेर्भ्रान्तिरूपत्वसम्भवात्तद्व्युदासार्थं व्यवहारविरोधमाह (विलक्षणेति) परिहरति (सत्यमिति) घटोऽस्ति पटोऽस्तीत्यत्रास्तित्व व्यवहारस्यैकरूपत्वात्तावन्मात्रे भेदावभासमात्रे चाङ्गीकारो भेदव्यवहारस्य प्रत्यक्ष-

६ तत्त्वटीका ६

वक्तव्यमित्यभिप्रायेणाह (सतीति) चोवधारणे। अत्र बलाबलविचारस्य मूलमेव छिन्नमित्याह (विरोध इति) विरोधदर्शनं द्वयोरपि स्वारसिक्या परस्पराविरुद्धभेदविषयतया स्यादित्यत्राह (निर्विशेषेति) प्रत्यक्षसिद्धं सदेव निष्कृष्य शास्त्रे ब्रह्मेत्युच्यत इति भावः। असिद्धोयं हेतुः सर्वलोकोपलम्भविरोधादिति शङ्कते (ननु चेति) नहि क्वचिदप्यस्तिमात्रदर्शनमित्याशयः। कथमिव- दृष्टापह्नवमन्तरेण न कथञ्चिदित्यर्थः। उच्यत इत्यनेन घटादिविषयं प्रत्यक्षं सन्मात्रग्राहीति स्वोक्तिविरोधोपि सूचितः। विशिष्टविषयत्वं भ्रान्तिसिद्धमिति शङ्कां विपक्षे बाधकेन वारयति (विलक्षणेति) लोकसिद्धं प्रसङ्गविपर्ययं, भेदव्यवहारस्य प्रत्यक्षमूलत्वञ्चानिच्छन् प्रसक्तस्य इष्टत्वमाह (सत्यमिति) नानाव्यवहाराणां प्रत्यक्षमूलत्वं नापह्नोतव्य-

कथम्? घटोऽस्तीत्यत्रास्तित्वं तद्भेदश्च व्यवह्रियते; न च

* श्रुतप्रकाशिका *

मूलत्वे भेदावभासस्य प्रत्यक्षत्वे चानङ्गीकारश्च सूच्यते—सत्यमित्यङ्गीकारेण। (तथैव) यथा सन्मात्रस्यैव प्रत्यक्षत्वमेकव्यवहारहेतुतैव च स्यात् तथैवेत्यर्थः। अत्र—घटादिविषयस्वरूपविषयव्यवहारसमुदाये, विविच्यते—यथेदं रजतमित्यत्र इदं व्यवहारस्य प्रत्यक्षमूलत्वं रजतव्यवहारस्य भ्रान्तिमूलत्वं, तथा विविच्यत इत्यर्थः। तत्रेदमंशरजतांशव्यवहारयोरबाधितत्वबाधितत्वाभ्यां विवेकः। अत्र स्वरूपविषयभेदविषयव्यवहारयोरुभयोरप्यबाधितत्वाविशेषे कथं विवेकः? इत्यभिप्रायेणाह (कथमिति) यौक्तिकबाधोऽस्तीत्याशयेनाह (घटोऽस्तीति) किमस्तित्वं भेदश्चैकः पदार्थः? उत द्वौ? द्वित्वे च किं तदुभयव्यवहारयोः प्रत्यक्षमूलत्वम्, उतान्यतरस्य? द्वयोरपि प्रत्यक्षमूलत्वे प्रत्यक्षं किं युगपदुभयग्राहि? उत क्रमेण? इति विकल्पान् हृदि निधाय अस्तित्वलक्षणस्वरूपतद्भेदयोरैक्यं न सम्भवति, भेदग्रहणस्य स्वरूपग्रहणप्रतियोगिस्मरणसापेक्षत्वात्, सन्मात्रग्रहणस्य तन्निरपेक्षत्वाच्चेत्यभिप्रयन्नाह (अस्तित्वं तद्भेदश्चेति) भिन्न इति व्यवहार-

ꣳ तत्त्वटीका ꣳ

मित्यत्राह (तथेति) यथा सत एकस्यैव व्यवहारः प्रत्यक्षमूलः तथेति यावत्। एवकारस्त्वदुक्तमवधारणं स्थिरीकरोमीति सावष्टम्भत्वं व्यनक्ति। अत्र—व्यवहारद्वये तद्धेतौ बुद्धिद्वये वा। विविच्यते—सर्वेषु भ्रमेषु अधिष्ठानारोप्यव्यवहारांशयोर्यथा विभागस्तथात्रेति भावः। बाधिते दृष्टस्य विभागस्यान्यत्रोक्तावविषयवृत्तित्वं मत्वा चोदयति (कथमिति) अत्र नभस्स्थलमलिनत्वादिवत्प्रत्यक्षबाधाभावेपि युक्त्या बाधयितुं प्रथमं मानानुपपत्तिः प्रस्तूयते। एवमत्र विकल्पा हार्दाः,— किमस्तित्वघटत्वरूपयोः स्वरूपभेदयोरैक्यम्? उत भेदः? इति। भेदे च प्रत्यक्षमुभयमन्यतरद्वा गृह्णातीति। आद्ये—युगपत्? क्रमाद्वा? इति। द्वितीये-स्वरूपम्? भेदं वेति? तत्रैक्यं दूषयति (घटोस्तीति) तद्भेदः—तत्सम्बन्धितया ततोन्यत्वेनोल्लिख्यमानो भेदः। अयं भावः,— अत्रोल्लिख्यमानभेदाभावे भिन्नशब्दः क्वापि न स्यात्. स्वेन स्वस्य विशिष्टत्वायोगात्। अस्तिघटशब्दयोश्चापर्यायतया व्युत्पत्तेस्तद्विषयौ भिन्नौ, अन्यथा प्रतियोगिसापेक्षनिरपेक्षव्यवहारभेदविरोधात्। तत्त्वतस्सिद्धयोर्व्यवहारभेदयोर्मूल-

द्वयोरपि व्यवहारयोः प्रत्यक्षमूलत्वं सम्भवति, तयोर्भिन्नकालज्ञानफलत्वात्, प्रत्यक्षज्ञानस्य चैकक्षणवर्त्तित्वात् । तत्र स्वरूपं वा भेदो वा प्रत्यक्षस्य विषय इति विवेचनीयम् । भेदग्रहणस्य स्वरूपग्रहणतत्प्रतियोगिस्मरणसव्यपेक्षत्वादेव स्वरूपविषयत्वमवश्याश्रयणीयमिति न भेदः प्रत्यक्षेण गृह्यते; अतो भ्रान्तिमूल एव भेदव्यवहारः ॥

---

* श्रुतप्रकाशिका *

इव घट इत्यसाधारणव्यवहारेऽपि घटस्य पटाद्व्यावृत्ततया प्रतीतौ प्रतियोगिसापेक्षत्वाद्घटव्यवहार एव भेदव्यवहार इत्युच्यते । द्वित्वे च द्वयोरपि प्रत्यक्षमूलत्वं नेत्याह (न च द्वयोरपीति) द्वयोरपि व्यवहारयोः—स्वरूपविषयभेदविषयव्यवहारयोः। प्रत्यक्षं युगपद्वा क्रमेण वा मूलं स्यादिति विकल्पमभिप्रेत्य यौगपद्यं दूषयति (तयोरिति) प्रतियोग्यपेक्षानपेक्षारूपवैषम्यादित्यभिप्रेतम् । क्रमपक्षं प्रतिक्षिपति ( प्रत्यक्षज्ञानस्येति ) चः समुच्चये । एवं युगपत् क्रमेण चोभयव्यवहारस्य प्रत्यक्षमूलत्वमनुपपन्नमिति तयोरन्यतरस्य प्रत्यक्षविषयत्वमाह ( तत्रेति ) भेदः प्रत्यक्षविषयः स्यादित्यत्राह ( भेदेति ) अस्तित्वभेदयोरैक्यायोगे तद्व्यवहारयोर्भिन्नकालज्ञानफलत्वे

ɞ तत्त्वटीका ɞ

भेदश्चिन्त्य इति । उभयग्राहित्वं निषेधति ( न चेति ) व्यवहारद्वयस्य एकमूलत्वासम्भवे युगपद्ग्रहणासम्भवहेतुमाह ( तयोरिति ) अधिकरणप्रतियोगिधीसापेक्षस्य भेदग्रहणस्य स्वरूपग्रहणपश्चाद्भावित्वादित्यर्थः । क्रमेणोभयग्रहणं दूषयति (प्रत्यक्षेति) चः क्रमयौगपद्यायोगसमुच्चयार्थः । नहि क्षणिकं विरम्य व्याप्रियेतेति भावः । प्रत्यक्षशब्द इह अक्षजन्यत्वपरः तेनात्मस्वरूपज्ञानात्साक्षिणश्च व्यवच्छेदः । पारिशेष्यादन्यतरग्राहित्वे तन्निर्द्धारणार्थविकल्पं वक्ति ( तत्रेति ) तथासतीत्यर्थः । तयोर्मध्ये इति वा । स्वेष्टं परिशेषयति ( भेदेति ) स्मरणशब्दः क्वचिद्ग्रहणस्याप्युपलक्षकः । एवकारः पूर्वमैक्ययौगपद्यासम्भवोक्तौ प्रतियोगिसापेक्षत्वस्य गर्हितत्वं

**किञ्च—भेदो नाम कश्चित्पदार्थो न्यायविद्भिर्निरूपयितुं न शक्यते। भेदस्तावन्न वस्तुस्वरूपम्, वस्तुस्वरूपे गृहीते स्वरूपव्यवहारवत्सर्वस्माद्भेदव्यवहारप्रसक्तेः।**

* श्रुतप्रकाशिका *

च य एव हेतुः तेनैवेत्येवकाराभिप्रायः। प्रत्यक्षस्य स्वरूपमात्रविषयत्वे कथं भेदव्यवहारसम्भव इत्यत्राह (अतो भ्रान्तीति) तथा च संवित्सिद्धौ "यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः। ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः॥" इति। व्यवच्छेदः—भेदग्रहणम्। विधानम्—स्वरूपग्रहणम्। एवं भेदे प्रमाणानुपपत्तिरुक्ता॥

अथ प्रमेयानुपपत्तिमाह (किञ्चेति) किञ्चेत्यादिना प्रमाणानुग्राहकतर्काभावोऽप्युपपादितो भवति। दुर्निरूपत्वं प्रतिजानीते (भेदो नामेति) विकल्पासहत्वादिति भावः। (न्यायविद्भिः) न त्वापातप्रतीतितृप्तैरिति भावः। स्वरूपधर्मविकल्पं हृदि निधाय स्वरूपपक्षं दूषयति (भेदस्तावदिति) कुतः? इत्यत्राह (वस्तुस्वरूप इति) (स्वरूपव्यवहारवत् सर्वस्माद्भेदव्यवहारप्रसक्तेरिति)

* तत्त्वटीका *

व्यनक्ति। शास्त्रविरोधासम्भवादाह (न भेद इति) अयं भावः,—एकेन प्रत्यक्षेण स्वरूपे गृहीते यदि प्रत्यक्षान्तरेण भेदग्रहणमित्युच्यते, तदा निराधारभेदग्रहणायोगात्पूर्ववदुत्तरमपि स्वरूपं गृहीत्वा नश्येत्; अतो न कदापि प्रत्यक्षजातीयेन भेदसिद्धिरिति। तदिदमनूदितं संवित्सिद्धौ "यौगपद्यक्रमायोगाद्व्यवच्छेदविधानयोः। ऐक्यायोगाच्च भेदो न प्रत्यक्ष इति यो भ्रमः॥" इति। व्यवच्छेदविधानयोः—स्वरूपग्रहभेदग्रहयोरित्यर्थः। तथापि दुरपह्नवव्यवहारान्यथानुपपत्त्या कथञ्चित्प्रत्यक्षेण भेदग्रहः कल्प्यत इत्यत्राह (अत इति) उक्तयुक्तिबलादर्थापत्तिरियमन्यथैवोपपाद्या, अनुपपन्नतैकवेषायां भ्रान्तौ तु क्रमयौगपद्यादिविमर्शो न कार्य इति भावः॥

अथ प्रमेयानुपपत्तिमाह (किञ्चेति) प्रसिद्धेऽपि बाधकन्यायान्यायविवक्षया न्यायविद्भिरित्युक्तम्। भेदः स्वरूपं धर्मो वेति हार्दे विकल्पे पूर्वं निरस्यति (भेदस्तावदिति) संशयाद्यनुपपत्तिगर्भं हेतुमाह (वस्त्विति) स्वरूपस्य भेदत्वे तद्ग्रहे कथं भेदाग्रहः?

न च वाच्यम्– स्वरूपे गृहीतेऽपि भिन्न इति व्यवहारस्य प्रतियोगिस्मरणसव्यपेक्षत्वात्, तत्स्मरणाभावेन तदानीमेव न भेदव्यवहारः– इति । स्वरूपमात्रभेदवादिनो हि प्रतियोग्यपेक्षा च नोत्प्रेक्षितुं क्षमा, स्वरूपभेदयोः स्वपरूत्वाविशेषात् । यथा स्वरूपव्यवहारो न प्रतियोग्यपेक्षः, भेदव्यवहारोऽपि तथैव स्यात् । हस्तः कर इति

* श्रुतप्रकाशिका *

प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेरित्यर्थः । स्वरूपग्रहणस्य शब्दव्युत्पत्तिव्युत्पन्नशब्दस्मरणनिरपेक्षत्वेऽपि भिन्न इति व्यवहारस्तु तत्सापेक्षो यथा भवति तथा प्रतियोगिस्मरणमपि भेदव्यवहारसामग्र्यन्तर्भूतम्; अतस्तत्स्मरणाभावात् तदानीमेव भेदव्यवहाराभावः न तु भेदाग्रहणादिति परमतमाशङ्क्याह (न चेति) कुत ? इत्यत्राह (स्वरूपेति) यथा न स्वरूपग्रहणे प्रतियोग्यपेक्षा तथा भेदव्यवहारे चेति चशब्दार्थः । हिशब्दो हेतौ । स्वरूपग्रहण इव भेदव्यवहारे प्रतियोग्यपेक्षाया असम्भवादित्यर्थः । असम्भवः कुतः ? इत्यत्राह (स्वरूपेति) स्वरूपभेदयोः स्वरूपत्वमविशिष्टमस्तु, ततः किं प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तेः ? इति शङ्कायां तद्विवृणोति (यथेति) स्वरूपपक्षे दूषणान्तरमप्याह (हस्तः कर इति) पर्यायत्वे

* तत्त्वटीका *

तदभावे कथन्तरां संशयविपर्ययौ ? तयोरभावे च सर्वेभ्यो भेदव्यवहार एव स्यात्, तथाच न बाधकसाध्यं किञ्चित् स्यादिति भावः । प्रसञ्जितविपर्ययस्यान्यप्रयुक्तत्वमाशङ्क्याह (नचेति) स्वरूपे गृहीतेपि— स्वरूपभूते भेदे गृहीतेपीत्यर्थः । (भिन्न इत्यादि) यथा वाच्यस्वरूपे गृहीतेपि वाचकप्रयोगस्सम्बन्धग्रहणापेक्षस्तथा भिन्न इति व्यवहारोपि प्रतियोगिधीसापेक्षः, तत एवात्रासौ तदभावप्रयुक्तः स्वभाव इत्याशयः । प्रतियोगिसापेक्षत्वादित्युक्तं दूषयति (स्वरूपमात्रेति) चोवधारणे, आश्रयापेक्षासमुच्चयो वा । यथा स्वरूपग्रहणे प्रतियोगिनैरपेक्ष्यं तथा तद्व्यवहार इत्यभिप्रायेण नोत्प्रेक्षितुं क्षमेत्युक्तम् । स्वरूपमात्रभेदवादिन इत्यनेन सूचितं हेतुं

वत्, घटो भिन्न इति पर्यायत्वञ्च स्यात् । नापि धर्म्मः,— धर्मत्वे सति तस्य स्वरूपाद्भेदोऽवश्याश्रयणीयः, अन्यथा

* श्रुतप्रकाशिका *

सति सहप्रयोगस्त्याज्यः स्यादिति भावः । स्वरूपपक्षे मृषावादिभिर्दूषणान्तराण्य-प्युक्तानि. उदाहृतदूषणपरिहारेण तान्यपि प्रत्युक्तानि भवन्तीति भाष्ये न कण्ठो-क्तानि, तान्युच्यन्ते । स्वरूपपक्षे भिन्न इति व्यवहर्तुं न युक्तं, भिन्नो हि भेदयोगी एतद्व्यवहारसिद्धये यदि स्वरूपभूतभेदान्तरं स्वीक्रियते तत्रापि भिन्न इति व्यव-हारस्यायुक्तत्वात् तत्स्वरूपभूतभेदान्तरमाश्रयणीयमित्यनवस्था । किञ्च— शब्दान्तरेण धर्म इत्युक्तं स्यात् ; तथा च धर्मपक्षदूषणान्यापतेयुः । किञ्च—भेदः किमनुवृत्तः ? उत व्यावृत्तः, ? व्यावृत्तश्चेत् स किं स्वरूपम् ? उत धर्मः ? प्रथमे घटस्य भेदव्यवहारे कृते पट विषयभेदव्यवहारो न स्यात्, व्यावृत्तत्वात् । धर्मश्चेत् पूर्वोक्तदोषो धर्मत्वप्रयुक्तदूषणानि च स्युः, यद्यनुवृत्तः स च स्वरूपं चेत् शब्दान्तरेण सन्मात्रमङ्गीकृतं स्यात् । धर्म-पक्षे पूर्ववत् । किञ्च—भिदिधातोर्हि विदारणमर्थः, एकस्य वस्तुनो भेदो नाम—द्विधा भावः, तत्खण्डस्यापि तथा स्यात् ; अतो वस्तुनि भेदाभ्युपगमे विदारणपरम्परया नाश एव स्यादित्येवमादीनि । अथ धर्मपक्षं दूषयति ( नापीति ) कुतः ? इत्यत्राह । ( धर्मत्व इति ) स्वरूपाद्धर्मस्य भेदाभावेऽनिष्टमाह ( अन्यथेति )

* तत्त्वटीका *

विवृणोति ( स्वरूपभेदयोरिति ) उक्तं प्रतिबन्दिगर्भं व्यनक्ति ( यथेति ) सहप्रयोग-भङ्गमभिप्रयन् प्रसङ्गान्तरमाह ( हस्त इति ) स्वरूपभेदशब्दयोः पर्यायता स्यादिति वक्तव्ये घटो भिन्न इत्युक्तेरयं भावः,— भेदत्वेन प्रस्तुतस्य घटस्य स्वरूपत्वं परे मन्यन्ते । तस्य च स्वरूपमेव भेदश्चेत्, यस्य भेदोऽस्ति स भिन्नः, अतो घटभिन्न-शब्दौ पर्यायौ स्याताम् । एवं घटभेदशब्दावपीति । चकारोऽत्रानुक्तमपि समुच्चिनोति । स्वरूपस्यानुवृत्तत्वे भेदत्वं न स्यात् । व्यावृत्तत्वेऽन्येषां निस्स्वरूपत्वनिर्भेदत्वाद्यापत्तिः, भेदस्य धर्मत्वे तद्वति क्वचिदप्यभेदो न सिद्ध्येत् । तथा सत्यभिन्नस्य भिन्नस्य वाभावे सर्वापह्नवस्स्यादित्यभिप्रायेणाह ( नापीति ) अनवस्थां वक्तुं धर्मभूतो भेदः स्वरूपेण अभिन्नो भिन्नो वेति विकल्प्याद्यं निरस्यति ( धर्मत्व इति ) भेदाभावे धर्मधर्मिभावो

स्वरूपमेव स्यात्। भेदे च तस्यापि भेदस्तद्धर्मस्तस्यापी- त्यनवस्था। किञ्च, जात्यादिविशिष्टवस्तुग्रहणे सति भेद- ग्रहणम्. भेदग्रहणे सति जात्यादिविशिष्टवस्तुग्रहण-- मित्यन्योन्याश्रयणम्; अतो भेदस्य दुर्निरूपत्वात् सन्मात्रस्यैव प्रकाशकं प्रत्यक्षम् ॥

* श्रुतप्रकाशिका *

स्वरूपधर्मयोर्भेदोऽस्तु, ततः किमित्यत्राह (भेदे चेति) तस्यापि भेदस्तद्धर्मः—तस्य धर्मतया स्वीकृतस्यापि भेदस्य, स्वरूपापेक्षया यो भेदः सोऽपि, तस्य धर्मतया स्वीकृतस्य भेदस्य धर्मः । यद्वा स्वरूपाद्धर्मस्य यो भेदः स्वीकृतः, तस्य धर्मिभूताद्धर्मात् भेदोऽपि धर्मः । अन्यथा स्वरूपमेव स्यात्; तथा च स्वरूपपक्षदूषणानि स्युः, सोऽपि भेदो धर्मः, तस्यापि स्वरूपाद्भेदः इत्यनवस्थेत्यर्थः । एवं धर्मपक्षेऽनवस्थामुक्त्वाऽन्यो- न्याश्रयणमाह (किञ्चेत्यादिना) त्रेधा च तत्, धर्मिणि प्रतियोगिनि च गृहीते भेदग्रहणं, भेदे गृहीते धर्मिप्रतियोगिग्रहणमिति । धर्मे धर्मिणि च गृहीते भेद- ग्रहणम्. भेदे गृहीते धर्मधर्मिग्रहणमिति । अयं घट इत्यत्रेदंशब्दनिर्दिष्टस्य घट- जातीयत्वविशिष्टग्रहणं पटजातीयाद्भेदग्रहणपूर्वकम्, अन्यथा घटजातीयत्वविरो- धात्. पटाद्भेदग्रहणमिदंशब्दनिर्दिष्टस्य घटजातीयत्वग्रहणपूर्वकम्, अन्यथा पटत्व- प्रसङ्गादिति । एवं धर्मधर्मिग्रहणे धर्मितया प्रतियोगितया च ग्रहणे तत्तज्जाती- यत्वग्रहणे च त्रिधाऽन्योन्याश्रयणमुक्तम् । साधकप्रमाणाभावमुपसंहरति— (अत इति) अतः—स्वरूपधर्मपक्षोक्तैर्दूषणैर्निरूपत्वादित्यर्थः । इत्थं साधकप्रमाणा- भाव उक्तः, प्रमेयानुपपत्तिरूपस्तर्कश्च तच्छेषभूतः, सामग्रीविषयेणार्थस्वभाव- विषयेण वा निरूपणेन विषयविशेषे प्रमाणव्यवस्थापनं हि तर्ककृत्यम् ॥

❁ तत्त्वटीका ❁

न स्यात्, स्वरूपपक्षोक्तदोषाश्च स्युरित्यभिप्रायेणाह (अन्यथेति) द्वितीये मूलोच्छेद- माह (भेदे चेति) तद्धर्मः— तस्य भेदस्य धर्मः । ग्रहणद्वारापि दोषमाह (किञ्चेति) तज्जातीयत्वातज्जातीयत्वतद्गुणकत्वातद्गुणकत्वविशेषणत्वविशेष्यत्व- धर्मत्वप्रतियोगित्वादावपि भेदग्रहेऽप्यन्योन्याश्रयत्वमभिप्रेत्य जात्याद्युक्तिः ।

किञ्च–घटोऽस्ति पटोस्ति, घटोऽनुभूयते पटोऽनुभूयत इति सर्वे पदार्थाः सत्तानुभूतिघटिता एव दृश्यन्ते। अत्र सर्वासु प्रतिपत्तिषु सन्मात्रमनुवर्त्तमानं दृश्यत इति तदेव परमार्थः। विशेषास्तु व्यावर्त्तमानतया अपरमार्थाः, रज्जु-सर्पादिवत्। यथा रज्जुरधिष्ठानतया ऽनुवर्तमाना पर-मार्थसती; व्यावर्त्तमानास्सर्पभूदलनाम्बुधारादयोऽपर-

* श्रुतप्रकाशिका *

अथ बाधकप्रमाणमुपन्यस्यति ( किञ्चेति ) तत्रानुमानं विवक्षुर्व्याप्तिं शिक्षयति ( घटोऽस्तीत्यादिना ) "वैधर्म्याच्च न स्वप्नादिवत्" इत्यत्र सूत्रकारेणैव दृश्यत्वा-नुमानस्य निराकरिष्यमाणत्वात् तन्निरासस्य मिथ्यात्वानुमानानां सर्वेषां दूष्यत्व-प्रदर्शनार्थत्वात् पूर्वपक्षे व्यावर्त्तमानत्वहेतुरुपन्यस्यते, अनुवृत्तत्वप्रदर्शनाय घटोऽस्ति पटोऽस्तीत्युक्तम्। सदनुभूत्योरेकत्वं वक्ष्यमाणं हृदि निधायानुभूतेरनुवृत्तिं दर्शयति ( घटोऽनुभूयते पटोऽनुभूयत इति ) ततः किमित्यत्राह (अत्रेति) व्यावर्त्तमानतया–उत्तरोत्तरप्रतिपत्तिविषयेष्वविद्यमानतया। रज्जुसर्पादिवत्– रज्ज्वादिवत् सर्पादि-वच्चेत्यर्थः। तद्विवृणोति ( यथेत्यादिना ) बाधितत्वाबाधितत्वाभ्यां द्वयोर्हेत्वोः

* तत्त्वटीका *

भेदकाग्रहणे भेदो न गृह्येत कथञ्चन।
तस्य चाग्रहणे सोपि न गृह्येतेति सङ्ग्रहः॥ ७ ॥

एवं ग्राह्यानुपपत्त्या ग्राहकानुपपत्तिं पूर्वमुक्तां द्रढयति ( अत इति )॥

न केवलं प्रमाणाभावः, प्रमाणबाधोप्यस्तीत्याह ( किञ्चेति ) अत्र घटादि-बाधे तत्सत्तापि खपुष्पगन्धवत्स्यादिति शङ्कानिरासायानुवृत्तसत्त्वस्थापनम्। विव-क्षितस्यानुमानद्वयस्य पक्षसिद्धिं तावदाह ( घटोस्तीति ) अनुभूत्यनुवृत्तिदर्शनं सद-नुभूत्यैक्याधानार्थं, नहि व्यावृत्तस्यानुवृत्ततादात्म्यं स्यात्। स्वरूपासिद्धिं व्याप्य-त्वासिद्धिञ्च व्युदस्यति ( अत्रेति ) रज्जुसर्पादीत्युदाहरणे व्याप्तिद्वयार्थमादिशब्दः प्रत्येकं भाव्यः। व्याप्तिदृष्टान्तौ स्पष्टयति ( यथेति ) ( परमार्थसती ) व्यावहारिक-

मार्थाः । ननु च– रज्जुसर्पादौ रज्जुरियं न सर्प इत्यादि-रज्ज्वाद्यधिष्ठानयाथार्थ्यज्ञानेन बाधितत्वात् सर्प्पादेरपारमार्थ्यम्, न व्यावर्तमानत्वात् । रज्ज्वादेरपि पारमार्थ्यं नानुवर्तमानतया, किन्त्वबाधितत्वात् । अत्र तु घटादीनामबाधितानां कथमपारमार्थ्यम् ? उच्यते,– घटादौ दृष्टा व्यावृत्तिः सा किंरूपेति विवेचनीयम् । किं घटोऽस्तीत्यत्र पटाद्यभावः ? सिद्धं तर्हि घटोस्तीत्यनेन पटादीनां

* श्रुतप्रकाशिका *

सोपाधिकत्वं दर्शयंश्चोदयति । ( ननु चेति ) उपाधिनिवृत्त्या पक्षे साध्यनिवृत्तिमाह ( अत्र त्विति ) विपरीतोपाधिसद्भावाच्च व्याघात इति चाभिप्रायः । परिहरति ( उच्यत इत्यादिना ) । प्रथमं सम्प्रतिपन्नांशमाह ( घटादौ दृष्टा व्यावृत्तिरिति ) सपक्षेषु सर्वेषु विद्यमानः पक्षे अविद्यमानो ह्युपाधिः, तत्र परेणोपाधित्वेनोक्तस्य धर्मस्य पक्षे विद्यमानत्वकथनेन व्यावर्त्तमानत्वहेतोः सोपाधिकत्वं दूषयिष्यँस्तदुपयोगित्वेन घटादिषु दृष्टा व्यावृत्तिः किं संवादफलभूता, उत बाधफलभूता ? इति विवेचनीयमित्याह (सा किंरूपेति ) बाधफलभूतत्वं दर्शयितुं व्यावृत्तिस्वरूपमाह ( किं घटोऽस्तीत्यत्रेति ) घटोऽस्तीति प्रतीते विषये पटाभाव इत्यर्थः । ( सिद्धं

* तत्त्वटीका *

व्यवस्थयेति शेषः । सर्पाद्युदाहरणमिह एकाधिष्ठानाध्यस्तविषयम् । द्वयोरपि व्याप्त्योरुपाधी शङ्कते ( ननु चेति ) अबाधितत्वोपाधिः पक्षव्यापक इति न वाच्यम्, माध्यमिकनयेन घटादितुल्यन्यायतया सतोपि बाधकस्य सुवचत्वादिति भावः । बाधितत्वोपाधेः पक्षव्यावृत्तिमाह ( अत्र त्विति ) घटोस्तीत्यादावित्यर्थः । द्वयोरपि साधनव्यापकत्वबुद्ध्या प्रतिवक्ति ( उच्यत इति ) बाधितत्वस्य तावदाह ( घटादाविति ) किंरूपा—किं सत्यसर्पनिवृत्तिवद्भ्रान्तिसिद्धा ? उत रज्जुसर्पनिवृत्तिवत् प्रमाणबाधसाध्या ? इति विकल्पः । तत्राद्यो घटपटतादात्म्यादिप्रसङ्गादयुक्त इत्यभिप्रायेणाह ( किमिति ) घटोस्तीति प्रतीतेर्थे पटाभावो मिथ्या, अतः प्रमितया

बाधितत्वम्; अतो बाधफलभूता विषयनिवृत्तिर्व्यावृत्तिः। सा व्यावर्त्तमानानामपारमार्थ्यं साधयति। रज्जुवत्सन्मात्रमबाधितमनुवर्तते। तस्मात्सन्मात्रातिरेकिसर्वमपरमार्थः। प्रयोगश्च भवति—सत् परमार्थः, अनुवर्त्तमानत्वात्, रज्जुसर्प्पादौ रज्ज्वादिवत्, घटादयोऽपरमार्थाः व्यावर्त्तमानत्वात्, रज्ज्वाद्यधिष्ठानसर्प्पादिवदिति।

* श्रुतप्रकाशिका *

तर्हीति ) रज्जौ भूदलनादीनामभावो हि बाधितत्वमिति भावः। तस्मात् बाधफलभूतैवेत्याह ( अत इति ) बाधो नाम—अदुष्टकारणजा निषेधबुद्धिः, तेन पुरोवर्त्तिन्यभावो व्यावृत्तिः। एवं निरुपाधिकत्वाद्व्यावर्त्तमानत्वमपारमार्थ्यसाधकमित्याह ( सेति ) अबाधितत्वफलभूतानुवृत्तेः परमार्थत्वप्रयोजकत्वादनुवर्त्तमाने पारमार्थ्यं दर्शयति (रज्जुवदिति) अबाधो नाम— अविरोधित्वम्, अनुवृत्तिर्नाम तत्कृतो विषयतयाऽन्वयः, पुरोवर्त्तिनि सद्भावो वा; इत्थं व्याप्तिः शिक्षिता। न केवलं तर्कः अनुग्राह्यमप्यस्तीत्याह ( प्रयोगश्च भवतीति ) मायावेदान्तिनो हि ज्ञानमात्र-

७ तत्त्वटीका ७

अन्यव्यावृत्त्यान्येषां बाधितत्वमर्थसिद्धमित्याह ( सिद्धमिति )( घटोऽस्तीत्यनेन ) न रजतमिति निषेधाभावेऽपि यथा शुक्तिरित्यनेन रजतबाधस्तथेति भावः। एवं पटादिविधौ घटस्यापि निवृत्तिस्सिद्धा स्यात्। उक्तप्रकारेणोपाधेस्साधनव्यापकत्वमाह ( अत इति ) ( बाधफलभूता ) नास्तीति धीस्थाप्येत्यर्थः। विषयनिवृत्तिः—घटादिधीवेद्यानामभावः, तेषामिह वेद्यत्वाभावो वा। एवं निरुपाधिकतया व्यावर्त्तमानत्वस्य साधकत्वमाह ( सेति ) अनुवर्तमानत्वहेतावप्यबाधितत्वोपाधिर्व्यापक इत्याह ( रज्जुवदिति ) सतोऽपि माध्यमिकयुक्त्या बाधोक्तिर्निरधिष्ठानभ्रमासम्भवादयुक्ता। हेतुद्वयफलितमाह ( तस्मादिति ) मिथो विमर्देन सर्पादिनिवृत्तौ रज्जुनिवृत्तिवद्घटादिनिवृत्तौ सदेवेति श्रुतं सत् परिशिष्येतेत्याशयः। भेदबाधकतर्काणामनुग्राह्यनिष्कर्षयाह ( प्रयोगश्चेति ) चकार उपाधिविधूननादिसमुच्चयार्थः। चिन्मात्र-

एवं सत्यनुवर्त्तमानाऽनुभूतिरेव परमार्था, सैव सती ॥ ननु च— सन्मात्रमनुभूतेर्विषयतया ततो भिन्नम् । नैवम्; भेदो हि प्रत्यक्षाविषयत्वाद्दुर्निरूपत्वाच्च पुरस्तादेव निरस्तः । अत एव सतोऽनुभूतिविषयभावोऽपि न प्रमाणपदवीमनुसरति; तस्मात्सदनुभूतिरेव ॥ सा च

* श्रुतप्रकाशिका *

पारमार्थ्यवादिनः, तत्कथं सतः पारमार्थ्यसाधनमित्यत्राह ( एवं सतीति ) व्यावर्त्तमानत्वानुवर्त्तमानत्वयोरपारमार्थ्ये पारमार्थ्ये च प्रयोजकत्वे सिद्ध इत्यर्थः । तर्हि परमार्थद्वयं स्यादित्यत्राह ( सैव सतीति ) अथ सदनुभूत्योर्विषयविषयिभावरूपं भेदमुद्धाटयंश्चोदयति ( ननु चेति ) भिन्नत्वं साध्यं, विषयतयेति हेतुः । परिहरति ( नैवमिति ) तत्र साध्यांशं दूषयति ( भेदो हीति ) पुरस्तादेव—ज्ञेयभेदनिषेधादेव ज्ञानभेदोऽपि निरस्त इत्यर्थः । हेत्वंशं दूषयति ( अत इति ) ( न प्रमाणपदवीमनुसरतीति ) विषयविषयिभावो भ्रान्तिसिद्ध इत्यर्थः । भेदस्य भ्रान्तिसिद्धत्वमपि ना समुच्चीयते । श्रुतिप्रतिपाद्यार्थान्तरेणापि साधयन् विषयविषयिभावे निरस्ते ग्राहकाभावाच्छून्यत्वशङ्कां च व्यावर्तयन् स्वप्रकाशत्वमुपपादयति ( सा चेति ) चः शङ्काया

* तत्त्वटीका *

सत्यत्वमिच्छतां किं बाह्यस्य सतस्सत्यतयेत्यत्राह ( एवं सतीति ) हेत्वोर्निरुपाधिकत्वे सतीत्यर्थः । एवकारः पूर्वोक्तरीत्यानुभाव्यानां मिथ्यात्वं व्यनक्ति । सत्यद्वित्वं भेदसत्यत्वस्वीकारो मिथो व्यावृत्त्या द्वयोरपि बाधश्च स्यादित्यत्राह ( सैव सतीति ) अनुभूतिरेव सच्छब्दार्थ इत्यर्थः । अवधारणमयुक्तं सतः प्रत्यक्षविषयत्वसाधनेन भेदस्य सिद्धत्वादित्यभिप्रायेण चोदयति ( ननु चेति ) मानतः स्वरूपतश्च भेदस्यानुपपन्नत्वोक्त्या धी [ स्वभावोपि ] सद्भेदोपि बाधित इति प्रतिवक्ति ( नैवमिति ) तर्हि स्वयमेव सामान्यतो विशेषतश्च विषयत्वादिभेदोक्त्या वा विरोध इत्यत्राह (अत इति ) भ्रान्तिरूपलोकदृष्ट्या मयोक्तमित्यभिप्रायेण प्रमाणपदवीनिषेधः, तेन दृग्दृश्यसम्बन्धानुपपत्तिस्सूचिता । 'यां ग्राह्यलक्षणो योगशब्द' इति योगाचारः उपचरन्ति । सैवेत्यवधारितं निगमयति ( तस्मादिति ) विषयविषयित्वरूपस्यापि भेदस्य

**स्वतःसिद्धा, अनुभूतित्वात्। अन्यतः सिद्धौ घटादिवदननुभूतित्वप्रसङ्गः। किञ्च अनुभवापेक्षा चानुभूतेर्न शक्या कल्पयितुम्, सत्तयैव प्रकाशमानत्वात्। न ह्यनु-**

* श्रुतप्रकाशिका *

निवृत्तौ। तत्र व्यतिरेकिणं हेतुमाह (अनुभूतित्वादिति) विपक्षे बाधं दर्शयति (अन्यतः सिद्धाविति) यदन्यतः सिद्धं तदननुभूतिदृष्टम्. यथा घट इति व्याप्तिरर्थाद्दर्शिता॥ अस्य व्यतिरेकिणः पराभिमतं प्रत्यनुमानं सोपाधिकमिति दर्शयन् अर्थादनुमानान्तरमप्याह (किञ्चेत्यादिना) अनुमानान्तरं कण्ठोक्तम्, आर्थः प्रत्यनुमाननिरासो वा स्यात्, अनुमानान्तरस्य कण्ठोक्तत्वे किञ्चशब्दः स्वरसः। प्रत्यनुमानस्य कण्ठोक्तत्वे न शक्या कल्पयितुमिति निर्देशः स्वरसः। किञ्चेति न केवलं स्वमतोपपत्तिः, परमतानुपपत्तिश्चेत्यर्थः, अनुमानान्तरं चेति वार्थः। (अनुभवापेक्षा चेति) पूर्वोक्तसमुच्चेतव्यद्वये किञ्चशब्दसमुच्चितादन्यस्य समुच्चयपरशब्दः (न शक्या कल्पयितुम्) ज्ञानं परप्रकाशम्, वस्तुत्वात् भासमानत्वाद्वा; घटादिवदिति प्रत्यनुमानम्। एवमादिभिः परप्रकाशत्वं न वक्तुं

❀ तत्त्वटीका ❀

बाधादित्यर्थः। सदनुभूतिरेव— सदिति भातं वस्तु न तद्बुद्धेर्भिन्नम्। सच्चिदात्मनः मेयत्वाभावे माध्यमिकोक्तसंवृतिसिद्धिवत् स्यादित्यत्राह (सेति) स्वतस्सिद्धा—स्वरूपप्रयुक्तस्वप्रकाशा, अवेद्यत्वे सत्यपरोक्षव्यवहारार्हेत्यर्थः। अत्र "यानुभूतिरजानन्ता मेयाद्यानन्दविग्रहा। महदादिजगन्माया चित्रभित्तिर्नमामि ताम्॥" इत्युक्तप्रकारेण उपरितन उपन्यासः। येति स्वतस्सिद्धतां सूचयतीति व्याख्यातम्। तत्र अनुभूतिरिति हेतुगर्भमित्याह (अनुभूतित्वादिति) चित्त्वादित्यर्थः। असाधारणाभासत्वशङ्कां व्यतिरेकव्याप्त्या परिहरन् 'अनुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्ग' इति तत्रोक्तमाह (अन्यत इति) अनुमानान्तरमस्तीत्याह (किञ्चेति) अनुभवेत्यादिः प्रतिज्ञाग्रन्थः। अनुभूतिर्नानुभवान्तरसापेक्षप्रकाशेत्यर्थः। भासमानत्वादिभिर्वेद्येति प्रत्यनुमानञ्चानेन निरस्यते; अत एव चकारः कल्पयितुमितिपदञ्च सफलं स्यात्। प्रतिज्ञायां हेतुं वदन् प्रत्यनुमाने चोपाधिं व्यनक्ति (सत्तयैवेति) यावत्सत्त्वं प्रकाश-

भूतिर्वर्त्तमाना घटादिवदप्रकाशा दृश्यते, येन परायत्त-प्रकाशाऽभ्युपगम्यते ॥

अथैवं मनुषे—उत्पन्नायामप्यनुभूतौ विषयमात्रमव-

* श्रुतप्रकाशिका *

शक्यमित्यर्थः । कुत इत्यत्राह ( सत्तयैवेति ) सत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्कानिवृत्तये तं विवृणोति ( न हीति ) विद्यमानदशायां कदाचिदप्रकाशमानत्वं पराधीनप्रकाशत्वे प्रयोजकम्, अतः प्रत्यनुमानं सोपाधिकमित्यर्थः । विद्यमानदशायां सर्वदा भासमानत्वादिति व्यतिरेक्यनुमानान्तरमिति स्फुटतरम् । यथा संवित्सिद्धौ " यद्यप्रकाशमाना धीः कदाचिदवतिष्ठते " इत्यारभ्य—" घटादाविव तत्रापि कल्पनीयं प्रकाशनम्"इति । अनेन ग्रन्थेन स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिशङ्का परिहृता । विद्यमानत्वे सर्वदा प्रकाशमानत्वं सुखादावप्यस्तीत्यनैकान्त्यमिति चेन्न; सुखादिव्यतिरिक्तत्वे सतीति विशेषणस्याभिप्रेतत्वात् । सिद्धान्तिमते सुखादेरपि ज्ञानविशेषत्वेन पक्षेऽन्तर्भावान्नानैकान्त्यम् ; एवमनुमानान्तरमुक्तम् शङ्कितप्रत्यनुमानस्य सोपाधिकत्वञ्च दर्शितम् ॥

अथ प्राकट्यानुमेयपक्षं निराचिकीर्षुरनुवदति ( अथैवं मनुष इत्यादिना ) प्रथमं स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिमुपपादयति ( उत्पन्नायामिति ) अनेन स्वोक्तस्य वस्तुत्वात् भासमानत्वादित्यादिप्रत्यनुमानस्य सोपाधिकत्वव्युदासः सेत्स्यतीति भावः । उत्पन्नायामप्यनुभूतौ विषयमात्रमवभासत इत्यत्र घटोऽयमितीत्यध्याहार्यम्. घटोऽयमिति विषयमात्रमवभासत इत्यर्थः । घटोऽयमिति जानामिति हि वक्ष्यते। यथा संवित्सिद्धौ "घटोऽयमिति विज्ञाने घटमात्रं प्रकाशते।

ॐ तत्त्वटीका ॐ

मानत्वादिति यावत् । विद्यमानत्वेप्यविदितावस्थायोगित्वं घटादिषु वेद्यत्वस्योपाधिभूतं तन्नेति भावः । हेतोरसिद्धिमुपाधेः साधनव्यापकत्वञ्च निरस्यति ( नहीति ) ॥

तदुभयं भाट्टमतेन शङ्कते ( अथेति ) विषयमात्रम्— घटादिमात्रम्, न तु तद्धीरित्यर्थः । तदिदं व्यक्तमनूक्तं संवित्सिद्धौ— "घटोयमिति विज्ञाने घटमात्रं प्रकाशते । न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते ॥" इति । विषयमात्रभाने

भासते घटोऽनुभूयत इति। न हि कश्चिद्धटोऽयमिति जानन्न तदानीमेवाविषयभूतामनिदम्भावामनुभूतिमप्यनुभवति । तस्माद्घटादिप्रकाशनिष्पत्तौ चक्षुरादि-

* श्रुतप्रकाशिका *

न वित्तिरिति युष्माकं गोष्ठीषु ननु घुष्यते ॥" इति । घटोऽनुभूयत इत्यस्योत्तरत्रान्वयः, पूर्वत्रान्वयश्चेत् विषयमात्रमवभासत इत्यनेन विरोधः स्यात्। कथं विषयमात्रस्यावभासः ? घटोऽनुभूयत इत्यनुभवोऽपि प्रकाशत इति शङ्कायां विषयमात्रस्यैवावभासमुपपादयति ( घटोऽनुभूयत इत्यादिना ) यदा घटोऽयमिति जानाति न हि तदानीमेव घटोऽनुभूयत इति जानाति । कुत इत्यत्राह ( अविषयभूतामनिदम्भावामिति ) अविषयभूताम्—घटशब्दार्थव्यतिरिक्ताम् । अनिदम्भावाम्—अयंशब्दार्थव्यतिरिक्ताम् । घटत्वविशिष्टं पृथुबुध्नोदराकारद्रव्यं घटशब्दार्थः । सन्निहितदेशवर्तमानकालविशिष्टत्वमयंशब्दार्थः । उभयव्यतिरिक्तो ह्यनुभवः, स तु घटोऽयमित्यनुभववेलायां नानुभूयत इत्यर्थः । अविषयभूतामिति साधारणनिर्देशः पटादीनामपि प्रदर्शनार्थः । अतएवाघटभूतामित्यनुक्तिः । यद्वा घटोऽनुभूयत इति पूर्वेणान्वयः । इतिर्हेतौ । यतो घट एवानुभूतिकर्म, न त्वनुभूतिरपि तदानीमनुभूतिकर्म भवति; तस्माद्विषयमात्रमवभासत इत्यर्थः । अस्यैव विवरणम्—न हीति। शब्दलिङ्गालोकादीनां प्रकाशकानां ज्ञाततयैव प्रकाशकत्वं दृष्टम्, अतोऽनुभूतिरप्रकाशा चेत् प्रकाशकत्वमपि न स्यादित्यत्राह ( तस्माद्धटादीति ) सत्तया

* तत्त्वटीका *

हेतुमाह ( घट इति ) घटस्यानुभूतिकर्मत्वाद्धियस्त्वकर्मत्वं विरोधात्तदानीं न भातमिति भावः । यद्वा—प्रतिषेधार्थोयमनुवादः । घटोनुभूयत इति न ह्यनुभवतीत्युत्तरत्रान्वेति । घटोयमिति ज्ञानं यदा जायते न तदानीं घटोनुभूयत इत्यनुभवः । घटानुभूतेः घटशब्देदंशब्दान्यत्वादित्यर्थः । घटोक्तेः प्रदर्शनार्थत्वज्ञापनायाविषयभूतामित्युक्तम् । अनिदम्भावाम्— घटस्य देशविशेषसान्निध्यमिहेदम्भावः, तद्रहितामिति यावत्॥ ननु आलोकलिङ्गादीनान्त्वज्ञातानां न भासकत्वं दृष्टम्, तथात्रापि स्यादन्यथा स्वपरवेद्ययोरनतिशयप्रसङ्गश्च । आह च कीर्तिः ' अप्रत्यक्षोप-

**करणसन्निकर्षवदनुभूतेः सद्भाव एव हेतुः। तदनन्तरमर्थगतकादाचित्कप्रकाशातिशयलिङ्गेनानुभूतिरनुमीयते।**

* श्रुतप्रकाशिका *

प्रकाशकं ज्ञायमानतया प्रकाशकञ्च द्विविधं प्रकाशकम्. तत्र सत्तया प्रकाशककोटिनिविष्टं ज्ञानमित्यर्थः। क एवं नियामकः? इत्यत्राह (तस्मादिति) स्वसत्तयैव प्रकाशमानत्वहेतोरसिद्धेरसदुक्तहेतोः सोपाधिकत्वनिरासाच्चेत्यर्थः। यद्यनुभूतिः स्वयमेव न प्रकाशते तर्हि किं तस्यां प्रमाणमित्यत्राह। (तदनन्तरमिति) (अर्थगतकादाचित्कप्रकाशातिशयलिङ्गेन) कादाचित्कत्वात् कार्यं, कार्यत्वात् सहेतुकमित्यनुमानेन ज्ञायत इत्यर्थः। विषयगतप्राकट्यलिङ्गेन कथं स्वगतज्ञानमनुमीयत इति चेत्? स्वस्मै प्रकाशमानत्वात् स्वगतज्ञानानुमानमुपपद्यते, यदि ज्ञानपश्चाद्भाविना प्रकाशलिङ्गेन ज्ञानमनुमीयते तर्हि घटोऽनुभूयत इति वक्तुमयुक्तं, घटोऽन्वभावीति वक्तुं युक्तमिति शङ्कायामुक्तं तदनन्तरमिति। प्रत्यासत्त्यतिशयाद्वर्तमानत्वव्यपदेश इत्यर्थः। अर्थेन्द्रियसंप्रयोगसमनन्तरमेव घटो-

७ तत्त्वटीका ७

लम्भस्य नार्द्धं दृष्टिः प्रसिध्यति' इति। तत्राह (तस्मादिति) हेतुतयोपाधिनिवृत्ततया च विवक्षितस्य यावत्सत्त्वं प्रकाशमानत्वस्य निरस्तत्वादित्यर्थः। ज्ञापकानां ज्ञातृत्वमिन्द्रियादिषु न दृष्टम्। स्वस्य ज्ञानोत्पत्त्या स्वपरवेद्यवैषम्यमित्यवधारणाभिप्रायः। यदि वर्तमानदशायां धीस्स्वयं नानुभूयेत, तदानुभूयत इति वर्तमानावभासः कथं स्यात्? उत्तरक्षणे च निवृत्ता कथं गृह्येत? ज्ञानग्राहकाभावे ज्ञेयस्यापि निष्प्रमाणकत्वात्सर्वासिद्धिरित्यत्राह (तदनन्तरमिति) अत्यन्तासन्नत्वादनुभूयत इति वर्तमानोक्तिः, व्याप्तिस्मरणादिकञ्च संस्कारभूम्ना शीघ्रं भवति। कालभेदाग्रहोपि पद्मपत्रशतवेधन्यायादविरुद्ध इति भावः॥ (घटः प्रकाशत इति) विषयसामानाधिकरण्यादर्थगतत्वोक्तिः, आत्मगता धीरितरविषयस्य प्रकाशिकेति शङ्का च तेन व्युदस्ता। वेद्यगतप्रकाशस्य कादाचित्कत्वोक्त्या तत्कारणत्वेन धीरनुमेयेति बोध्यते. अर्थगतत्वे रूपादिवत्पुरुषविशेषविषयत्वं न स्यादिति शङ्कानिरासाय प्रकाशशब्दः। अर्थप्रकाशो हि पुरुषविशेषधीजन्यतया तत्प्रतियोगिकतयैव स्वतः परतो वा कुतश्चित्

एवं तर्ह्यनुभूतेरजडाया अर्थवज्जडत्वमापद्यत इति चेत्; किमिदमजडत्वं नाम ? न तावत्स्वसत्तायाः प्रकाशाव्यभिचारः, सुखादिष्वपि तत्सम्भवात्; न हि कदाचि-

* श्रुतप्रकाशिका *

ऽनुभूयत इति प्रतीतेः, प्राकट्यलिङ्गेन ज्ञानानुमानानवकाशत्वशङ्का चानेन परिहृता. तदनन्तरमिति [ पद्मपत्र] बहुपत्रवेधवदनुमानशैघ्र्यात्तथा प्रतीतिरुपपद्यत इति भावः। मृषावादी स्वदर्शनसिद्ध्याऽनिष्टं प्रसञ्जयति ( एवं तर्हीति ) जडत्वम्—ज्ञानव्यतिरिक्तत्वम्, अचित्त्वमित्यर्थः । इह चानुभूतिरजडेति विपर्यये पर्यवसानम्. प्रसञ्जनीयस्य जडत्वस्यानिष्टत्वं प्रतिक्षेप्तुमजडत्वं विकल्प्य दूषयति ( किमिदमिति ) किमिदं—न किमपि, दुर्निरूपमित्यर्थः। अनन्तरं शिरोद्वयप्रदर्शनाभावात् दुर्निरूपत्वविवरणमुत्तरग्रन्थः । विकल्पपरो वा किंशब्दः ? अजडत्वं नाम किं हेतुत्वेनोक्तं विद्यमानदशायां सर्वदा प्रकाशमानत्वम् ? उत साध्यतयाऽभिमतं स्वयमेव स्वस्य प्रकाशकत्वम् ? इति विकल्पोऽभिप्रेतः । तत्र प्रथमे कल्पे किमुत्पत्तिकालेऽपि प्रकाशाव्यभिचारो विवक्षितः ? उतोत्पत्तिक्षणादूर्ध्वं प्रकाशाव्यभिचारः ? इति विकल्पोऽभिप्रेतः । तत्राद्ये शिरस्यसिद्धिः पूर्वमेवोक्तेति मत्वा द्वितीयेऽनैकान्तिकत्वमाह( सुखादिष्विति ) तद्विवृणोति ( न हीति ) शिरोऽन्तरं दूषयति ( अत

ॐ तत्त्वटीका ॐ

भातत्वात्तद्गतज्ञानानुमापक इति भावः । अर्थगतप्रकाशो वायुरूपादियोग्यानुपलब्धिनिरस्त इत्यत्र विषयस्वरूपात्तद्धर्मान्तरेभ्यश्च व्यावृत्ततयोपलब्धमतिशयशब्देन व्यनक्ति । अत्रान्यतस्सिद्धावित्यादिभिः प्रागुक्तं स्मारयन् मृषावादी चोदयति ( एवं तर्हीति ) स्वेतराधीनसिद्धत्वे सतीत्यर्थः । स्वमतेन श्रुत्यनुमानाभ्यां सिद्धवत्कारादजडाया इत्युक्तम् । प्रसङ्गदोषान् विवक्षुः प्राकट्यवादिप्रसञ्जनीयविपर्ययं विकल्पयति ( किमिदमिति ) किमिति हेतुत्वेन उपाधिविपर्ययत्वेन चोक्तं, यावत्सत्त्वं भासमानत्वं साध्यत्वेनोक्तम् ? उत स्वतःसिद्धत्वम् ? इति विकल्पः । अत्राद्यं दूषयति ( न तावदिति ) वेद्यत्वे यावत्सत्त्वं प्रकाशमानत्वाभाव इति प्रसङ्गार्थः स्यात् सोऽस्मादिष्टः विपर्यये पर्यवसानञ्च न सम्भवतीति भावः । मूलशैथिल्य-

दपि सुखादयः सन्तो नोपलभ्यन्ते; अतोऽनुभूतिः स्वयमेव नानुभूयते, अर्थान्तरं स्पृशतोऽङ्गुल्यग्रस्य स्वा-

* श्रुतप्रकाशिका *

इति ) अतः—हेतोरसिद्ध्यनैकान्तिकत्वाभ्यां साध्यमपि नेत्यर्थः । अनेन जडत्वं नानिष्टमिति दर्शितम् । अनुमानान्तरेण साधयिष्यत इत्यत्राह ( अर्थान्तरमिति ) व्याहतत्वान्न किञ्चिदपि प्रमाणमिममर्थं साधयितुमलमित्यर्थः । यथाहुः "अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति । स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥" इति । एवं जडत्वप्रसङ्गरूपतर्कस्य विपर्यये पर्यवसानाभावो व्याप्त्यभाव इष्टप्रसङ्गत्वं व्याघातलक्षणप्रतितर्कपराहतत्वञ्च दर्शितम् । इति-अथैवं मनुष इति पूर्वत्रान्वयः ॥

७ तत्त्वटीका ७

मप्याह ( सुखादिष्विति ) यद्यप्यस्माकमुत्पत्तिक्षणात्पश्चात् ज्ञानान्तरेण ग्रहणम् . सिद्धान्तिनस्तु धीविशेषत्वेन स्वतःसिद्धत्वं, तथापि त्वत्पक्षे चैतन्योपरञ्जिता-न्तःकरणविवर्ततयाध्यस्तत्वेन शुक्तिरूप्यवदप्रकाशमानक्षणक्लृप्त्ययोगात्सुखादौ व्याप्तिभङ्गस्सिद्ध इत्यभिप्रायेण विवृणोति ( न हीति ) अन्ततस्त्वन्मते प्रातिभासिक-रजतादिस्साक्षिचैतन्येन यावत्सत्त्वं प्रकाशमानाविद्यादयश्चादिशब्दार्थः । बुद्धेर्यावत्-सत्त्वं प्रकाशमानत्वमिच्छतस्सुखादावपि तद्वत्स्वरसदृष्ट्या तथा किं न स्यादिति कल्पयित्वा वा तदुक्तिः । द्वितीये त्ववेद्यत्वे स्वयंप्रकाशत्वाभावस्स्यादिति प्रसङ्गार्थः । तथापीष्टप्रसङ्गो विपर्ययापर्यवसानञ्चेत्याह ( अत इति ) अत्राद्यकोटिनिरासादन्या शिष्यते सापि नास्तीत्यर्थः । प्रकाशाव्यभिचारस्य हेतोरसिद्धेरनैकान्त्याच्चेति वा । अनुभूतित्वहेतुना तत्सिद्धिः स्यादित्यत्राप्रसिद्धसाध्यतया व्याप्तिग्रहणाभावे केवल-व्यतिरेकिणोनुमानत्वमेव नास्तीत्यभिप्रायेण साध्यरूपे व्याहतिमाह ( अर्थान्तरमिति) स्वयंप्रकाशत्वाभावः स्यादिति तर्केऽपि प्रतियोग्यसिद्धेस्तदभावप्रसङ्गोऽशक्यः ॥

स्वप्रकाशत्वविषयाः श्रुतयः स्मृतयश्च नः ।
स्वधर्मभूतबुद्ध्यैव पुंसो भानं प्रचक्षते ॥ ७ ॥

कर्मकर्तृविरोधादङ्गुल्यग्रस्य स्वात्मस्पर्शविरोधः, इहतु न तथेति चेदिहापि गमनगन्तव्यत्वादिवत् क्रियाकर्मत्वविरोधस्सिद्धः । इतिः शङ्कासमाप्तौ ॥ अवेद्यत्व-

## त्मस्पर्शवदशक्यत्वादिति ॥ तदिदमनाकलितानुभव-विभवस्य स्वमतिविजृम्भितम्, अनुभूतिव्यतिरेकिणो

* श्रुतप्रकाशिका *

अथ स्वयंप्रकाशत्वबाधामाह ( तदिदमिति ) ( अनाकलितानुभवविभवस्य ) स्वव्यतिरिक्तस्य कृत्स्नस्य प्रकाशकः सन्ननुभवः स्वात्मन्यनन्यापेक्ष इति एको विभवः । प्राकट्यहेतुको यो व्यवहारः प्रकाशत इति तं च जनयितुमयमेव क्षम इत्यपरः । एवं द्विविधोऽनुभवविभवोऽनाकलितो येन सोऽनाकलितानुभवविभवः तस्य. ( स्वमतिविजृम्भितम् ) प्रमाणतर्कनिरपेक्षस्वोत्प्रेक्षामात्रविजृम्भितमित्यर्थः । स्वमतिमाहात्म्यमित्यधिक्षेपो वा । पारिशेष्यात्स्वयंप्रकाशत्वमभ्युपगमयितुं प्रथमं प्राकट्यलिङ्गं प्रतिक्षिपति ( अनुभूतीत्यादिना ) अनुभूतिव्यतिरेकिण इत्यनेनासाधारण्यप्रतिक्षेपः फलितः । विषयधर्मशब्देन आत्मधर्मव्युदासः, तेन रूपादिवत् साधारण्यं फलितम् । अनुभूतिव्यतिरेकिविषयधर्मः प्रकाशः प्रत्यक्षयोग्यो न वा ? न चेत् लिङ्गज्ञानाभावात् अनुमानानुदयः, योग्यश्चेदन्यैरुपलभ्यः स्यात्, रूपादिवदिति भावः । अपेक्षाबुद्धिजन्यस्य द्वित्वादेर्यथा तत्तदेकपुरुषवेद्यत्वं, तद्वत् प्राकट्यमपि तदेकपुरुषवेद्यमिति चेन्न; द्वित्वादिसङ्ख्याः प्रागेव सन्ति, यथैकत्र सर्वा दिशः, तत्तदुपाध्यपेक्षाबुद्ध्याभिव्यङ्ग्याहिताः, एवमपेक्षाबुद्ध्याभिव्यङ्ग्यद्वित्वादि तस्यैव प्रकाशते यद्गतमभिव्यञ्जकम् । अत्र तु रूपादिवज्जन्यधर्मत्वाभ्युपगमात् सर्वैरुपलभ्येत । अभिव्यङ्ग्यत्वेऽभिव्यञ्जकवत एवावभासते सिद्धाञ्जनवतो निधिरिव.

७ तत्त्वटीका ७

वादी प्राकट्यवादिनमुपालभते ( तदिदमिति ) बुद्धेः स्वप्रकाशत्वे सिद्धे निराकारप्रकाशायोगादाकारद्वयानुपलम्भाच्च ग्राह्यग्राहकयोर्ज्ञानाकारत्वं वदद्भ्यो भीतैः प्रकाशमानस्य नीलादेरप्रकाशबुद्ध्याकारत्वायोगात्कल्पितमिदं दृष्टहानमदृष्टकल्पनञ्च सर्वं प्रत्यक्षविरुद्धमिति भावः । अनुभवस्य विभवः– आलोकादिनीत्या परप्रकाशादिहेतोः स्वप्रकाशादौ सजातीयनैरपेक्ष्यम् . तत्र श्रु [त्या ]तानुमितिसूचनाय स्वमतिविजृम्भितमित्युक्तम् ॥ किं प्राकट्यं रूपादिवद्दृष्टम्? उत गुरुत्वादिवत्कल्प्यम्? इति, द्वार्दे विकल्पे पूर्वं दूषयति ( अनुभूतीति ) धीरेव विषयस्य प्रकाशः सा चातन्निष्ठापि

विषयधर्म्मस्य प्रकाशस्य रूपादिवदनुपलब्धेः, उभया-

* श्रुतप्रकाशिका *

न तु जन्यं जनकस्यैवावभासते, न हि कुलालस्यैव घटः प्रकाशते । किञ्च (रूपादिवदिति) धर्मस्य निराश्रयोत्पत्त्ययोगादतीतानागतयोरर्थयोर्जायमानयोरपि प्राकट्यायोगात् प्राकट्याभावेऽपि ज्ञानं प्रतीयत इति तत्र रूपादिवत् प्रकाशानुपलब्धेः प्राकट्येन ज्ञानानुमानं न सम्भवतीति भावः । यथा संवित्सिद्धौ "अतीतेऽनागते चार्थे कथं प्राकट्यसम्भवः । न हि धर्मिण्यसत्येव धर्मः सम्भवमृच्छति ॥" इति । अतीतानागतयोरपि द्वित्वादिवत् प्राकट्यं जन्यत इति चेन्न; द्वित्वादेरपि निराश्रयोत्पत्त्ययोगात्. तत्र द्वित्वाद्यनुत्पत्तावपि घटादेरिव द्वित्वादेरपि धीस्थतया व्यवहारोपपत्तेश्च । ये पुनर्द्वित्वादिकं नाभ्युपगच्छन्ति न तान् प्रति द्वित्वादिकं प्रतिबन्दीकार्यम्, विषयविषयिभावसम्बन्धस्य विद्यमानाश्रयत्वनियमाभावाद्विषयविषयिभाव एव प्राकट्यमिति चेन्न, सम्बन्धस्य सम्बन्धिभ्यां विना प्रतीत्यनुपपत्त्या सम्बन्धिज्ञानं च प्रतीयत इत्यनुमेयमेव न स्यादिति प्राकट्यं लिङ्गं न भवति ॥ एवं प्राकट्याख्यं वस्त्वनुपलब्धमप्यन्यथाऽनुपपत्त्या कल्प्यत इत्याशङ्क्य कल्पकस्यान्यथासिद्धिं दर्शयति ( उभयेति ) अनुभूत्येत्युक्ते प्राकट्यस्य नामान्तरमुक्तं स्यादिति

* तत्त्वटीका *

भ्रान्त्या विषयस्यैव भाति । वस्तुतः प्रकाशस्य विषयधर्मत्वे यद्यसावप्रत्यक्षस्तदाहि लिङ्गानुपलम्भान्नानुमितिः, अतः प्रत्यक्षत्वेऽङ्गीकृते तदुपलम्भः पुरुषविशेषनियतो न स्यादित्यभिप्रायेण रूपादिवदित्युक्तम्. द्वित्वादिवद्धीजन्यतया तेनैव दृश्यत इति चेन्न,— अपेक्षाबुद्धिवेद्याकारविशेषातिरिक्तद्वित्वादिक्लृप्तौ गौरवात्. यादृश्या बुद्ध्या द्वित्वाद्युत्पत्तिं मन्यसे तादृश्या तद्व्यवहारः स्यात् सचातीतादिष्वप्यस्ति । न च तत्र द्वित्वाद्युत्पत्तिः निराधारजन्मतायोगात् । अतिरिक्तद्वित्वाद्युत्पत्तिपक्षेप्यनन्यथासिद्धप्रत्यक्षबलात्प्रकाशप्रतिनियमः, इह तु न तथा; वेद्यगतस्य वित्त्यतिरिक्तानुपलम्भादिति भावः । ये तु 'वर्तमानेष्वतीतादिषु च द्वित्वादिकमेकत्ववत्स्वत एव तत्तद्वस्तुनिष्ठमपेक्षाबुद्ध्या गृह्यते न तु जन्यते इदमेव प्रतिपुरुषमपेक्षाबुद्धिभिरनन्तद्वित्वादिकल्पनाद्वरम्' इत्याहुः, तत्पक्षग्रहे च भेदं निदर्शनं शोभते । द्वितीयं निरस्यति ( उभयेति ) कल्पनागौरवभीतैर्धीद्वयं त्यक्त्वा विषयस्थप्रकाश

भ्युपेतानुभूत्यैवाशेषव्यवहारोपपत्तौ प्रकाशाख्यधर्म-

* श्रुतप्रकाशिका *

शङ्कानिरासार्थमुभयाभ्युपेतशब्दः । यां प्राकट्यजनकत्वेनाभ्यधाः, तयैवेत्येवकाराभिप्रायः । अशेषव्यवहारः—हानोपादानादिव्यवहारः । तस्यानुभूत्यैव सम्भवान्न तेन प्राकट्यं कल्प्यम् । ज्ञातो घटः प्रकटो घट इति व्यवहारश्च इष्टो घटो द्विष्टो घट इति व्यवहारवदन्यथासिद्ध इत्यशेषशब्दाभिप्रायः । न हीच्छाजन्येनार्थगतेष्टत्वेन इच्छाऽनुमीयते, घटः प्रकाशत इति घटकर्तृकतया प्रकाशः प्रतीयते, घटमनुभवतीति घटकर्मकतया अन्यकर्तृकतया चानुभवः प्रतीयते । एवमेकस्यैव कर्मकर्तृव्यवहारानुपपत्त्या कल्प्यत इति चेन्न; कारकभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदनिबन्धनत्वाभावात् , यथा परशुमुद्यम्य वृक्षे निपातयति परशुना वृक्षं छिनत्तीत्युक्तौ परशोः कर्मत्वकरणत्वे श्रुते. अथापि नार्थभेदः, वृक्षस्याधिकरणत्वकर्मत्वे श्रुते. तथापि नार्थभेदः । तथा व्यवहारभेदस्य धातुभेदनिबन्धनत्वेनार्थभेदहेतुकत्वाभावान्न व्यवहारः प्राकट्यकल्पक इत्यभिप्रायेण चाशेषव्यवहारोपपत्ताविन्युक्तम् । घटः प्रकाशत इति व्यवहारो घटगतातिशयेन विना नोपपद्यते, अन्यथा

ॐ तत्त्वटीका ॐ

एव स्वीक्रियताम् . धीसामग्र्या च तत्सिद्धिः स्यादिति चोद्यन्तु सर्वविरुद्धञ्चेत्यभिप्रायेण उभयाभ्युपेतत्वोक्तिः । एवकारेण क्लृप्त्युक्तहेतूपपत्तीनामन्यथासिद्धिगौरवञ्च व्यज्यते । अशेषशब्दः कल्पकत्वेन शङ्कितानां कार्त्स्न्यमाह । तत्र सर्वत्र प्राकट्यजनकतया स्वीकृतैव धीरेका हेतुरिति चावधारणाभिप्रायः ॥

यदि कल्प्येत विषये प्राकट्यं व्यवहारतः ।
तद्धेतुत्वेन कल्प्या धीस्तत्फलार्थं प्रकल्प्यताम् ॥ ॐ ॥
यथा तत्रैव तस्यैव प्राकट्यं ते धिया भवेत् ।
तथा भानादयोपि स्युः किमन्तर्गडुक्लृप्तितः ॥ ॐ ॥
प्राकट्यं प्राकटं स्याद्वा परतस्स्वत एव वा ।
आद्येऽनवस्थितिश्शेषे बुद्धिरेव तथा न किम् ॥ ॐ ॥

ज्ञात इत्यादिव्यवहारस्त्विष्टद्विष्टादिनयात्कर्मप्रत्ययाधीनः, तद्रहितोपि प्रकटो घट इत्यादिर्धीकर्मत्वविषयतया तद्व्युत्पत्तेः स्यात् । ज्ञानकर्मणो घटस्य प्रकाशत इति कर्तृ-

# कल्पनानुपपत्तेश्च । अतो नानुभूतिरनुमीयते, नापि

* श्रुतप्रकाशिका *

पटेऽपि तस्य व्यवहारस्य प्रसङ्गात् । स चातिशयः प्राकट्यमिति चेन्न,–योऽतिशयो व्यवस्थापकः स कथं घट एव स्यात् न पटे, इन्द्रियसंयोगवशादिति चेत् तेन ज्ञानमेव व्यवस्थाप्यतां किमतिशयान्तराभ्युपगमेनेत्ययमर्थोऽप्यशेषव्यवहारशब्देनाभिप्रेतः । यत्तु घटोऽयमित्यनुभववेलायां नानुभूत्यनुभव इति । तन्न;–अनुभूयत इति शब्दाप्रयोगस्याविवक्षानिबन्धनत्वेनाननुभवप्रयुक्तत्वाभावात् . लोके ह्यनुभूतकृत्स्नार्थविवक्षाऽस्ति चेत् तं सर्वं वदति. एकदेशविवक्षास्ति चेदनुभूतैकदेशं वदति. एकदेशविवक्षाऽपि नास्ति चेत् न किञ्चिदपि वदति; अतोऽनुभूयत इति शब्दाप्रयोगो न तदप्रकाशत्वहेतुः , इदमप्यशेषव्यवहारशब्देनाभिप्रेतम् । विकलस्याविकलस्यापि व्यवहारस्याशेषशब्देन क्रोडीकर्तुं शक्यत्वात् । एवं व्यवहारस्यान्यथासिद्धत्वादनन्यथासिद्धस्यैव कल्पकत्वात् न प्रकाशः कल्प्य इत्यर्थः । प्राकट्यानुमेयत्वानुपपत्तिं निगमयति ( अत इति ) अतः–अनुपलब्धिव्यवहारा-

* तत्त्वटीका *

त्वेन व्यवहारोपि रोचिते स्वदत इत्यादिवद्धातुविशेषायत्तः, अतिरिक्तक्लृप्तौ च गुणक्रियादिषु प्राकट्ये च प्रकटादिव्यवहारो दुर्निर्वहः । एवं भूतभाविषु च । तदुक्तं संवित्सिद्धौ– "अतीतेऽनागते चार्थे कथं प्राकट्यसम्भवः । न हि धर्मिण्यसत्येव धर्मस्सम्भवमृच्छति ॥" इति । अत्र परोक्तप्रतिबन्दिनिरासस्तु—

नश्यद्दशाकसंयोगो नानाधारः प्रतीयते ।
प्रध्वंसस्तु निराधारो सदाधार इतीरितः ॥ * ॥

एतेन 'अतीतादौ विषयत्वमात्रं न कर्मत्वम् .यत्र तु कर्मत्वं तत्र क्रियाजन्यफलभागित्वमवश्यापेक्षितम् , इति निरस्तम् । गुणादौ कर्मत्वे तदसम्भवात् , ज्ञानं स्वकर्मणि किञ्चित्करोति क्रियात्वादित्यनुमितौ च धात्वर्थमात्रत्वे हेतौ नाव्याप्तिः । स्पन्दत्वे त्वसिद्धिः । आहुर्न्यायनिष्ठाः—"अनैकान्त्यादसिद्धेर्वा न च लिङ्गमिह क्रिया । तद्वैशिष्ट्यप्रकाशत्वान्नाध्यक्षानुभवोधिकः ॥" इति । ननु धीस्वरूपातिरिक्तं तद्विषयत्वमर्थे भाति, तदनभ्युपगमे विरोधः तदेव प्राकट्यमिति शङ्कायां निगमनव्याजेनोत्तरमाह ( अत इति ) त्वदिष्टस्य लिङ्गस्य निष्प्रमाणत्वादित्यर्थः । विषयत्वञ्च

* श्रुतप्रकाशिका *

न्यथासिद्धिभ्यां प्राकट्याभावात् अनुभूतिर्न प्राकट्यानुमेयेत्यर्थः । मानसप्रत्यक्ष-वेद्यत्वानुपपत्तिमभिप्रेत्याह ( नापि ज्ञानान्तरसिद्धेति ) इदमत्र परोक्तमनुमानं, ज्ञानं मानसप्रत्यक्षग्राह्यं, क्षणिकत्वे सत्यात्मविशेषगुणत्वात् सुखदुःखप्रयत्नादि-वदिति, आत्मविशेषगुणत्वादित्युक्ते धर्मादिष्वनैकान्त्यं स्यादिति तद्व्यावृत्त्यर्थं क्षणि-कत्वे सतीत्युक्तम् । क्षणिकविशेषगुणत्वादित्युक्ते शब्दे व्यभिचारः, क्षणिकात्म-गुणत्वादित्युक्ते आत्मनः संयोगे व्यभिचारः स्यादिति तत्परिहारार्थमात्म-विशेषशब्दौ । तदिदमनुपपन्नम्,—क्षणिकत्वगुणत्वयोरन्यतरासिद्धत्वात्, दृष्टान्तश्च साधनविकलः । किञ्च यन्मानसप्रत्यक्षवेद्यं तदबुभुत्सितग्राह्यं दृष्टम् । यथा सुखादि; अतश्च तद्विषयं ज्ञानं नियतमिति वक्तव्यम्; तस्मात् घटादिज्ञानविषयं यत् ज्ञानं तस्या-प्यबुभुत्सितग्राह्यत्वात् मानसप्रत्यक्षवेद्यत्वं स्यात्, तद्विषयज्ञानस्यापि तथेत्यनन्तसं-विदावलीसमुदयस्यावर्जनीयत्वात् ज्ञानान्तरानवकाशः स्यात् । मानसग्राह्य-त्वस्याबुभुत्सितग्राह्यत्वव्याप्यत्वं नास्ति, स्वापादावुच्छ्वासनिश्श्वासप्रयत्ने सत्यपि तद्ग्र-हणाभावादिति चेन्न, तदानीं जीवात्मनि प्रयत्नस्यैवाभावात्, देहधारणादयः परमात्मसङ्कल्पाधीनास्तदानीमिति हि वेदान्तवादिनः । 'अन्तराभूतग्रामवत्' इत्यधिक-रणेऽयमर्थः सुनिर्णयः । स्वापे देहपरिवर्तनादिस्त्वङ्गप्रत्यङ्गतोदादंशमशकादिजन्य-दुःखादिना वाऽत्यल्पबोधे सति भवति तदानीं च प्रयत्नो धीविषयः, अतो हेतो-रव्यभिचारान्मानसग्राह्यं सर्वमबुभुत्सितग्राह्यमिति अनवस्था स्यादेव । यदि

* तत्त्वटीका *

विषयिणमन्तरेण न भायात् तद्भाने तु अनुमेयं नावशिष्यत इत्याशयः ॥ माभूद-नुमेयत्वं मानसप्रत्यक्षत्वन्तु स्यात् क्षणिकात्मविशेषगुणत्वात्सुखादिवदिति तत्राह ( नापीति ) अनुपलब्धेः कल्पनायोगाच्चेत्युभयमनुषञ्जनीयम् । नहि स्वस्मिन् वर्तमानं ज्ञानं ज्ञानान्तरमिति प्रत्यक्षयामः । उक्तो हेतुरपि क्षणिकत्वात्मधर्मत्वगुण-त्वानामस्माभिरनभ्युपगमान्निरस्तः । मानसप्रत्यक्षत्वे च सुखादिवदात्मगुणस्य सतो बुभुत्सितग्राह्यतया तद्ग्रहणस्यापि तथेत्यनवस्था स्यात्. बुभुत्सितग्राह्यत्वे तु ज्ञाते बुभुत्सा ततश्चापाततोपि तद्धीरित्यन्योन्याश्रयः । तत्रापि सुखादेरिव मानसप्रत्यक्ष-तयैव ज्ञानस्यापि ज्ञातत्वानियमे बुभुत्सा तद्ज्ञानादिपरम्परानुच्छेदः, अनियमे तु

**ज्ञानान्तरसिद्धा ; अपि तु सर्वं साधयन्त्यनुभूतिः स्वयमेव**

* श्रुतप्रकाशिका *

बुभुत्सितग्राह्यं तर्ह्यन्योन्याश्रयणं ज्ञाने सतीच्छा, इच्छायां सत्यां ज्ञानमिति । किञ्च मानसप्रत्यक्षवेद्यस्य बुभुत्सितग्राह्यत्वेऽपि सुखादिषूपलब्धिनियमदर्शनाद्बुभुत्सा-नियमः कल्प्य इति . तद्वदेव ज्ञानेऽपि बुभुत्सानियमसिद्धिरुपलब्धिश्च नियता स्यात्, अतो बुभुत्सान्तरितज्ञानपरम्पराया अविरतिः स्यात्, ज्ञानं बुभु-त्सितग्राह्यम्, सुखादि तु नेति चेन्न,–मानसप्रत्यक्षत्वाविशेषे नियामकाभावात्. सुखादिषु घटादिविषयप्रथमज्ञाने च बुभुत्सा । द्वितीयादौ तु नेति चेन्न–नियामकाभावात्, मानसग्राह्यत्वाविशेषात् प्राप्तां बुभुत्सां को वारयेत्? मानसग्राह्यत्वे सति हि बुभुत्सा, सुखादिकं घटादिविषयप्रथमज्ञानं च मानसग्राह्यं द्वितीयादिज्ञानं न मानसप्रत्यक्षवेद्यमिवि चेन्न, तत्रापि नियामकाभावात् । किञ्च,– क्षणिकात्म-विशेषगुणत्वे सत्यपि द्वितीयादिज्ञानं न मानसग्राह्यं चेत् हेतोरनैकान्त्यम् । यदि प्रत्य-क्षेण गृह्यते तदा मानसग्राह्यमिति चेत् तर्हि पक्षो हेतुश्च प्रत्यक्षग्राह्यशब्देन विशेष्यौ स्याताम् । किञ्च अन्यैरप्युक्तानि दूषणान्तराण्युच्यन्ते; यदि द्वितीयज्ञानं न मानसग्राह्यं, तस्य द्वितीयस्य निष्प्रमाणकत्वेन शून्यता च स्यात्, ततश्च प्रथमस्य ततस्तद्विषयघटादेरपि शून्यता स्यात् । द्वितीयादिज्ञानं स्वतःसिद्धं चेत् प्रथमज्ञान-मपि तथा स्यादिति; एवमाद्यभिप्रायेण नापि ज्ञानान्तरसिद्धा इत्युक्तम् । अथ पारि-शेष्यात् स्वयंप्रकाशत्वं सिद्धमित्याह । ( अपि त्विति ) ( सर्वमिति ) अन्यथा

ও तत्त्वटीका ও

क्षणिकात्मविशेषगुणत्वं मानसप्रत्यक्षत्वरहिते ज्ञाने वर्तेत इत्यनैकान्त्यं, तस्यापि पक्षीकारे भेदः ॥ किञ्च– ज्ञानगोचरज्ञानस्य प्रमितत्वे पूर्वज्ञानमपि निष्प्रमाणकं स्यात्. ज्ञानस्यासम्भवे च ज्ञातृज्ञेयासम्भवः, एतेन– 'अवश्यवेद्यत्वानभ्युपगमात्' इति नैयायिकोक्तं निरस्तम् । कस्यचिद् ज्ञानस्य स्वप्रकाशत्वे तु लाघवात्पूर्वस्यापि तथात्वं ग्राह्यम्. क्वचित्सामान्यतः स्वपरनिर्वाहकत्वे चास्मदुक्तं सोढव्यम् ॥ एवं स्वज्ञानस्यानुमेयत्वमानसप्रत्यक्षत्वयोरयोगात्तदग्रहे च परस्मिन्नपि तथैवेति व्युत्पत्त्याद्य-सम्भवेनागमस्यापि निर्मूलत्वादन्ततो माध्यमिकवादप्रसङ्गमनिच्छतामस्मत्पक्षो्ऽशिश्रियत इत्याह ( अपि त्विति ) सर्वं साधयन्तीति हेतुपरम्. नित्यस्य स्वप्रकाशस्य स्वजन्य-

* श्रुतप्रकाशिका *

संविदः शून्यत्वेन तदधीनसिद्धि सर्वं शून्यं स्यादिति तत्परिहाराय स्वयंप्रकाशत्वमवश्याभ्युपगन्तव्यमित्यभिप्रायेण—सर्वं साधयन्त्यनुभूतिः स्वयमेव सिद्ध्यतीत्युक्तम् । यथा संवित्सिद्धौ "तदेवापश्यतां सर्वशून्यत्वात् बिभ्यतां सताम् । गतिः स्वयं प्रकाशत्वादृते नान्योपलभ्यते ॥" इति । अथ तर्कानुग्राह्यं स्वयंप्रकाशत्वे प्रमाणमुप-

❀ तत्त्वटीका ❀

स्वार्थयोगादन्यनिरपेक्षप्रकाशत्वमेव प्रक्रान्तमिह स्पष्टीकृतम् । अयं भावः,—

धियः स्वकर्मताभावान्न स्वेन स्वप्रकाशनम् ।
इत्यसत्स्वात्मनिर्वाहसमाधेर्दुस्त्यजत्वतः ॥ ❀ ॥
धीरस्तीति मतौ शब्दे शब्दलक्षणलक्षणे ।
इष्टस्स्वपरनिर्वाहः सर्वमित्यादिधीष्वपि ॥ ❀ ॥
कर्मकर्तृविरोधोपि स्वबुद्ध्यादौ न दृश्यते ।
क्रियाकर्मविरोधश्च वारणीयः क्रियोक्तिवत् ॥ ❀ ॥
अङ्गुल्यग्रादिदृष्टान्तमात्रमप्यत्र निष्फलम् ।
दृष्टचदृष्टिविशेषेण सर्ववस्तुव्यवस्थितेः ॥ ❀ ॥
अस्पृष्टिस्स्वात्मनस्तत्र संयोगद्विष्टताबलात् ।
दृष्टान्तमत्र भक्तेन दीपादिः किं न दृश्यते ॥ ❀ ॥
अन्तर्ज्योतिः स्वयंज्योतिरात्मज्योतिरिति श्रुतिः ।
स्वारस्याद्वदति स्वान्यनिरपेक्षप्रकाशताम् ॥ ❀ ॥
स्वान्यधीहेतवो दृष्टा मनोधर्मादयस्तथा ।
स्वयं भिद्यत इत्यादौ सम्मता कर्मकर्तृता ॥ ❀ ॥
आत्मानं रक्षतीत्यादिष्वपि द्वैरूप्यमक्षतम् ।
प्रदीपादिनयस्थाप्या न मुधा बाधमर्हति ॥ ❀ ॥
यदा विषयमात्रस्य व्याहारस्तत्र वेदितुः ।
अनुभूयत इत्युक्तिरविवक्षा निवर्त्तिता ॥ ❀ ॥
व्यवहारनिवर्त्त्या च न प्रकाशनिवर्जनम् ।
दृष्टेऽप्यव्यवहारस्य प्राचुर्येणोपलम्भतः ॥ ❀ ॥ इति ।

सिद्ध्यति । प्रयोगश्च—अनुभूतिरनन्याधीनस्वधर्म-

* श्रुतप्रकाशिका *

न्यस्यति ( प्रयोगश्चेति ) न केवलं पारिशेष्यात् स्वतःसिद्धत्वं, साधकप्रमाणमप्यस्तीति चार्थः । अनुभूतिरित्यादिना अनुमानद्वयं ग्रन्थलाघवार्थमविभागेनोक्तम् । अनुभूतिरनन्याधीनस्वधर्मा—स्वसम्बन्धादर्थान्तरे तद्धर्महेतुत्वात् । अनुभूतिरनन्याधीनस्वव्यवहारा—स्वसम्बन्धादर्थान्तरे तद्व्यवहारहेतुत्वात् . इत्येवं विभागः, अत एव हि परत्र व्यवहारविशेषहेतोः स्वस्मिन्नपि तद्व्यवहारहेतुत्वमित्युत्तरत्र वक्ष्यते । प्राकट्यमभ्युपगम्य तदुपजीवनेन प्रथमानुमानमुक्तं, तदनुपजीव्यं तु द्वितीयम् । प्राकट्याभ्युपगमस्य न स्वप्रकाशताविरोधित्वं, तस्य ज्ञानानुमापकत्वानभ्युपगमात्, धर्मवत्त्वेऽनन्याधीनधर्मवत्त्वे च साध्ये सिद्धसाध्यता स्यात् । अनुभूतित्वादिधर्माणां हेत्वन्तरनैरपेक्ष्यात्, न ह्यनुभूतित्वजातिर्हेत्वधीना, नित्यत्वात् । जात्यनभ्युपगमेऽप्यनुभूतित्वस्यानुभूतिसामग्र्यतिरिक्तहेत्वनपेक्षत्वात् सिद्धसाध्यता; अतोऽनन्याधीनस्वधर्मेत्युक्तम् । स्वस्य धर्मः स्वोत्पाद्यतया स्वसम्बन्धी धर्मः स्वधर्मः । परत्र स्वसाध्यधर्मात्यन्तसजातीयधर्म्म इत्यर्थः । अर्थान्तरे तद्धर्महेतुत्वादिति हेतूक्तेः ।

* तत्त्वटीका *

अत्र सूचितं साधनद्वयं वैशद्याय प्रयुज्यत इत्याह ( प्रयोगश्चेति ) यद्वा—उक्तप्रकारेण स्वप्रकाशत्वमगत्या ग्राह्यं तत्रानुमानान्तरञ्चास्तीति भावः । ग्रन्थलाघवाय प्रयोगद्वयमिह तन्त्रितम् । पिशाचानां तद्भाषयैवोत्तरं देयमिति न्यायात् परमतान्वारोहेण बुद्धेरपि प्राकट्यकल्पनयात्र धर्मशब्दः, अन्यथापसिद्धान्तात्, कल्पितधर्मान्तराभ्युपगमेन वा तदुक्तिः । इदञ्च हेतुद्वयं यदि परोक्तकर्मकर्तृविरोधशान्त्यै सम्भावनार्थं वा स्यात्तदा नातीवात्र शोध्यमस्ति । साक्षादनुमानत्वमिच्छतान्तु यथाश्रुतेनुभूतित्वादिभिस्सिद्धसाध्यत्वात्तत्र तत्र व्यभिचाराच्चाभिप्रायक्लृप्त्या पूर्वानुमितावेवं प्रयोगो द्रष्टव्यः । अनुभूतिः परगतस्वजन्यधर्मात्यन्तसजातीयस्वावश्यम्भाविधर्मयोगे स्वात्यन्तसजातीयापेक्षानियमरहिता स्वविजातीये स्वानन्तरकालोत्तरकालानुवृत्तिरहितधर्महेतुत्वादिति । स्वस्मिन् स्वजन्यधर्मासिद्धेः परगतत्वोक्तिः स्थानप्रदर्शनार्था । एकत्वादिभिस्सिद्धसाध्यतां वारयितुं जन्यशब्दः अत्यन्तशब्दश्च, अनुभूत्या परत्र जन्यो धर्मः प्राकट्यमेव तस्य स्वान्यमात्रनिष्ठस्य स्वधर्मत्वायोगात्सजीयत्वोक्तिः,

* श्रुतप्रकाशिका *

स्वधर्मशब्दनिर्दिष्टधर्मो हि तच्छब्दोक्तः, परत्र स्वसाध्यधर्मात्यन्तसजातीयः स्वास्मिन्नवश्यंभाविधर्मः स्वधर्मत्वेन विवक्षितः । अत एव स्वास्मिन् रूपित्वानापादनात् रूपस्य दृष्टान्तस्य साध्यविकलत्वशङ्का व्युदस्ता स्यात् . दण्डान्तरनिरपेक्षं स्वास्मिन् दण्डित्वमनापादयति दण्डे व्यभिचारश्च परिहृतः स्यात् । अन्यशब्दश्च स्वात्यन्तसजातीयान्तरपरः । अन्यथा हेतुमात्रनिरपेक्षत्वे दृष्टान्तस्य साध्यविकलत्वं स्यात् . चक्षुराद्यपेक्षं हि रूपस्य चाक्षुषत्वम् , तादृशहेत्वपेक्षानियमराहित्यमनन्याधीनशब्देन विवक्षितम् , अन्यापेक्षामात्रविरहे साध्ये परज्ञानस्यानुमेयत्वदर्शनेन बाधितत्वप्रसङ्गात् . न हि ज्ञानान्तरागोचरत्वमेतदनुमानसाध्यम् , अपि तु स्वात्यन्तसजातीयानपेक्षप्रकाशार्हत्वमात्रं, तच्च परज्ञानस्य सम्भवतीति न बाधितविषयत्वम् । अनन्याधीनस्वव्यवहारेत्यत्रापि व्यवहारवत्त्वे साध्ये सिद्धसाध्यता, अतोऽनन्याधीनशब्दः । अन्यशब्दस्यात्यन्तसजातीयपरत्वाद्घ्राणाद्यपेक्षया बाधितत्वशङ्का परिहृता स्यात् , घटादीनां ह्यानादिव्यवहारे स्वात्यन्तसजातीयानपेक्षो हेतुरनुभूतिरिति सिद्धसाध्यत्वव्युदासाय स्वशब्दः, स च परत्र स्वसाध्यव्यवहारात्यन्तसजातीयपरः ।

७ तत्त्वटीका ७

बुद्धिव्यतिरिक्ते बोद्धरि बुद्धिजन्यसुखादिसजातीयानां बुद्धावभावेन बाधं स्वाश्रयस्य रूपित्वाद्यापादके रूपादौ रूपित्वाद्यभावाद्दृष्टान्तस्य साध्यशून्यताञ्च परिहर्तुं स्वावश्यम्भावित्वोक्तिः । यद्यपि नित्येऽनुभूतिप्राकट्येऽन्वारूढेऽन्यनैरपेक्ष्यमात्रोक्तिः पर्याप्ता, तथापि रूपादौ दृष्टान्ते चाक्षुषत्वस्य स्थूलनिष्ठात्वादिसापेक्षतया साध्यवैकल्यं स्यादिति तन्निरासाय स्वात्यन्तसजातीयापेक्षाराहित्येत्युक्तम् ' यथाग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्त्येवमेवेमा अस्मादात्मनस्सर्वाणि भूतानि " इत्यादिश्रुत्या जीवतज्ज्ञानभेदकल्पनाद्व्यावहारिकव्यवस्थया परमतनयेनानुमानादिगम्ये गुर्वादिज्ञाने बाधपरिहाराय नियमशब्दः, तद्धि गुरुमते सिद्धान्ते च वर्तमानकाले स्वेन स्वाश्रयाय भाति । यद्वा— परत्र च्छिन्नत्वाद्यापादके कुठारादौ द्वैधीभावस्य कदाचिदत्यन्तसजातीयापेक्षत्वेपि नियमाभावेनातिचारनिरास इति नियमोक्तिसाफल्यम् . अत्यन्तसाजात्यञ्चात्र निर्दिष्टाकारेण साम्यम् । हेतौ तु सजातीये द्रव्यान्तरे संयुक्तत्वहेतोर्द्रव्यस्य स्वगतसंयुक्तत्वे द्रव्यान्तरापेक्षानियमात्तद्व्यावृत्त्यै स्वविजातीयोक्तिः,

व्यवहारा, स्वसम्बन्धादर्थान्तरे तद्धर्मव्यवहारहेतुत्वात्.

* श्रुतप्रकाशिका *

व्यवहारस्यात्यन्तसजातीयत्वं नामाभिन्नप्रवृत्तिनिमित्तकत्वम् . व्यवहारानुगुण्यमात्रं हि प्रकाशत इति व्यवहारस्य निमित्तम् . परज्ञानव्यवहारे कालात्ययापदेशपरिहारायापेक्षानियमराहित्यविवक्षा । हेतुमाह । ( स्वसम्बन्धादिति ) धर्महेतुत्वे व्यवहारहेतुत्वे च हेतौ विवक्षिते ऽनैकान्त्यं स्यादिति तत्परिहाराय तच्छब्दः, स्वस्य यो धर्मो व्यवहारश्च तदत्यन्तसजातीयो धर्मो व्यवहारश्च तच्छब्दविवक्षितः । स्वस्याग्निसम्बन्धात् स्वस्मिन् पूर्वरूपसजातीयरूपान्तरतद्व्यवहारहेतुर्घटो ऽग्निसापेक्ष इति तत्र व्यभिचारपरिहाराय अर्थान्तर इत्युक्तम् । किञ्च अर्थान्तरशब्दो निर्दिष्टजाती-

ꣲ तत्त्वटीका ꣲ

स्वानन्तरेत्यादिना परस्मिन् पुत्रत्वादिहेतौ पितरि स्वपुत्रत्वे पितृसापेक्षत्वदर्शनात् तस्मिन्ननैकान्त्यं निरस्तम् . पुत्रत्वादिकं हि पित्राद्यनन्तरकालादुत्तरत्राप्यनुवर्तते. एवं द्रव्यान्तरच्छिन्नत्वापादके द्रव्यान्तरेण छेद्येपि द्रव्ये न व्यभिचारः- द्वितीयानुमानेपि अनुभूतिरनन्याधीनव्यवहारेत्युक्ते अन्यनिरपेक्षघटादिव्यवहारहेतुतया सिद्धसाध्यतां परिहर्तुं स्वशब्दः, तथापि विवक्षा वागादिसापेक्षतया बाधो दृष्टान्ते च साध्यहानिस्स्यादतस्स्वात्यन्तसजातीयानपेक्षत्वं विवक्षितं नियमग्रहणञ्च पूर्ववत्॥ तदिहानुभूतिस्स्वात्यन्तसजातीयापेक्षानियमरहितस्वव्यवहारेति पक्षस्थितिः । हेतुस्तु हेतुत्वादित्येवालम्; क्वचिदपि व्यभिचारादृष्टेः । स्वसम्बन्धादित्यादिविशेषणत्रयोक्तिस्तु तत्कृतविशेषवैशद्यार्था . एवं नामोक्तमात्मसिद्धौ— “सजातीय स्वसाध्यार्थनिरपेक्षात्मसिद्धयः । सर्वे पदार्थास्तेनात्मा निरपेक्षात्मसिद्धिकः ॥” इति । अत्र सिद्धिः— व्यवहारयोग्यतारूपः प्रकाशः, तदुक्तिर्व्यवहारमप्युपलक्षयति, उभयत्र पदार्थत्वादित्येव हेतुः, एवं पूर्वानुमानेपि पदार्थत्वाद्धेतुत्वादित्यादिमात्रमुपादाय स्वात्यन्तसजातीयापेक्षानियमरहितस्वप्रकाशेति साध्यप्रयोगोप्यूह्यः । तच्च निगमनेन ‘अनुभूतिरात्मनः प्रकाशमानत्व’ इत्यनेन सूचितम् । अत्र सजातीयेत्यादिना आत्मनः श्रुतिसिद्धं ज्ञानत्वमवष्टभ्यात्मरूपं ज्ञानं स्वात्यन्तसजातीयापेक्षारहितस्वसिद्धिकमित्युच्यते । स्वसाध्यनिरपेक्षत्वोक्तिस्तु प्रयोगान्तरार्था । साध्यम्— स्वव्यवहारानुगुणि कार्यं बोध्यमित्यर्थः । आत्मा स्वबोध्यापेक्षारहित-

* श्रुतप्रकाशिका *

याद्विजातीयपरः, तेन परस्मिन् द्रव्ये संयुक्तत्वतद्व्यवहारहेतोर्द्रव्यस्य परद्रव्यसापेक्षतया ऽनैकान्त्यं परिहृतं स्यात्। द्रव्यं हि द्रव्यस्यात्यन्तसजातीयम्। ननु घटो हि पटे संयुक्तत्वादिकमापादयन् स्वस्य तथात्वे घटान्तरापेक्ष इत्यनैकान्त्यम्। नैवम्,—सजातीयापेक्षानियमविरहरूपस्य साध्यधर्मस्य तत्र विद्यमानत्वात्, न हि घटः स्वस्य संयुक्तत्वादौ स्वात्यन्तसजातीयं घटमेवापेक्षत इति नियमोऽस्ति। पुत्रे पुत्रत्व-तद्व्यवहारहेतौ पितरि स्वस्य पुत्रत्वव्यवहाराय पित्रन्तरसापेक्षे व्यभिचारपरिहाराय स्वसम्बन्धादित्युक्तम्। विद्यमानस्वसम्बन्धो विवक्षितः, परत्र स्वसम्बन्धतुल्यकाल-स्वगतधर्मात्यन्तसजातीयधर्मतत्सापेक्षव्यवहारहेतुत्वादित्यर्थः। न हि पित्रादिप्रवास-निधनयोः पुत्रादौ पुत्रत्वं तद्व्यवहारश्चापगच्छति। अत एव स्वस्मिन्ननन्यापेक्षद्वैधी-भावमनापादयति परद्वैधीभावहेतौ द्रव्ये व्यभिचारश्च दूरोत्सारितः। ननु सिद्धा-न्तिनोऽप्यभिमतमिदमनुमानम्. चेतनस्स्वसम्बन्धतुल्यकालं शरीरत्वं शरीरे जनयन् स्वस्मिन् शरीरत्वतद्व्यवहारयोर्नानन्यापेक्षः, अपि तु परमात्मसापेक्षः, परमात्मा च चेतनत्वादत्यन्तसजातीयः अतस्तत्रानैकान्त्यमिति। नैवम्. स्वव्यापकधर्महेतुत्वस्य विव-क्षितत्वात्. न हि चेतनत्वव्यापकं शरीरत्वम्, ईश्वरस्य चेतनस्यापि शरीरत्वाभावात्, अतः स्वधर्मशब्दाभिप्रेतेन स्वावश्यम्भावित्वेन परिहारः। एतदुक्तं भवति—धर्मशब्दः प्रकाशपरो वा, धर्ममात्रपरो वा? अन्यशब्दश्च अन्यमात्रपरो वा, स्वात्यन्तसजातीया-न्यपरो वा? तत्र हेतुमात्रानपेक्षप्रकाशत्वे दृष्टान्तस्य साध्यविकलत्वम्, रूपं हि चक्षु-राद्यपेक्षप्रकाशम्, स्वात्यन्तसजातीयानपेक्षप्रकाशत्वे साध्ये व्यर्थविशेषणत्वं हेतोः, हेतुत्वमात्रेण साध्यसिद्धेः, न हि यस्य कस्यचिद्धेतुस्सन् घटादिः स्वप्रकाशे घटान्तरा-दिकमपेक्षते। हेत्वनपेक्षधर्मत्वे ऽनुभूतित्वादिना सिद्धसाध्यता, परश्वधादिष्वनैका-न्त्यञ्च. काष्ठद्वैधीभावहेतोः परश्वधस्य स्वद्वैधीभावे हेत्वन्तरसापेक्षत्वात्, स्वात्यन्तसजा-तीयानपेक्षधर्मत्वे चानुभूतित्वादिना सिद्धसाध्यता, विषयप्रकाशके परज्ञाने लिङ्गापेक्ष-प्रकाशत्वदर्शनात् बाधश्च. रूपे रूपान्तरानपेक्षस्वगतरूपित्वहेतुत्वाभावात् दृष्टा-न्तस्य साध्यविकलता, पुत्रगतपुत्रत्वहेतौ पित्रन्तरसापेक्षपुत्रत्वधर्मे पितरि अनै-कान्त्यञ्च. परद्रव्यगतसंयुक्तत्वहेतौ द्रव्यान्तरसापेक्षसंयोगे द्रव्ये चानैकान्त्यम्; अत एवमादिदोषपरिहारार्थमित्थं प्रयोक्तव्यम्,— अनुभूतिः स्वजन्यपरगतधर्मात्यन्तसजा-

यः स्वसम्बन्धादर्थान्तरे यद्धर्मव्यवहारहेतुः स तयोः स्वस्मिन्ननन्याधीनो दृष्टः, यथा रूपादिश्चाक्षुषत्वादौ । रूपादिर्हि पृथिव्यादौ स्वसम्बन्धाच्चाक्षुषत्वादि जनयन् स्वस्मिन् न रूपादिसम्बन्धाधीनश्चाक्षुषत्वादौ; अतोऽनुभूतिरात्मनः प्रकाशमानत्वे प्रकाशत इति व्यवहारे

* श्रुतप्रकाशिका *

तीयधर्म्मभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा । स्वविजातीये स्वावश्यंभाविधर्मात्यन्तसजातीयस्वसम्बन्धतुल्यकालधर्महेतुत्वादिति हेतुः । तथा अनुभूतिः स्वजन्यपरगतव्यवहारात्यन्तसजातीयव्यवहारभाक्त्वे स्वात्यन्तसजातीयापेक्षानियमरहितेति प्रतिज्ञा. स्वविजातीये स्वावश्यम्भाविव्यवहारात्यन्तसजातीयस्वसम्बन्धतुल्यकालव्यवहारहेतुत्वादिति हेतुः । व्यवहारस्य स्वावश्यम्भावित्वं नामावश्यंभाविधर्मनिबन्धनत्वम् । व्याप्तिदर्शनपूर्वकं दृष्टान्तमाह ( य इति ) साध्यसाधनधर्मौ सपक्षे दर्शयति ( रूपादिर्हीति ) पक्षधर्मताबलासिद्धधर्ममाह ( अतोऽनुभूतिरिति ) ( प्रकाशत इति व्यवहार इति ) अनुभूतिः प्रकाशत इति व्यवहारे अनुभूतिरिति व्यवहारे चेत्यर्थः । ननु स्वसम्बन्धादर्था-

ཉ तत्त्वटीका ཉ

स्वप्रकाशः पदार्थत्वात् इति । एतेन स्वबोध्यमन्तरेणापि भातीत्युक्तं भवति । दृष्टान्तानां त्वचेतनतया बोध्याभावादेव तत्प्रकाशस्स्वबोध्यापेक्षारहितः । आस्तामेतत् . प्रकृते सामान्यतो व्याप्तिमाह (य इति ) यद्यपि रूपवतामेव चाक्षुषत्वमिति नियमो नास्ति तथापि नीरूपं द्रव्यं सर्वमचाक्षुषमिति तेन दृष्टान्तमाह ( यथेति ) अत्र प्रथमेनादिशब्देन स्पर्शो गृह्यते । द्वितीयेन स्पार्शनत्वं व्यवहारविशेषश्च. रूपादौ व्यवहारविशेषहेतुत्वं तन्निमित्तचाक्षुषत्वाद्यापादनेन ॥ एवंविधसामान्यव्याप्तौ केवलव्यतिरेके विश्रमं केचिदाहुः, एतद्वा पक्षधर्मतालब्धविशेषं सूचयन्निगमयति ( अत इति ) स्वयमेव हेतुः— बुद्ध्यन्तरनिरपेक्षमेवेत्यर्थः । अत्रापि तत्प्रयोगस्तु अनुभूतिरनन्याधीनस्वप्रकाशा परप्रकाशासाधरणाभिव्यक्तिहेतुत्वात् यन्नोक्तसाध्यं तन्नोक्तहेतुकमिति ; एवं व्यवहारेप्यूह्यम् ॥ ननु ब्रह्म नित्यं श्रुतं . धीस्त्वनित्या, सा कथं

* श्रुतप्रकाशिका *

न्तरे तद्धर्मव्यवहारहेतुत्वं सोपाधिकम् . सम्बन्धविशेषादर्थान्तरे तद्धर्मव्यवहारहेतुत्वस्यैव स्वस्मिंस्तद्धर्मव्यवहारयोरनन्याधीनत्वे प्रयोजकत्वात्; स च सम्बन्धविशेष आश्रयाश्रयिभावरूपः, स तु रूपादावस्ति, न तु पक्ष इति । नैतत् ,—अस्य साध्यसमव्याप्त्यभावेनोपाधित्वाभावात् . आश्रयाश्रयिभावविरहेऽपि सम्बन्धमात्रादर्थान्तरे प्रकाशत इति व्यवहारहेतोर्दीपस्य स्वस्मिन्नपि तद्व्यवहारेऽत्यन्तसजातीयानपेक्षत्वं हि दृष्टम्, पूर्वं ज्ञानस्य परप्रकाश्यत्ववादिभिः स्वसत्तयैव प्रकाशमानत्वादिति हेतोरसिद्धिर्व्याहतिश्चोक्ते । तत्र घटोऽयमित्यनुभववेलायामनुभूयत इति शब्दस्याप्रयोगात् असिद्धिरुक्ता । शब्दव्यवहारवैकल्यपौष्कल्ययोर्विवक्षाविशेषहेतुकत्वेनार्थानुभवेऽननुभवे च प्रयोजकत्वाभाववचनादसिद्धिः परिहृता, व्याहतिश्च नास्ति, तथा हि अङ्गुल्यग्रस्य स्वात्मस्पर्शादिव्याहतिरुपलब्धिनिबन्धना, दीपादिषु च प्रकाश्यत्वप्रकाशकत्वे दृश्येते. निरूप्यमाणे कर्मकर्तृभावविरोधश्च नास्ति । निरासको दीपः, निरसनीयं तमः, दीप उत्पादकः । ज्ञानमुत्पाद्यं, ज्ञानमुत्पादकं, व्यवहार उत्पाद्य इति । किञ्च यद्यपि कर्मकर्तृभावस्य स्वतो विरोधात् भेदकत्वमुपलब्धिसिद्धम्, तथापि ज्ञापकेषु विरोधनियमाभावश्चोपलब्धिसिद्धः । ज्ञातरि मनसि शब्दशब्दे पदमिति पदे तथेदशार्थान्तरेष्वप्यविरोधो हि उपलभ्यते । उत्पादकेष्वेव तु विरोधनियमः, तत्र चाकारान्तरेण चेन्न विरोधः । ननु घटादिषु व्यवहारार्हत्वं स्वव्यतिरिक्तज्ञानहेतुकं दृष्टं, ज्ञाने व्याप्तिर्भज्यते चेत् व्यवहारस्य ज्ञानपूर्वकत्वव्याप्तिभङ्गेन अज्ञातस्यैव ज्ञानस्य व्यवहारास्पदत्वं स्यात् । नैवम् ,—घटादिषु ज्ञेयव्यतिरिक्तज्ञातृदृश्यत्वेऽपि स्वेनैव ज्ञात्रा ज्ञातरि दृश्यत्वमिति सर्वाविगीतमिति तत्र परेणापि कर्मकर्तृविरोधव्याप्तिभङ्गोऽभ्युपगन्तव्यः । तथा घटादौ स्वव्यतिरिक्तकरणजन्यज्ञानदृश्यत्वेऽपि मनसि तद्भग्नं, स्वानुमाने मनस एव करणत्वात् . तथा सर्ववाच्यानां स्वव्यतिरिक्तशब्दवाच्यत्वेऽपि शब्दशब्दे पदपदे च तद्भग्नम् . घटादीनां स्वव्यतिरिक्तवाग्व्यवहार्यत्वेऽपि वागिन्द्रिये तद्भग्नम्, अतः कर्मकर्तृभावस्य विरोधव्याप्तिर्नास्ति । व्यवहारस्य ज्ञानपूर्वकत्वं न कैश्चिदपि भग्नं, ज्ञानव्यवहारस्य ज्ञानकर्मतापूर्वकत्वविरहः प्रसज्यते चेन्नानिष्टः, अवभासपूर्वकत्वस्याभग्नव्याप्तिकत्वान्न तद्विरहप्रसङ्गः । तस्मादवभासमानस्यैव ज्ञानस्य व्यवहारास्पदत्वम् , अतः स्वविषयपरविषय-

च स्वयमेव हेतुः ॥ सेयं स्वयंप्रकाशानुभूतिर्नित्या च, प्रागभावाद्यभावात् । तदभावश्च स्वतस्सिद्धत्वादेव । न ह्यनुभूतेः स्वतस्सिद्धायाः प्रागभावः स्वतोऽन्यतो वाऽव-

* श्रुतप्रकाशिका *

व्यवहारानुगुण्यं ज्ञानस्य युक्तम् ॥ अथ ज्ञातृज्ञेयनिरसनं ज्ञानस्वयंप्रकाशत्वञ्च बौद्धपक्षेऽपि समानमिति तद्व्यावर्तकं ज्ञानस्य नित्यत्वं साधयति ( सेयमिति ) सेयम्—परमार्थभूतसन्मात्रैक्या प्रमाणाविषयभूता चेत्यर्थः । यद्वा— स्वयं प्रकाशत्वहेतुभूतधर्मवत्तया प्रसिद्धेत्यर्थः । स्वयंप्रकाशत्वस्य नित्यताहेतुत्वविवक्षया स्वयम्प्रकाशेत्युक्तम् । चः साध्यसमुच्चये; सौगतसाम्यशङ्कानिवृत्तौ वा । कुत इत्यत्राह ( प्रागभावादीति ) स च कथमिति शङ्कायां ग्राहकाभावादित्यभिप्रायेणाह ( तदभावश्चेति ) स्वतःसिद्धत्वेन प्रागभावाद्यभावं विकल्पमुखेन उपपिपादयिषुर्विकल्पशिरोद्वयेऽनुपपत्तिं प्रतिजानीते ( न हीति ) स्वतःपक्षे अनुभूतिः किं

* तत्त्वटीका *

तत्स्यात्? योगाचारोक्ताश्च त्वदुक्तस्य को भेद इत्यत्राह ( सेयमिति ) शास्त्रप्रत्यक्षाभ्यां सच्चिद्रूपतयैव सिद्धेत्यर्थः । अत्र स्वयंप्रकाशेति नित्यत्वनिदानोक्तिः सर्वदा सत्त्वमुभयान्तशून्यत्वं वा नित्यत्वम् । तच्च 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' इत्यादिश्रुतिसिद्धं ज्ञानत्वञ्च ब्रह्मणः श्रुतम्, अतस्तदविरोध इति भावः । श्रुत्या प्रत्यक्षविरुद्धं दुर्वचमित्यत्र विरोधाभावाभिप्रायेण हेतुमाह ( प्रागिति ) संवित्प्रागभावध्वंसयोर्भ्रान्तिसिद्धतया स्वरूपतस्तदभावस्य स्थाप्यमानत्वादित्याशयः, अतएव न साध्याविशेषशङ्का । धीनित्यत्वश्रुतिरन्यपरा न चान्यदिह मानमित्यत्राह ( तदिति ) एवकार इह प्रागेव सूचितत्वं नैरपेक्ष्यं वा व्यनक्ति । ननु स्वयंप्रकाशत्वमिह न लिङ्गं सपक्षे सत्यपि [ तत्र ] क्वचिदप्यवृत्तेरसन्ति हि प्रागभावरहितत्वे साध्ये प्रागभावास्सपक्षाः प्रत्यद्ध्वंसरहितत्वे च प्रद्ध्वंसाः, तदुभयराहित्ये च खपुष्पादिः । आहुश्च— "यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते । तस्मिन् यथा खपुष्पादावितिशक्यं हि भाषितुम्" ॥ इति । तत्राह ( न हीति ) स्वप्रकाशत्वस्य लिङ्गत्वाभावेपि विकल्पानुपपत्तिद्वारा विवक्षितनिदानत्वं स्यादिति भावः । अत्र प्रागभावोक्तिः

गन्तुं शक्यते। अनुभूतिः स्वाभावमवगमयन्ती, सती तावन्नावगमयति। तस्याः सत्त्वे विरोधादेव तदभावो नास्तीति कथं सा स्वाभावमवगमयति ? एवमसत्यपि नावगमयति ; अनुभूतिः स्वयमसती स्वाभावे कथं प्रमाणं भवेत्? नाप्यन्यतोऽवगन्तुं शक्यते, अनुभूतेरनन्यगोचरत्वात्। अस्याः प्रागभावं साधयत् प्रमाणम्

* श्रुतप्रकाशिका *

सती स्वाभावमवगमयति ? उतासती ? इति विकल्पमभिप्रेत्य सत्त्वपक्षं दूषयति ( अनुभूतिरिति ) कुत इत्यत्राह ( तस्या इति ) ग्राह्याभावादित्यर्थः । अनुभूतिः किमनुमित्यादिरूपा स्वाभावमवगमयति ? उत प्रत्यक्षरूपा ? इति विकल्पे लिङ्गाद्यभावात् प्रथमः कल्पो न सम्भवतीत्यभिप्रेत्य द्वितीयः कल्पो ग्राह्याभावाद्दूषितः। पूर्वाभिप्रेतविकल्पशिरसोरसत्त्वपक्षं ग्राहकाभावेन दूषयति ( एवमिति ) पूर्वतराभिहितयोर्विकल्पशिरसोरन्यत इति पक्षं दूषयति ( नापीति ) अनुभूतिरनन्यगोचरा स्यात्। ततः किमभावाग्रहणस्य, अभावो ह्यन्यगोचरत्वमर्हतीत्यत्राह ( अस्या इति )

ध तत्त्वटीका ध

प्रध्वंसस्याप्युपलक्षिका । स्वतःपक्षेपि धीस्सत्यसती वा स्वाभावग्राहिणी ? इति विकल्पं मत्वा आद्यं निरस्यति ( अनुभूतिरिति ) ननु स्वयं सतीभावमभावं वा विषयान्तरमिव स्वाभावमपि न गृह्णीयादित्यत्र विषयस्याभावात्तस्य दुर्ग्रहत्वमाह ( तस्या इति ) यद्यप्यन्योन्याभावादेस्स्वप्रतियोगिसमकालत्वमस्ति, तथापि प्रागभावप्रध्वंसयोर्न तत्स्यादित्यभिप्रायेण– विरोधादेवेत्युक्तम्। द्वितीयं विषयिणो ग्रहणस्याभावादाक्षिपति ( एवमिति ) अन्यतराभावसाम्यप्रकारेणेत्यर्थः। विरोधं विवृणोति ( अनुभूतिरिति ) स्वयमसती वन्ध्यासुतधीवत् स्यादिति भावः । अन्यतः पक्षोपि विकल्पासह इत्याह ( नापीति ) अन्यत्प्रमाणमनुभूतिं विषयीकृत्य न वेति विकल्प्य पूर्वत्र प्राक् साधितेन विरोधमाह ( अनुभूतेरिति ) द्वितीये प्रतियोग्यग्रहे कथमभावग्रह इत्यभिप्रायेणाह ( अस्या इति ) नहि धीग्राह्यस्य घटादेरभाव

'अनुभूतिरियम्' इति विषयीकृत्य तदभावं साधयेत; स्वतस्सिद्धत्वेन इयमिति विषयीकारानर्हत्वात्, न तत्प्रागभावो ऽन्यतः शक्यावगमः; अतोऽस्याः प्रागभावाभावादुत्पत्तिर्न शक्यते वक्तुमित्युत्पत्तिप्रतिबद्धाश्चान्येऽपि भावविकारास्तस्या न सन्ति ॥ अनुत्पन्नेयमनुभूतिरात्मनि

* श्रुतप्रकाशिका *

अस्याः—न ह्यन्यस्य प्रागभावो ग्राह्यः, अपि त्वनुभूतेरेव; तस्मात् तां विषयीकृत्यैव तदभावो ग्राह्यः, तस्या विषयीभावानर्हत्वान्न तत्प्रागभावग्रहणं शक्यमित्यर्थः। एवं प्रागभावाभावादुत्पत्त्यभावः। ततश्च परिणामादिसर्वविकारान्तराभावमप्युपपादयति (अतोऽस्या इति) अतः—स्वतः परतः पक्षयोरुभयोरप्यभावस्य दुर्ग्रहत्वादित्यर्थः। विकारमात्रविरहे साध्येऽनुत्पन्नत्वमन्तवति प्रागभावेऽनैकान्तिकं स्यात्, अतो भावरूपविकारविरहस्य साध्यत्वज्ञापनाय भावशब्दः। यद्वा भावस्य विकार इति षष्ठीसमासः, ततश्च भावाभावरूपविकारमात्रविरहे साध्ये प्रागभावे व्यभिचारशङ्कानिवारणार्थं भावत्वे सत्यनुत्पन्नत्वं विकारान्तराभावे प्रयोजकमिति फलितम्। अनुभूतिर्नान्तवती, भावत्वे सत्यनुत्पन्नत्वात्, यदन्तवत् तद्भावत्वे सत्यनुत्पन्नं न भवति, यथा घट इति। बौद्धाभ्युपगतक्षणिकत्वव्यावृत्त्यर्थं नित्यत्वायानुत्पत्तिस्तद्व्याप्तविकारान्तराभावश्च साधितौ ॥ अथ तदभ्युपगताऽनेकत्वव्यावृत्त्यर्थं सजातीयभेदं व्युदस्यति (अनुत्पन्नेयमिति) (व्यापकविरुद्धोपलब्धेः) नानात्व-

❀ तत्त्वटीका ❀

इह साध्य इत्याशयः। विषयीकारपक्षपरिशेषेण तद्विरोधं निगमयति (स्वत इति) परात्कृवेद्यत्वयोरभावादियमिति विषयीकारानर्हत्वम्. एवमभावस्याग्रहेपि भावस्योत्पत्त्यादेस्स्वतोऽन्यतो वा ग्रहः स्यादित्यत्राह (अत इति) उक्तविकल्पानुपपत्तेस्तस्याश्चात्रापि सम्भवादित्याशयः। नहि स्वतः स्वविकारग्रहः तस्याः स्वरूपमात्रग्राहित्वात्. न चान्यतः अवेद्यत्वात्. तद्धर्मतया ग्रहणेपि तद्विषयत्वं दुस्त्यजमेव प्रागभावाभावात्. कारणं हि सर्वकार्याणां तत्तत्प्रागभावः, न तद्रहितं च खरशृङ्गमुत्पद्यत इति भावः। उत्पत्तिप्रतिबद्धाः— तद्व्याप्ता इत्यर्थः। भावविकाराः— भावरूपा-

नानात्वमपि न सहते—व्यापकविरुद्धोपलब्धेः । न ह्यनुत्पन्नं नानाभूतं दृष्टम् । भेदादीनामनुभाव्यत्वेन च

* श्रुतप्रकाशिका *

व्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः । व्याप्तिं दर्शयति ( न हीति ) अस्य ग्रन्थस्य यदनुत्पन्नं तदनानाभूतं दृष्टमित्यर्थो वक्तुं न युज्यते, ब्रह्मव्यतिरेकेणानुत्पन्नस्य अनानाभूतस्य कस्यचिन्मायावेदान्तिभिरनभ्युपगमात्. यदनानाभूतं तदनुत्पन्नमित्युक्ते व्यापकजन्मनिवृत्त्या व्याप्यनानात्वनिवृत्तिरुक्ता न स्यात् । तस्मादयमर्थः;—यन्नानाभूतं तदनुत्पन्नं न दृष्टम्, अपि तूत्पत्तिमदेव दृष्टमिति जन्मनो नानात्वव्यापकत्वं दर्शितम् ; अनेनोत्पत्तिनिवृत्त्या नानात्वनिवृत्तिरित्यर्थसिद्धम् । यद्वा, यथा न ह्यनग्नि धूमवद्दृष्टमित्युक्ते अग्निमदेव धूमवदित्युक्तं स्यात्, तद्वदिहाप्यनुत्पन्नं नानाभूतं न दृष्टमित्युक्ते उत्पत्तिमदेव नानाभूतमित्युक्तं स्यात्. ततश्चोत्पत्तिर्व्यापिकेत्युक्तं भवति । अनुभूतिर्नाना न भवति, अनुत्पन्नत्वात् । यन्नानाभूतं तदुत्पत्तिमद्दृष्टम्, यथा घट इति व्यतिरेक्यनुमानमनुभूतिं पक्षीकृत्योक्तं, गगनादिषु व्यभिचारो दुर्वचः, तेषामुत्पत्तिमत्त्वेन वेदान्तिभिरभ्युपगमादिति भावः । एवं सजातीयभेदो निषिद्धः । अस्मिन्नर्थे विकारान्तराभावे च भेदं विकारान्तरं च पक्षीकृत्यान्वय्यनुमानमाह (भेदादीनामिति) आदिशब्देन उत्पत्त्यादयो विवक्षिताः । भेदादयो नानुभूतिधर्माः

ε तत्त्वटीका ε

विकाराः, बाह्यानां भावानां सम्भवन्तो वा । धीर्निर्विकारा अनुत्पन्नत्वादिति व्यतिरेकी, एतेन सजातीयमपि निरस्यति ( अनुत्पन्नेति ) इयमित्यनेन प्राग्वत् स्वतोऽन्यतश्च नानात्वेनापि दुर्ग्रहेति सूच्यते । आत्मनि-अनुभूतिशब्दोपात्ते स्वात्मनीत्यर्थः । तत्र धीप्रतियोगिकभेदो नास्ति, नतु जडेष्वेवेति भावः । अनुत्पन्नशब्देन विवक्षितस्य हेतोर्व्याप्तिपक्षधर्मत्वे व्यनक्ति ( व्यापकेति ) नानात्वव्यापकमुत्पन्नत्वं तद्विरुद्धस्यानुत्पन्नस्य पक्षे प्रमितत्वादित्यर्थः । यन्नाना तदुत्पन्नमिति व्यभिचारानुपलम्भेन द्रढयति ( नहीति ) नानाभूतं न ह्यनुत्पन्नं दृष्टमित्यन्वयः । धीस्सजातीयरहिता अजडत्वात्. यन्नैवं तन्नैवं यथा घट इति प्रयोगः । परमाण्वादिसंज्ञास्तु केचिदर्थाः सजातीयवन्तोऽप्यनुत्पन्ना इति परेष्टं मानशून्यमिति भावः । उक्तव्यतिरेकसाद्धययो-

**रूपादेरिवानुभूतिधर्मत्वं न सम्भवति; अतोऽनुभूतेरनुभवस्वरूपत्वादेवान्योपि कश्चिदनुभाव्यो नास्या धर्म्मः,**

* श्रुतप्रकाशिका *

अनुभाव्यत्वात् रूपादिवदिति व्यावृत्तिरूपधर्मोऽपि नास्तीत्युपपादयति ( अतोऽनुभूतेरिति ) अन्योऽपि— व्यावृत्तिरूपोऽपीति भावः । यद्वा, विकारनानात्वजडत्वनिषेधान्नित्यत्वैकत्वस्वयंप्रकाशत्वरूपधर्मवत्त्वशङ्काव्युदासार्थं पूर्वोक्तनानात्वादिव्युदासार्थं च व्यतिरेक्यनुमानमाह—अतोनुभूतेरिति । अन्योऽपि— नित्यत्वादिरूपोऽपीत्यर्थः । अनुभूतिर्न व्यावृत्तिरूपधर्मभाक् अनुभवस्वरूपत्वात् । यद्व्यावृत्तिरूपधर्मभाक् तदननुभूतिर्दृष्टम्, यथा घटादीति व्यतिरेकि । यदि व्यावृत्तिरूपधर्मं पक्षीकृत्यानुभूतिधर्मत्वाभावः साध्यः स्यात्तदा अनुभाव्यत्वं हेतुः, यथा रूपादीति सपक्षः, इदमन्वयि । एवं स्वगतभेदो निरस्तः, पूर्वमेव ज्ञेयभेदो निरस्तः । 'अत्रायं पुरुषः स्वयंज्योतिर्भवति' इत्यादिषु वेदान्तवाक्येष्वात्मनो नित्यत्वस्वयंप्रकाशत्वादयः

* तत्त्वटीका *

रन्वयिनमप्याह ( भेदादीनामिति ) आदिशब्देन विकारा गृह्यन्ते । भेदा विकाराश्च नानुभूतिधर्माः अनुभाव्यत्वाद्रूपादिवदिति । नन्वनुभूतेरसाधारणानि धीत्वस्वप्रकाशत्वनित्यत्वाजडत्वनिर्विकारत्वानिर्भेदत्वानि त्वयैवाद्योक्तानि, अनृतादिव्यावृत्तयश्च प्रागुक्ताः तत्पक्षीकारबहिष्कारयोर्बाधव्यभिचारौ स्यातामित्यत्राह ( अत इति ) भावाभावरूपाणां सर्वेषां धर्माणामादिशब्देन सङ्ग्रहेण पक्षीकृतत्वादित्यर्थः । एवकारस्साधकत्वदार्ढ्यपरः । अन्योपि— कचित् श्रुतिसिद्धोऽसदुक्तोपीति यावत् । कल्पितैस्तु धर्मैरत्र हेतुसाध्यव्यवहारः ।

ज्ञानभेदनिषेधे तु ज्ञानानामैक्यमत्र नः ।
जडाद्भेदनिषेधे तु तन्मिथ्यात्वान्न तद्भवेत् ॥ ७ ॥

जडादिव्यावृत्तयश्च स्वरूपानतिरिक्ता इत्युक्तम् । धीर्निर्द्धर्मा अनुभवस्वरूपत्वादिति व्यतिरेकी विगीता, नानुभूतिधर्माः अनुभाव्यत्वादिति पूर्वोक्तावपीति पदद्वयेन सारितौ । उक्तञ्च खण्डने 'प्रकाशात्मतामात्रस्यैव स्वतस्सिद्धत्वेन जडात्मनां केषाञ्चिद्धर्माणां तदन्तर्भावानुपपत्तिः' इति । अनुभूतेर्निर्विशेषत्वादिसाधनेपि

यतो निर्द्धूतनिखिलभेदा संवित्। अत एव नास्याः स्वरूपातिरिक्त आश्रयो ज्ञाता नाम कश्चिदस्तीति स्वप्रकाशरूपा सैवात्मा, अजडत्वाच्च। अनात्मत्वव्याप्तं जडत्वं संविदि व्यावर्त्तमानमनात्मत्वमपि हि संविदो

* श्रुतप्रकाशिका *

प्रतिपन्नाः, अत्र तु संविदो नित्यत्वादिरुच्यते, तत् कथं सङ्गच्छते? इत्यत्राह (यत इति) निर्द्धूतनिखिलभेदा—सकलभेदनिषेधेन विजातीयभेदोऽपि निरस्त इति विजातीयभेदस्य ज्ञातुर्मिथ्यात्वेन स आत्मा, अपि तु परमार्थभूता संविदेवात्मेत्यर्थः। यद्वा, वेदान्तैरात्मनः प्रतिपादितं सजातीयविजातीयस्वगतनानात्वराहित्यं संविद एवोपपद्यत इति सैवात्मेत्यर्थः। (स्वरूपेति) स्वरूपातिरिक्त आश्रयो हि ज्ञाता स नास्ति, संवित्स्वरूपातिरिक्तत्वादेवापरमार्थ इति स नात्मेति परमार्थभूता संविदेवात्मेत्यर्थः। (स्वप्रकाशरूपा सैवात्मेति) वेदान्तैरात्मनः प्रतिपादितं स्वयम्प्रकाशत्वं संविद उपपन्नमिति सैवात्मेत्यर्थः। यद्वा, तुच्छत्वशङ्कानिरासार्थमुक्तं स्वप्रकाशरूपेति। स्वयम्प्रकाशत्वं स्वतन्त्रसाधकं चेत्याह (अजडत्वाच्चेति) इदं व्यतिरेकि, संवित् आत्मा; अजडत्वात्. यन्नात्मा तज्जडम्, यथा घटादीति। एतद्विवृणोति (अनात्मत्वेति) अनात्मत्वव्याप्तम्—व्याप्तमिति कर्तरि क्तः, व्यापकमित्यर्थः। प्राप्त

* तत्त्वटीका *

जिज्ञासितस्यात्मनः किमायातम्? न हि बह्वीभिः श्रुतिभिर्ज्ञानादिधर्माश्रयत्वेन भातीत्यत्राह (यत इति) प्रागुक्तप्रकारेण निर्द्धूतनिखिलभेदत्वादाश्रयाख्यो विजातीयभेदोपि कल्पितः, अतस्स नात्मा संविदनन्यत्वात् घटवदिति भावः। स्वप्रकाशत्वनिर्गुणत्वे चात्मस्वभावतया भासेते संविदि स्थापिते, अनेन श्रुतिसिद्ध आत्मा धीरूपत्वेन प्रत्यभिज्ञाप्यत इत्याशयेनोक्तम् (सैवात्मेति) धीरात्मा निर्विशेषत्वाद्धीत्वाच्चेति व्यतिरेकिद्वयमिह विवक्षितम्। प्रकृतेऽजडत्वमपि तादृशं हेतुमाह (अजडत्वाच्चेति) व्यतिरेकव्याप्तिं पक्षधर्मताञ्च व्यञ्जयन् व्यापकनिवृत्त्या व्याप्यनिवृत्तिमाह (अनात्मत्वव्याप्तमिति) अनात्मत्वे व्याप्ये व्याप्तं व्यापकमित्यर्थः। कर्तरि क्तः। योऽनात्मा स जडः, यथा देहादिः, धीस्तु न तथा, तस्मादात्मा। अत्र ज्ञानाश्रयोऽहमर्थस्तु

व्यावर्त्तयति॥ ननु च–अहं जानामीति ज्ञातृता प्रतीतिसिद्धा। नैवम्; सा भ्रान्तिसिद्धा, रजततेव शुक्तिशकलस्य, अनुभूतेः स्वात्मनि कर्तृत्वायोगात्; अतो मनुष्यो-

* श्रुतप्रकाशिका *

इतिवत्। तर्केण ज्ञातृत्वे प्रतिक्षिप्ते आत्मनोऽहंप्रत्ययगोचरत्वस्य स्वानुभवप्रत्यक्षसिद्धत्वेन चोदयति (ननु चेति) चश्चोद्यसमुच्चये। प्रतीतिसिद्धा—स्वानुभवरूपप्रतीतिसिद्धेत्यर्थः। अत्राह (नैवमिति) प्रतीतेर्भ्रान्तित्वमाह (सा भ्रान्तिसिद्धेति) अनुभवविषयत्वेन पूर्वं प्रतीता रजतता यथा शुक्तिज्ञानबाधितत्वात् भ्रान्तिसिद्धा भवति तथेत्यभिप्रायेणाह (रजततेव शुक्तिशकलस्येति) भ्रमाधिष्ठानत्वोपपत्तये शकलशब्दः। अविकलवपुषः शुक्तेर्भ्रमास्पदत्वायोगात्। यद्वा ज्ञातृत्वे प्रतीयमाने तत्र ज्ञानांशस्य पारमार्थ्ये कर्त्रंशस्यापारमार्थ्ये च दृष्टान्ततया रजततेव शुक्तिशकलस्येत्युक्तम्। तत्र हीदमंशः परमार्थः, रजततैवापरमार्थ इति। भ्रान्तिसिद्धत्वमुपपादयति (अनुभूतेरिति) ततः किमित्यत्राह (अतो मनुष्य इति) कर्तृत्वा-

* तत्त्वटीका *

आत्मेति सर्वलोकस्वानुभवप्रत्यक्षेण बाध इति चोदयति (ननु चेति) यथाहुर्निरालम्बनानुमाने 'सर्वलोकप्रसिद्ध्या च पक्षबाधोऽत्र न ध्रुवम्' इति। स्वतः प्रमात्वमभ्युपेत्यात्र प्रतीतिशब्दः। स्वारसिकबाधाभावेपि यौक्तिकबाधात् स्वनैल्यादिकल्पत्वं मत्वा प्रतिवक्ति (नैवमिति) आत्मनोपि ज्ञातृत्वं देहादिज्ञातृत्ववद्बाधितत्वाद्भ्रान्तिसिद्धमित्याह (सेति) हेतुत्वपरोयं परामर्शः, विमतं ज्ञातृत्वं भ्रान्तिसिद्धं ज्ञातृत्वस्वरूपत्वात् सम्मतवदिति। देहादेर्ज्ञातृत्वमिच्छतामप्यविगानार्थमन्यत्राप्येकधीविषये बाध्याबाध्यांशविवेकं व्यनक्ति (रजततेति) अन्यथा ख्यात्यन्वारोहेणेदं निदर्शनम्. स्वपक्षे हि शुक्त्यवच्छिन्नमायांशकर्बुरस्य चैतन्यस्य रजततया विवर्तः। शुक्तौ रजतत्वबाधेपि प्रमाणसिद्धे रजते रजततेव देहादौ बाधिताप्यात्मनि ज्ञातृता स्यादित्यत्र स्वरूपभूतज्ञानाश्रयत्वं वा कर्मकर्तृविच्छिन्नवृत्तिज्ञानाश्रयत्वं वा ज्ञातृत्वमिति विकल्पं मत्वाद्येपि स्वरूपज्ञानाश्रयत्वमिदं स्वरूपस्यैव वान्यस्य वेति विकल्प्य स्वरूपस्येति पक्षमात्माश्रयेण निरस्यति (अनुभूतेरिति) कर्तृत्वमिहाश्रयत्वम्. जनकत्व-

ऽहमित्यत्यन्तबहिर्भूतमनुष्यत्वादिविशिष्टपिण्डात्माभिमानवज्ज्ञातृत्वमप्यध्यस्तं। ज्ञातृत्वं हि ज्ञानक्रियाकर्तृत्वम् तच्च विक्रियात्मकं जडं विकारिद्रव्याहङ्कारग्रन्थिस्थ-

---

* श्रुतप्रकाशिका *

योगमुपपादयति। ( ज्ञातृत्वं हीति ) यद्वा, ज्ञातृत्वं नाम किं ब्रह्मस्वरूपभूतज्ञानाश्रयत्वम्? उतान्तःकरणक्रियारूपज्ञानाश्रयत्वम्? इति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति—अनुभूतेरिति। पूर्वोक्तयुक्तिभिरनुभूतेरेव पारमार्थ्ये सिद्धे तस्या ज्ञातृत्वं स्वात्मनि कर्तृत्वं स्यात्, तत्तु व्याहतमित्यर्थः। कर्तृत्वम् आश्रयत्वम्. ज्ञातृत्वं भ्रान्तपुरुषप्रतीतिसिद्धत्वाच्चाध्यस्तमित्यभिप्रायेणाह—अत इति। पिण्डस्योत्पत्त्यादिभिरात्मव्यतिरिक्तत्वस्य सम्प्रतिपन्नत्वादत्यन्तबहिर्भूतेत्युक्तम्। अथ न केवलं स्वापेक्षया कर्तृत्वमनुपपन्नम्, अपि तु स्वपराविभागानिर्विशेषं कर्तृत्वमात्रमेवानुपपन्नमित्यभिप्रायेण द्वितीयं शिरो दूषयति—ज्ञातृत्वं हीति। ततः किमित्यत्राह ( तच्चेति ) विक्रियात्मकम्—उत्पत्तिविनाशयोगात् क्रियायास्तदाश्रयत्वमपि कादाचित्कमिति तद्विकाररूपमित्यर्थः। जडम्—ज्ञेयम्। अत एव, विकारिद्रव्याहङ्कारग्रन्थिस्थम्—जडत्वविक्रियात्मकत्वसाम्यादिति भावः। ग्रन्थिर्नाम बन्धस्याशैथिल्यकरो ग्रथनविशेषः। अहङ्कारस्य सर्व-

* तत्त्वटीका *

विवक्षायामप्यात्माश्रयं स्सिद्धः। कथं तस्यात्मनः प्रत्यक्षादिभिर्ज्ञातृत्वप्रतीतिरित्यत्र तत्सम्भवमन्यस्य वेति विकल्पितपक्षस्यासम्भवञ्च ज्ञापयितुमाह ( अत इति ) स्वस्य स्वाश्रयत्वायोगादित्यर्थः। अन्तरङ्गाहमर्थधर्माध्यासे नैक्यव्यञ्जनाय पिण्डेत्युक्तम्। ( ज्ञातृत्वमिति ) यथा आत्मनि मनुष्यत्वादिविशिष्टपिण्डत्वमध्यस्तं तथा [ ज्ञातृभूताहमर्थाभिमानो ] ज्ञातृत्वमित्यर्थः। तत्रानुभूतिबहिर्भूतत्वमपि हेतुः, स तु ज्ञातृत्वं हीति उत्तरवाक्ये स्पष्टः। ज्ञातृत्वमप्यध्यस्तमित्यनेनैवात्मनो वृत्तिज्ञानाश्रयत्वपक्षोऽपि व्युदस्तः। तदुपपादनाय प्रतिक्षेप्यस्वरूपं निष्कर्षति ( ज्ञातृत्वं हीति ) हिर्हेतौ। यतो ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वमत इत्यर्थः। प्रस्तुते को विरोध इत्यत्राह ( तच्चेति ) चो हेतौ, उक्ताकारेणाकारान्तरसमुच्चयार्थो वा। विक्रियात्मकं जडम् इति व्यवस्थाप्यमात्माश्रयविशेषणं व्यनक्ति ( विकारिद्रव्याहङ्कारग्रन्थिस्थामिति ) स्वरूपानुबन्धित्वा-

मविक्रिये साक्षिणि चिन्मात्रात्मनि कथमिव सम्भवति? दृश्यधीनासिद्धित्वादेव रूपादेरिव कर्तृत्वादेर्नात्मधर्मत्वम् । सुषुप्तिमूर्च्छादावहंप्रत्ययापायेऽप्यात्मानुभव-

* श्रुतप्रकाशिका *

भ्रममूलत्वात् ग्रन्थिरित्युक्तम् । एतद्विरोधिरूपमाह (अविक्रिय इति) साक्षित्वाभ्युपगमेन ज्ञातृत्वमभ्युपगतं भवतीति शङ्कायां साक्षित्वमपि ज्ञानस्वरूपत्वानुगुणमित्यभिप्रायेण—साक्षिणीत्युक्तम् । अविद्यानुभवरूपत्वमेव साक्षित्वमिति ज्ञानत्वाविरोध इति भावः । चिन्मात्रात्मनि—स्वयंप्रकाशे । जडम् ज्ञातृत्वमजडस्य न सम्भवतीति भावः । कर्तृत्वादिर्नात्मधर्मः, दृश्यधीनसिद्धित्वात् । रूपादिवदित्यन्वयिनमभिप्रेत्याह (दृश्यधीनसिद्धित्वादेवेति) कर्तृत्वादेरित्यादिशब्देनाहम्प्रत्ययगोचरत्वं गृह्यते. य एव भेदादीनामनुभूतिधर्मत्वाभावे हेतुः, तेनैवेत्येवकाराभिप्रायः । अहमर्थो ह्यात्मा. तेन समानाधिकरणतया प्रतीतो ज्ञाता आत्मा स्यादित्यत्राह (सुषुप्तिमूर्च्छादाविति) 'नाहं खल्वित्यादि' श्रुत्युपजीवनेनाहंप्रत्ययापायेऽपीत्युक्तम् । आत्मनः

* तत्त्वटीका *

भावादनात्मत्वव्यक्त्यै देहादिवद्ग्रन्थिस्थत्वोक्तिः । ईदृशस्यौचित्योपलम्भमाह (अविक्रिय इति) परेषु व्याप्रियमाणेषु निर्व्यापारोपि साक्षी; अतः "साक्षाद्द्रष्टरि संज्ञायाम्" इत्यनुशिष्ट्या "साक्षी चेता केवलो निर्गुणश्च" इति श्रुतिरपि द्रष्टृत्वपरेति न भ्रमितव्यम्. किन्त्वविद्यागोचरानुभवस्वरूपपरेत्याह (साक्षिणीति) अनेन सूचितः श्रुतिविरोधोपि । तन्निर्द्धर्मत्वविरोधमप्याह (चिन्मात्रात्मनीति) अनुभाव्यत्वादिति प्रागुक्तहेतुनैव कर्तृत्वादेरप्यनात्मधर्मत्वं साधितमिति स्थापयति (दृश्यधीनेति) कर्तृत्वादिर्नात्मधर्मः, दृश्यधीनसिद्धित्वात्. रूपादिवदित्यनुमानमत्राभिप्रेतम् । कर्तृत्वादित्यादिशब्देनाहंप्रत्ययगोचरत्वग्रहः ॥ ननु 'अहमेवाहं मां जुहोमि' इत्यादिश्रुतिशतैः प्रत्यक्षानुगुणेदमहमर्थ आत्मेति सिद्धेऽहन्त्वसामानाधिकरण्यबलाज्ज्ञातृत्वादिकमात्मधर्मस्स्यादित्यत्राह (सुषुप्तिमूर्च्छादाविति) आदिशब्देन मरणमोक्षसङ्ग्रहः । स्वात्मप्रकाशोपि तदा नास्तीति जडात्मवादिमतव्युदासायात्मानुभवोक्तिः । तास्वपि दशासु स्वप्रकाशत्वस्य श्रुतिप्रतिपन्नत्वादिति भावः । अहंबुद्धेरात्मविषयत्वे

दर्शनेन नात्मनोऽहंप्रत्ययगोचरत्वम्। कर्तृत्वेऽहंप्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येव जडत्वपराक्त्वानात्मत्वादिप्रसङ्गो दुष्परिहरः। अहंप्रत्ययगोचरात् कर्तृतया प्रसिद्धाद्देहात्तत्क्रियाफलस्वर्गादेर्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमेव। तथाऽहमर्थात्

* श्रुतप्रकाशिका *

कर्तृत्वाहम्प्रत्ययगोचरत्वाभावे व्यतिरेक्यनुमानत्रयं प्रसङ्गरूपेणाह (कर्तृत्व इति) आत्मा न कर्ता, न चाहंप्रत्ययगोचर इति प्रतिज्ञाद्वयम्, अजडत्वात् प्रत्यक्त्वात् आत्मत्वादिति हेतुत्रयं, यत्कर्तृ यदहंप्रत्ययगोचरः तज्जडं, पराक् अनात्मा च दृष्टं यथा शरीरमिति। यद्वा आत्मा न कर्ता न चाहंप्रत्ययगोचरः, जडत्वादिप्रसङ्गात् देहवदिति। जडत्वम्—दृश्यतैकस्वरूपत्वम्। पराक्त्वम्—परस्मै भासमानत्वम्। आत्मत्वम्-पुरुषार्थप्रतिसम्बन्धित्वम् देहं प्रति नियन्तृतया व्यापित्वं वा, तदभावोऽनात्मत्वम्. आदिशब्देन क्षयित्वादिकं विवक्षितम्। अहंप्रत्ययगोचरस्य देहस्यानात्मत्वे सिद्धे ह्यहंप्रत्ययगोचरस्य कर्तुरनात्मत्वप्रसक्तिरित्यत्राह। (अहंप्रत्ययगोचरादिति) क्रियाफलस्वर्गादेर्भोक्तुरित्यनेन देहातिरिक्तत्वं सिद्धम्। प्रामाणिकानाम्-चार्वाकव्यति-

* तत्त्वटीका *

स्वरूपस्फुरणवत्सुषुप्तावपि साऽनुवर्तेत, प्रयोगश्च अहं कर्तेत्यादिधीर्नात्मगोचरा सुषुप्त्यादावविद्यमानत्वात्; तथा च 'अहं मनोद्भवं दुःखम्' इत्यादि। 'अविद्याऽहम्मति' रिति च पठ्यते। अकर्तृत्वानङ्गत्वयोरुक्तस्य प्रमाणस्यानुग्राहकतर्कानाह (कर्तृत्व इति) प्रसङ्गविपर्ययाश्चाजडत्वादयः प्रकृतसाध्यद्वये व्यतिरेकिहेतवोऽभिप्रेताः। यदि जडस्याहन्त्वं तर्हि देहस्यैव तत् किं न स्यात्? बाधाच्चेत्तर्हि श्रुत्यादिसिद्धस्य बाधायोगादात्मनि तदस्तु, अनात्मनः कर्तृत्वे कामित्वकर्तृत्वसामानाधिकरण्यात् तन्मूलं भोक्तृत्वमप्यात्मनो न सिध्येत्। 'शास्त्रफलं प्रयोक्तरि' इति नियमस्य जातेष्ट्यादवगत्या निवृत्तिः। अन्यत्र न तथा। तथाच संसाराभावान्मुक्तिशास्त्रं नारभ्यमित्यत्राह (अहंप्रत्ययेति) (कर्तृतया प्रसिद्धाद्देहादिति) कथम्? इत्थम्,—प्रचुराणां विष्णुक्रमणसंस्मरणादीनां वैधक्रियाणां साक्षाद्देहाश्रयत्वाद्वाङ्मनसव्यापा-

ज्ञातुरपि विलक्षणः साक्षी प्रत्यगात्मेति प्रतिपत्तव्यम् । एवमविक्रियानुभवस्वरूपस्यैवाभिव्यञ्जको जडोऽप्यह-

* श्रुतप्रकाशिका *

रिक्तानाम् । अनात्मनः अहङ्कारस्य कर्तृत्वे कथमात्मनः संसारभोक्तृत्वमिति च शङ्का शरीरप्रतिबन्द्या निरस्ता । स्वर्गादिभोक्तुरात्मत्वे सिद्धे ज्ञातैवात्मा स्यादित्यत्राह ( तथेति ) शरीरातिरिक्तात्मनोऽभ्युपगमो हि प्रमाणबलात्क्रियते, तथा ज्ञातुरपि विलक्षणत्वेन प्रमाणसिद्धत्वात्तथाऽभ्युपगन्तव्यमित्यर्थः । यद्वा, अप्रामाणिकाहंप्रत्ययगोचरत्वेन हि शरीरस्यानात्मत्वादि. प्रामाणिकाहंप्रत्ययगोचरस्य तु कथमनात्मत्वादीत्यत्राह— अहंप्रत्ययगोचरादिति । देहस्याप्रामाणिकाहंप्रत्ययगोचरत्वं प्रमाणबाधादेव हि ज्ञायते ; एवं कर्मफलभोक्तुरौपाधिकाकारवतो ज्ञातुरात्मत्वं प्रमाणबाधितं चेदात्मनस्तद्विलक्षणत्वं स्वीकार्यमित्यर्थः । अतः प्रामाणिकाप्रामाणिकविभागाभावेनाहंप्रत्ययगोचरत्वमात्रमेवानात्मत्वसाधकमिति भावः । अविक्रियात्मनः कथं ज्ञातृत्वसम्भवः ? इत्यत्राह ( एवमिति ) यद्वा, ज्ञातृत्वमहङ्कारग्रन्थिस्थमिति

* तत्त्वटीका *

राणां देहसापेक्षत्वाच्चेति । प्रामाणिकानाम्— श्रुत्याद्यनुसारिणामित्यर्थः । तदिह कर्तुः भोक्तृतासम्भवेन तेन बाधायोगचोद्यं परास्तम् । अहंत्वकर्तृत्वादौ बाधश्च पूर्वोक्तसुषुप्त्यादिविषयश्रुतिप्रसिद्धः । आत्मा श्रुतः तस्य तत्तत्क्रियानाश्रयत्वेप्यैहिकामुष्मिकतत्तत्फलभोक्तृत्वं प्रामाणिकैस्सर्वैरङ्गीकृतम्; तथाऽनात्मनोऽहमर्थस्य कर्तृत्वेपि गतिः । स्मर्यते च 'कार्यकारणकर्तृत्व' इत्यादीति भावः । तर्हि भोक्तृत्वादेव ज्ञातृत्वादिकं स्यादित्यत्र दत्तोत्तरत्वं मत्वाह ( तथेति ) अयं भावः,—कर्तृत्वभोक्तृत्वविशिष्टोहमर्थो नात्मा अहं धीवेद्यत्वात् देहवत् , अभोक्तृत्वेप्यात्मनो भोक्तृत्वाध्यासात्तदुक्तिः । मुक्तिशास्त्रञ्च तावन्मात्रनिवृत्त्यर्थमिति । नहि कर्ता साक्षी स्यादित्यभिप्रायेण साक्षित्वोक्तिः । प्रतिपत्तव्यम्—उक्तैर्हेतुभिः 'यस्य नाहङ्कृतो भावः' इत्यादिशास्त्रैश्चेति शेषः ॥ नन्वविद्याशबले चिद्रूपात्मन्यहमिति प्रथमेऽध्यासस्त्वदुक्तः, तथाच शुक्तिस्थतया रूप्यवद्धीस्थतया अहमर्थो भासेत, प्रत्युत तद्धर्मतया धीर्भाति, तथात्वे धियोऽहमर्थविकारित्वं जन्मादिविकाराश्रयत्वञ्च स्यादित्यत्राह ( एवमिति )

ङ्कारः स्वाश्रयतया तमभिव्यनक्ति । आत्मस्थतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः । दर्पणजलखण्डादिर्हि मुखचन्द्रबिम्बगोत्वादिकमात्मस्थतयाऽभिव्यनक्ति। तत्कृतोऽयं जानाम्यहमिति भ्रमः, स्वप्रकाशाया

* श्रुतप्रकाशिका *

पूर्वमुक्तम्। कथमहङ्कारस्य ज्ञातृत्वसम्भव इत्यत्राह— एवमिति । अभिव्यञ्जकत्वप्रयुक्तो ऽयमहङ्कारस्य संविदाश्रयभाव इति भावः । अभिव्यञ्जकोऽस्त्वहङ्कारः, कथमस्य स्वाश्रयतयाऽभिव्यञ्जकत्वमित्यत्राह ( आत्मस्थतयेति ) स्वभावशब्देनौत्सर्गिकत्वं विवक्षितम् । कचित् प्रमाणबाधश्चेन्न तथेति भावः । दृष्टान्तं दर्शयति ( दर्पणेति ) आत्मस्थतयाऽभिव्यञ्जनं न दर्पणत्वप्रयुक्तम् , न च प्रातिबिम्बत्वप्रयुक्तम् , अभिव्यञ्जकत्वमात्रप्रयुक्तमिति दर्शयितुं खण्डादिग्रहणम् । आदिशब्देन मुण्डादि । एवं व्यङ्क्तृव्यङ्ग्यभावकृतो ज्ञातृत्वावभासः संविद इत्याह ( तत्कृत इति ) जडस्याभिव्यञ्जकत्वमयुक्तम्, स्वप्रकाशस्य वस्तुनोऽभिव्यङ्ग्यत्वं चायुक्तम्, संविदभि-

७ तत्त्वटीका ७

अभिव्यञ्जक इति हेतुगर्भम् । जडोपीति घटवद्व्यञ्जकत्वासम्भवशङ्काव्युदासार्थम् । अहङ्कारस्थतयाभिव्यक्तिमात्रमेव न तु वास्तवी तत्र वृत्तिः, दर्पणप्रतिहतभान्यायेन तु तद्धर्मत्वोक्तिः, अतो न तद्विकारित्वादिप्रसङ्गः । इन्द्रियवद्व्यञ्जकत्वमस्तु. किमिति स्वनिष्ठतया व्यनक्तीत्यत्राह ( आत्मस्थतयेति ) यथादर्शनं स्वभावो दुरतिक्रम इत्यभिप्रायेण स्वभावशब्दः । अभिव्यञ्जकानामीदृक्स्वभावत्वं बुद्धीनां प्रमात्ववदौत्सर्गिकं क्वचिदपवादेपि भूयो दृष्ट्या सिद्ध्यतीत्याह ( दर्पणेति ) तत्तद्विशेषप्रयुक्तत्वव्युदासाय बहूदाहृतिः । जातिव्यक्त्युदाहरणेन चक्षुःप्रतिफलसोपाधिकत्वशङ्का चापास्ता । उक्तप्रकारेणाधिष्ठानवैपरीत्यचोद्यस्यापास्तत्वमाह ( तत्कृत- इति.) व्यञ्जकसामान्यस्य स्वभावसिद्ध इत्यर्थः । ननु स्वप्रकाशज्ञानस्य न व्यञ्जकापेक्षा, व्यञ्जकानाञ्च न कचिदपि स्वव्यङ्ग्यैर्व्यञ्जनं दृष्टम् । अनुभूतिश्च न व्यङ्क्त्री अन्तरवज्जडत्वप्रसङ्गात्, अहङ्कारोपि नाव्यङ्क्त्रा व्यङ्क्तृबुद्ध्यधीनसिद्धित्वाभावेन परमार्थसत्त्वप्रसङ्गात् नच स्वयं व्यक्तः अनिष्टत्वात्; अतो मिथो व्यङ्क्तृव्यङ्ग्यत्वे

अनुभूतेः कथमिव तदभिव्यङ्ग्यजडरूपाहङ्कारेणाभिव्यङ्ग्यत्वमिति मावोचः, रविकरनिकराभिव्यङ्ग्यकरतलस्य तदभिव्यञ्जकत्वदर्शनात्; जालकरन्ध्रनिष्क्रान्तद्युमणिकिरणानां तदभिव्यङ्ग्येनापि करतलेन स्फुटतर प्रकाशो हि दृष्टचरः; यतोऽहं जानामीति ज्ञाताऽयमहमर्थश्चिन्मात्रात्मनो न पारमार्थिको धर्मः । अत एव सुषुप्तिमुक्त्योर्नान्वेति । तत्र ह्यहमर्थोल्लेखविगमेन

* श्रुतप्रकाशिका *

व्यङ्ग्यस्य च विशेषेण तदभिव्यञ्जकत्वमयुक्तमितीमामाशङ्कां स्वयमेवोत्थाप्य प्रतिक्षिपति ( स्वप्रकाशाया इति ) कुत इत्यत्राह ( रविकरेति ) करतलस्य किरणाभिव्यञ्जकत्वं क दृष्टमित्यत्राह ( जालकेति ) एवं ज्ञातृत्वस्यापारमार्थिकत्वमुक्तम् । एतदेव परमार्थवस्तुभासनवेलायामनवभासनप्रतिपादनेन उपपादयति ( यत इति ) अनेनाहंप्रत्ययापायेऽपीति पूर्वोक्तार्थो विवृतो भवति । यत इति साध्यस्य हेतुतया निर्देशः अग्निमत्त्वेन धूमवत्त्वमितिवत् । मुक्तिसमभिव्याहारेण सुषुप्तावप्यहंप्रत्ययापायस्यागमसिद्धत्वं सूचितम्; तदा कथं भासत इत्यत्राह ( तत्र हीति ) ' नाहं

* तत्त्वटीका *

अन्योन्याश्रयस्स्यादिति चोद्यमनूद्य प्रतिक्षिपति ( स्वप्रकाशाया इति ) सजातीयनिरपेक्षतया स्वयं भातस्यापि परेण व्यङ्ग्यत्वं तदभिव्यञ्जकत्वञ्च निदर्शयति ( रवीति ) करतलस्य रविकरव्यञ्जकत्वमसिद्धमित्यत्राह ( जालकेति ) एतेन नित्यसिद्धायास्स्वरूपव्यक्तेरन्यैवाहङ्कारजन्याभिव्यक्तिरित्यपि सूच्यते । पूर्वमहंबुद्धेस्सुषुप्त्यादावभावात् सिद्धान्तिसम्मतस्वरूपधीत्वायोगेनान्यगोचरत्वमुक्तम् । अत्र प्रत्येतुः प्रत्येतव्याद्व्यतिरेकोऽहन्त्वं तच्चात्मनः कादाचित्कमपि सत्यमिति मन्यमानं प्रत्याह ( यत इति ) व्यापकाभावे व्याप्यं नेति व्यतिरेकव्याप्त्या साध्यस्यात्र साधकसद्भावार्थतया तद्धेतुत्वोक्तिः नतु तद्बोधकतया, अहङ्कारस्य धर्मतानिषेधोऽहंत्वधर्मतानिषेधार्थः । ज्ञातृत्वादिकं वा भावप्रधानं, ज्ञातृत्वादिसहितमहन्त्वमित्यर्थः । एवाकारोन्यथासिद्ध्यपोहार्थः ।

स्वाभाविकानुभवमात्ररूपेणात्माऽवभासते । अत एव सुप्तोत्थितः कदाचिन्मामप्यहं न ज्ञातवानिति परामृशति तस्मात् पारमर्थतो निरस्तसमस्तभेदविकल्पनिर्विशेष-

* श्रुतप्रकाशिका *

खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मि' इति स्वापविषया श्रुतिः । "अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥" इति मुक्तिविषया स्मृतिः । "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इति क्षेत्रान्तर्भावश्चोच्यते अहङ्कारस्य । "अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते" इति तस्य भ्रान्तिसिद्धत्वमुच्यते । हिशब्दः श्रुतिस्मृतिप्रसिद्धिद्योतनार्थः । न केवलं श्रुतिः सुषुप्तिविषया, परामर्शश्च तथाऽस्तीत्याह ( अत एव चेति ) अत एवेति साध्यस्य हेतुत्वेन परामर्शः । कथं साध्यसाधनयोर्विपरीतनिर्देशः ? इत्थम्,— ज्ञप्तौ यत्साध्यं तदुत्पत्तौ साधनम्, यदुत्पत्तौ साधनं तद् ज्ञप्तौ साध्यम् . तस्मादग्निमत्त्वादेव हि धूमोद्गम इतिवत् . उत्पत्तौ हेतुत्वमपेक्ष्यात एवेत्युक्तम् । ततः किं प्रस्तुतपूर्ववृत्तत्वचिन्तायाः ? इत्यत्राह । ( तस्मादिति ) तस्मादित्यनेन यदप्याहुरशेषविशेषेत्यारभ्योक्तं प्रमाणतर्काभ्यां स्वमतोपपादनमभिप्रेतम् । ( निरस्तसमस्तभेदविकल्पेति ) भेदविकल्प-

* तत्त्वटीका *

ज्ञातृत्वाहंत्वे मिथ्याभूते अनात्मधर्मौ च सुषुप्त्यादावभातत्वात् मनुष्यत्वादिवदिति प्रयोगः । स्वरूपासिद्धोयं हेतुरिति वादिनं प्रत्याह ( तत्रेति ) हिर्हेतौ शास्त्रप्रसिद्धौ वा । नाहं खल्वित्यादिभिः सुषुप्तावहंधीनिवृत्तिस्सिद्धा, मुक्तौ च 'अहङ्कारं बलं दर्पम्' इत्यादिभिः । न केवलं शास्त्रेण प्रबुद्धस्य सुषुप्तावस्थात् परामर्शप्रकाराच्च तदानीमहंधीनिवृत्तिमाह ( अत एवेति ) अत्राप्यत इति साध्यपरम् । यदप्याहुः ,— इत्यादिना प्रपञ्चितं वस्तुसामर्थ्यं परमप्रकृतकर्मनैरपेक्ष्यव्यक्त्यै निगमयति ( तस्मादिति ) प्रमाणैस्तदनुग्राहकैश्च स्थापनादित्यर्थः । अत्र निर्विशेषं प्राप्यं, नित्यप्राप्ते तस्मिन्नोपासनादिसाध्या प्राप्तिः, निवर्त्यं मिथ्याभूतज्ञानं, तन्निरासे च ज्ञानातिरिक्तं नापेक्ष्यम्, निवर्तकं वाक्यजन्यमैक्यज्ञानम् । तच्च स्वोत्पत्तौ स्वफले वा न कर्मापेक्षितमिति वस्तुत्रयसामर्थ्यनिष्कर्षः । निरस्तेत्यादिना सजातीयविजातीयनिवृत्तिः । भेद-

चिन्मात्रैकरसकूटस्थनित्यसंविदेव भ्रान्त्या ज्ञातृज्ञेयज्ञान रूपविविधविचित्रभेदा विवर्त्तत इति तन्मूलभूताऽविद्यानिबर्हणाय नित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते— इति ॥

* श्रुतप्रकाशिका *

शब्देन ज्ञातृज्ञेयादिभेदस्यावान्तरवैविध्यं विवक्षितम्, निर्विशेषशब्देन स्वगतनित्यत्वादिभेदव्यावृत्तिः । कुत इत्यत्राह ( चिन्मात्रैकरसेति ) चिन्मात्रत्वादित्यर्थः । अनेन शून्यत्वव्युदासश्च । कूटस्थम्—निर्विकारम्, सर्वाधिष्ठानं वा । ( नित्यसंविदेवेति ) चिन्मात्रशब्दः स्वयंप्रकाशत्वपरः । संविच्छब्दो विशेष्यपर इत्यपौनरुक्त्यम् । चिन्मात्रस्य कथं भेदसम्भव इत्यत्राह (भ्रान्त्येति) भ्रान्त्या विवर्त्तत इति करिकलभवन्निर्देशः । शुद्धम्—अविद्यारहितम् । बुद्धम्—स्वयंप्रकाशम् । मुक्तम्—परमार्थतो भेददर्शनजन्मादिरहितम् ; एवंविधब्रह्मात्मैकत्वविद्यालब्धये सर्वे वेदान्ता आरभ्यन्त इत्यर्थः । वेदान्तानामारम्भणीयत्वं नाम तद्विचारस्यारम्भणीयत्वम् । सर्वे वेदान्ता आरभ्यन्त इति यदप्याहुरिति पूर्वेणान्वयः । ब्रह्ममीमांसाशास्त्रं किमनारम्भणीयम् ? उतारम्भणीयम् ? इति विचारे बन्धस्य परमार्थत्वेन ज्ञाननिवर्त्यत्वाभावात् ज्ञानप्रतिपादकवेदान्तवाक्यविचाररूपं शास्त्रमनारम्भणीयमिति पूर्वपक्षं कृत्वा बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानार्थं वेदान्तविचाररूपं शास्त्रमारम्भणीयमिति हि ब्रह्मज्ञानपक्षे प्रथमाधिकरणार्थः शिक्षितः । अतो बन्धस्य मिथ्यात्वेन ज्ञानमात्रनिवर्त्यत्वात् ज्ञानप्रधानस्य शास्त्रस्य कर्मविचारो न पूर्ववृत्त

ॐ तत्त्वटीका ॐ

विकल्पः— तद्वैचित्र्यं तत्क्रमो वा । निर्विशेषेति स्वगतव्युदासाय । चिन्मात्रैकरसशब्दः प्राग्वत् । ज्ञातृज्ञेयादयो विवर्त्ताः । ( भ्रान्त्या विवर्त्तते ) भ्रमगोचरमिथ्याभूतविकारवती भवतीत्यर्थः । तच्छब्देन भ्रान्तिः परामृश्यते । शुद्धमुक्तशब्दावविद्यातत्कार्यनिवृत्त्यर्थौ । ( प्रतिपत्तये ) प्राप्तय इत्यर्थः । ( सर्वे वेदान्ताः ) कारणपरास्तच्छोधकास्तदैक्यबोधकाश्च, तेषामारभ्यत्वमिह विचारद्वारा । इतिः प्रकारे । इति यदप्याहुरित्यन्वयः । सकारणस्य संसारस्य सत्यत्वेन ज्ञानबाध्यत्वा-

महासिद्धान्तारम्भः

## तदिदमौपनिषदपरमपुरुषवरणीयताहेतुगुणविरहिणा-

* श्रुतप्रकाशिका *

इत्युक्तं भवतीति वैषम्यम् । उपाय आत्मैकत्वविज्ञानम्, उपेयं निर्विशेषचिन्मात्रं ब्रह्म, निवर्त्यं च मिथ्याभूतम् इति त्रयं कर्मविचारस्यानपेक्षितत्वाय पूर्वं विस्तरेणोपपादितं निगमनग्रन्थे संक्षिप्तं भवति ॥ * * * *

अथ कर्मविचारपूर्ववृत्तत्वविरोधिवस्तुसामर्थ्यनिरासार्थं परोक्तानामुपायोपेयनिवर्त्यानां प्रमाणतर्काभासमूलत्वं प्रतिजानीते–( तदिदमिति ) स्वाभिमतानामेव तेषां प्रमाणतर्कोपपन्नतां च संक्षेपेण प्रतिजानाति. अर्थाद्बहुशास्त्रज्ञानां बहुग्रन्थकाराणामपि परेषां स्खलनानुपपत्तिशङ्कां च सम्यग्ज्ञानोत्पत्तिसामग्रीवैकल्यप्रतिपादनमुखेन परिहरति ( तदिदमित्यादिना ) परमपुरुषशब्देनोपेयम्, वरणीयतेत्यादिना

तत्त्वटीका

भावान्न तदर्थं शास्त्रमारम्भणीयमित्यत्र तस्य मिथ्यात्वेन धीबाध्यत्वात्तत्प्रधानं शास्त्रमारभ्यमिति परोपन्यस्तवस्तुसामर्थ्यमिह स्पष्टीकृतम् ॥

तस्मादनुपयुक्तत्वाद्विरोधाच्चात्र कर्मणः ।
तच्चिन्तावृत्तता नेति वाक्यशेषो मनस्कृतः ॥ ॥ ॥ ॥

अथानूदितनानार्थ– दोषजालमहोदधेः ।
सङ्क्षिप्तप्रतिपत्त्यर्थं तदित्यादि निबध्यते ॥ ॥
प्रकाशयति तत्कारः परैरुक्तमनेकधा ।
अनेकग्रन्थसन्दर्भ–साधितं तदुदीर्यते ॥ ॥
दूष्यकार्त्स्न्यमिदं वक्ति प्रस्फुरद्दोषतामपि ।
आभासत्वमतो वक्तुमिदंशब्दः प्रयुज्यते ॥ ॥
किञ्चासारमिदं सर्वं सति सारे हि कुत्र चित् ।
सारासारौ विवेक्तव्यौ सङ्क्षिकादिसमैरपि ॥ ॥
यदि नोद्ध्रियते न्यायः श्रुतिशल्यमिदं मतम् ।
उपप्लूयेत सन्मार्गस्तदाहुर्बाह्यदूषणे ॥ ॥

* श्रुतप्रकाशिका *

उपायम् अनादीत्यादिना निवर्त्यम् अनधिगतेत्यादिना परपक्षनैर्मूल्यम् न्यायानुगृहीतेत्यादिना स्वपक्षस्य समूलतामर्थतोऽनेकाविद्वत्परिग्रहञ्च प्रतिजानीते. तदिदमित्यनन्तरवाक्यप्रकृतं परोक्तोपायोपेयनिवर्त्यत्रयं विवक्षितम् । औपनिषदपरमपुरुषशब्देन " तं त्वौपनिषदं पुरुषं विद्धि" इति श्रुतिं स्मारयति; एतेनास्मदभिमतप्रमाणप्रमेयविशेषसम्बन्धः श्रुत्यैव व्यक्त इति सूचयति, परमशब्देनेश्वरातिरिक्तव्यावृत्तिः । वरणीयताहेतुगुणविशेषविरहिणामित्यनेन 'यमेवैष वृणुते तेन लभ्यः'इत्यभिमतोपायविशेषकथनं फलितम् ; अनेन पदेन बहुशास्त्रज्ञबहुग्रन्थकाराणां भ्रमानुपपत्तिशङ्का च परिहृता भवति, सम्यक् शास्त्रार्थज्ञानोत्पत्तौ भगवद्भक्तेरपि सामग्र्यन्तर्भावेन केवलशास्त्रपरिश्रमस्य विकलहेतुत्वात् । यथा " यस्य देवे परा भक्तिः" इत्यादिका श्रुतिः । स्मृतिश्च " विद्या राजन् न ते विद्या मम विद्या न हीयते । विद्याहीनस्तमोध्वस्तो नाभिजानासि केशवम् ॥ धृतराष्ट्रः । गावद्गणे ते का विद्या या ते विद्या जनार्दने । यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ सञ्जयः । मायां न सेवे भद्रं ते न वृथा धर्ममाचरे । शुद्धभावङ्गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् " ॥ इति । अत्र भक्त्या शुद्धभावङ्गतः शास्त्रात् जनार्दनं वेद्मीत्यनेन यथावच्छास्त्रार्थज्ञानोदयस्य भक्तिसापेक्षत्वं सिद्धम् । " जायमानं हि पुरुषं यं पश्येन्मधुसूनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥ 'पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चास्य मानसं समभिप्लुतम् ॥" इति वच-

७ तत्त्वटीका ७

प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम् ।
विध्यर्थवादमन्त्रार्थ–नामधेयादिकल्पनाः ॥ ७ ॥
सर्वेषु लक्षणेष्वेव स्वप्रमाणगणैः स्थितिः ।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥ ७ ॥
कर्मभ्यः फलसम्बन्धः पारलौक्यैहलौकिकः ।
सर्वमित्याद्ययुक्तं स्या––दर्थशून्यासु बुद्धिषु ॥ ७ ॥
तस्माद्धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसम्मतैः ।
अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति ॥ इति ॥

मनादिपापवासनादूषिताशेषशेमुषीकाणामनधिगतपद-

* श्रुतप्रकाशिका *

नाच्च तत्त्वार्थज्ञानस्य भक्तिप्रीतभगवत्कटाक्षसापेक्षत्वं ज्ञायते । ननु यया त्व-मभिजानासि भक्त्या वेद्मीति प्रश्नप्रतिवचनाभ्यां विद्याभक्तिशब्दयोरैकार्थ्यं प्रतीयते. भक्तिरूपा च विद्या मोक्षायेति प्रागुपपादितम्, ततश्च शास्त्रज्ञानमूला भक्तिः । भक्तिमूलं शास्त्रज्ञानमित्यन्योन्याश्रय इति चेत्, नैवम्—श्रवणवेलायामेव पदार्थतया अवगम्यमानेषु परमात्मगुणादिष्वनुकूलबुद्धिगोचरत्वाद्विद्याभक्तिशब्दयोः, तेन सम्यग्वाक्यार्थनिर्णयलाभः । पूर्वपक्षतयोपन्यस्यमानेऽपि सुगताभिमतवेदाप्रामाण्यादौ हि भवति प्रद्वेषो वैदिकानाम्, भगवद्गुणादिष्वनुरक्तचित्तता भवति, न चैषा साक्षात्कारकल्पनिरन्तरध्यानरूपा भक्तिः, अतो नान्योन्याश्रयः । अथ शास्त्रार्थ-[याथात्म्य]ज्ञानोत्पत्तिहेतुभूतभक्तिविरोधिनमाह ( अनादीति ) यद्वा, सम्यग्ज्ञानहेतुभूतभक्त्यभावात् सम्यग्ज्ञानविरोधिपापानुबन्धमाह—अनादीति । वासनाशब्देन

* तत्त्वटीका *

अत्र व्यावहारिकव्यवस्थया समाधिस्तु साम्प्रतव्यवस्थावदपाकरिष्यते । अत्र तदिदं परोक्तमुपायादित्रयमनादरणीयमिति साद्ध्यम्, औपनिषदेत्यादिना तद्धेतूक्तिः । स्वपक्षे च प्राप्यादयस्त्रय इह परमपुरुषतद्भक्तितदपराधास्सूच्यन्ते । औपनिषदशब्देन 'त्वं त्वौपनिषदं पुरुषम्' इत्यादिवाक्यं स्मारयता स्वपरपक्षयोः साधनदूषणोक्तिः । परेषान्तु ब्रह्मणो वेद्यत्वानभ्युपगमात् तदिष्टविपरीतसगुणत्वादिश्रुत्या च बाधप्रदर्शनम् । परमपुरुषत्वोक्तिरीश्वरोत्तीर्णताव्युदासाय । अर्थात् त्रिमूर्तिसाम्योत्तीर्णतादिपक्षापोहः । सम्यग्ज्ञानानुपपत्त्यै भक्तिविरहाद्युक्तिः । भक्तिर्हि सम्यग्धीहेतुतया 'यस्य देवे परा भक्तिः' शुद्धभावं गतो भक्त्या' इत्यादिषु ख्याता । पापस्य वासना— तत्त्वज्ञाननिवृत्तिमिथ्याज्ञानादेस्सजातीयारम्भस्योत्पादनशक्तिः । तस्यास्तत्त्वधीनाशकत्वं 'पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः' इत्यादिषु प्रसिद्धम् । बीजाङ्कुरन्यायसूचनायानादिशब्दः । अशेषशब्देन मानतत्प्राप्त्योपायादिसर्वसङ्ग्रहः । पापस्य भक्त्या निवर्त्त्यत्वं भक्त्यभावे यथार्हं हेतुसाध्यभावो भक्तिनिरोधद्वारं चात्र सूच्यम् । भक्त्यभावादिनोक्तार्थाभ्यां मानतर्कादौ सर्वत्र प्रमितिसामग्रीशैथिल्येन बहुविदामपि भ्रमादिसम्भवमाह ( अनधिगतेति ) सम्य-

# वाक्यस्वरूपतदर्थयाथात्म्यप्रत्यक्षादिसकलप्रमाणवृत्त-तदितिकर्त्तव्यतारूपसमीचीनन्यायमार्गाणां विकल्पा-

* श्रुतप्रकाशिका *

पापस्य दृढमूलत्वेन दुर्निवारत्वमुक्तम्; वासनया पापं पापेन वासना, अज्ञानेन पापवासना पापवासनया अज्ञानमित्यन्योन्याश्रयपरिहाराय अनादिशब्दः। शेमुषी—मोक्षोपयोगि ज्ञानम्। अशेषशब्दस्योपायोपेयनिवर्त्यविषया विश्वशेमुषी दूषितेति भावः। अनेनार्थात् स्वपक्षे निवर्त्यं चोक्तं भवति। कर्मण एव मोक्षप्रतिबन्धकत्वात् दूषितशेमुषीकत्वफलं सम्यग्ज्ञानाभावमाह ( अनधिगतेति ) प्रत्यक्षविरोधे शास्त्रप्राबल्यस्य परेणोक्तत्वात्, पदशः समुदायेन च सविशेषपरत्वप्राधान्येन च प्रथमं शब्दप्रमाणमाह ( पदेति ) प्रकृतिप्रत्ययथयोगेन पदत्वं न ज्ञातमिति पदशब्दस्य भावः। ( वाक्यस्वरूपेति ) वाक्यम् अनेकपदार्थसंसर्गविशेषाभिधायि इति च न ज्ञातमिति भावः। तदर्थयाथात्म्यम्—तात्पर्यविषयः। प्रत्यक्षादीत्यादिना अनुमानम् सकलशब्देन स्पार्शनचाक्षुषादिप्रत्यक्षावान्तरभिदा विवक्षिता, अन्वयव्यतिरेकाद्यनुमानावान्तरभिदा च विवक्षिता। यद्वा तत्तद्वाद्यभिमतार्थापत्त्यादिप्रमाणान्तरविषयः सकलशब्दः। वृत्तम्-बोधनम् ( तदितिकर्त्तव्यतारूपेति ) तर्केण प्रमाणबाधवचनात् प्रमाणानुग्राहकस्तर्क इति च न ज्ञातमिति भावः। प्रमाणानु-

ϧ तत्त्वटीका ϧ

गित्युपस्कार्यम्। पदस्वरूपम् प्रकृत्यादिप्रत्ययान्तसमुदायात्मकम्। वाक्यस्वरूपन्तु तादृशां सङ्घातः। तदर्थः— मुख्यामुख्यरूपः पदार्थो वाक्यार्थश्च। तद्याथात्म्यम्—दुस्त्यजभेदगर्भत्वं वाक्यार्थस्य यथार्हं तात्पर्यगोचरत्वञ्च। भेदभूयस्तया विरोधे सति प्रबलतया परेष्टत्वाच्च प्रत्यक्षादेः पूर्वं वाक्यस्योक्तिः। आदिशब्देन स्वपराभ्युपेतग्रहः। सकलशब्दस्सावान्तरभेदकरः परेष्टमानान्तपरो वा। वृत्तम्—स्वतस्स्वार्थसाधनम् उपजीव्यानुविधानञ्च। तच्छब्देन प्रमाणपरामर्शः। न्यायः—तर्कः। समीचीनत्वम्— साङ्गपञ्चकत्वम्। मार्गः— तत्तत्प्रतिपादकविद्यास्थानम्। यद्वा,—विरुद्ध जिज्ञासाचारणरूपानुग्रहः। सम्बन्धसामान्ये षष्ठी। कुतस्तर्हि मानशून्यस्योत्थानमित्यत्र बाह्यमतवदित्यभिप्रायेणाह ( विकल्पेति ) विकल्पासहत्वं विकल्पमात्रे स्पष्ट-

सहविविधकुतर्ककल्ककल्पितमिति न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरनादरणीयम् ॥

* श्रुतप्रकाशिका *

ग्राहकतयैव हि वयं तर्कमङ्गीकुर्म इत्यत्राह ( समीचीनन्यायेति ) अनुग्राहकबुद्ध्या स्वीकृतस्यापि तर्कस्य प्रमाणविरुद्धत्वात् सोऽसमीचीन इति भावः । अपच्छेदनयादिसमीचीनन्याया एव हि स्वीकृता इत्यत्राह ( न्यायमार्गाणामिति ) अयमपच्छेदन्यायविषयः अयं सामान्यविशेषन्यायविषय इति तत्तन्न्यायसञ्चारविषयविभागोऽनवगत इति भावः । तर्हि किमवलम्ब्य प्रबन्धाः कृता इत्यत्राह ( विकल्पासहेति ) कुतर्काः—प्रमाणविरुद्धाः मूलशैथिल्यमिथोविरोधादिदोषान्तराक्रान्ताश्च तर्काः, ते च त्रिचतुरपदस्थायिनो न भवन्ति, किन्तु विकल्पितान्यतराशिरःपरिग्रह एव भङ्गुरा इत्याह—विकल्पासहेति । तर्कस्य विकल्पासहत्वं नाम तद्विषयसाधनादिविकल्पासहत्वमेव . ( विविधेति ) ब्रह्मणोऽनुभाव्यत्वेऽननुभूतित्वं प्रत्यक्षं सन्मात्रग्राहि, वेदान्तवेद्यं ब्रह्म प्रमाणान्तरागोचरमित्यादिरूपं कुतर्काणामन्योन्यव्याहतिवैविध्यं विवक्षितम् । ईदृशकुतर्क एव, कल्कम्—असारभूतम्, बौद्धैरात्तसारम् . ऋजीषमित्यर्थः । एतेन, कल्पितम्—उत्कीर्णम् । इतिर्हेतौ । केषाञ्चित् समीचीनार्थान्तरविषयज्ञानेऽसत्यप्यस्यासमीचीनत्वनिश्चयः कथमित्यत्राह ( न्यायानुगृहीतप्रत्यक्षादिसकलप्रमाणवृत्तयाथात्म्यविद्भिरिति ) अनेन पूर्वोक्तविपरीताकार उक्तः । बहुवचनेन स्वपक्षस्य भगवद्बोधायनाद्यनेकशिष्टपरिग्रहः सूचितः । ( अनादरणीयमिति ) शिष्यशिक्षासु पूर्वपक्षोपन्यासकौशलार्थमप्यादातुमयोग्यमित्यर्थः । अशेषविशेषप्रत्यनीकचिन्मात्रमित्यारभ्य सर्वे वेदान्ता आरभ्यन्त इत्यन्तेन यदप्याहुः तदनादरणीयमित्यन्वयः ॥

❀ तत्त्वटीका ❀

दोषत्वम् । वेद्यत्वावेद्यत्वादिविरुद्धगोचरत्वाभिप्रायेण विविधशब्दः । तर्केषु सारो बाह्यैरात्तः, वेदप्रामाण्याद्यनादरेणोत्थानात् । इदन्तु तदृजीषैः कल्पितम् । स्वमतस्य सत्तर्कान्वितमानसिद्धतां बोधायनटङ्कद्रमिडादिमहत्तरपरिग्रहप्राचुर्यञ्च सूचयति ( न्यायेति ) अनादरणीयम्—आदरानर्हम्, उन्मत्तजल्पितवदुपेक्ष्यमित्यर्थः । एतेन

**तथा हि– निर्विशेषवस्तुवादिभिर्निर्विशेषे वस्तुनीदं प्रमाणमिति न शक्यते वक्तुम्, सविशेषवस्तुविषयत्वात्**

* श्रुतप्रकाशिका *

एवं सङ्क्षेपेण प्रतिपादितमर्थमुपपादयितुमुपक्रमते । ( तथा हीति ) ननु पूर्वपक्षिणा प्रथमं वेदान्तवाक्यान्युदाहृत्य तत्र निरूपणीयं सर्वं निरूप्य पश्चात् तद्व्यतिरिक्तप्रमाणतर्काः प्रदर्शिताः, अतः सिद्धान्ते च तेन क्रमेण तत्प्रतिक्षेपो युक्तः । तत्कथं प्रथमं सकलप्रमाणाविषयत्वनिरूपणं सङ्गच्छते ? उत्तरत्र च कथं प्रत्यक्षादिनिर्विशेषविषयत्वनिरासपूर्वकं वेदान्तवाक्ययोजना क्रियते ? उच्यते,–प्रत्यक्षविरोधे शास्त्रप्राबल्याभ्युपगमात् परेण वेदान्तवाक्यानि प्रथममुदाहृत्य पश्चात्तदन्यद्वक्तव्यं सर्वमुक्तम्, प्रबलतयाऽभिमतप्रमाणपुरस्कारो ह्युचितः, सिद्धान्तिना तु प्रत्यक्षविरोधे शास्त्रप्राबल्यानभ्युपगमात् प्रत्यक्षादेर्निर्विशेषविषयत्वव्युदसनपूर्वकं तदविरोधेन वेदान्तवाक्यानि स्वरसतो व्याख्यास्यन्ते । तत्र निर्विशेषचिन्मात्रपारमार्थ्यस्य परेण प्रथमप्रतिज्ञातस्य सामान्येन सकलप्रमाणबहिष्कृतत्वरूपं दूषणं प्रथमं प्रतिजानीते । ( निर्विशेष इति ) अर्थात्प्रमाणाभावश्च स्वपक्षानुगुणो निरूपितो भवति । खपुष्पमपि स्वानुभवसिद्धमिति वक्तुं शक्यमिति तद्व्यावृत्त्यर्थमिदंशब्दः । परसम्प्रतिपत्तिपदं प्रमाणं न किञ्चिदपीति भावः । यद्वा, न काचिदपि प्रमाणव्यक्तिर्निर्विशेषगोचरेत्येकवचनाभिप्रायः । कुतइत्यत्राह ( सविशेषेति ) ननु विशेषा

॥ तत्त्वटीका ॥

दृष्टापह्नोतॄणां वादानधिकारस्सूच्यते । उक्तं हि वेदार्थसङ्ग्रहे– "सर्वशून्यवादिनो ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनश्च स्वपक्षसाधकप्रमाणपारमार्थ्यानभ्युपगमादभियुक्तैर्वादानधिकार एव प्रतिपादितः" इति । तथा चाहुः–'अधिकारोनुपायत्वान्न वादेशून्यवादिनः' इति तत्प्रतिक्षेपस्त्वन्वारोहेण शिक्षणीयान् [शिष्यादीन्] विषयान् प्रति वा ॥

सङ्क्षिप्तं परनिरसनं प्रपञ्चयितुमुपक्रमते ( तथा हीति ) तत्र प्राप्यस्य निर्विशेषत्वं मानशून्यतया क्षिपति ( निर्विशेषेति ) निर्विशेषे वस्तुनीति विशेषणात् स्ववचनविरोधोऽप्यत्र सूच्यते तस्मिन् मानमस्तीति सामान्योक्तिरयुक्ता । अतो लोकतः स्वमत्या वा सिद्धस्य विशेषतो वक्तव्यत्वाय इदंशब्दः । परैरुच्यमानं वक्तुं शक्यत्वं कथं क्षेप्यं

सर्वप्रमाणानाम् । यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठस्समयः, सोऽप्यात्मसाक्षिकसविशेषानुभवादेव निरस्तः। इदमहमदर्शमिति केनचिद्विशेषेण विशिष्टविष-

* श्रुतप्रकाशिका *

निर्विशेषाः, तत् कथं निर्विशेषवस्तुनोऽप्रामाणिकत्वम्? उच्यते,—धर्मेण धर्मी सविशेषः, धर्मिणा च धर्मः सविशेषः। कस्यचिद्धर्मभूतं धर्मि वा यन्न भवति तत्प्रमाणशून्यमिति हि ग्रन्थार्थः, विशेषो व्यावर्त्तकः। धर्मी च स्वगतधर्मस्याश्रयान्तरगतधर्माद्व्यवच्छेदक इति विशेषशब्दवाच्यः। किञ्च विशेषो निर्विशेष इति शब्दौ किं पर्यायौ? न वा? आद्ये सह प्रयोगानुपपत्तिः। द्वितीये तु न निर्विशेषत्वम्, बोध्यभेदमन्तरेणापर्यायत्वायोगात्। ननु कथं सर्वप्रमाणानां सविशेषविषयत्वम्? न हि गन्धादिग्राहि प्रमाणं गन्धादिकं साश्रयमावेदयति। नैवम्,—आश्रय एव विशेष इति नियमाभावात्. संविदोऽपि सर्वविशेषणतया सर्वार्थवैशिष्ट्यं ह्युपपद्यते; अयं गन्धोऽनुभूयत इति कालादिविशेषावच्छिन्नतयैव गन्धादिप्रतीतेश्च सविशेषविषयत्वोपपत्तिः। तथा प्रतीतिश्च वक्ष्यते। तर्हि न वयं प्रमाणान्तरेण निर्विशेषसिद्धिमभ्युपगच्छामः। स्वानुभवसिद्धं हि तदित्यत आह (यस्त्विति) तुशब्देन समयं विशिंषन् समयवैशिष्ट्यमूलं स्वानुभवलक्षणप्रमाणवैषम्यमभिप्रैति। स्वगोष्ठीनिष्ठ इति परवाद्यसम्मतत्वं दर्शयति। आत्मसाक्षिकानुभवस्य सविशेषत्वं दर्शयति (इदमहमिति) (विशिष्टविषयत्वादिति) विशिष्टो विषयः स्वयमनुभव एव; शिलापुत्रकस्य

* तत्त्वटीका *

विशेषे च निर्विशेष इव त्वयापि मानं वाच्यमित्यत्राह (सविशेषेति) कस्याप्यत्र प्रमाणीकर्तुं शक्यत्वमत्र निषिद्ध्यते नतु त्वद्वचनमात्रम्. विशेषप्रमाणमपि न निर्विशेषविषयम्, तत्तदाश्रयादिभिर्विशेषशब्दवाच्यत्वादिभिश्च तद्वैशिष्ट्यात्। अस्ति हि कश्चिदाश्रितैः कश्चिदाश्रयादिभिश्च भिन्नधीः। गुणादिरूपे च विशेषे स्वपरनिर्वाहकत्वं वक्ष्यत इति नानवस्था। स्वतस्सिद्धे माननैरपेक्ष्यवादमनूद्य क्षिपति (यस्त्विति) स्वानुभवसिद्धः—स्वप्रकाशप्रत्यक्षसिद्ध इत्यर्थः। स्वगोष्ठीनिष्ठः—लौकिकपरीक्षकसन्निधौ दुर्वच इत्यर्थः। समयः—परिभाषाप्राय इति भावः। सर्वहृदया

यत्वात्सर्वेषामनुभवानाम् । सविशेषोऽप्यनुभूयमानोऽनु-

* श्रुतप्रकाशिका *

शरीरमितिवदयं निर्देशः, अन्यथा स्वानुभवनिर्विशेषत्वनिरासे घटादिसविशेषत्व-साधनस्यानुपयोगात् । अनुभूयमानोऽप्यनुभव इत्युपरितनग्रन्थस्याप्येवमेवार्थः, स्वानु-भवसिद्धमित्यनेनैकार्थ्यात् । न चानुभवशब्दोऽनुव्यवसायपरः, न ह्यनुव्यवसायरूपं प्रत्यक्षमिष्टम्, अतीतविषयतया प्रत्यक्षत्वानुपपत्तेः । परज्ञानं प्रमुषितसंस्कारं स्वज्ञानं चानुमेयम् अन्यत्तु स्मृतिविषयः, न च स्मृतिविषयत्वमिह विवक्षितम्, अनुभव-शब्दस्यातदर्थत्वात्; अतोऽनुभूयमानत्वम् अवभासमानत्वम् । इदमहंशब्दाभ्यां सकर्मकर्तृक एवानुभव इत्युक्तम् । अदर्शमित्यनेनापरोक्षत्वविशेषान्वयोऽभिप्रेतः । अतीतत्वं त्वविवक्षितं तदा स्वतःसिद्धत्वायोगात् . ( केनचिद्विशेषेणेति ) उक्तेष्व-प्यन्यतमविशेषणमन्ततो गत्वाऽप्यवर्जनीयमिति भावः । यद्वा, अदर्शमित्यत्र इति-शब्दः प्रकारवचनः प्रकृतसजातीयरूपं विशेषं यावत्सम्भवं गृह्णाति, तेन परोक्षत्व वर्तमानत्वादिकं केनचिदिति विवक्षितं स्यात् . परोक्षत्वं विषयद्वारा । ननु न हि वयमिदमहमदर्शमिति प्रतीतिमपलपामः । सा तु तर्कव्यवस्थापितविषया निर्विशेषे प्रमाणमित्यत्राह ( सविशेषोऽपीति ) स्वव्याघातस्य दर्शयिष्यमाणत्वात् युक्त्या-

* तत्त्वटीका *

संवादाद्बाधनार्हत्वाभिप्रायेणात्मसाक्षित्वोक्तिः । उक्तं व्यनक्ति ( इदमिति ) अत्र पदत्रयेण विषयाश्रयस्वगतविशेषप्रदर्शनम् । केनचिदिति तदवान्तरविशेषप्रदर्शना-र्थम् । विशिष्टविषयत्वात्— विशिष्टस्वरूपप्रकाशरूपत्वात् । यद्वा, अनुभवपरामर्श-रूपाणां ज्ञानानां विशिष्टपूर्वानुभवगोचरत्वादित्यर्थः । तथा च अदर्शमित्यपि स्वरसम् । सर्वशब्दः पुरुषाननुभवान्वा ब्रूते. सर्वदृष्टेषि युक्तिबाधं क्षिपति ( सविशेष इति ) अनुभूयमान इत्यत्रापि प्रकाश्यमानइति वा परामृश्यमान इति वार्थः । केनचित्— धीत्वादिना व्यतिरेकिणा । युक्तिशब्द इह समानार्थः ॥ निश्चितदोषप्रत्यक्षसिद्ध-ज्वालैक्यबाधकाद्व्यावृत्त्यर्थं स्वनिष्कर्षेण भासतोक्ता । निष्कृष्यमाण इत्यन्तोऽनुवादः । तदेव सविशेषत्वधीसूचनाय वर्तमाननिर्देशः । यदि पक्षस्वरूपमेव हेतुः तदा दृष्टौ साध्यसन्देहः साधनाकाङ्क्षा च न स्यात् . नचास्त्वयं स्वधर्मः, नापीदं स्वपरनिर्वाह-स्थानम् । तस्मादन्यत्वाभिप्रायेण सत्तातिरेकित्वोक्तिः । स्वरूपातिरिक्तं सत्तामात्रं भास-

भवः केनचिद्युक्त्याभासेन निर्विशेष इति निष्कृष्यमाणः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैर्निष्कृष्टव्य इति निष्कर्षहेतुभूतैः सत्तातिरेकिभिः स्वासाधारणैः स्वभावविशेषैः सविशेष एवावतिष्ठते। अतः कैश्चिद्-

* श्रुतप्रकाशिका *

भासेनेत्युक्तम् (निर्विशेष इति निष्कृष्यमाण इति) यदा निर्विशेष इति निष्कृष्यते तदानीमेव हि निष्कृष्टव्य इत्यर्थः। कथं निष्कृष्टव्यः? इत्यत्राह (सत्तातिरेकिभिः स्वासाधारणैरिति) सत्तानतिरेकी चेत् पक्षाविशिष्टो हेतुः स्यात्, तदयुक्तं, पक्षव्यावर्तकोहि हेतुः। किञ्च अन्यस्य द्रव्यान्तराद्व्यावर्त्तकधर्मस्यैव व्यावृत्तिरूपत्वसम्भवः, स्वरूपे प्रतिपन्ने स्वस्यान्यतादात्म्यभ्रमविरोधिनश्च स्वरूपमेव व्यावृत्तिः, यथा शुक्तित्वादेः, ब्रह्मणस्तु वस्त्वन्तरस्यान्यस्माद्व्यावर्तकरूपधर्मत्वाभावात् स्वरूपे भासमाने भ्रमसहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति वक्ष्यमाणशौक्ल्यादिदृष्टान्तवैषम्याभिप्रायेण सत्तातिरेकिभिरित्युक्तम्। साधारणश्चेद्धेतुरनैकान्तिको भ्रमाविरोधी च स्यात्, यथा शौक्ल्यादिः। असाधारणं शुक्तित्वमेव हि रजतभ्रमविरोधि, अतः स्वासाधारणैरित्युक्तम्। स्वशब्देन व्यधिकरणासिद्धिपरिहारः। स्वभावविशेषैः—धर्मविशेषैः। एवं सामान्येनार्थशरीरमुक्तम्, अतस्त्वयाऽपि निरासकहेतुतयाऽभिमतानां सत्तातिरेकित्वस्वासाधारणत्वे अवर्जनीये इत्यभिप्रायेण सत्तातिरेकिभिः स्वासाधारणै-

ဗ तत्त्वटीका ဗ

मानत्वादिकं वा व्यभिचारन्न हेतुरिति भावः। अतएव स्वासाधारणत्वमुक्तम्; तेन स्वरूपासिद्धिव्यधिकरणासिद्धिविरोधानैकान्त्यानां भ्रमसहत्वस्य साध्यसन्देहार्हधर्मिस्वरूपैक्यस्य च निरासः। सत्तातिरेकित्वादेः पक्षे युक्त्या स्थापनाय पुनर्ग्रहणं निष्कर्षहेतुभूतैरिति हि तत्स्थापनम्। नहि धर्मिस्वरूपमसाधारणं सत्तादिधर्ममात्रं वा सविशेषाद्व्यावृत्तिं साधयेदिति भावः। साधनकाले हेतुस्तिष्ठति साध्यकाले तु स्वयमपि गलतीति धर्मवादवादिना त्वया न वक्तुं युक्तम्। अनुभूतित्वनिवृत्तौ कथमनुभूतिस्स्यादित्यभिप्रायेण—सविशेष एवावतिष्ठत, इत्युक्तम्। अन्यथा स्वरूपसिद्धिः स्यादित्यभिप्रायेणैवकारः। सर्वविशेषनिषेधको हेतुः स्वपरनिर्वाहकनीत्या

विशेषैर्विशिष्टस्यैव वस्तुनोऽन्ये विशेषा निरस्यन्त इति न क्वचिन्निर्विशेषवस्तुसिद्धिः। धियो हि धीत्वं स्वप्रकाशता

* श्रुतप्रकाशिका *

रिति पुनः कथनम्, ये ये हेतवः सविशेषघटादिवस्तुव्यावृत्ताः सामान्येन सकलविशेषाभावसाधकाः, ते ऽर्थसामर्थ्यात् सामान्यान्तर्गतं स्वात्मानमपि निवर्तयेयुरेवेत्यत्राह (अतः कैश्चिदिति) अतः—तेषां सत्तातिरेकित्वस्वासाधारणत्वयोरवश्याभ्युपगन्तव्यत्वादित्यर्थः । कैश्चिदिति—स्वासाधारणैः प्रामाणिकैरित्यर्थः । (विशिष्टस्यैवेति) निर्विशेषत्वसाधकनिवृत्तौ निर्विशेषत्वासिद्धेस्तदनिवृत्तौ तैरेव सविशेषत्वप्रसङ्गाच्चेत्यभिप्रायः । (अन्य इति) निर्विशेषत्वसाधका हेतवो येभ्यो घटादिभ्यो व्यावृत्ताः, तद्गता इहाप्रामाणिका रूपादयो विशेषा अस्मिन्निरस्यन्ते, न तु सर्वविशेषाः। अनग्निमद्व्यावृत्तो धूमः पक्षे ह्यनग्निमत्त्वमेव निवर्तयति न त्वाकारान्तरमित्यर्थः । (न क्वचिदिति) स्वानुभवे, प्रत्यक्षादिप्रमाणान्तरेष्वपीत्यर्थः । स्वव्याघातप्रसङ्गेन सकलविशेषनिवृत्तेः साधयितुमशक्यत्वात् न निर्विशेषवस्तुसिद्धिरित्युक्तं भवति ; एवं कर्मकर्तृव्युदासमभ्युपगम्य सविशेषत्वमापादितम् । अथ कर्मकर्तृनिरास एव दुःशक इत्याह (धियो हीति) धीत्वम्—विषयप्रकाशत्वम् । स्वप्रकाशता—अनन्याधीनप्रकाशत्वम् । एतदुभयं स्वप्रकाशवादे साधनतया साध्यतया च परेणोपन्यस्तम् ।

❀ तत्त्वटीका ❀

कनकरजतवत् स्वात्मनोऽपि निवर्तकस्यादित्यत्राह (अत इति) स्वस्मिन्निषिद्धे सविशेषव्यापकाननुभूतित्वनिवृत्त्ययोगात्साधकाभावेन साद्ध्यसिद्धिप्रसङ्गादित्यर्थः । कैश्चित्— हेतुतया प्रमितैस्तत्समानयोगक्षेमैश्च । यद्येतद्धेतुराहित्यमेतद्धेतुमत्त्वेन साद्ध्यते तदा प्रतिज्ञाहेत्वोर्विरोधश्च स्यादिति भावः । अन्ये—प्रमितिसिद्धस्वधर्मव्यतिरिक्ताः । न क्वचित्— नहि स्वानुभवे स्वस्य निर्विशेषत्वं सिद्ध्यति, एवं तत्परामर्शी अनुमानादौ चेत्यर्थः । हेतुरूपः स्वगतविशेषस्स्थापितः । अथ इदमहमित्युक्तविषयाश्रयाभ्यामपि वैशिष्ट्यं स्थापयति (धिय इति) हिः प्रसिद्धौ । धीत्वम्— कस्यचित्प्रकाशात्मता, सैव स्वेनेति विशेषतः स्वप्रकाशता । प्रकाशश्च कस्मैचिदिति वक्ष्यति । पूर्वं त्वदुक्तो हेतुस्तत्साध्यश्चेत्यर्थः । निष्कृष्टा विषयधीरेव ब्रह्मेति वदन्तं

च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः । स्वापमदमूर्च्छासु च सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः । स्वाभ्युपगताश्च नित्यत्वादयो ह्यनेके

* श्रुतप्रकाशिका *

( ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेरिति ) नियमेन स्वाश्रयं प्रति विषयप्रकाशकतया भासमानत्वाद्धीत्वस्वप्रकाशत्वे सिध्यत इत्यर्थः । धीत्वं विषयसाधनत्वं तथावभासमानत्वादिति न साध्याविशिष्टता. यद्युपलब्धिसिद्धं सकर्मकत्वं नाङ्गीकुरुषे ततः सकर्मकत्वहेतुकं स्वप्रकाशत्वमपि न सिध्येदिति भावः । यद्वा धीत्वं धीस्वरूपमात्रम् , हिशब्दः उपलब्धेः सर्वसम्प्रतिपत्तिं दर्शयति । ननु न कर्मकर्त्रवच्छिन्नं ज्ञानमात्मभूतम् , अन्यदेव तु स्वापाद्यवस्थानुभूतं निर्विशेषं साध्यत इत्यत्राह ( स्वापेति ) अनुभवः–आत्मस्फुरणम् , न हि तदा धर्मभूतज्ञानस्फुरणम् । स्वावसरे–अहमर्थस्यैवात्मत्वसमर्थने । निपुणतरम्–परप्रयुक्तयुक्त्यैवेति भावः । सुखमहमस्वाप्सं मामप्यहं न ज्ञातवानित्यादिना परोक्तपरामर्शेनैवेति यावत् । यद्वा निपुणतरं विशदतरम् । एतदुक्तं भवति, किं त्वया स्वानुभवाधीनं निर्विशेषत्वं कर्मकर्त्रवच्छिन्नस्य ज्ञानस्योच्यते ? उताहमिति भासमानस्यात्मस्वरूपभूतज्ञानस्य ? उत तदुत्तीर्णस्य वा ? आद्ये कर्मकर्त्रवच्छेदनियमादेव न निर्विशेषत्वम् । द्वितीये प्रत्यक्त्वानुकूलत्वादिभिः सविशेषत्वमवर्जनीयमिति वक्ष्यते । तृतीये शून्यत्वादेव न निर्विशेषत्वं साध्यमिति मुखान्तरेण सविशेषत्वमाह–( स्वाभ्युपगताश्चेति ) आदि-

* तत्त्वटीका *

प्रत्यत्र ज्ञातुरित्यादिकमुच्यते । नहि 'स्वसम्बन्धादर्थान्तर' इत्यादिकमप्याह । स्वमते त्वहमर्थस्यात्मनः प्रसिद्धधीव्यतिरिक्ततया विषयाश्रयावच्छिन्नप्रकाशत्वाभावेपि श्रुतिबलेन स्वप्रकाशत्वात्तद्गुणसारत्वाच्च ज्ञातृत्वव्यपदेशस्सूत्रितः । यथोपलम्भं वस्तुस्वभावः स्थाप्यः, अन्यथातिप्रसङ्गादित्यभिप्रायेणोपलब्धेरित्युक्तम् । विषयरहितोप्युपलम्भः कदाचिदस्ति , अतो न तद्भासनस्वभावतेत्यत्राह ( स्वभावेति ) अनुभवः–आत्मभावना । स्वावसरे–तदुपपादनोचिते अहमर्थात्मस्थापनकाले । निपुणतरम्– उपपन्नतरमित्यर्थः । परोक्तयुक्त्यैव साधनान्तैरपि सम्मन्तव्यमिति भावः । निर्विशेषत्व-

विशेषाः सन्त्येव । ते च न वस्तुमात्रमिति शक्योपपादनाः, वस्तुमात्राभ्युपगमे सत्यपि विधाभेदाविवाददर्शनात् स्वाभिमततद्विधाभेदैश्च स्वमतोपपादनात्;—

* श्रुतप्रकाशिका *

शब्देन स्वप्रकाशत्वैकत्वानन्तत्वादयो विवक्षिताः, ते वस्तुमात्रमिति ह्युक्तमित्यत्राह ( ते चेति ) उपपादयति ( वस्त्विति ) बौद्धैः क्षणिकत्वमुक्तम्. अनेन तु नित्यत्वम्. वैशेषिकादिभिश्च जडत्वबहुत्वे. अनेन तु स्वप्रकाशत्वैकत्वे. स्वरूपं तु तैः सर्वैरभ्युपेतम् ; अतो विप्रतिपत्तिविषयः सम्प्रतिपत्तिविषयश्चैक एवेति वक्तुमयुक्तमित्यर्थः । विमत्यनन्तरभाविना सदुपपादनेन च स्वरूपातिरिक्ततां दर्शयति ( स्वाभिमतेति ) क्षणिकवादिनं प्रति ब्रह्मनित्यत्वं साधयता त्वया स्वरूपमात्रातिरेकेण किञ्चित्साधितमास्ति ? न वा ? अस्ति चेत् सधर्मत्वम् , नो चेत् सिद्धसाधनत्वम्, स्वरूपमात्रस्याभिमतत्वात् । संविन्नित्येति प्रतिज्ञावाक्यगतौ धर्मधर्मिशब्दौ किं पर्यायौ ? न वा ? आद्ये साधनायासो निष्फलः । द्वितीये स्वापातिरिक्तधर्मान्तरस्वीकार इति भावः । स्वमतोपपादनान्न वस्तुमात्रमिति शक्योपपादना इत्यन्वयः ।

* तत्त्वटीका *

साधकैर्विषयाश्रयाभ्याञ्च सविशेषत्वमुक्तम् । अथ परोक्तैस्साध्यैश्च तदाह ( स्वाभ्युपगता इति ) तेषु मानसिद्धांशस्य स्वमतेपि सिद्धद्योतनार्थमेवकारः । ते धियोनतिरिक्ता इत्यत्राह ( ते चेति ) सम्मतविमतिभ्यां भेदमाह ( वस्त्विति )—

धीस्वरूपस्य सत्यत्वं बौद्धादेरपि सम्मतम् ।
अतो धीमात्रसाध्यत्वे दुस्त्यजा सिद्धसाध्यता ॥
तद्धर्मसाधने तु स्यात् स्वसिद्धान्तविरुद्धता ।
स्वसाध्यानां मृषात्वोक्तिः वृषलोद्वाहमन्त्रवत् ॥

विमतिमूलस्वेष्टसमर्थनेन च सिद्धान्तसाध्यानामन्यत्वमाह ( स्वाभिमतेति ) हेतुतया स्वाभिमतैः—धीधर्मभेदैरित्यर्थः । तेन धीस्वरूपात् साध्येभ्यश्च व्यावृत्तैस्साधकैरपि सविशेषत्वासिद्धिः । तेषां हेतूनां साध्यानाञ्च कल्पितत्वपक्षोपि स्वाभिमतशब्देन स्वमतोपपादनादित्यनेन च निरस्तः । यदि क्षणिकत्वादिकमिव नित्यत्वादिकमपि कल्पितं

# अतः प्रामाणिकविशेषैर्विशिष्टमेव वस्त्विति वक्तव्यम् ॥

* श्रुतप्रकाशिका *

पूर्वं सविशेषत्वनिरासकहेतुभिः सविशेषत्वमुक्तम्, अनन्तरं साध्यधर्मैः, ततः कतिपयविशेषसाधकहेतुभिः। एते निरासकसाध्यसाधनधर्मा अपरमार्था इत्यत्राह (अत इति) अतः—विशेषव्युदासकत्वेन साध्यत्वेन साधकत्वेन च केषाञ्चिद्धर्माणां त्वयोक्तत्वात्. परमार्थभूतैस्तैस्तैर्विशिष्टमित्यर्थः। प्रामाणिकैरित्यनेन कैश्चिदिति पूर्वोक्तस्यार्थस्यापि विशेषो दर्शितः। (विशिष्टमेवेति) पूर्वोक्तसत्तातिरेकित्वस्वासाधारणत्वाभावे भ्रमोच्छेदो न स्यात्, निरासकधर्मापारमार्थ्ये शुक्तित्वापारमार्थ्ये रजतसत्यत्ववत् निरसनीयाकारसत्यत्वं प्रसजेत्, साध्यधर्मापारमार्थ्ये च नित्यत्वादिविपरीताकारानित्यत्वप्रसङ्गः साधनापारमार्थ्ये च साध्यनित्यत्वादिविपरीताकारस्य सत्यत्वमापद्येतेति भावः। इत्थं स्वानुभवप्रसङ्गात् तत्रापि सविशेषत्वमुपपादितम् ॥

❦ तत्त्वटीका ❦

कुतस्तदा ते क्वचित्पक्षपातः। तादृशनित्यत्वादिसाधने च न कथं परसिद्धसाध्यतां ब्रूयात्. रज्जुसर्पनयाच्चद्विरुद्धञ्च सत्यं स्यात्. हेतूनाञ्च तथात्वे बाष्पारोपितधूमवदसाधकत्वम्। यदि ब्रूयात् 'आरोपितधूमादरसाधकत्वं न कल्पितत्वात् किन्तु व्याप्तिशून्यत्वात्। सत्यान्तु तस्यां [साधकत्वं दर्शितमिति तदा स्यात्] असत्यस्यापि साधकत्वं दृष्टम् इति। तदसत्,—व्याप्तेरप्यत्र कल्पितत्वाङ्गीकारात्. तादृशी च बाष्पधूमे सिद्धेति। यथा च माध्यमिकोक्त [साधक] प्रामाण्यमिथ्यात्वेन बाध्यस्य ब्रह्मणस्सत्यत्वम्; एवं विशेषबाधकप्रामाण्यमिथ्यात्वेपि तत्सत्यत्वं दुस्त्यजम्।

अत्र सत्यमसत्यं वा साधनं दूषणञ्च वः।
सत्यत्वं सद्वितीयत्वमसत्यत्वे त्वनर्थता ॥

पारिशेष्याद्विशेषसत्यत्वपक्षमभ्युपगमयति (अत इति) वस्तुमात्रकल्पितत्वयोर्दुस्त्यजत्वादित्यर्थः। प्रामाणिकविशेषैः—हेतुभिस्साध्यैस्सविशेषैः विषयाश्रयैश्चेति यावत्। अन्यथा तुच्छत्वद्योतनार्थ एवकारः।

सामान्यतो हि धीस्थेम्ने विशेषस्याग्रहे सति।
स्यादध्यासस्त्वदिष्टे तु द्वयाभावान्नवेन्न नः ॥

**शब्दस्य तु विशेषेण सविशेष एव वस्तुन्यभिधान-सामर्थ्यम्, पदवाक्यरूपेण प्रवृत्तेः । प्रकृतिप्रत्ययोगेन**

* श्रुतप्रकाशिका *

अथ प्रथमप्रतिज्ञातं सर्वप्रमाणानां सविशेषविषयत्वं वक्तुमारभते; तत्र परेण प्रत्यक्षाद्बलीस्त्वेनोक्तत्वात् सविशेषबोधकत्वातिशयस्य स्वाभिमतत्वाच्च प्रथमं शब्दस्य सविशेषविषयत्वमाह ( शब्दस्य त्विति ) तुशब्दः परोक्तबलीयस्त्व-सूचकः । विशेषेणेतिपदेन सविशेषवस्तुबोधकत्वातिशय उच्यते । यद्वा सर्वप्रमा-णानां सविशेषगोचरत्वे प्रतिज्ञाते चिद्वस्तुन्यन्तरङ्गतया स्वप्रकाशवृत्तिं निरूप्य तदन-न्तरमात्मनि प्रत्यक्षादिभ्योऽन्तरङ्गत्वेन उभयवादिसम्मतस्य शास्त्रस्य सविशेषविषयत्व-माह—शब्दस्य त्विति । सविशेषगोचरत्वे प्रमाणान्तरेभ्योऽतिशयो विशेषेणेत्युच्यते, तुशब्देन तत्तदौपयिकं शब्दस्य सविशेषगोचरप्रत्यक्षादिपूर्वकत्वं विशेष उच्यते । प्रतिज्ञातस्य हेतुमाह ( पदवाक्यरूपेणेति ) ततः किं सविशेषविषयत्वस्येति शङ्कायां पदरूपेण प्रवृत्तिं विवृणोति ( प्रकृतीति ) ततः किमित्यत्राह (प्रकृतिप्रत्यययोरिति)

* तत्त्वटीका *

एवं स्वानुभवसिद्धप्रसक्तानुप्रसक्तमुपसंहृत्य प्रागुक्तसर्वप्रमाणानां सविशेषविषयत्वं विवृण्वन् प्रत्यक्षात्प्रबलतया पराभिमतशब्दं तावद्विशिष्टपरमाह ( शब्दस्येति ) तुशब्दो विशिष्टविषयप्रत्यक्षाद्युपजीव्यत्वं परिकल्पितशास्त्रप्राबल्यं वा द्योतयति । वाक्यात्मना विशेषबोधनेन प्रत्यक्षात्समधिकत्वव्यञ्जनाय विशेषणेत्युक्तम् । एवकारेण यत्किञ्चिन्निमित्ताभावे शब्दस्य प्रवृत्तिरेव न स्यादिति व्यज्यते ।

सत्यनित्यत्ववेद्यत्व—वाच्यत्वादौ तु साश्रये ।
तत्तच्छब्दप्रवृत्तिस्स्यात् स्वान्यनिर्वाहकत्वतः ॥

अभिधानसामर्थ्यम्— कयाचिद्वृत्त्या बोधनार्हत्वमित्यर्थः । विशिष्टार्थत्वाति-रेके निदानमाह (पदेति) तत्र पदेपि वाचकांशभेदमाह ( प्रकृतीति ) हिशब्दः 'सुप्तिङन्तं पदम्' विभक्त्यन्तं पदम्" इत्यादिशास्त्रान्तरप्रसिद्धं हेतुमवधारणं वा व्यनक्ति । ततः किमित्यत्राह ( प्रकृतिप्रत्यययोरिति ) यद्यपि स्वार्थे केचित्प्रत्ययाः विहिताः, तथापि प्रत्ययान्तरेण सङ्ख्यादिवैशिष्ट्यं प्रायशस्तत्रापि स्यादिति भावः ।

हि पदत्वम्। प्रकृतिप्रत्यययोरर्थभेदेन पदस्यैव विशिष्टार्थ प्रतिपादनमवर्जनीयम्। पदभेदश्चार्थभेदनिबन्धनः, पद-सङ्घातरूपस्य वाक्यस्यानेकपदार्थसंसर्गविशेषाभिधा-यित्वेन निर्विशेषवस्तुप्रतिपादनासामर्थ्यात् न निर्वि-शेषवस्तुनि शब्दः प्रमाणम् ॥

* श्रुतप्रकाशिका *

( पदस्यैवेति ) वाक्यं तावदास्ताम्, पदमेव सविशेषपरमिति भावः। वाक्यरूपेण प्रवृत्तिं विवृणोति, (पदभेदश्चेति ) पदभेदः—पदानां परस्परभेदः, न केवलं प्रकृति-प्रत्ययभेद एवार्थभेदहेतुकः, पदभेदोऽपीति चार्थः, अन्यथा पदान्तरवैयर्थ्यादिति भावः। पदभेदस्यार्थभेदनिबन्धनत्वेऽपि वाक्यैकत्वात् निर्विशेषत्वसिद्धिरिति शङ्कायां वाक्यस्य सविशेषविषयत्वं वदन् निर्विशेषे प्रमाणाभावमुपसंहरति (पदसङ्घा-तेति ) तत्तत्पदाभिधेयानां संसर्गविशेष एव वाक्यप्रतिपाद्यः न तु तत्तत्पदार्थप्रहा-णेन अर्थान्तरमित्यर्थः। ननु निर्विशेषशब्देन निर्विशेषं वस्तु किं प्रतिपन्नम्? उत अप्रतिपन्नम्? उत सविशेषं वस्तु प्रतिपन्नम्? आद्ये निर्विशेषवस्तुनः शब्देन प्रति-पादनान्निषेधोऽनुपपन्नः। द्वितीये तु निषेध्याप्रतिपत्तेर्निषेधोऽनुपपन्नः। तृतीये तु सविशेषनिरासः कृतः स्यात्। नैवम्,—भ्रान्तिप्रमितिविभागात् निर्विशेषवस्तुनि शब्दस्य

ॐ तत्त्वटीका ॐ

एवं गोत्वादिपदेष्वपि द्रष्टव्यम्। पदस्यैव— वाक्यस्थस्य तदंशमात्रस्यापीत्यर्थः। अवर्जनीयमित्यनेनाभिहितान्वयवादिभिरपि पदांशयोरन्वितार्थत्वं स्वीकृतमिति सूच्यते। वाक्यस्यापि सर्वविशिष्टपरत्वं वक्तुं तदुपयुक्तमाह ( पदभेद इति ) प्रमाणभूतैक-वाक्यस्थविषयमिदम्। वीप्सादिद्वित्वे च तात्पर्यभेदादर्थभेदोस्त्येव। उक्तार्थेन वाक्ये फलितमाह ( पदसङ्घातेति ) अभिहितान्वयमतेन संसर्गोक्तिः। विशेषशब्दो पूर्वार्थः। मतान्तरे तु संसर्गविशिष्टे तात्पर्यम्। यद्यपि 'अर्थैकत्वादेकं वाक्यम्' इति न्यायादेक एव वाक्यार्थः। तथापि लिङ्गसङ्ख्याकारकाद्यनेकांशगर्भोसौ, नतु क्वचिदपि निर्धूतनिखिलांशं किञ्चिच्छब्दबोद्धव्यम्। अखण्डवाक्यार्थादिक्लृप्तिस्तु निरसिष्यते. निर्विशेषशब्दोप्याप्तप्रयुक्तश्चेद्विशिष्टतया प्रमितमन्यपदार्थं विवक्षित-

* श्रुतप्रकाशिका *

प्रमाणभावो हि निषिध्यते न तु भ्रमहेतुत्वम् ; अतो निर्विशेषशब्दजनिता मिथोऽन्वयानर्हार्थगोचरा भ्रान्तिः प्रमितिजनकैः शब्दैर्बाध्यत इति युक्तम्। अधिकरणतदसाधारणनिषेध्यप्रतिपन्नधर्मतो विशेषशब्दस्य सङ्कोचानभ्युपगमे ह्यधिकरणलाभान्निषेधकशब्दस्यानन्वय एव स्यात्, न हि निर्विभक्तिकः पदान्तरानन्वितो निर्विशेषशब्दोऽर्थाभिधायी; अतः सङ्कोचाभावे व्याघातः। यद्यपि कथञ्चिद्विभक्त्यर्थो न विवक्षितः, तथापि निर्विशेषपदस्य बहुव्रीहित्वादन्यपदार्थाभिधानमवर्जनीयम् । तत्पुरुषपदप्रयोगे च अधिकरणाभिधानमवर्जनीयम् , अतो यदि निर्विशेषशब्दः प्रमाणभूतवाक्यस्थः तदा विषयविभागो द्रष्टव्यः, सकलविशेषशून्यप्रतिपादनासामर्थ्यात्। नगरे को विशेष इत्युक्ते न कश्चिदपीत्यादिषु [ वाक्येषु ] सविशेषनिषेधः सङ्कुचितविषयो दृष्टः, तथा शास्त्रेष्वपि " अविशेषास्ततो हित "इति गन्धादिगुणान्वितानामपि पृथिव्यादीनां शान्तत्वघोरत्वमूढत्वरूपकतिपयविशेषविरहविवक्षया अविशेषशब्दः प्रयुज्यते. एवं ज्ञानस्वरूप आत्मन्यन्तरङ्गतया स्वानुभवशब्दौ निरूपितौ।

७ तत्त्वटीका ७

विशेषरहितं लिङ्गसङ्ख्यादि युक्तमेव ब्रूते। न चैकं पदं प्रमाणम्, अध्याहारादिना पदान्तरयोगे तु नगरं निर्विशेषं तन्मात्राण्यविशेषाणीतिवत् तात्पर्यवशेन सङ्कुचितवृत्तिः स्यात्। भ्रान्तोक्तिश्चेन्न प्रमितिहेतुत्वं शब्दस्य ; अतोनुमानत्वमप्रमाणमेव वा वदद्भिरपि दुर्वारं विशिष्टार्थावबोधनम् ।

अविनाभावतोन्येन सम्बन्धेन विशिष्टधीः ।
शब्दात्स्यान्नानुमानत्वं ततोऽस्येत्यपि सुग्रहम् ॥ ७ ॥
प्रत्यक्षवद्विशिष्टार्थे बुद्धे बाधाद्यभावतः ।
मानत्वादिह चार्वाकजल्पश्च वितथोद्यमः ॥ ७ ॥
मनोजन्यतयात्रापि प्रत्यक्षत्वे विवक्षिते ।
न नः काचित्क्षतिस्तत्तु न प्रत्यक्षस्य लक्षणम् ॥ ७ ॥

एतत्सर्वं मत्वोक्तम्- न निर्विशेषवस्तुनि शब्दः प्रमाणम्— इति ॥

अथ प्रत्यक्षमन्यद्वा स्वेष्टमानं विवक्षितम् ।
भङ्ग्यायाध्यक्षमखिलं विशिष्टार्थे समर्थ्यते ॥ ७ ॥

## प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदभिन्नस्य न निर्विशेषवस्तुनि प्रमाणभावः। सविकल्पकं जात्याद्यनेक-

* श्रुतप्रकाशिका *

अथ व्यतिरिक्तप्रमाणेषु मूलभूतस्य प्रत्यक्षस्य सविशेषविषयत्वमुपपादयति (प्रत्यक्षस्येत्यादिना) निर्विकल्पकानुभूतार्थस्य सविकल्पके प्रतिसन्धानस्य वक्ष्यमाणत्वात्तदुपयोगित्वेन च सविकल्पकस्वरूपं प्रदर्शितम्। अथ निर्विकल्पकस्य

७ तत्त्वटीका ७

(प्रत्यक्षस्येति) अपरोक्षबुद्धेरित्यर्थः। ग्रहणं ह्यनन्तरमुदाह्रियते। अविशिष्टप्रत्यक्षसद्भावकल्पनयान्यतरप्रामाण्योक्तिरयुक्तेत्यभिप्रायेण निर्विकल्पकसविकल्पकभेदभिन्नस्य इत्युक्तम्। एवं ह्याहुश्चार्वाकाः,— 'अज्ञातार्थपरिच्छित्तिः प्रमाणम्, तच्च प्रत्यक्षमेव; तत्रापि निर्विकल्पकमप्रमाणम् अनवधारणत्वात्' इति। अत्र अनवधारणशब्देन संशयरूपत्वम् अविशिष्टविषयत्वं वा विवक्षितश्चेदसिद्धिः, कतिपयविशेषग्रहात्. संशयोत्थापकत्वञ्चेत् सविकल्पकेप्यस्ति. क्वचिदपि केनापि सर्वविशेषवैशिष्ट्यस्यायोगिना दुर्ग्रहत्वात्॥ बौद्धास्तु— 'अविसंवादि विज्ञानं प्रमाणम्; तत्र 'कल्पनापोढमभ्रान्तं प्रत्यक्षं विविधं मतम्। विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः' इत्याहुः। "तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यतः। व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः" इति च। तदप्यसत्, निर्दोषविकल्पानामपि सद्भावात्. तद्विषयस्य तद्द्वैतैस्सम्बन्धानुपपत्त्यादिकुतर्कैर्बाधे तुल्यन्यायतया योगाचारमतेन बाह्यार्थलोपप्रसङ्गात्. विगीता धीर्भ्रान्तिर्विकल्पत्वादिति त्वयोक्ते धीत्वादिति सामान्यतो ब्रूयात्। तथा चानुभाष्यते स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात्तथा हि यः। प्रत्ययस्स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा" इति। वैषम्यञ्चात्र त्वया दुर्वचम्। किञ्चास्तु तत्प्रयोगस्थहेत्वादिविकल्पानां पक्षीकारे बहुविधासिद्धिबाधयोः प्रसङ्गः। अन्यथा तु हेतोर्विपक्षावृत्तित्वादिप्रसङ्गात्। शब्दाध्यासात्सविकल्पकं भ्रान्तिरिति चेन्न, तदसिद्धेः। यथाहुः— "संज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते। संज्ञिनस्सा तटस्था हि न रूपाच्छादनक्षमा" इति; अतः प्रत्यक्षं द्विविधमपि प्रमाणम् नतु निर्विशेषे। तत्र दृष्टान्तार्थं वक्ष्यमाणविशिष्टप्रतिसन्धानव्यक्त्यर्थञ्च दुरपह्नवांशन्तावदाह (स-

पदार्थविशिष्टविषयत्वादेव सविशेषविषयम् । निर्विकल्पकमपि सविशेषविषयमेव, सविकल्पके स्वस्मिन्ननुभूत-

* श्रुतप्रकाशिका *

सविशेषविषयत्वं प्रतिजानीते ( निर्विकल्पकमपीति ) एकजातीयपिण्डेषु द्वितीयादिपिण्डग्रहणस्य सविकल्पकत्वं प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वञ्च हृदि निधाय हेतुमाह ( सविकल्पक इति ) विशिष्टप्रतिसन्धानमिति षष्ठीसमासः कर्मधारयो वा । स्वस्मिन्—निर्विकल्पके; अनुभूतजात्यादिपदार्थविशिष्टवस्तुविषयस्य सविकल्पके प्रतिसन्धानस्य हेतुत्वादित्यर्थः । प्रथमपिण्डस्य विशिष्टतयाऽवगतत्वमर्थलब्धम् . प्रथम-

* तत्त्वटीका *

विकल्पकमिति ) आदिशब्देन गुणादिग्रहः । 'यथा मनुष्यश्शुक्लो वा दण्डी गच्छति निर्भयः' इति । शब्दविकल्पस्तु न "सोऽस्तीतिप्रत्ययो लोके यश्शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वशब्देन गृह्यते" ॥ इति । व्यापितया शब्दैरुक्तोऽपि अव्युत्पन्नानां विकल्पेषु तदयोगात्सङ्कोच्यः । विशिष्टविषयत्वात्सविशेषविषयमित्यत्र सामान्योक्तस्य जात्याद्युदाहरणैर्व्यञ्जनान्न साध्याविशेषः । "अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्" ॥ इति परैरन्यथोक्तं प्रथमज्ञानमपि विशिष्टविषयं प्रतिजानीते ( निर्विकल्पकमिति ) अपिस्समुच्चयार्थः, परेष्टविरोधद्योतको वा । अवधारणमुपलम्भदार्ढ्यपरम् . धीत्वाद्विशिष्टविषयमित्यनुमानञ्चात्र सूच्यम् । अविशिष्टविषयत्वस्य क्वचिदप्यभावेपि विशिष्टविषयत्वाभावस्य घटादौ दृष्टत्वाद्व्यतिरेकश्च सिद्धः । विपक्षे बाधस्तु विशिष्टविषयत्वाभावे सविषयत्वादिकमपि न स्यादिति, अविशेषात् . निर्विषया धीर्न दृष्टेति चेत् सममेतत् । उपयोगात्कल्प्यत इति चेन्न, हेत्वासिद्धेः । अनुपयुक्तस्य च कल्पने किं नाम न कल्प्यम् । प्रतिज्ञाते हेतुमाह ( सविकल्पक इति ) स्वगोचरजात्यादिविशिष्टप्रतिसन्धानरूपविकल्परूपत्वादित्यर्थः । सम्प्रतिपन्नप्रत्यभिज्ञाहेतुभूताभिज्ञादिवदुदाहर्त्तव्यम् । ननु प्रथमं जात्यादिग्रहणाभावादसिद्धो हेतुः—

ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यथा ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेपि सम्मता ॥ इति ।

पदार्थविशिष्टप्रतिसन्धानहेतुत्वात्। निर्विकल्पकं नाम केनचिद्विशेषेण वियुक्तस्य ग्रहणम्, न सर्वविशेषरहितस्य; तथाभूतस्य कदाचिदपि ग्रहणादर्शनादनुपपत्तेश्च। केन-

* श्रुतप्रकाशिका *

पिण्डे जातिविशिष्टतया प्रतीते हि द्वितीयादिषु जात्यनुवृत्तिबुद्धिलक्षणं प्रतिसन्धानं घटते। कथं प्रतिसन्धानम्? सकलविशेषशून्यविषयं हि निर्विकल्पकमिति हेत्वासिद्धिमाशङ्क्याह—( निर्विकल्पकं नामेति ) सकलविशेषवैधुर्याभावमुपपादयति ( तथाभूतस्येति ) सकलविशेषशून्यग्रहणं किं दर्शनादभ्युपगम्यते? किं वा अनुपपत्त्या कल्प्यते? इति विकल्प्य न तावद्दर्शनमित्याह ( कदाचिदपीति ) कल्पनं व्युदस्यति ( अनुपपत्तेरिति ) निर्विशेषज्ञानबाधिकैव अनुपपत्तिर्दर्श्यते. तत्कल्पिका तु दूरतो निरस्तेति भावः। अदर्शनं विवृणोति ( केनचिदिति ) प्रकारविशेषनियमो नेति

ॐ तत्त्वटीका ॐ

अन्यथा निर्विकल्पकसमाख्याविरोधश्च स्यात्। तत्राह ( निर्विकल्पकं नामेति ) अयं भावः,—

अस्ति हीति प्रतिज्ञाने नास्ति हीत्युत्तरं क्षमम्।
प्रवृत्तिभिर्विशिष्टार्थ– बालमूकादिधीरपि ॥ ॐ ॥
शब्दोपस्कारमात्रन्तु नात्र व्युत्पत्त्यभावतः।
व्युत्पत्तिश्च विशिष्टार्थ–बोधाभावे कथं भवेत् ॥ ॐ ॥
न चावयवशक्त्यैव नामधेयव्यवस्थितिः।
अतिप्रसङ्गाद्बाधाच्च महावृक्षादिनीतितः ॥ ॐ ॥
अतो निरीहादिपद–न्यायाद्दृष्टानुवर्त्तिनः।
निर्विकल्पे निषेधस्य सङ्कोचोत्र भवेदिति ॥ ॐ ॥

तदिह द्वैतिकल्पितस्य सर्वविशेषशून्यस्य द्वैताद्वैतिकथितस्य विद्यमानसर्वविशेषधीरहितस्य च ग्रहणं निषेधति ( न सर्वेति ) तादृशग्रहणं दृष्टं कल्पितं वेति विकल्पं मत्वा पूर्वं दूषयति ( तथेति ) प्रथममपि तथाभूतग्रहणं योग्यानुपलम्भनिरस्तमित्यर्थः। अपरं निषेधति ( अनुपपत्तेश्चेति ) उपपत्त्यभावादित्यर्थः। तत्कल्पक-

चिद्विशेषेणेदमित्थमिति हि सर्वा प्रतीतिरुपजायते, त्रिकोणसास्नादिसंस्थानविशेषेण विना कस्यचिदपि पदार्थस्य ग्रहणायोगात्; अतो निर्विकल्पकमेकजातीय-

* श्रुतप्रकाशिका *

भावः । उत्तरत्र ग्रहणायोगादिति पञ्चम्या हेतुत्वं स्फुटम् । अत्र पञ्चमीस्थाने हि-शब्दः । इदमित्थमिति प्रतीतिमेव विवृण्वन् अर्थात् सकलविशेषशून्यग्रहणकल्पना-मपि व्युदस्यति । ( त्रिकोणेति ) अनुपपत्तिं विवृणोति ( ग्रहणायोगादिति ) अध्याहृतशङ्कावाक्येन ग्रहणायोगादिति पञ्चम्यन्तान्वयः, त्रिकोणम्—गोमुखम् . ग्रहणायोगात्-दृष्टव्याप्तिविरोधेन सकलविशेषशून्यग्रहणकल्पनस्यानुपपन्नत्वादित्यर्थः । अनुपपत्तेरित्यनेन विपक्षे बाधकतर्कोऽप्यभिप्रेतः, सविशेषविषयत्वाभावे प्रत्ययत्व-मेव हीयेतेति अस्य तर्कस्यानुग्राह्यं प्रमाणं प्रत्यक्षं योग्यानुपलम्भश्च । यद्वा अनुपपत्ते-रित्यनेन सविशेषविषयत्वे साधकं प्रमाणं विवक्षितम्, प्रथमाक्षसन्निपातजं ज्ञानं सवि-शेषविषयम्, ज्ञानत्वात्; सम्प्रतिपन्नवदिति । एवं साधकप्रमाणाभावबाधकप्रमाण-सद्भावाभ्यां विवक्षितकतिपयविशेषशून्यग्रहणं निर्विकल्पकमिति सिद्धम् । अनेन निर्विकल्पकशब्दस्य सङ्कुचितवृत्तित्वं फलितम् । स च सङ्कोचः कस्मिन् विषय इत्य-त्राह ( अत इति ) अतः—उक्तादर्शनानुपपत्तिभ्यामित्यर्थः । प्रथमद्वितीयपिण्डयोः

* तत्त्वटीका *

स्यान्यथोपपत्तेरिति भावः । धीत्वप्रयुक्तव्याप्तिविरोधेनोपपत्तिविरुद्धत्वञ्चात्र बोध्यम् । अदर्शनं विवृण्वन् स्वमते दर्शनञ्च प्रमाणयति ( केनचिदिति ) पृथक्सिद्धेनापृथक्-सिद्धेन वेत्यर्थः । गोत्वद्रव्यत्वबहिष्ठत्वादिना गगनादेर्ग्रहीतुश्च व्यावृत्ता हि सर्वत्र सर्वापि धीरितिभावः । उत्पत्तिविरोधमुखेन उत्पत्त्यभावमपि व्यनक्ति (त्रिकोणेति) अयोग इह विशिष्टोल्लेखित्वाभावे अधीत्वादिप्रसङ्गात्सिद्धिः । संस्थानशब्दोत्र तत्तदसाधारणाकारपरः । ( कस्यचिदपीति ) निरवयवस्यापीत्यर्थः ।

सजातीयविजातीय— व्यावृत्तस्वभावतः ।
इत्थमित्येव गृह्यन्ते शब्दगन्धादयोपि हि ॥

एवं सविकल्पकनिर्विकल्पकयोर्विशिष्टबाह्यार्थविषयत्वोक्त्या प्रत्यक्षस्य ज्ञानग्राहितां

द्रव्येषु प्रथमपिण्डग्रहणम् । द्वितीयादिपिण्डग्रहणं सविकल्पकमित्युच्यते । तत्र प्रथमपिण्डग्रहणे गोत्वादे- रनुवृत्ताकारता न प्रतीयते । द्वितीयादिपिण्डग्रहणे- ष्वेवानुवृत्तिप्रतीतिः । प्रथमप्रतीत्यनुसंहितवस्तुसंस्थान रूपगोत्वादेरनुवृत्तिधर्मविशिष्टत्वं द्वितीयादिपिण्डग्रहणा वसेयमिति, द्वितीयादिग्रहणस्य सविकल्पकत्वम् । सास्ना दिवस्तुसंस्थानरूपगोत्वादेरनुवृत्तिर्न प्रथमपिण्डग्रहणे गृह्यत इति, प्रथमपिण्डग्रहणस्य निर्विकल्पकत्वम् ;

* श्रुतप्रकाशिका *

सविकल्पकनिर्विकल्पकशब्दौ न सङ्केतितौ; अतस्तयोः पिण्डयोर्वैषम्यं वक्तव्यमिति शङ्कायां ग्राह्याकारभेदं दर्शयति ( तत्रेत्यादिना वाक्यद्वयेन ) गोत्वानुवृत्तिप्रतीत्य- प्रतीत्योः सविकल्पकनिर्विकल्पकशब्दयोः प्रवृत्तिनिमित्ततां दर्शयति ( प्रथमप्रती- तीत्यादिना वाक्यद्वयेन ) पूर्वग्रन्थोक्तं गोत्वं संस्थानशब्देन विशेषितं, तेन परा- भिमतविलीनाज्यगतघृतत्वादेरिव प्रत्यक्षत्वे व्यञ्जकापेक्षया विलम्बो नास्तीति दर्शितम् तदेव संस्थानमनन्तरग्रन्थे सास्नादिशब्देन निर्दिश्यते,—एवमनुवृत्तिग्रहाग्रहाभ्यां सविकल्पकत्वं निर्विकल्पकत्वं चोक्तम्. नानुवृत्तिमात्रग्रहणान्निर्विकल्पकत्वम्, किन्तु जात्यग्रहणाच्च । अनुवृत्त्यग्रहणे हि जातिरेवागृहीता स्यादिति शङ्कायामाह

* तत्त्वटीका *

तदाकारवैचित्र्यकारणतया बाह्यार्थस्यानुमेयत्वञ्च वदन् सौत्रान्तिकोपि प्रत्युक्तः । द्वयोरपि विशिष्टविषयत्वे तद्विवेको दुश्शक इत्यत्र लक्षणतो विवेक्तुमुदाहरणं ताव- दाह ( अत इति ) विशिष्टगोचरत्वतदभावाभ्यां विभागोक्तेर्निरस्तत्वादित्यर्थः । किमियं प्रथमत्वादिना परिभाषा ? तथासति विपरिवर्त्तोपि स्यादित्यत्र व्यवहारव्यव- स्थापकं विषयभेदमाह ( तत्रेति ) उक्तवैषम्याच्छब्दव्यवस्थां वाक्यद्वयेनाह ( प्रथमेति ) विकल्पोत्र प्रतिसन्धानगोचरस्य केनचिदधिकेन विशेषणेन वैशिष्ट्यं तद्योगायोगा- भ्यामेव व्यवस्थात्र विपश्चित्सम्मता । जातेस्सविकल्पकाभावरूपत्वापोहत्वादिमत-

न पुनः संस्थानरूपजात्यादेरग्रहणात् । संस्थानरूपजात्यादेरपि—ऐन्द्रियिकत्वाविशेषात् , संस्थानेन विना

* श्रुतप्रकाशिका *

(न पुनः संस्थानाग्रहणादिति) अत्राग्रहणानुपपत्तिद्योतकः संस्थानरूपशब्दः, गोत्वादेरसाधारणधर्मभूताऽनुवृत्त्यग्रहणात् गोत्वादिर्न गृहीत इति शङ्कायामग्रहणानुपपत्तिमेव विवृणोति ( संस्थानरूपजात्यादेरपीति ) ग्रहणकारणभूतेन्द्रिययोग्यतायामपि स एव हेतुरिति द्योतनाय पुनः संस्थानशब्दोक्तिः, निर्विकल्पकस्य सविशेषविषयत्वे प्रमाणत्वेन सविकल्पके निर्विकल्पकानुभूतार्थविशिष्टप्रत्यभिज्ञानं पूर्वमुक्तम् . पराभिमतनिर्विकल्पकाभावे योग्यानुपलम्भः प्रमाणम्, तयोरनुग्राहकतर्कश्चानेनोक्तो भवति । किं प्रमाणानुपपत्त्या प्रमेयानुपपत्त्या वा वस्तुमात्रग्रहणाभ्युपगम इति विकल्पमभिप्रेत्य प्रमाणानुपपत्तिं प्रथमं व्युदस्यति ( ऐन्द्रियिकत्वाविशेषादिति ) अनेन पृथिव्यपृथक्सिद्धगन्धव्यावृत्तिः । कथमैन्द्रियिकत्वम् ? समवायस्यानैन्द्रियिकत्वात्, तदयुक्तमिति चेत्तर्हि सविकल्पके विशिष्टग्रहणमनुपपन्नम् ; अतो न भिन्नेन्द्रियग्राह्यत्वमिति न प्रमाणानुपपत्तिः । असन्निहितत्वं प्रमेयानुपपत्तिः । अपृथक्सिद्धत्वेन तन्नास्तीति परिहरति ( संस्थानेनेति ) अनेन चाक्षुषत्वेपि

* तत्त्वटीका *

व्युदासाय संस्थानत्वं तद्व्यक्त्यै सास्नादिरूपत्वञ्चात्रोक्तम् । परेष्टस्य निर्विकल्पकशब्दनिमित्ततां निरस्यति ( न पुनरिति ) अथ स्यात्; अनुवृत्तिरूपजातिस्तदग्रहं कथं गृह्येत ? गृह्यतां वा ; तथापि तद्विशिष्टतया प्रथमधीर्न युक्ता , विगीता धीर्विशेषणविशेष्यधीपूर्विकाविशिष्टधीत्वात्, सम्प्रतिपन्नवदित्यनुमानात् अतो विशेषणविशेष्याणां मिथस्सम्बन्धबोधे क्लृप्तव्याप्तिविशिष्टधीस्सिद्धेति । तत्राह ( संस्थानेति ) जातिशब्दस्यानुवृत्तिविशिष्टव्युत्पन्नतया जातित्वेनानुवृत्त्युल्लेखिनी । तत्स्वरूपस्तु योग्यतया धर्मिवत्तत्सम्बन्धितयैव गृह्यते तदर्थमिह संस्थानरूपत्वोक्तिः, अनुवृत्तिप्रकारस्तु वक्ष्यते ( ऐन्द्रियिकत्वाविशेषात् ) आश्रयग्राहकेन्द्रियवेद्यत्वाददूरत्वाभावाच्चेत्यर्थः । तेन गन्धादिव्युदासः पिण्डग्रहणेपि गोत्वादेर्ग्रहणदर्शनव्युदासश्च . ( संस्थानेन विना ) अपृथक्सिद्धयत्किञ्चिद्धर्मेण विनेत्यर्थः, तेन दण्डादिव्यावृत्तिः । रूपादौ द्रव्यत्वादि-

* श्रुतप्रकाशिका *

पृथक्सिद्धदण्डादिव्यावृत्तिः। एकेन्द्रियग्राह्यत्वे सति अपृथक्सिद्धत्वात् प्रमाणप्रमेयानुपपत्तिर्नास्तीति ससंस्थानमेव वस्तु गृहीतमित्यर्थः। एवं पूर्वं संस्थानरूपशब्देनाभिप्रेतोऽर्थो विवृतो भवति । अनुवृत्त्यग्रहणान्न संस्थानरूपजात्यादेरग्रहः शङ्कनीयः, प्रकारप्रकारिभावेन ग्रहणोपपत्तेरिति भावः । प्रथमपिण्डग्रहणे अनुवृत्त्यग्रहणात् गोत्वमगृहीतं चेत् द्वितीयपिण्डेऽपि गोत्वं दुर्ग्रहम्, अनुवृत्त्यग्रहणात् । अनेकव्यक्त्यन्वयरूपा ह्यनुवृत्तिः, सा चान्वयिनः पदार्थस्य पूर्वव्यक्तिनिष्ठतापरामर्शेनैव द्वितीयादिषु गृह्यते; अतः प्रथमपिण्डे गोत्वाग्रहात्तदन्वयापरामर्शेन द्वितीयव्यक्त्यन्वयरूपानुवृत्तिर्द्वितीयेऽपि दुर्ग्रहेति तत्रापि गोत्वमगृहीतम्, एवं प्रथमद्वितीयव्यक्त्यन्वयापरामर्शे तृतीयेनुवृत्तिरगृहीतेति गोत्वमगृहीतम्, एवं व्यक्त्यन्तरेष्वपि गोत्वं दुर्ग्रहं स्यात्; अतः प्रथमपिण्डग्रहण एव गोत्वग्रहणमभ्युपेतव्यम्. एवं सकलविशेषशून्यवस्तुग्रहणं व्युदस्तम् । जात्यादयो विशेष्यं च पृथक् निर्विकल्पके गृहीतम्, सविकल्पक एव विशिष्टतया ग्रहणमिति पक्षश्चार्थान्निरस्तो भवति। विशेषणं विशेष्यं च पृथक् पृथक् गृहीतमिति कथमवगतम्? दण्डकुण्डलादिषु विशेषणविशेष्ययोः पृथक् पृथग्ग्रहणपूर्वकत्वदर्शनादिति चेत्,-तत्र किमपृथक्सिद्धिवेलायां पृथग्ग्रहणम्? उत पृथक्स्थितिवेलायाम्? न प्रथमः, विशिष्टत्वेनैव ग्रहणात्. पृथक्स्थितिवेलायां तु विशिष्टग्रहणमेव नास्तीति न तत्प्रतीतिहेतुत्वम्, अतः पृथग्ग्रहणस्य विशिष्टग्रहणहेतुत्वाभावान्न गोत्वादौ पृथग्ग्रहणप्रसङ्गः। ननु विशेषणविशेष्यभावस्य सप्रतियोगिकत्वात् तज्ज्ञानस्य प्रतियोगिस्वरूपज्ञानमपेक्षितमिति विशिष्टप्रतिपत्तेर्जात्यादिपदार्थस्वरूपमात्रग्रहणपूर्वकत्वं स्वीकार्यम्। उच्यते;—प्रतियोगिज्ञानापेक्षा नाम किं विशिष्टज्ञाने प्रतियोग्यवभासनियमः? उत तद्-

* तत्त्वटीका *

मात्रेण सिद्धिश्च। विशिष्टधीत्वादिहेतौ व्यवच्छेद्यस्य अविशिष्टविषयज्ञानस्यासिद्धौ व्यर्थं विशेषणम्. अन्यतस्सिद्धावनुमेयाभावः । अनेनैव तत्सिद्धावन्योन्याश्रयः व्यवच्छेद्यसिद्धौ सविशेषणहेतूत्थानम्. तेनैव च तत्सिद्धिरिति। पृथग्धीपूर्वकत्वन्तु विशिष्टबुद्धेर्भिन्नसामग्रीवेद्यत्वोपाधिकम्; तच्च दण्डादीनामसन्निधानव्यवधानादेः । सामग्रीसद्भावे तु प्रथममेव विशिष्टधीश्च स्यादेव. तेषां संस्थानत्वाभावात्पुरुषग्रहणा-

* श्रुतप्रकाशिका *

ज्ञानस्य विशिष्टज्ञानहेतुत्वम्? प्रथममभ्युपगच्छामः । द्वितीये च जात्यादयः पदार्थाः प्रथमं मिथो व्यावृत्ततया गृहीता न वा? न चेत् अव्यावृत्ततया गृहीतानां पूर्वोत्तरज्वालानामिव विशेषणविशेष्यभावप्रतियोगिताप्रतीतिर्नोपपद्यते, यदि व्यावृत्ततया गृहीताः तदा व्यावृत्तिश्च विशेषणविशेष्यभावेन पारतन्त्र्यादिलक्षणेन तदौपयिकाकारान्तरेण वा यदि न स्यात्, विशेषणविशेष्यभावव्यत्यासप्रतीतिः प्रसज्यते. वस्तुसामर्थ्याद्वास्तव एव विशेषणविशेष्यभावः प्रतीयत इति चेत् तर्हि वस्तुसामर्थ्यंनाम विशेषणविशेष्यभावरूपं तदौपयिकाकारान्तररूपं वा स्यात्. वस्तुस्वभावस्य सत्तयोपकारकत्वे वस्तुस्वभावादेव विशिष्टप्रतीतिसम्भवात् स्वरूपमात्रग्रहणकल्पनमयुक्तम्, ज्ञाततयोपकारकत्वे तेन स्वभावेन व्यावृत्ततया विशेषणस्य प्रागवगतिरस्तीति प्रथमत एव विशिष्टप्रतीतिरभ्युपगता स्यात्; अतो वरं द्रव्यस्यैव प्रथमं विशिष्टतया प्रतीत्यभ्युपगमः, तस्यापि स्वभावस्य स्वविशेष्यभूतं विशेषणं प्रति विशेषणत्वं न प्रथममवगतम्, किन्तु स्वरूपमात्रमिति चेत् तर्हि विशेषणतत्स्वभावयोर्विशेषणविशेष्यभावव्यत्यासः प्रतीयेत, तत्परिहाराय तस्य वस्तुस्वभावस्याकारान्तराभ्युपगमे अनवस्था । यदि व्यत्यासविशिष्टप्रतीतिप्राथम्यप्रसङ्गपरिहाराय जात्यादीनां स्वरूपमेव विशेषणभावो विशेष्यभावश्च, न त्वाकारान्तरमित्यभ्युपगम्यते तदा प्रथमप्रतिपत्तिर्विशेषणतया विशेष्यतया च स्यात्, तदप्रतिपत्तौ स्वरूपस्यागृहीतत्वप्रसङ्गात्, तथैव प्रतीतौ प्रथमत एव विशिष्टप्रतीतिः स्यात्, एकस्यां प्रतीतौ विशेषणतया विशेष्यतया च जात्यादीनां प्रतिपन्नत्वात्; अतः प्रथमत एव परस्परप्रतियोगिकविशेषणविशेष्यभावप्रतीतिः सम्भवतीत्यभ्युपगन्तव्यम् । एवं सति विशिष्टगृहणस्य पृथग्गृहणपूर्वकत्वे भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिः स्यात्. पक्षव्यतिरिक्तव्यवच्छेदाभावेऽप्युक्ततर्कबलात् पक्षव्यवच्छेदकत्वसिद्धेरुपाधित्वं युक्तम्, यथा प्रध्वंसाभावस्यादिमत्त्वादन्त-

५ तत्त्वटीका ५

भावेपि तद्ग्रहणम् । दण्डादीनां पृथक्सिद्धत्वेपि दण्डादेस्स्वाश्रयग्राहकेण । घ्राणरसनश्रोत्राणां गुणमात्रग्राहित्वं तदाश्रयग्रहणानर्हत्वात्, सर्वमिदं यथादृष्टव्यवतिष्ठते ॥

भिन्नात्वग्राह्यगन्धादि–विशिष्टप्रत्ययोदये ।
पृथग्गृहीतिनियमौ यथादर्शनमिष्यते ॥ ५ ॥

संस्थानिनः प्रतीत्यनुपपत्तेश्च प्रथमपिण्डग्रहणेऽपि ससंस्थानमेव वस्त्वित्थमिति गृह्यते ; अतो द्वितीयादिपिण्डग्रहणेषु गोत्वादेरनुवृत्तिधर्मविशिष्टता संस्थानिवत् संस्थानवच्च सर्वदैव गृह्यत इति तेषु सविकल्पकत्वमेव ।

* श्रुतप्रकाशिका *

वत्त्वे भावरूपादिमत्त्वमुपाधिर्भवति भावोन्मज्जनप्रसङ्गरूपतर्कबलात् । यथा अग्निमत्त्वाद्धूमानुमाने आर्द्रेन्धनमुपाधिः सर्वत्राग्निमति धूमोपलम्भप्रसङ्गतर्कबलाद्भवति तद्वत् ; अतः प्रथमपिण्डग्रहण एव गोत्वं गृह्यते । द्वितीयादिष्वनुवृत्तिग्रहणमभ्युपेत्यम् ; अतो यथोक्तस्वरूपे एव निर्विकल्पकसविकल्पके । अनुवृत्तिग्रहाग्रहौ हि सविकल्पकनिर्विकल्पकयोः प्रयोजकौ कथितौ; तत्कथं द्वितीयादिग्रहणस्य सविकल्पकत्वमित्यत्राह (अत इति) अतः—प्रथमग्रहण एव संस्थानवस्तुग्रहणात् । अनुवृत्तिग्रहणविधुरप्रथमेतरग्रहणे कथं सविकल्पकत्वम् ? इत्यत्राह ( द्वितीयादीति ) द्वितीयादिपिण्डग्रहणेषु— द्वितीयादित्वेन पिण्डग्रहणेषु । अनेन संस्कारसाचिवग्रहणं सविकल्पकमितरन्निर्विकल्पकमिति सिद्धम् । एतेन न केवलं जात्यनुवृत्त्यैव सविकल्पकत्वं जातिगुणादिष्वन्यतमानुवृत्तिविशिष्टग्रहणमपि सविकल्पकमिति सिद्धम् । सर्वविधानुवृत्तिविकलग्रहणमेव निर्विकल्पकम् । यथा एकव्यक्तौ प्रथमाक्षसन्निपातजं

७ तत्त्वटीका ७

एवं सम्बन्धसामग्र्यन्तरवेद्यत्वेपि । ननु संस्कारस्यानुद्बोधे द्वितीयादिपिण्डग्रहणेपि गोत्वादेरनुवृत्तिवैशिष्ट्यं दुर्लभम् . कथं तत्र सविकल्पकत्वनियम इत्यत्र सम्भवद्विषयतया प्रतिवक्ति ( अत इति ) संस्थानविशिष्टविषयवासनाजनकप्रथमपिण्डग्रहणसामर्थ्यादित्यर्थः । द्वितीयादिपिण्डग्रहणेषु द्वितीयत्वादिविशिष्टतया तत्पिण्डग्रहणेष्विति यावत् । सर्वदैवेत्यनेन संस्कारपटिम्ना यत्किञ्चिद्धर्मानुवृत्तिग्रहणं नियतमित्युच्यते, यदा तज्जातीयग्रहणं स्यात् तदा सविकल्पकमेवेत्युक्तम् तदासौ नियम इत्यभिप्रायः ।

द्वितीयादिषु पिण्डेषु निर्विकल्पकसम्भवात् ।
अवधारणमत्र स्यात् प्राचुर्यादिति केचन ॥ ७ ॥

**अतः प्रत्यक्षस्य कदाचिदपि न निर्विशेषविषयत्वम् ॥ अत एव सर्वत्र भिन्नाभिन्नत्वमपि निरस्तम् । इदमित्थ-**

* श्रुतप्रकाशिका *

ज्ञानम् । नन्वेकव्यक्तावपि संस्कारजन्यं देशकालाद्यनुवृत्तिविशिष्टगृहणं सविकल्पकं स्यात्, स्यादेव संस्कारजन्यत्वानुवृत्तिगोचरत्वाविशेषात् . एकजातीयद्रव्येषु प्रथमपिण्डग्रहणमित्युक्तिस्तु जात्यनुवृत्तिप्रदर्शनार्था. संस्थानिवत्संस्थानवदिति दृष्टान्तप्रदर्शनं स्पष्टीकरणार्थम् । पिण्डधर्मः संस्थानम् . तद्धर्मोऽनुवृत्तिरिति धर्मधर्मिभावरूपसाम्यनिबन्धनञ्च दृष्टान्तद्वयोपादानम् । एवं सविकल्पकानिर्विकल्पकयोः संस्कारसचिवत्वतद्विरहौ सामग्रीवैषम्यम्. गोत्वाद्यनुवृत्तिताद्विरहौ ग्राह्याकारवैषम्यमित्युक्तं भवति । द्विविधस्यापि प्रत्यक्षस्य सविशेषविषयत्वं निगमयति ( अत इति ) प्रसङ्गात् भेदाभेदं निराकरोति (अत एवेति) अत एव–प्रथमपिण्डग्रहणस्य विशिष्टविषयत्वसम-

⁂ तत्त्वटीका ⁂

एतेन प्रत्यक्षज्ञानेषु संस्कारसहकृतेन्द्रियजन्यत्वतद्विरहाभ्यां सविकल्पकानिर्विकल्पकयोर्भेदो लक्षणतः स्थापितो भवति ।तेनैव प्रथमपिण्डेपि प्रबुद्धसंस्काराणां द्वितीयादिपिण्डग्रहणेषु सविकल्पकत्वञ्च स्यादेव ।

प्रत्यक्षमीश्वरादीनां विशिष्टोद्देशगोचरम् ।
अवसानोद्भवत्वेन निर्विकल्पकमस्तु नः ॥ ⁂ ॥
अनुवृत्तिग्रहात्तत्र सविकल्पकतां तु वा ।
न भज्येत विशिष्टार्थ–विषयत्वं द्विधापि नः ॥
अनादाविह संसारे तस्मिन्नपि च जन्मनि ।
भाष्योक्तं प्रथमत्वादि त्वपूर्वादित्वबुद्धितः ॥ ⁂ ॥

एवं द्विविधस्यापि प्रत्यक्षस्य निर्विशेषविषयत्वाभावान्निगमयति ( अत इति ) कदाचिदपि—प्रथमाक्षसन्निपातेपीति यावत् ।

अथोक्तार्थबलादेव वक्ति भङ्गं प्रसङ्गतः ।
भेदाभेदमतस्यापि शास्त्रारम्भादि[बाधि]वादिनः ॥ ⁂ ॥

( अत एवेति ) निर्विकल्पकस्य विशिष्टार्थग्राहित्वादेवेत्यर्थः । एवकारः

मिति प्रतीताविदमित्थम्भावयोरैक्यं कथमिव प्रत्येतुं शक्यते ? तत्रेत्थम्भावस्सास्नादिसंस्थानविशेषः, तद्विशेष्यं द्रव्यमिदमंश इत्यनयोरैक्यं प्रतीतिपराहतमेव । तथाहि—प्रथममेव वस्तु प्रतीयमानं सकलेतरव्यावृत्तमेव

* श्रुतप्रकाशिका *

र्थनेन । सर्वत्र—पिण्डद्वयजातिव्यक्तिगुणक्रियातद्वत्कार्यकारणेष्वित्यर्थः । कथमित्यत्राह (इदमित्थमिति ) भेदाभेदवादिना पिण्डानामन्योन्यभेदाभेदसमर्थने इदमिदं न भवतीति भेदः, इदमिदं भवतीत्यभेद इत्येकस्यैव युगपद्भावाभावरूपव्याहतिपरिहारार्थं जात्यात्मना अभेदो व्यक्त्यात्मना भेद इत्याकारद्वयेन भेदाभेद उपपादितः । जातिगतोऽभेदः व्यक्तिगतो भेदश्चेति नैकस्य द्व्यात्मकतेति शङ्कापरिहाराय जातिव्यक्त्योश्चान्योन्यभेदाभेद उक्तः, तन्निर्वहणायाकारान्तरान्वयादर्शनात् प्रतीतिरेव शरणमित्याश्रिता ; अतस्तन्निरासाय प्रथमं जातिव्यक्त्योर्भेदेनैव प्रतीतेरभेदस्य प्रतीतिविरोधं दर्शयति ( इदमित्थमिति ) इदम्भावो विशेष्यम्. इत्थम्भावो विशेषणम् । इत्थमंशः कः ? इदमंशः कः ? इत्यत्राह ( तत्रेति ) अत्र जातिव्यक्त्योर्भेदाभेदे चत्वारो हेतवः परोक्ताः, प्रथमपिण्डग्रहणे अभेदेन ग्रहणम्, एकशब्दानुविद्धप्रत्ययः, मत्वर्थीयप्रत्ययनिरपेक्षसमानाधिकरणपदप्रयोगः, सहोपलम्भनियमश्चेति । अत्र सहोपलम्भनियमसमानाधिकरणप्रत्ययौ भेदाभेदसाधकौ. अन्यौ द्वावभेदसाधकौ । इदं हेतुचतुष्टयमाशङ्क्याह ( तथा हीति ) तान् हृदि कृत्वा प्रथमपिण्डग्रहणे अभेदेन ग्रहणं व्युदस्यति ( प्रथममेवेत्यादिना ) सकलेतरव्यावृत्तम्— सकलविजातीयव्यावृत्तमित्यर्थः । ततः

७ तत्त्वटीका ७

प्रच्छन्नजैनदूषणस्य प्रसक्तानुप्रसक्ति हेतोरन्यनैरपेक्ष्यं वा व्यनक्ति । सर्वत्र—अयुतसिद्धयोस्तत एव परोक्तप्रक्रियया सजातीयेष्वपीति यावत् ।

दृष्टत्वादुपपत्तेर्वा भेदाभेदसमुच्चयः ।
इत्येतदिदमित्यादि— ग्रन्थाभ्यामथ दूष्यते ॥ ७ ॥

प्रथमपिण्डग्रहे परोक्ता जातिव्यक्त्योरभेदेन गृहीतिरसिद्धा, युक्त्या तत्क्लृप्तिस्तु भेदग्रहेण बाधितेति भावः । द्वयमपि क्रमाद्विवृणोति ( तथा हीति ) सकले-

प्रतीयते । व्यावृत्तिश्च गोत्वादिसंस्थानविशेषविशिष्ट-तयेत्थमिति प्रतीतेः। सर्वत्र विशेषणविशेष्यभावप्रति-

* श्रुतप्रकाशिका *

किं भेदेन ग्रहणस्य ? इत्यत्राह ( व्यावृत्तिश्चेति ) गोत्वादिसंस्थानविशेषविशिष्टतया इत्थमिति प्रतीतेर्व्यावृत्तिश्च निश्चीयत इत्यर्थः । अनेनाखण्डवाक्यार्थभङ्गश्चार्थतः कृतो भवति . शौक्ल्यादिवैधर्म्यस्येहाभिप्रेतत्वात्तच्च पूर्वं दर्शितम्। गोत्वादिविशिष्टतया प्रतीतिरस्तु , तथाप्यभेदः स्वप्रमाणेन प्रसज्यते चेन्न निवार्यत इत्यत्राह ( सर्वत्रेति ) सर्वत्र—गोत्वतदाश्रयादिषु दण्डकुण्डलादिषु च, दण्डदण्डिनोरिव जातितद्वतोरपि विशेषणविशेष्यभाव एव अभेदविरोधीत्यर्थः । ( विशेषणविशेष्यभावेति ) गोत्व-व्यक्त्योरनुवृत्तिव्यावृत्त्यग्रहेऽपि विशेषणविशेष्यभावरूपेणाकारान्तरेण भेदो गृहीतः, न ह्येकेनैवाकारेण भेदग्रह इत्यस्ति नियम इति भावः । उभयत्राऽत्यन्तभेदोऽस्ति

ॐ तत्त्वटीका ॐ

तरव्यावृत्तम्— गृह्यमाणाकारानधिकरणात् सर्वस्माद्भिन्नतयेत्यर्थः । सकलशब्देन गृह्यमाणोप्याकारस्सङ्गृहीतः । तेन तदानीं तदनन्यत्वबुद्धिरप्यस्तीति शङ्कानिरासार्थ एवकारः । सौगतमतवत् स्वरूपत एव व्यावृत्तिधीः स्यादित्यत्राह ( व्यावृत्तिरिति ) चः शङ्कानिवृत्तिपरः । स्वत एव व्यावृत्तिबुद्धौ संशयाद्यभावप्रसङ्गः । गोत्वादेर्गोत्वादि-विशिष्टत्वाभावाद्धर्मिधर्मभेदश्चात्र सिद्धः । अस्तु भेदधीः, अभेदोपि युक्त्या तत्र सिद्ध्यतीत्यत्राह ( सर्वत्रेति ) पृथक्सिद्धेष्विवापृथक्सिद्धेष्वपीत्यर्थः । यदि जाति-व्यक्तिष्वभेदस्साध्यते तर्हि दण्डदण्ड्यादिष्वपि साध्यस्स्यादित्याशयः । अत्यन्त-भेदः—ऐक्यप्रतिभटस्वभावः । प्रतीत्यैव सुव्यक्तः— प्रत्यक्षेणैव स्पष्टावगतः, अतो निर्बाधो दुरपह्नवश्चेति भावः । तयोरत्यन्तभेदः इत्यनेनैवैको गौरित्येकशब्दानुविद्ध-प्रत्ययोप्येको दण्डीतिवद्विशेष्यद्वित्वादिनिवृत्तिविषय इति सूच्यते । अनयोरैक्य-मित्यादौ पूर्वोक्तेप्येवमेव तात्पर्यम् । नन्वत्यन्तभिन्नेषु दण्डादिषु सामानाधिकरण्यं मत्वर्थीयसापेक्षं दृष्टम् . गोत्वादिषु तदभावादभेदोपि स्यादित्यत्राह ( तत्रेति ) अयं भावः,—पृथक्सिद्धत्वापृथक्सिद्धत्वाभ्यामेव लाघवान्मत्वर्थीयापेक्षा तदभावौ स्यातां न त्वत्यन्तभिन्नत्वतदभावाभ्याम् । अपृथक्सिद्धत्वेपि क्वचिन्मत्वर्थीयस्तु निष्कर्षक-

पत्तौ तयोरत्यन्तभेदः प्रतीत्यैव सुव्यक्तः । तत्र दण्ड-कुण्डलादयः पृथक्संस्थानसंस्थितास्स्वनिष्ठाश्च कदाचित्क्वचिद्द्रव्यान्तरविशेषणतयावतिष्ठन्ते । गोत्वादयस्तु द्रव्यसंस्थानतयैव पदार्थभूतास्सन्तो द्रव्यविशेषण-तया अवस्थिताः। उभयत्र विशेषणविशेष्यभावस्समानः

* श्रुतप्रकाशिका *

चेत् मत्त्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमेकशब्दानुविद्धप्रत्ययः सहोपलम्भनियमश्च कथमेकत्र दृश्यते नान्यत्रेत्यत आह ( तत्रेति ) तत्र—गोत्वतदाश्रयदण्ड-दण्ड्यादिवर्गे । पृथक्संस्थानविशिष्टस्वपर्यवसितकादाचित्कविशेषणभावो मत्वर्थीय-प्रत्ययसापेक्षसामानाधिकरण्यप्रत्यये प्रयोजकः, द्रव्यसंस्थानतयैव पदार्थत्वेन तत्पर्य-न्तत्वात् तद्विशेषणतयैव स्थितिर्मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजिका, सहोपलम्भानियमतदभावयोरपृथक्सिद्धत्वपृथक्सिद्धत्वे एव प्रयोजके, न तु भेदा-भेदावित्यर्थः । सहोपलम्भनियमे द्वयोरेव सहभावात् सहोपलम्भो द्वित्वसाधकः, तन्नियमस्तु भिन्नयोरेकस्मिन्नपि नास्तीत्यसाधारणानैकान्तिकत्वादनुभयसाधकः। किञ्च विरुद्ध एव. द्वित्वसाधकसहोपलम्भनियमो हि द्वित्वस्य नियमं दर्शयति, एकशब्दा-नुविद्धप्रत्ययस्तु एको दण्डीत्यादिषु दण्ड्यन्तरव्यावर्तकत्वदर्शनेन धर्म्यन्तरनिषेधपर-त्वान्न धर्मधर्मिणोरभेदसाधक इति भावः । यद्येवं जातिकुण्डलादेर्वैषम्यम् यदि विशे-षणविशेष्यभावसाम्यादुभयत्र भेदः साध्यते तर्हि सहोपलम्भनियमादिवैषम्ये एकत्वमपि स्यादित्यत आह (उभयत्रेति) विशेषणविशेष्यभावादिविशेषात्तत्प्रयुक्तभेदप्रतिपत्ति-

* तत्त्वटीका *

शब्दत्वादिति । विशेषणत्वमन्तरेणापि उपलब्धिसिद्ध्यै पृथक्संस्थानसंस्थितत्वोक्तिः। स्वनिष्ठाः— देवदत्तादीन् प्रत्यपृथक्सिद्धिरहिता इत्यर्थः । कदाचित्— आगन्तुक-सम्बन्धकाले । तावतालं तथापि क्वचिच्छब्दो देशभेदमुखेनापि पृथक्सिद्धिर्दर्शयितुं शक्येति ज्ञापनार्थः । व्यावृत्तिव्यक्त्यै गोत्वादय इत्याद्युक्तम् । अतन्निष्ठतया तत्-सत्त्वैव नास्तीत्यवधारणाभिप्रायः। अवस्थिताः—यावत्सत्तमिति शेषः । ननु विशेष-णत्वे समानेपि यद्यपृथक्सिद्ध्यादिवैषम्यं तर्हि तत एव तादात्म्यतदभावलक्षणमपि

तत एव तयोर्भेदप्रतीतिश्च । इयांस्तु विशेषः—पृथक्-स्थितिप्रतिपत्तियोग्या दण्डादयः, गोत्वादयस्तु नियमेन

* श्रुतप्रकाशिका *

रनिवार्या, विशेषणविशेष्यभावे सति भेदस्यापि सम्प्रतिपत्तेः । सहोपलम्भनियमे ऐक्यं हि विमतम्; अतो सम्प्रतिपन्नभेदविरुद्धाभेदः कल्प्यः । यथा शीतत्वोष्णत्वाद्यवान्तरवैषम्यं न द्रव्यत्वादिसाधारणाकारविरोध्यद्रव्यत्वकल्पकम्; एवं सहोपलम्भनियमो न भेदविरोध्याकारकल्पक इति भावः। यद्वा, पृथक्स्थितानां दण्डादीनामविशेषणानामेव सतां कदाचित् सहभावमात्राद्विशेषणत्वमध्यस्तमित्यत्यन्तभिन्नेषु विशेषणत्वाभावाद्विशेषणत्वं नात्यन्तभेदसाधनसमर्थमित्यत्राह—उभयत्रेति । व्यावृत्तप्रतीतौ व्यावर्त्तकतयोपयुज्यमानत्वं विशेषणत्वम्, तच्च दण्डादिष्वपि मुख्यमिति विशेषणत्वादत्यन्तभेदो युज्यत इति भावः । गोत्वतदाश्रयादिष्वेव सहोपलम्भनियमः नान्यत्रेति व्यवस्थासिद्ध्यर्थमैक्यं कल्पनीयमिति चेत् तत्राह (इयांस्त्विति) इयानेव न त्वधिकं कल्पनीयमित्यर्थः । यदि सहोपलम्भनियमव्यवस्थार्थमैक्यं कल्प्यते, तदयुक्तम्. तत्रैवैक्यं नान्यत्रेति व्यवस्थार्थमर्थान्तरकल्पनप्रसङ्गात् ।

* तत्त्वटीका *

तत्स्यादित्यत्राह (उभयत्रेति) अभेदप्रतिकूलाकारस्सः, ऐक्याभावव्याप्यो हि विशेषणविशेष्यभावः । तस्मादैक्यक्लृप्तिर्न शक्या, न ह्यवान्तरविशेषेण कचिदपि सामान्यव्यापकविरुद्धं सिद्ध्येदिति भावः । एवमप्यभेदक्लृप्तौ सम्प्रतिपन्नैक्यवस्तुनीव भेदधीस्तत्र न स्यादेवेत्यभिप्रायेणाह (तत एवेति) तयोः—पृथक्सिद्धापृथक्सिद्धयोरित्यर्थः, विशेषणविशेष्ययोरिति वा । भेदप्रतिपत्तिश्चेत्यत्र समानेति विपरीतानुषङ्गः । ननु दण्डादिष्वदृष्टस्सहधीनियमो गोत्वादिषु दृश्यते तेनाभेदोऽस्तु, न चेदुभयत्र धीसाहित्यनियतिस्तदभावो वा स्यादित्यत्राह (इयानिति) अयं भावः,—यथा भिन्नत्वाविशेषेपि कचिदेव तादात्म्यमिति ते स्वभावनियमः तथा तादृशेष्वपि केषुचिदेवापृथक्सिद्धिः, तेष्वपि न गुरुत्वगन्धादीनां धीसाहित्यनियमः, नतु गोत्वादीनाम्, दुस्त्यजस्वभावनिर्द्धूतातिप्रसक्तिर्नोभयसम्मतभेदविरुद्धं साधयितुं शक्नोति, न चापृथक्सिद्धत्वमैक्यं विवादात्, तदा हि भेद एवाभेद इत्यपि सङ्केत्येत ।

* श्रुतप्रकाशिका *

यद्यैक्यं तत्र स्वाभाविकं तर्हि सहोपलम्भनियमः स्वाभाविक इति न प्रतिपन्नविरुद्धार्थान्तरकल्पनागौरवमाश्रयणीयमिति भावः। यद्वा, विशेषणविशेष्यभावप्रसक्तभेदप्रतिपत्तिर्यथोभयत्र तुल्या तथा सहोपलम्भनियमो दण्डदेवदत्तादावपि स्यात्. जातिव्यक्त्योर्वा स न स्यादित्यत्राह— इयानिति । न हि साधारणाकारेऽभ्युपगतेऽवान्तरभेदस्त्याज्य इत्यर्थः । घटे पटस्याभावो भेदः, तत्र तस्य सद्भावो ऽभेद इति भावाभावविरोधस्य

ॐ तत्त्वटीका ॐ

तस्माद्धैकनियतः सहधीनियमस्त्वयम् ।
ऐक्यसिद्धिविरोद्ध्येव भावे चातिप्रसङ्गकृत् ॥ ॐ ॥
इष्टस्सिध्यन्नभावादिः प्रतियोग्यादिभिस्सह ।
न चैक्यं युज्यते तत्र विशेषश्चात्र दुर्वचः ॥ ॐ ॥
किञ्च सम्प्रतिपन्नैक्ये पृथक्सिद्धेप्यसन्निधौ ।
स्यादसाधारणाभासो हेतुः पूर्वश्च तादृशः ॥ ॐ ॥
व्यक्तव्याहतिदुस्स्थत्वा—द्भिन्नाभिन्नत्वमप्यतः ।
दुस्साधमभ्युपेतेपि केवलव्यतिरेकिणि ॥ ॐ ॥
गर्दभागर्दभत्वाभ्यां गजत्वं विनिवृत्तिमत् ।
गर्दभागर्दभात्मत्वं गजस्य तव साधयेत् ॥ ॐ ॥
धर्मधर्मिस्वरूपैक्ये स्यान्नान्यतरधीः क्वचित् ।
सहधीश्च क्वचिन्न स्यात् सम्मतैक्ये यथा घटे ॥ ॐ ॥
अतः क्वापि द्वयोरैक्यं सहैवावगतौ नवा ।
दुस्साधमथवा भाक्तं रामसुग्रीवयोरिव ॥ ॐ ॥
तदिहाभिन्नधीर्भिन्ने भ्रान्तिज्वालैक्यबुद्धिवत् ।
अभिन्ने भेदधीश्चैवं स्याच्चन्द्रद्वित्वबुद्धिवत् ॥ ॐ ॥
प्रातिस्विकमनेकेषु यदैक्यं सर्वसम्मतम् ।
न ततः प्रस्तुतं सिध्येदुक्तेस्सिद्धसाध्यता ॥ ॐ ॥
सामानाधिकरण्येपि यथार्हं प्रतिपाद्यते ।
अनेकान्वित एकार्थो नानेकैरेकतां गतः ॥ ॐ ॥

तदनर्हाः इति; अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते। प्रतीतिप्रकारो हि इद-

* श्रुतप्रकाशिका *

न हि दृष्टेऽनुपपन्नं नामेति न्यायात् प्रतीतिपराहतत्वमाशङ्क्याह (अत इति) अतः—इत्थं भेदसामानाधिकरण्येनाभेदस्य प्रतीत्यभावात्। कथं प्रतीतिप्रकार इत्यत्राह (प्रतीतिप्रकारो हीति) यदि विशेषणविशेष्ययोरैक्यमस्ति तर्ह्यन्यतरदेव प्रतीयेत। अन्यतरप्रतीतिर्वाऽस्तु, तथाऽपि नैक्यम्. यथा पूर्वानुभूतयोः पुरुषयोरेकस्मिन्

॥ तत्त्वटीका ॥

यच्च व्यष्टिसमष्ट्यादौ नानात्वैकत्वदर्शनम् ।
न विरुद्धान्वयस्तत्र परिषत्पुरुषादिवत् ॥ ७ ॥
भेदाग्रहाद्विकारित्वाद्धर्मत्वाद्देशसाम्यतः ।
परिमाणैक्यतश्चेत्या—द्यसारं जैनकल्पितम् ॥ ७ ॥
बाधासिद्ध्यन्यथासिद्धिव्यभिचारादिविप्लुताः ।
हेतवस्तद्विदामेते जुगुप्सामात्रहेतवः ॥ ७ ॥
यच्चान्यदपि मुह्यद्भिर्भाषितं भास्करादिभिः ।
तत्तदर्थप्रसङ्गेषु तद्भङ्गश्च भवेदिति ॥ ७ ॥

एवं धर्मधर्मितादात्म्यस्य दृष्टत्वे कल्प्यत्वे च निरस्ते भेदाभेदवस्तुनो विरोधः क्वचिदुपलम्भनिरस्त इति परोक्तं प्रतारणमात्रमित्युपालभते (अत इति) अत्र प्रतीतिपराहतिं वदत एव सा स्यादिति भावः । निह्नोतव्यानुक्त्या निह्नवप्रकारं विवृणोति (प्रतीतिप्रकार इति) ननु प्रथमाक्षसन्निपातनिर्विकल्पकदशायामिदमित्थमिति प्रतीतिं परे नेच्छन्ति, तत्कथमिह सर्वसम्मतत्वोक्तिः? इत्थम्,—न ह्यत्र निष्कृष्टान्यतरधीसिद्धं प्रातिस्विकमैक्यं भातीति परैस्साध्यते, किन्तु धर्मधर्मिणोः। तथासति इदमित्थम्भावधीस्तत्र परैरपि सम्मन्तव्या । यद्वा सविकल्पकधीप्रकारस्य सर्वसम्मतत्वोक्त्या तद्बलेन प्रथममपि तद्वदेव विरुद्धानुल्लेखस्साध्यते । ननु "तदनन्यत्वमारम्भणशब्दादिभ्यः' 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' 'अविभागेन दृष्टत्वात्" इत्यादिवादिनः

मित्थमित्येव सर्वसम्मतः। तदेतत्सूत्रकारेण "नैकस्मिन्नसम्भवात्"इति सुव्यक्तमुपपादितम्। अतः प्रत्यक्षस्य सविशेषविषयत्वेन प्रत्यक्षादिदृष्टसम्बन्धविशिष्टविषयत्वा-

* श्रुतप्रकाशिका *

दृष्टे न हि पुरुषैक्यम्, जातिव्यक्त्योः सम्बन्धनियम एवैक्यमिति चेत् भेदसाधकसम्बन्धनियमस्य भेदानियतसम्बन्धनियम्यत्वात् द्वयोर्हि सम्बन्धः, तन्नियम एवैक्यं चेत् सम्बन्धस्वरूपभङ्गप्रसङ्गः। एवं भेदाभेदनिरासस्य सूत्रकाराभिमतत्वमाह (तदेतदिति) अथ प्रमाणान्तराणां प्रत्यक्षमूलत्वात् तेषामपि सविशेषविषयत्वमाह (अत इति) प्रत्यक्षादिदृष्टधूमादिसम्बन्धविशिष्टाग्न्यादिविषयत्वादित्यर्थः। स्वाभिमतमुक्तं प्रमाणत्रयम्, प्रमाणान्तराभ्युपगमेऽपि तेषां सविशेषविषयत्वमाह

७ तत्त्वटीका ७

सूत्रकृतोऽत्यन्तभेदोऽनिष्ट इत्यत्र तदभिप्रायव्यक्त्यै स्पष्टार्थमनेकान्तवादक्षेपसूत्रं दर्शयति (तदेतदिति) प्रमाणादिप्रसिद्धविरुद्धसम्भेददूषणमित्यर्थः।

सुव्यक्तार्थेन सूत्रेण निश्चिते सूत्रकृन्मते।
अव्यक्तार्थैस्तदुन्नेतुरपसिद्धान्तमाह च॥ ७॥

अथ साक्षात्प्रक्रान्तस्य शेषं सिद्धे ····न साधयति (अत इति) सर्वविशेषरहितग्रहणासिद्धेत्यर्थः। आदिशब्देन लौकिकवैदिकागमग्रहः। सम्भवति हि ततोपि व्याप्तिसिद्धा क्वचिदनुमा, यथा—'स्वर्गमसौ यास्यति तत्कामनया सम्यगनुष्ठितज्योतिष्टोमवत्त्वा'दिति. प्रत्यक्षादिना दृष्टलिङ्गसम्बन्धं साध्यं तद्विशिष्टो धर्मी, तदुक्तम् अतो न साध्यविशिष्टविशेषविषयत्वमिह हेतुः, दुरपह्नवधर्मिसाध्यादिविशेषभूयस्त्वप्रदर्शने तात्पर्यात्। "विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात्। तद्वतोनुपपन्नत्वादनुमानकथा कुतः॥" इत्यादि वदन् चार्वाकोपि स्ववचनप्रवृत्त्यादिभिर्भग्नः। देशान्तरादौ व्यभिचार [सम्भवेन] सन्देहाद्भ्रान्त्या वाऽऽनुमानिकी प्रवृत्तिः। यदृच्छया तु संवाद इत्यूहस्तु प्रत्यक्षेपि स्यात्। यच्चानुमानस्य प्रामाण्ये सति कथञ्चित्प्रत्यक्षान्तर्भाव इति तत्तथान्यथापि विशिष्टविषयत्वं तावद्दुरपह्नवम्। व्याप्तिग्राहकप्रमाणानधिकविषयमनुमान'मिति वदतामपि विशिष्टविषयतायामविवाद इत्य-

दनुमानमपि सविशेषविषयमेव। प्रमाणसङ्ख्याविवादेऽपि सर्वाभ्युपगतप्रमाणानामयमेव विषय इति न केनापि प्रमाणेन निर्विशेषवस्तुसिद्धिः। वस्तुगतस्वभावविशेषै-स्तदेव वस्तु निर्विशेषमिति वदन् जननीवन्ध्यात्वप्रति-ज्ञायामिव स्ववाग्विरोधमपि न जानाति ॥

* श्रुतप्रकाशिका *

( प्रमाणसङ्ख्येत्यादिना ) प्रमाणानि सविशेषविषयाणि स्युः, तानि तर्कपराहतानीति शङ्कायामस्मिन् सर्वप्रमाणसविशेषविषयत्वविस्तरोक्तिसमयेऽपि पूर्वं तत्सङ्ग्रहोक्ताविव बुद्धिस्थस्वसिद्धिवादेऽपि न निर्विशेषत्वसिद्धिरिति ज्ञापनाय सविशेषत्वबाधकतया परोक्तयुक्त्यभ्युपगमेऽपि युक्तिरूपविशेषैः सविशेषत्वमवर्जनीयमिति पूर्वोक्तं स्मार-यन् विरोधं दर्शयति ( वस्तुगतेति ) यद्वा,—पूर्वं स्वानुभवसिद्धे विशिष्टे निर्विशेषत्व-निष्कर्षो निष्कर्षकैः सविशेषत्वापादनेन दूषितः, तत्सर्वं प्रमाणनिर्विशेषत्व-विषयत्वनिष्कर्षेऽप्यतिदिशति—वस्तुगतेति । एवं निर्विशेषचिन्मात्रपारमार्थ्यव्यति-रिक्तापारमार्थ्यप्रतिज्ञाबाधः सामान्येन सर्वप्रमाणसविशेषगोचरत्वेन दर्शितः ॥

ꣳ तत्त्वटीका ꣳ

वधारणाभिप्रायः । यद्वा, प्रागनूदितनिर्विशेषत्वानुमानानामुत्थानशङ्कापि न स्यादिति द्योत्यते । नन्वर्थापत्त्यादिमानान्तरमस्ति ततोऽस्मदिष्टं स्यादित्यत्राह ( प्रमाणेति ) अयमेव— सविशेष एवेत्यर्थः । प्रत्यक्षादित्रिकं प्रदर्श्य 'प्रमाणसङ्ख्याविवादेऽपि' इत्युक्त्या अन्वारूह्यवादोयमिति व्यक्तम्। तत्तदुक्तस्तूपमानादावन्तर्भवति, अर्था-पत्तिसंशयावनुमाने अनुपलब्धिश्च प्रत्यक्षादौ, ऐतिह्यन्तु प्रायिकप्रामाण्यम्। "स्मृतिः प्रत्यक्षमैतिह्यमनुमानं चतुष्टयम्" इति श्रुतौ तु स्मृत्युपादानं प्रत्यक्षाद्यनुविधायितया तदभिन्नार्थत्वपरम् ; ऐतिह्यमिहागमः । उपबृंहितं मनुना— 'प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्यम्" इति । भारते त्वधिकोक्तिर्गोबली-वर्दन्यायादुदाहरणभेदव्यक्त्यर्था । न्यायमात्रेतूपमानबहिर्भावोक्तिरन्यपरतया भाष्-येण निरूढा । एवं सविशेषवस्तुविषयत्वादिति प्रागुक्तं हेतुसामर्थ्यं निर्विशेषप्रमा-णस्य दुर्वचत्वञ्च निगमयति ( न केनापीति ) सङ्ग्रहोक्ताविवास्मिन् विस्तारेऽप्य-

यत्तु—प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयम्, भेदश्च विकल्पासहत्वाद्दुर्निरूपः— इत्युक्तम्, तदपि जात्यादि-

* श्रुतप्रकाशिका *

अथ परोक्तं प्रमाणतर्कजातं विशेषतो दूषयितुमुपक्रमते । शास्त्रबलीयस्त्व-मिच्छता परेण प्रथमं शास्त्रमुपन्यस्तम्. तदनिच्छता प्रत्यक्षाविरुद्धेऽर्थे शास्त्रं प्रमाण-यता सिद्धान्तिना प्रत्यक्षस्य सन्मात्रविषयत्वं निराक्रियते । तत्र प्रत्यक्षस्य सन्मात्र-विषयत्वे भेदस्य दुर्निरूपत्वे च परोक्तं कुतर्कमनूद्य निरस्यति (यत्त्विति) यत्त्वित्या-दिना ग्रन्थद्वयेन प्रमाणानुपपत्तिप्रमेयानुपपत्त्यनुभाषणम् . (तदपीति) न केवलं सवि-शेषविषयत्वोपपादनम्, निर्विशेषविषयत्वोपपादनानुपपत्तिश्चेति अपिशब्दस्य भावः । यद्वा,— न केवलं भिन्नविषयत्वं स्थापितम् , सन्मात्रविषयत्वमपि दूरोत्सारितमित्यपि-

ॐ तत्त्वटीका ॐ

गत्या परः स्वानुभवमेव पुनश्शरणयेत् , तस्य विशिष्टविषयत्वे स्थापिते तत्प्रयुक्तैरेव निष्कर्षहेतुभिस्सविशेषत्वं प्रागुक्तमिति कृत्वानुक्तस्य वा विरोधं सिंहावलोकितके-नाह ( वस्त्विति ) सन्तु निर्विशेषविषयाण्येव प्रमाणानि, तानि निर्विशेषत्वयुक्त्या बाध्येरन्नित्यत्र दत्तोत्तरमजानतो जडीकारोऽयम् । तदेव— स्वेष्टहेत्वादिरूपानेकविशे-षास्पदमेवेत्यर्थः ।

अथानूदितमादौ यत्—तद्दूषयितुमुद्यतः ।
आरोहादवरोहाद्वा किं न हन्ति तदुच्यते ॥ ॐ ॥
निर्विशेषपरं शास्त्रं प्रत्यक्षं तेन बाध्यते ।
न वा बाध्यं तदैकार्थ्या—दित्यनूक्ते परोदिते ॥ ॐ ॥
प्रत्यक्षोदन्तमुद्धाट्य प्राध्वं प्रति विवक्षता ।
क्षेपस्कन्धत्रयस्यास्य क्रियते प्रातिलोम्यतः ॥ ॐ ॥
अतः प्रथममक्षोभ्ये भेदे कुमतिकल्पिताम् ।
मानमेयप्रतिक्षिप्ति—मनुव्यक्तत्रयं त्विति ॥ ॐ ॥
अनूक्तं द्वितयं चात्र तदपीत्यादिनास्यति ।
उक्तवक्तव्यनिर्द्धार्य—हेतुद्वितयशक्तितः ॥ ॐ ॥

विशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रति-योग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितम् । संवेदनवद्रूपादिवच्च परत्र व्यवहारविशेषहेतोस्स्वस्मिन्नपि तद्व्यवहारहेतुत्वं युष्माभिरभ्युपेतं भेदस्यापि सम्भवत्येव ; अत एव च नानवस्थाऽन्योन्याश्र-

* श्रुतप्रकाशिका *

शब्दस्य भावः । ( जात्यादेरेवेति ) स्वपरनिर्वाहकत्वाद्व्यावृत्तिरूपधर्मान्तरनिरपेक्षस्य प्रतियोगिनिरपेक्षस्यैव चेति भावः । ( दूरोत्सारितम् ) प्रतियोगिस्मरणकृतविलम्बे सत्यपि ज्ञानस्य यावत्कार्यसिद्धि सत्त्वं कल्प्यम् । तथापि प्रतियोगिनिरपेक्षजात्यादेर्भेदत्वेनैकलक्षणवर्तित्वेऽपि प्रत्यक्षस्य भेदस्य सुग्रहत्वाद्दूरोत्सारितमिति भावः । जात्यादेरेवेत्यभिप्रेतं भेदस्य स्वपरनिर्वाहकत्वं परोक्तयुक्त्यैव दर्शयति ( संवेदनवदित्यादिना ) संवेदनवद्रूपादिवच्चेत्यनेन परोक्तपक्षसपक्षौ द्वावपि सपक्षीकृतौ । अनेन परोक्तदूषणस्य परिहृतत्वं दर्शयति (अत एवेति) अत्र प्रथमचशब्दस्य स्वपरनिर्वाहकत्वोपपादनेन दूषणपरिहारश्च सिद्ध इति भावः । द्वितीयश्चशब्दो

* तत्त्वटीका *

जात्यादिविशिष्टस्यैव—नतु जात्यादिभिरभिन्नस्यानवगतसम्बन्धस्य तच्छून्यस्य चेति यावत् । जात्यादेरेव– प्रतियोग्यप्रतीतावपि स्वरूपतः प्रत्येतुं शक्यस्यैवेत्यर्थः । वस्तुनः– जात्याद्यधिकरणस्य । अत्राश्रयधर्म्यन्तरतद्धर्मस्वधर्माश्च प्रतियोगिनः, स्वस्य तु स्वाश्रयधर्मान्तरादिति विभागस्त्विह प्रतियोग्यपेक्षयेति सङ्क्षिप्तः । दूरोत्सारितम्— धर्मिग्रहणक्षण एव भेदरूपस्य यत्किञ्चिद्धर्मस्य गृहीततया मानमेयानुपपत्तिशङ्कापि न स्यादिति भावः । वस्तुनः स्वस्य चेत्युक्तं स्वपरनिर्वाहकत्वं परोक्तपक्षदृष्टान्तन्यायादङ्गीकारयति ( संवेदनवदिति ) उक्तेनैव परोक्तदूषणनिरासश्च फलित इत्याह ( अत एवेति ) तत्र जात्यादिधर्मस्यैव भेदतया धर्मिस्वरूपस्यास्माभिर्भेदत्वानभ्युपगमात् संशयाद्यनुपपत्तिचोद्यमपास्तम् । स्वपरनिर्वाहकत्वेनानवस्था निरस्ता । विशिष्टग्रहणस्यैव भेदग्रहणत्वादन्योन्याश्रयप्रसङ्ग एव नास्ति; एवमाश्रयप्रतियोगित्वादिग्रहेपि । अत्र ग्राहकानुपपत्तौ परिहर्तव्यायां धर्मरूपस्य भेदस्य तद्विशिष्टस्य च विधौ व्यव-

# यणश्च। एकक्षणवर्त्तित्वेऽपि प्रत्यक्षज्ञानस्य तस्मिन्नेव क्षणे वस्तुभेदरूपतत्संस्थानरूपगोत्वादेर्गृहीतत्वात् क्षणान्तर-

* श्रुतप्रकाशिका *

दूषणद्वयसमुच्चये। अनवस्थापरिहारसिद्धौ तदर्थस्वपरनिर्वाहकत्वसिद्धिः, तदर्थस्वपरनिर्वाहकत्वसिद्धौ अनवस्थापरिहार इत्यन्योन्याश्रय इति चेन्न,—भ्रमनिवृत्त्यन्वयव्यतिरेकाभ्यामेव स्वपरनिर्वाहकत्वसिद्धेरनवस्थापरिहारात्। प्रत्यक्षज्ञानस्य त्रिचतुरक्षणमात्रवर्त्तित्वेऽप्येकक्षणवर्तित्वमभ्युपगम्य परिहरति ( एकक्षणवर्त्तित्वेऽपीति ) अत्रैवमनुसन्धेयम्,—किं प्रतीतिरभ्युपगता? उताङ्गीकारेऽपि मूलं नास्ति? किं वा मूलं दुर्निरूपम्? इति। विषयो वा किं नास्ति? उत सन्नपि दुर्निरूपः? इति। तत्र प्रथमं प्रतीत्यनभ्युपगमो नोपपद्यते, वेदान्तानामनारम्भणीयत्वप्रसङ्गात् वादिप्रतिवादिरूपेण कथानुपपत्तेश्च। मूलमप्यस्ति, कार्यस्य सम्प्रतिपन्नत्वेन कारणस्य कल्पनीयत्वात्, कार्यं हि प्रतीतं कारणकल्पनायां प्रमाणम्, न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हतीति नीतिविदः। दुर्निरूपत्वमपि नास्ति, कार्योत्पत्त्यनुरूपत्वं हि कारणस्य सुनिरूपत्वम्. कार्योत्पत्त्या कारणस्य तदनुरूपत्वं सिद्धमिति न दुर्नि-

७ तत्त्वटीका ७

च्छेदविधानयोरैक्यं दर्शितम्। धर्म्यपेक्षयातु तयोर्भेदस्स्थापितः। प्रत्यक्षस्य सरूपभेदयोरन्यतरग्राहित्वं क्रमेणोभयग्राहित्वञ्च त्यक्तम्। युगपद्ग्रहणमेव तु प्रतिष्ठितमित्याह ( एकक्षणेति ) ननु यद्यपि धर्मस्वरूपस्य भेदत्वे तत्र गोत्वादिशब्दानां भेदशब्दस्य च पर्यायत्वं स्यात्। प्रतियोग्यनपेक्षत्वसापेक्षत्वादिविरोधोपि न परिहृतः। मैवम्,—

व्यावृत्तेषु स्वरूपेषु खण्डगोशब्दनीतितः।
स्वरूपशब्दानुगतिर्निमित्तान्तरतो यथा॥ ७॥
न व्यावृत्त्यनुवृत्त्यादि–विकल्पश्चात्र बाधकः।
व्यावृत्तेषु स्वरूपेषु स्वरूपत्वानुवृत्तितः॥ ७॥
अस्वरूपत्वमन्येषा–मपि न स्यादगोत्ववत्।
निर्दिष्टे हि विशिष्टार्थे निष्कृष्टाङ्गविशेषतः॥ ७॥

* श्रुतप्रकाशिका *

रूपत्वम्, विषयोऽप्यस्त्येव. यदि न विषयः तर्हि त्वयैव तदनुयुक्तेन वक्तव्यम्. प्रपञ्चस्य बाध्यत्वज्ञानं किं सविषयम् ? उताविषयम् ? इति । सविषयत्वे विषयोऽङ्गीकृत एव, नो चेत् बाध्यत्वमपि नेति प्रपञ्चपारमार्थ्यं स्यात् ; अतोऽस्त्येव विषयः । न च बाध्यविषयत्वम्, तथा सति भेदबाधकप्रमाणजन्यप्रतीतेरपि मिथ्याविषयत्वेन भेदपारमार्थ्यप्रसङ्गात् । एतान् प्रत्याहुः " स्वशास्त्रनिर्णये सत्ये सत्याः स्युर्लोकनिर्णयाः । स्वशास्त्रनिर्णयेऽसत्येऽसत्याः स्युर्लोकनिर्णयाः ॥ " इति । उक्तविकल्पेषु पूर्वे चत्वारः पक्षाः अपिचेत्यादिना भाष्येण वक्ष्यमाणेनाभिप्रेता इति तेषां निरस्तत्वं तत्र ज्ञास्यते । अत्र प्रथमं पञ्चमं बाध्यविषयत्वपक्षं प्राधान्यात् परिजिहीर्षता भाष्यकारेण प्रत्यक्षबाधस्तावन्न दृष्ट इति यौक्तिकबाधः परिह्रियते; तत्र प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वेन तद्विशिष्टविषयतया क्षणान्तरग्राह्याभावात् क्रमयौगपद्यविकल्पायोगरूपा प्रमाणानुपपत्तिः परिहृता. एवं प्रमेयानुपपत्तौ स्वरूपपक्षे प्रतियोगिनिरपेक्षभेदव्यवहारप्रसक्तिश्चेष्टतया परिहृता । हानोपादानादिरूपस्य गोत्वादिशब्दावलम्बिनश्च व्यवहारस्य प्रतीतेश्च प्रतियोगिनिरपेक्षत्वात् शब्दव्यवहारविशेषे प्रतियोगिसापेक्षत्वस्य दाराः कलत्रमापः इत्यादिषु स्त्रीत्वनपुंसकत्वबहुत्वादिवच्छब्दस्वभावायत्तत्वान्नार्थदूषणत्वम्. व्यावृत्तादिशब्दप्रयोगेष्वेव प्रतियोगिसापेक्षत्वदर्शनात्, गोत्वादि-

ॐ तत्त्वटीका ॐ

स्वरूपशब्दवृत्तेस्स्या—न्निमित्तं सर्ववस्तुषु ।
विभक्तिभेदश्चैवं स्यात् समुदायांशभावतः ॥ ॐ ॥
शिलापुत्रवपुन्यायो न चास्मिन् मुख्यसम्भवे ।
एवं गोत्वादिधर्मेषु भेदत्वाख्यानिवृत्तितः ॥ ॐ ॥
प्रवृत्तो भेदशब्दस्स्यादपर्यायस्सहोक्तिमान् ।
प्रतियोग्यनपेक्षत्व-प्रसङ्गोप्यत एव न ॥ ॐ ॥
भाषिष्यते हि भेदस्य लक्षणं तदपेक्षया ।
यद्बुद्धौ यत्र यद्भ्रान्तिर्न स्यात्सा तस्य तद्भिदा ॥ ॐ ॥
अतस्सप्रतियोगित्वं भेदोक्तेरिति सेत्स्यति ।
भिन्नशब्दः क्वचिद्भेदे—ष्वाश्रयादिविशेषतः ॥ ॐ ॥

* श्रुतप्रकाशिका *

प्रतिपत्तिव्यवहारेषु तदभावात् शब्दव्यवहारविशेषस्य प्रतियोगिसापेक्षत्वं शब्दविशेषस्वभावाधीनमित्यन्वयव्यतिरेकाभ्यां निश्चीयते, शब्दस्वभावश्च प्रवृत्तिनिमित्तसाधारण्यात्तदवच्छेदकोपाधिपुरस्कारेणार्थविशेषप्रतीतिहेतुत्वम् . गोत्वशब्दो ह्यसाधारणो गोत्वं स्वरूपेण दर्शयति. भेदशब्दस्तु व्यावृत्तिबुद्धिहेतुत्वरूपप्रवृत्तिनिमित्तसाधारण्यात्तदवच्छेदकमहिषादिपदार्थान्तररूपोपाधिपुरस्कारेण गोत्वं दर्शयति। पर्यायत्वप्रसक्तिश्च परिहृता। व्यावृत्तिरूपे परे ब्रह्मणि ब्रह्मशब्देन सह स्वरूपशब्दवदधिकार्थाविवक्षायामपि भिन्नशब्दस्य प्रयोगसम्भवात् . उपाधिशब्दानां हि वाच्यानतिरेकेऽपि तटस्थोपाधिभेदादपर्यायत्वमुपपद्यते, तत्रेच्छौ प्रयोगाप्रयोगौ. भेदस्य व्यावृत्त्यनुवृत्तिविकल्पोऽपि परिहृतः, व्यावृत्त इत्यभ्युपगमे स्वरूपव्यावृत्तशब्दयोरिव भेदशब्दस्यानुवृत्तप्रयोगसम्भवात् . भिन्नो हि भेदयोगीत्येतच्च स्वरूपस्यैव जात्यादिभेदविशिष्टत्वेन भिन्नशब्दप्रयोगसम्भवात् परिहृतम्। धर्मभूतजात्यादिषु भिन्न इति प्रयोगो भवन्मते व्यावृत्तिरूपे ब्रह्मणि व्यावृत्तशब्दवदौपचारिकः, धर्मान्तरराहित्येऽपि तद्योगकार्यव्यावृत्तिबुद्धिहेतुत्वात्। धर्मपक्षेऽनवस्थाऽन्योन्याश्रयणे च परिहृते, प्रतियोगिनिरपेक्षजात्यादेरेव भेदत्वात्तस्यैव स्वपरनिर्वाहकत्वाभ्युपगमाच्च। अविद्यायाः ब्रह्मणो भेदोऽस्ति वा न वा? न चेत् ब्रह्मणो जडत्वादिप्रसङ्गः। अस्ति चेत्

७ तत्त्वटीका ७

स्वतश्च धर्मभेदश्च फलासेरौपचारिकः।
अभेदेपि स्वरूपादि-विकल्पानुपपत्तयः।
भेदे यथा तथैव स्युः समाधिश्च समोऽत्र नः॥ ७॥

तदिह न तावद्भेदधीर्नास्तीति साधयितुं शक्यते, सर्वलोकप्रसिद्ध्या स्ववागादिभिश्च व्याघातात्, तथाच का कथा शास्त्रारम्भादौ, नच तस्या निर्मूलत्वम् अत्रत्याभावतस्तदयोगात्। सिद्धस्य च भूताभावे स्वरूपानादित्वप्रसक्तौ स्वेष्टभङ्गात्। नच तन्मूलस्य दुर्निरूपत्व विशेषतो निरूपणाशक्यत्वेपि परिवेषादेरिव तादृशकार्योत्पादनानुगुणस्वरूपतया सामान्येन तन्निरूपणात्, विशेषतश्चान्वयव्यतिरेकनियतस्येन्द्रियादेरुक्तत्वात्, न चक्षुषेत्यादिना स्थापयिष्यमाणत्वाच्च। नच निरूपितकारणापि सा निर्विषया स्वोक्त्यादिविरोधादेव। निर्विशेषत्वसाधकधियोपि निर्विषयत्वे स्वेष्टासिद्धेः

ग्राह्यं न किञ्चिदिह तिष्ठति ॥ अपिच—सन्मात्रग्राहित्वे घटोऽस्ति पटोऽस्तीति विशिष्टविषया प्रतीतिर्विरुध्यते । यदि च सन्मात्रातिरेकिवस्तुसंस्थानरूपजात्यादिलक्षणो

* श्रुतप्रकाशिका *

स भेदः स्वरूपं वा ? धर्मो वा ? इतिविकल्पे दूषणपरिहारसाम्यं द्रष्टव्यम् । किञ्च स्वरूपधर्मविकल्पदूषणपरिहारा अभेदेऽपि तुल्याः, अभेदः स्वरूपं चेत् प्रतियोगिनिरपेक्षाभेदव्यवहारप्रसङ्गः, 'परमात्मना भवत्यभेदी' घटध्वंसे घटाकाशो न भिन्नो नभसा यथा " इत्यादिष्वभेदः सप्रतियोगिको ह्यवधीयते । ब्रह्माद्वितीयमिति पदानां पर्यायत्वं स्यात् , धर्मश्चेत् सविशेषत्वं ततश्चापसिद्धान्त इति । इत्थं विषयदुर्निरूपत्वपक्षे प्रतिक्षिप्ते भेदप्रतीत्यनभ्युपगम एव परेषां शरणमिति तं निराकरोति ( अपि चेत्यादिना ) प्रथमं प्रतिपत्तिविरोध उच्यते ( सन्मात्रेति ) यदिचेत्यादिना व्यवहारविरोधः । सर्वास्वित्यादिना शब्दविरोधः । नन्वेकत्र सर्यन्त एव सर्वे शब्दाः, सर्वप्रतीतीनां सन्मात्रविषयत्वाभ्युपगमात् । नैवम् ,—घटे प्रतिपन्ने तत्र पटव्यवहारप्रतिषेधप्रसङ्गस्याभिप्रेतत्वात् । अत्र प्रतिदूषणं सन्मात्रशब्दानुवृत्तिर्दूष्योर्थोऽयमेवेति स्मरणार्था, किञ्चेत्यादिना प्रतीत्यवान्तरजातिविशेषविरोध उक्तः । अत्र

❀ तत्त्वटीका ❀

सविषयत्वे स्वेष्टविरोधात् । निर्विषयख्यातिवादस्तु प्रतिक्षेप्स्यते , नापि द्विचन्द्रभेदधीवद्बाधितविषया , मानमेयानुपपत्तिपरिहारात् । अनुमानादिभिर्बाधस्त्वपाकरिष्यते, सत्सदित्यनुवृत्ते हि तद्व्यावृत्तिधीर्दुस्त्यजा; तस्मात् किं मुधात्र वेद्यते । एवं स्थितेपि धाष्टर्यान्मिथ्याक्रियापूर्ववादन्यायेनायत्तत्वाच्चादिमं भेदबुद्ध्यपह्नवमेव परशरणयेदिति कृत्वा तत्रापि दोषान् विवक्षुराह ( अपिचेति ) यद्वा—प्रत्यक्षस्य भेदग्राहित्वाभावेपि भ्रान्त्या भेदव्यवहार इति यत्परेणोक्तं तत्र प्रत्यक्षवद्भ्रान्तावपि क्रमयौगपद्यादिविकल्पानुपपत्त्यवतराच्चन्निवर्तकस्य वैषम्यस्य दुर्वचत्वाच्च शास्त्रनिवर्त्यत्वाभिमतभेदधीरेव लुप्येतेति मत्वा तत्रानिष्टानि प्रस्तूयन्ते । त्रिभिरिह वाक्यैर्धीप्रवृत्तिविशेषभङ्गः प्रदर्श्यते । सन्मात्रग्राहित्वे—भेदग्राहित्वाभावे सतीत्यर्थः । अयमेव प्रसङ्गकांशो दूष्यश्चेति व्यक्त्यै त्रिष्वपि तदनुवादा वृत्तिः । जात्यादिलक्षणः— जातिगुणादिस्वरूप इत्यर्थः ।

भेदः प्रत्यक्षेण न गृहीतः, किमित्यश्वार्थी महिषदर्शने निवर्त्तते। सर्वासु प्रतिपत्तिषु सन्मात्रमेव विषयश्चेत्; तत्तत्प्रतिपत्तिविषयसहचारिणस्सर्वे शब्दा एकैकप्रतिपत्तिषु किमिति न स्मर्यन्ते। किञ्च अश्वे हस्तिनि च संवेदनयोरेकविषयत्वेनोपरितनस्य गृहीतग्राहित्वाद्विशेषाभावाच्च स्मृतिवैलक्षण्यं न स्यात्। प्रतिसंवेदनं विशेषाभ्युपगमे

* श्रुतप्रकाशिका *

सन्मात्रशब्दाप्रयोगः किञ्चशब्देन दूष्यार्थप्रतिसन्धानात्. धारावाहिकज्ञानेषु कालभेदोऽस्तीति तद्व्यावृत्त्यर्थं विशेषाभावादित्युक्तम्, (स्मृतिवैलक्षण्यं न स्यादिति) ज्ञाततयैव परामर्शप्रसङ्ग इत्यर्थः। धारावाहिकबुद्धिष्विव ज्ञाततापरामर्शाभावोपपत्तिरिति चेन्न, तत्राप्रतिसन्धानस्य तादात्विकबुभुत्साभावाधीनत्वात्। अत्र तु सत्यामपि बुभुत्सायां ज्ञाततापरामर्शाभावो विषयभेदमेव व्यवस्थापयति (प्रतिसंवेदनमिति) विशेषाभ्युपगमशङ्का परस्य गत्यन्तराभावद्योतनार्था, सर्वेषामित्यादिना करणव्यवस्था-

❀ तत्त्वटीका ❀

(किमिति) अश्वाद्भेदस्य माहिषत्वस्य दर्शनादेव हि ततो निवृत्तिरिति भावः। निवृत्त्युक्तिः प्रवृत्तेरप्युपलक्षिका। तत्तत्प्रतिपत्तिविषयसहचारिण इति लोकसम्मतानुवादः। वाच्यविशेषो हि दृष्टो वाचकविशेषं स्मारयति। तेन च गृहीतसम्बन्धस्स एव व्याह्रियते सेयं व्यवस्था न स्यादित्यभिप्रायेण सर्वे शब्दा इत्युक्तम्। अथ पूर्वोक्तेभ्यो विलक्षणं प्रतीतिस्वरूपे ऽनिष्टं प्रसज्यत इति सूचयन्नाह (किञ्चेति) संवेदनयोरेकविषयत्वेन—सन्मात्र [विषय] ग्राहित्वेनेति भावः। गृहीतग्राहित्वं प्रत्यभिज्ञादावप्यस्तीति तद्व्यावृत्त्यर्थमाह (विशेषाभावाच्चेति) यद्यपि संस्कारजन्यत्वाभावेन स्मृतित्वं नास्ति तथापि पूर्वानतिरिक्तव्यवहारहेतुत्वेन स्मृतिवैलक्षण्यं न स्यादित्युक्तम्। व्यवहारवैचित्र्यं हेत्वन्तरस्याप्यसम्भवेन लुप्येतेति भावः। अनधिगततया भूतार्थनिश्चायकं प्रमाणमिति मतमनुसरन्तं प्रति च प्रामाण्यभङ्गसंरम्भोयम्. विषयतो विशेषाभावेपि स्वरूपभेदत इव कालभेदतो [वा] वैषम्यं स्यादित्यत्राह (प्रतिसंवेदनमिति) स्वरूपकालभेदयोर्हि सद्भावमात्रं स्मृताविवाकिञ्चित्करम्।

प्रत्यक्षस्य विशिष्टार्थविषयत्वमेवाभ्युपगतं भवति । सर्वेषां संवेदनानामेकविषयतायामेकेनैव संवेदनेनाशेषग्रहणादन्धबधिराद्यभावश्च प्रसज्येत । नच चक्षुषा सन्मात्रं गृह्यते, तस्य रूपरूपिरूपैकार्थसमवेतपदार्थग्राहित्वात् । नापि त्वचा, स्पर्शवद्वस्तुविषयत्वात् ।

* श्रुतप्रकाशिका *

भावप्रसङ्ग उक्तः । करणानां व्यवस्थासिद्ध्यर्थं विषयभेदानाह ( न चेत्यादिना ) अत्र पूर्वोक्तविशिष्टविषयप्रतिपत्तिविरोधविवरणमकारणत्वदुर्निरूपकारणत्वनिरसनं च कृतं भवति. ( रूपैकार्थसमवेतेति ) रूपसमानाश्रयसमवेत इत्यर्थः । समवेतशब्दो विशेषणतैकस्वभावपरः, विशेष्यत इति विशेषः । तेन सन्मात्रविलक्षणपरस्परभिन्नविषयत्वसिद्धिः । ननु सर्वं प्रत्यक्षं सविशेषविषयमित्युक्तम्. शब्दगन्धरसानां साश्रयतया धर्मान्तरवत्तया वा ग्रहणाभावात्तद्ग्राहिणः प्रत्यक्षस्य कथं सविशेषविषयत्वम् । नैतदेवम्,-गुणकर्मणोरपि तत्तत्संस्थानवत्तया कालविशिष्टतया च सविशेषत्वेन गृह्यमाणत्वात्, एतच्च निर्विकल्पकमपेक्ष्योक्तम् । सविकल्पके तु देशादीनां बहूनां विशेषणत्वं सम्भवत्येव । इन्द्रियाणां लोकसिद्धहेतुभिः सन्मात्रविषयत्वप्रति-

ध तत्त्वटीका ध

विषयभूतसत्पदार्थोपरञ्जकत्वे तु स्वारसिकं हस्त्यश्वत्वादिवैशिष्ट्यं दुस्त्यजमित्याशयः । एवं प्रतिपत्तिषु स्मृतिवैषम्याभावः प्रसञ्जितः । अथ प्रतिपत्तिष्वन्धानन्धादिवैषम्यं न स्यादित्याह ( सर्वेषामिति ) संवेदनानाम्—प्रत्यक्षधियामित्यर्थः । इन्द्रियविशेषवैकल्यादेव ह्यन्धादित्वम्. इन्द्रियजातिभेदश्च विषयभेदादेव ; अतस्तदभावे तत्तन्नियतेन्द्रियभेदासिद्धेरेकैकवैकल्येपि काणान्यायादन्धाद्यभावस्स्यादित्याकूतम् । अशेषग्रहणात्— इन्द्रियान्तराग्राह्यानुपलम्भादित्यर्थः । उक्तसिद्ध्यर्थं विषयभेदेन इन्द्रियव्यवस्थां प्रागुक्तप्रतीतिविरोधञ्च व्यनक्ति ( न चेति ) रूपैकार्थसमवेतास्संयोगादयः, समवेतशब्द इह स्वतो विशेषणत्वपरः । रूपस्य पृथगनुक्तिसद्विशिष्टग्रहणोक्तिः । स्पर्शवद्वस्तुविषयत्वादित्यत्रापि स्पर्शादयो ग्राह्याः । निराधारा रूपस्पर्शादय एव इन्द्रियग्राह्या इति वदन् वैभाषिकोप्यत्र प्रस्तुक्तः । अद्रव्यग्राहिषु कथं विशिष्ट-

श्रोत्रादीन्यपि न सन्मात्रविषयाणि; किन्तु शब्दरसगन्धलक्षणविशेषविषयाण्येव। अतस्सन्मात्रस्य ग्राहकं न किञ्चिदिह दृश्यते। निर्विशेषसन्मात्रस्य प्रत्यक्षेणैव ग्रहणे तद्विषयागमस्य प्राप्तविषयत्वेनानुवादकत्वमेव स्यात्। सन्मात्रब्रह्मणः प्रमेयभावश्च। ततो जडत्वना-

* श्रुतप्रकाशिका *

क्षेपमुपसंहरति ( अत इति ) प्रत्यक्षस्य सन्मात्रविषयत्वं पराभ्युपगतार्थान्तरविरुद्धं चेत्याह ( निर्विशेषेति ) शास्त्रस्याप्राप्तविषयतयाऽर्थवत्त्वं लोकसिद्धत्वात् भेदस्य शास्त्रविषयित्वं वदद्भिः परैरेवाभ्युपेतम्. श्रुतिप्रामाण्यविरोध उक्तः। पराभिमतार्थान्तरविरोधमाह ( सन्मात्रब्रह्मण इति ) ततः फलितमनिष्टमाह ( तत इति ) एवमुपपादितं प्रत्यक्षस्य सन्मात्रग्राहित्वप्रतिक्षेपं स्वाभिमतार्थान्तरव्युत्पादनाय प्रत्यक्षस्य

* तत्त्वटीका *

विषयत्वमित्यत्र त्वदिष्टं तावन्नेत्याह ( श्रोत्रेति ) अपिर्विरोधशङ्काद्योतकस्समुच्चयार्थो वा। ननु श्रोत्रादेस्सद्विषयत्वाभावे शब्दादीनामसत्त्वप्रसङ्गः, तदतिरिक्तविषयत्वाभावनिषेधस्तु कथमित्यत्राह ( किन्त्विति ) शब्दत्वगन्धत्वरसत्वादीनि मतभेदाज्जातिरूपाण्युपाधिरूपाणि वा सर्वैर्दुरपह्नवानि लक्षणानि येषां ते शब्दरसगन्धलक्षणाः, त एव विशेषाः– अनुवृत्तसच्छब्दनिमित्तातिरिक्ता इत्यर्थः। अन्यथा श्रोत्रादिभेदासिद्धिः पूर्वोक्तप्रतीत्यादिविरोधश्च दुर्वार इत्यवधारणाभिप्रायः। एवं सर्वेन्द्रियाणां ग्राह्यतया त्वदुक्ते सन्मात्र एव ग्राहकानुपपत्तिरापतितेत्यभिप्रायेणाह ( अत इति ) इह– सम्प्रतिपन्नेषु ग्राहकेषु, अन्यत्तु निर्विशेषग्राहकं न कल्पयितुं शक्यमिति भावः। परिकल्पितप्रत्यक्षवृत्तान्तेन तदभिमतब्रह्मविषयस्य शास्त्रस्यानुत्थानप्रसङ्गमाह ( निर्विशेषेति ) पूर्व एवकारः शास्त्रनैरपेक्ष्यार्थः। उत्तरस्तु विधेयान्तरबुद्ध्यपगमानुवादनैरर्थक्यपरः, अप्राप्ते हि शास्त्रमर्थवत्। सिद्धान्तविरोधमाह ( सन्मात्रेति ) न खल्विन्द्रियवेद्यसन्मात्रादन्यत्ते ब्रह्म तस्यानन्याधीनसिद्धत्वेनाभ्युपगतस्य प्रवृत्तिरूपस्यान्यधीगोचरत्वप्रसङ्ग इत्यर्थः। तावन्मात्राभ्युपगमे को दोष इत्यत्राह ( तत इति ) आदिशब्देन मिथ्यात्वादिसङ्ग्रहः। त्वयैवेत्यनेन स्वोक्तमपि न

शित्वादयस्त्वयैवोक्ताः। अतो वस्तुसंस्थानरूपजात्यादि लक्षणभेदविशिष्टविषयमेव प्रत्यक्षम्; संस्थानातिरेकिणो

* श्रुतप्रकाशिका *

विशिष्टविषयित्वे पर्यवसाययति ( अत इति ) अत इत्यादिभाष्येऽर्थद्वयमुक्तं वस्तुसंस्थानरूपा जातिः जात्यादिरेव भेद इति च। तत्र प्रथमं संस्थानमेव जातिरित्युपपादयति (संस्थानेत्यादिना) किं दर्शनेन अनुपपत्त्या वा, उत संस्थानातिरिक्तजात्यभ्युपगम इति विकल्पमभिप्रेत्य दर्शनं नेत्याह (संस्थानातिरेकिण इति) अयं सास्नादिमान् अयमपि सास्नादिमान् अयं पृथुबुध्नोदराकारः अयमपि तदाकार इति सास्नादिरनुवृत्तबुद्धिव्यवहारविषयो दृश्यते. तदतिरिक्तोऽनुवृत्तधीव्यवहारविषयो न कश्चिद्दृश्यते तस्मादित्यर्थः। यद्वा जातितया स्वाभिमतात् संस्थानात् पराभिमतजातेरसाधारणं रूपमुक्तम् एकाकार-

७ तत्त्वटीका ७

जानासीति विरोधस्सूच्यते । प्रत्यक्षस्य भेदग्राहित्वं तदुपन्यस्ताभिः कुतर्ककुहनाभिर्दुरपह्नवमित्यभिप्रायेण सावधारणं निगमयति ( अत इति ) संस्थानस्य जातित्वं जात्यादेर्भेदत्वञ्च प्रसक्तम्। तत्राद्यं स्थापयति (संस्थानेति) ननु इह किमर्थं संस्थानजातिसाधनं प्रामाणिकतया। "न याति न च तत्रासीदस्ति पश्चान्नचांशवत्। जहाति पुनराधारमहो व्यसनसन्ततिः ॥ इति सौगतोक्तविकल्पाद्यनवतारेण कथञ्चिदुपकारार्थत्वे गुणादिकमपि चिन्त्येत। मैवम्,—व्यावृत्तानामेव निमित्तानां कुतश्चित्स्वभावादेकरूपबुद्ध्यादिहेतुत्वे सिद्धेऽस्ति सादित्यनुवृत्तसद्बुद्ध्यादेरपि तथैव निरूढेः घटादिधर्मतया लोकसिद्धसत्तायास्सर्वाधारब्रह्मरूपत्वं दूरापास्तं स्यात्।

† [ सत्ताश्रयस्य घटादेः ।

घटत्वादेरिवान्ये—चैवमुपलेभिरे ।

महासामान्यमन्यैस्तु द्रव्यं सदिति चोच्यते ।

सत्ताश्रयस्य घटादेस्त्वनुमानत्वं परेणापि दुर्वचमित्यभिसन्धाय सोयमुद्यमः ]

तदिहातिरिक्तजातेर्दृष्टिः क्लृप्तिश्चादर्शनादन्यथैवोपपत्त्या च दूष्यते। अयं भावः,—यथा जातिव्यक्तिमुण्डदण्डिमूर्खपाचकादिष्वनुवृत्तबुद्ध्यादेरुपाधिराश्रितः तथेहापि

† कुण्डलितो ग्रन्थ अशुद्ध इव भाति ॥

ऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात्, तावतैव गोत्वादिजातिव्यवहारोपपत्तेः। अतिरेकवादेऽपि संस्थानस्य सम्प्रतिपन्नत्वाच्च संस्थानमेव जातिः। संस्थानं नाम स्वा-

* श्रुतप्रकाशिका *

बुद्धिबोध्यस्येति। कल्पनमप्यनुपपन्नमित्याह ( तावतेति ) व्युत्पत्तिरनुगतप्रयोगश्च व्यक्तिजातिविशेषादिशब्दानामिव गवादिशब्दानामपि सुसदृशोपाधिवशादुपपद्यत इति भावः। नामान्तरेण पराभिमतजातेरभ्युपगतत्वशङ्काव्युदासायाह ( अतिरेकवादेऽपीति ) परैरवयविनोऽसमवायिकारणत्वेन संस्थानं स्वीकृतम्, किमिदं संस्थानं नाम ? किमवयवसंयोगविशेषः ? उत स्वरूपमात्रम् ? उतान्यत् किमपि ? प्रथमे निरवयवेष्वात्मसु संस्थानाभावादात्मत्वादिजातिर्न स्यात्। द्वितीये प्रत्यक्षस्य विशिष्टविषयत्वं न स्यात्, अनुगतव्यवहारश्च न स्यात् ज्ञातिमात्रोच्छेदश्च स्यात्। तृतीये गत्यभावादसत्पक्षाङ्गीकार इति शङ्कायां निरवयवेष्वपि जातिव्यवहारसिद्ध्यर्थं जात्यजातिसाधारणं संस्थानमात्रं दर्शयति ( संस्थानं नामेति ) घटस्य द्रव्यत्वं संस्थानं माभूदित्यसाधारणशब्दः। रूपम्—अपृथक्सिद्धविशेषणम्, तेन गर्भ-

७ तत्त्वटीका ७

स्यात्। उपाधिश्चात्रातिरिक्तमवयविनं जातिञ्च वदद्भिरपि गवाद्यसमवायिकारणत्वेन गोत्वादिव्यञ्जकतया स्वीकृतमवयवसंयोगविशेषात्मकं संस्थानम्. तस्यैव ह्यन्त्यतन्तुप्रयोगजन्यावयविनिष्पत्तेः प्रागपि विद्यमानतया तदापि पटधीव्यवहारो दृश्यते। तत्र भ्रान्तिक्लृप्तेर्वरमुभयत्र संस्थानसारूप्येणैवोपलब्धेन निर्वाह इति; अतएव संस्थानसमाख्याजातिरेवोच्यत इति न भ्रमितव्यमित्यभिप्रायेण तावतैवेत्यवधारितम्। जात्याश्रयघटादिहेतुतया तस्य ततो भेदेन तत्सम्मतेः। तस्मादतिरिक्तक्लृप्तौ गौरवं व्यनक्ति ( अतिरेकेति ) तर्हि जातिशब्दो निर्विषयस्स्यात्, जातिगुणक्रिया यदृच्छाशब्दव्यवस्था च भज्येतेत्यत्रोक्तम्. ( संस्थानमेव जातिरिति ) उभयाभ्युपेतमेव जातिशब्दवाच्यमित्यर्थः।

अभाषत च संस्थान—जातिपक्षं पतञ्जलिः।
जातिनित्यत्वपक्षोक्ति—रन्वारुह्येति नीयताम् ॥ ७ ॥

* श्रुतप्रकाशिका *

दासादिव्यवच्छेदः । ननु स्वासाधारणमित्यत्र स्वशब्दः किं व्यक्तिपरः ? उत सजातीयपरः ? व्यक्तिपरत्वे च किमेकव्यक्तिपरः ? उत सर्वव्यक्तिपरः ? प्रथमे एकव्यक्त्यतिरिक्तव्यक्तिषु गोत्वं न स्यात्, स्वशब्दस्य सर्वव्यक्तिपरत्वे महिषव्यक्तावपि गोत्वं स्यात्. असाधारणशब्दश्च निष्फलः, सजातीयपरत्वे जातेः संस्थानविशेषत्वात्. समानसंस्थानविशेषाणामसाधारणं रूपं संस्थानमित्युक्तं स्यात् ; ततश्चात्माश्रयः संस्थाननिरूपणस्य तत्प्रतिपत्तिसापेक्षत्वात् । नैवम्, स्वशब्दस्य प्रकृतपरत्वात्. प्रकृतत्वञ्च तद्व्यवहारगोचरतया बुद्धिस्थत्वम् । एवं तर्हि खण्डे बुद्धिस्थे गोत्वं तदसाधारणमिति मुण्डे गोत्वं न स्यात्, खण्डस्य वा गोः गोत्वं संस्थानं न स्यात्, मुण्डेऽपि विद्यमानतया गोत्वस्य खण्डासाधारणत्वाभावादिति चेन्न, खण्डं

* तत्त्वटीका *

ननु संस्थानमनुवृत्तं व्यावृत्तं वा ? नाद्यः--नित्यत्वप्रसक्तावसाध्यत्वापातात् तथाचारम्भणनयविरोधः । न द्वितीयः, अनुवृत्तबुद्धिनिर्वाहकत्वायोगात् अन्यथा अतिप्रसङ्गात्, नच सादृश्यं व्यवस्थापकं गोगवयादिषु तदसिद्धेः । सादृश्यन्तु विरूपेषु खण्डमुण्डादिषु दुर्वचम् । मैवम्,—सास्नादिसादृश्यविशेषस्य निमित्ततयातिप्रसङ्गाप्रसङ्गयोरभावात् । ननु च सादृश्यविशेषेप्यावृत्त्यादिविकल्पस्तदवस्थः, सामान्यत्यागे च किं नाम सादृश्यं समानं सदृशमित्यादेः पर्यायत्वात् । आहुश्च "सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यवर्त्ति सादृश्यमुच्यते" इति । तदपि न, जात्याद्युपलक्षकसंस्थानेप्यावृत्त्यादिविकल्पोत्थानात्, अतो यादृशं संस्थानं व्यावृत्तमपि साजात्यव्यवस्थापकं मन्यसे तादृशमेव तद्यथादृष्टिनियतप्रतियोगिकं मिथस्सादृश्यम्, नतु परेष्टं सामान्यं पदार्थान्तरं वा । सास्नादिसंस्थानेपि सादृश्यव्यवहारस्तदवयवसंस्थानोपाधिकः । एवमनुपलब्धावयवद्रव्यपर्यन्तं गतौ परिणामादिविशेषाद्व्यवस्था । ननु तथापि संस्थानं न तावद्द्रव्यस्वरूपम्, प्रत्यक्षस्य विशिष्टविषयत्वभङ्गप्रसङ्गात् सत्कार्यनीत्या च नित्यत्वागन्तुकत्वविरोधात् द्रव्यात्मनश्च व्यावृत्त्यनुवृत्तिविकल्पदौस्थ्यात् । गुणादावनुवृत्तिधीनिमित्तत्वायोगाच्च, अत एव नावयवसन्निवेशविशेषः आत्मादिषु तदयोगाच्च । अतोतिरिक्तासिद्धिरित्यत्राह ( संस्थानमिति ) स्वशब्दोत्र गवादिशब्दवाच्यतया धीस्थतद्वर्गपरः । तदन्तर्गत-

# साधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयम् ;

* श्रुतप्रकाशिका *

प्रति गोत्वस्य संस्थानरूपत्वाभावात्, खण्डत्वमेव हि खण्डस्य संस्थानम्, किं तव खण्डो बुद्धिस्थः ? उत गौः ? उत खण्डो गौः ? प्रथमे खण्डत्वमेव खण्डासाधारण-मिति न मुण्डे गोत्वाभावप्रसङ्गः, अत एव खण्डं प्रति गोत्वस्य संस्थानरूपत्वा-भावश्च नानिष्टः । द्वितीये गोर्गोत्वमसाधारणमिति महिषादौ गोत्वं निवर्तते गोषु च वर्तत इति न कश्चिद्दोषः । तृतीये यथा नीलोत्पलस्य नीलत्वविशेषितमुत्पलत्व-मसाधारणम्. एवं खण्डस्य गोः खण्डत्वविशेषितगोत्वमसाधारणमिति मुण्डे खण्डत्वविशेषितगोत्वमेव निवर्तते न गोत्वमात्रमिति न काचिदनुपपत्तिः । नीलत्व-विशेषितमुत्पलत्वमिन्दीवरशब्दप्रवृत्तिनिमित्तत्वादेकं संस्थानम्, खण्डत्वगोत्वे तु मिथो विशेषणविशेष्यभावेऽपि नैकं संस्थानम्, एकशब्दप्रवृत्तिनिमित्तत्वाभावादिति भिदा; अतः स्वासाधारणरूपं संस्थानम् । कस्तर्हि जातिरूपसंस्थानानां शौक्ल्यादिभ्यो भेदः ? स्वभावतारतम्याभावादिति ब्रूमः, शौक्ल्यादिषु हि शुक्लं शुक्लतरमिति तार-तम्यं विद्यते । शब्दादिष्वप्युपाधितो वा स्वतो वा तीव्रतरत्वादितारतम्यमुपलभ्यते. खर-त्वमृदुत्वादिस्वभावतारतम्यं स्पर्शादिष्वप्यस्ति, संख्यास्वपि न्यूनाधिकभाव उपलब्धः परिमाणे च स्फुटतरः । एवं गोत्वादिषु गोतरो गोतम इति तारतम्यं नोपलभ्यते एममादिवैषम्यं द्रष्टव्यम् । [ संस्थानसामान्यलक्षणपक्षं त्यक्त्वा ] जातिरूपसंस्थान-लक्षणमिह विवक्षितं चेत् प्रकृताकारेण सुसदृशव्यक्तयः समस्ताः स्वशब्देन विव-क्षिताः । प्रकृताकारेणेत्यात्माश्रयः परिहृतः, संस्थाननिरूपणस्य संस्थानप्रतिपत्ति-नैरपेक्ष्यात्. सुसदृशशब्देन महिषादावतिप्रसङ्गः परिहृतः । समस्तशब्देन मुण्डादिष्व-

छ तत्त्वटीका छ

सर्वसाधारणत्वेपि तदन्यतो व्यावृत्ततयात्र स्वासाधारणत्वोक्तिः । रूपम्—निरूपक-मित्यर्थः । तदिह सावयवेषु निरवयवेषु चानन्तेष्वित्थमिति प्रकाशतया निर्देश्यं तदन्यनिष्ठाभावप्रतियोगि च किञ्चिद्दृष्टमिष्टञ्च, तदतिक्रमेण विविच्य बोद्धव्यमित्याह ( इति यथेति ) सावयवेषु हि गवादिषु सन्निवेशविशेषा दृष्टा एव, निरवयवेष्वा-त्मादिषु चेतनत्वादिकमेव संस्थानमित्युच्यते । अद्रव्येष्वपि तत्तल्लक्षणमेव, तदपि तत्तज्जात्युपलक्षणतया परसम्मतम् । यदि सावयवेषु सन्निवेशविशेषो जातिः तर्हि

* श्रुतप्रकाशिका *

भावप्रसङ्गः परिहृतः, खण्डासाधारणत्वाभावात् गोत्वस्य। ननु व्यावृत्तं संस्थानमनुवृत्तव्यवहारस्य कथं निष्पादकम्? उच्यते,—यथा व्यक्तित्वजातिविरहेऽपि बह्वीषु व्यक्तिषु व्यक्तिशब्दप्रयोगः। यथा—गोत्वाश्वत्वादिजातिषु जात्यन्तराभावेपि जातिशब्दप्रयोगः, भिन्नेषु भिन्नत्वजात्यभावेऽपि भिन्नशब्दप्रयोगः, खण्डादिषु खण्डत्वादिजात्यभावेऽपि खण्डादिशब्दप्रयोगः। यथा च नित्यद्रव्येषु विशेषमिच्छतां विशेषेषु विशेषत्वाभावेऽपि विशेषशब्दप्रयोगः तद्वद्गवादिशब्दव्यवहार उपपद्यत इति किञ्च। कोऽयमनुवृत्तव्यवहारः? इति निरूप्यम्। गकारौकारविसर्जनीयानामानुपूर्वी यावदाकाशभाविनां देशतः कालतश्च नोपपद्यत इति तस्या उच्चारणनिबन्धनत्वादुच्चारणस्य च विनाशित्वादानुपूर्वी च प्रतिप्रयोगिविनाशिनीत्यानुपूर्वीविशेषविशिष्टस्य शब्दस्य कथमनुवृत्तिः,? सुसदृशत्वमेव शब्दानामनुवृत्तिरिति चेत् अर्थानामपि गोत्वादीनां तथाभूतानुवृत्तिरित्यङ्गीक्रियताम्। ननु किमिदं सौसादृश्यम्? उच्यते सदृशव्यवहारासाधारणहेतुर्विषयधर्मः सादृश्यम्, स च भ्रातृत्ववत् प्रतियोगिनिरूप्यपदार्थः प्रतिव्यक्ति व्यावृत्तः, अतो न वृत्तिविकल्पादिदौर्घट्यम्. निर्दिष्टाकारपौष्कल्यतः सादृश्यं सौसादृश्यमिति विशेष्यवाचिशब्दप्रवृत्तिनिमित्तपौष्कल्यं विवक्षितं पौष्कल्यशब्देन गवयनिष्ठगोसादृश्यं न सौसादृश्यमिति सिध्यति। नन्वेवं तर्हि

❀ तत्त्वटीका ❀

ब्रह्मक्षत्रादिषु मनुष्यत्वातिरिक्तसन्निवेशविशेषादृष्टेरागमसिद्धावान्तरजातिव्यवस्था भज्येत। सङ्केतलिङ्गसंव्यवहारैस्तत्सिद्धिरतिप्रसञ्जिका। ब्राह्मणादिशब्दानां जातिशब्दत्वञ्च व्याकरणादिस्मृतिसिद्धम्। 'ब्राह्मो जातौ' इत्यनेन जातौ ब्राह्मणशब्दस्थितेः, अतएव विशिष्टमातापितृजन्यत्वरूपोपाधिमात्रमेव ब्राह्मण्यादिकमिति कैश्चिदुक्तमयुक्तम्। अयोनिजब्राह्मणादिषु तदयोगात्, अर्वाचीनेषु जात्युपलक्षणमात्रमेतत्। यत्तु बाह्यैरुक्तं विरुद्धजातीयाभ्यां प्रजोत्पत्त्ययोगान्मनुष्यत्वावान्तरजातिभेदस्साङ्केतिक इति। तदसत्—अश्वगर्दभादिषु विजातीयसंयोगादपि तत्तत्प्रजोत्पत्तिदृष्टेः। तत्र सङ्कीर्णोत्पत्तिरिति चेत्तथात्रापि; अतस्संनिवेशातिरिक्ता जातिर्ग्राह्या। सत्यम्,— एतदर्थमपि स्वासाधारणं रूपम् इत्युक्तम्। आगमादिजनितानादिव्यवहारसिद्धेयं व्यवस्था सन्निवेशमन्तरेणापि साधीयसी। इदन्तु चिन्त्यम्।

* श्रुतप्रकाशिका *

प्रथमेतरगोव्यक्तिषु गवा सुसदृश इत्येव प्रयोगः स्यात् न तु गौरिति चेत्, यदि विवक्षा तदा प्रयुज्यताम्—अयं गौः, अयं गवा सुसदृश इति प्रयोगेऽर्थभेदाभावात्। किं तर्हि न प्रयुज्यत इति चेत् व्यवहारगौरवादिति ब्रूमः, गौरिति व्यवहारे हि लाघवात् सौकर्यमस्ति। ननु तर्हि तत्सदृशि तच्छब्दो माणवकेऽग्निशब्दवदौपचारिकः स्यात्. न,—सौसादृश्यलक्षणानुवृत्त्यभावनिबन्धनत्वादौपचारिकत्वस्य, न हि माणवकाग्न्योः सौसादृश्यं, किन्तु सादृश्यलेशमात्रम्, पक्षे तु सौसादृश्यलक्षणानुवृत्तिरुपलभ्यते, तस्य च मुख्यताहेतुत्वं वृद्धव्यवहारासिद्धम्, यथा जात्यादिशब्दानाम्, अतोऽनुवृत्तप्रयोग उपपन्नः। कस्मिंश्चिदर्थे कस्यचिच्छब्दस्य व्युत्पत्तिः तत्सुसदृशेऽर्थे सुसदृशस्य. तस्यैव शब्दस्य प्रयोगे हेतुरिति यथादर्शनमभ्युपगन्तव्यम् अप्रतिपन्नमर्थान्तरं कल्पयित्वा वृत्तिविकल्पादिदोषाणां प्रतीतिशरणतया परिहारादपि परिदृष्ट एव वस्तुनि प्रतीतिबलेन चोद्यपरिहारो लाघवन्यायादुपपद्यते। व्याप्तिग्रहणञ्च सौसादृश्यलक्षणानुवृत्तेरेवोपपद्यत इति तदपि न त्वदभिमतजातिकल्पकम्, अतः संस्थानानतिरिक्ता जातिः। ननु संस्थानस्यासाधारणाकारत्वात्तेन

❀ तत्त्वटीका ❀

अधिकजातिवादेपि समानसन्निवेशानामवान्तरजात्यादिव्यञ्जकव्यक्तिविशेषनिवृत्तिः कुत इति. अचिन्त्यविपाकादृष्टविशेषाधीनभूतपरिणतिविशेषादिति चेत्, एवं तर्हि तत् शब्दनिमित्तं स्यात्. एतदेव शमो दम इत्यादिषु क्रियाभेदाद्गुणभेदाद्वा वर्णादीन् व्यवस्थापयतामपि तात्पर्यम्। तावन्मात्रस्यातिप्रसङ्गित्वात्, तदयं सङ्ग्रहः।

सन्निवेशसमानत्वे—प्यारण्येयादिवह्निषु।
क्षीरभेदादिकेप्यस्ति शक्तिभेदस्तथास्ति नः ॥ ❀ ॥
उपलक्षणतो यत्र जातिर्व्यङ्ग्या तदेव सा।
यत्राश्रयस्वभावात्तु तत्राप्यस्तु स एव सः ॥ ❀ ॥
न चैवं सर्वधर्माणा—मपि शक्या निराकृतिः।
आविर्भावतिरोभाव— प्रभूतैस्तद्विरोधतः ॥ ❀ ॥
अगृहीतेपि दूरादौ धर्मो भात्यन्तिकेऽधिकः।
धर्मिग्रहेपि भेदस्य ह्यगृहीतौ भ्रमोदयः ॥ ❀ ॥

* श्रुतप्रकाशिका *

विना संस्थानिनः प्रतीत्यनुपपत्तेश्च शुक्त्यादौ रजतादिभ्रमो न स्यात्, न ह्यसाधारणाकारस्फूर्तौ भ्रमस्सम्भवतीति चेत् न; केनाऽपि संस्थानेन प्रतिपन्नवस्तुनि प्रतिपन्नसंस्थानाविरोध्याकारविषयभ्रमोपपत्तेः, प्रतिपन्नसंस्थानविरोध्याकारभ्रमस्यैव ह्युत्पत्त्यसम्भवः, इदं शुक्लमिति प्रतीतौ न कार्ष्ण्यादिभ्रमः, शौक्ल्यं हि शुक्लस्यासाधारणम् न शुक्तेः, अतोऽसाधारणाकारप्रतीतिर्भ्रान्तिश्चोपपद्यते। एवमापेक्षिकं चेदसाधारण्यं तर्ह्यसाधारणशब्दवैयर्थ्यं स्यात्। न हि किमपि रूपं कस्यचिदसाधारणं न भवतीति चेन्न, शुक्त्यपेक्षया शौक्ल्यस्य संस्थानत्वव्युदासार्थत्वादसाधारणशब्दस्य,

ध तत्त्वटीका ध

दर्शनस्पर्शनाभ्याम–प्येकार्थग्रहणं स्फुटम्।
रूपस्पर्शौ च धर्मी च भिन्नास्सिद्ध्यन्त्यतो मिथः॥ ध॥
भेदस्स्वरूपं धर्मो वेत्येवमादि च जल्पताम्।
विकल्पोपि कथं सिद्ध्येद्धर्मधर्मिभिदात्यजः॥ ध॥
संस्थानेऽप्येवसामान्य– सादृश्यादिगिरां पुनः।
अन्यान्वयपुरस्कारात् प्रतिसम्बन्ध्यपेक्षता॥ ध॥
घटस्यैव घटाभावा–भावोयमिति भाषणे।
प्रतियोगी पुरस्कार्य—स्सर्वैष्टस्तद्वदत्र नः॥ ध॥
संस्थानेष्वनुवृत्तत्व—व्याहतिश्च पुरोदिता।
मिथस्सादृश्यरूपत्वे तात्पर्यान्न विरुद्ध्यते॥ ध॥
सादृश्यादिस्वरूपत्वं यथादृष्ट्यत्र केषुचित्।
स्वभावतो भवेद्यद्वन्मिथस्सम्बन्धितादयः॥ ध॥
कथ्यते यैस्तु सादृश्यं संस्थानादिविलक्षणम्।
गुरुत्वं जातिगुप्तौ च धृतं तैर्जातिगुप्तिवत्॥ ध॥
सम्मतादतिरिक्तं वा सादृश्यं परिकल्प्यताम्।
आश्रयप्रतियोगादि– व्यवस्थानस्वभावतः॥ ध॥

किञ्च– कर्मणां तावन्न स्वरूपतोऽनेकानुवृत्तिः कालतः परिच्छेदात्. एवं कार्याणां गुणानामपि। संयोगादेरपि कतिपयानुवृत्तिमात्रम्। नित्यानाञ्च ततो

जातिग्रहणेनैव भिन्न इति व्यवहारसम्भवात्, पदार्था-

* श्रुतप्रकाशिका *

अतः स्वासाधारणरूपं संस्थानम् ततो नातिरिक्ता जातिरिति सिद्धम् । इत्थं संस्थानमेव जातिरित्युपपाद्य गोत्वादेरेव भेदत्वं पूर्वप्रस्तुतमुपपादयति ( जातिग्रहणेनेति ) प्रतियोगिनिरपेक्षो गोत्वादिः प्रतियोगिसापेक्षो भेदो भवितुं नार्हति, अतः प्रतियोगिसापेक्षेतरेतराभावो गोत्वाद्यतिरिक्तो भेदोऽभ्युपगन्तुमुचित इति शङ्कायामुच्यते (जातिग्रहणेनैव भिन्न इति व्यवहारसम्भवादिति) अयमर्थः,—गोत्वादिव्यतिरिक्तभेदमङ्गीकुर्वताप्यभावाभावे प्रतियोगिनिरपेक्षभावरूपपदार्थस्यैव प्रतियोगिसापेक्षाभावत्वमङ्गीकृतम्, अन्यथाऽनवस्थानादनुपलम्भाच्च, तद्वदत्रापि सम्भवति प्रतियोगिसापेक्षत्वस्य प्रतियोगिनिरूपितवेषप्रवृत्तिनिमित्तकशब्दस्वभावाधीनत्वेनार्थस्वरूपभेदहेतुत्वाभावादिति, एवमनुपपत्तिर्नास्तीत्युक्तम् । दर्शनञ्च नेत्याह ( पदार्था-

ॐ तत्त्वटीका ॐ

वैषम्यक्लृप्तिरयुक्ता ; अतस्तेषु कल्प्यमन्यसामान्यम् । तन्न; किं गुणकर्मसु जातिरुपलक्षणैर्व्यवस्थाप्या व्यावृत्तव्यक्तिस्वभावत एव वा ?

उपलक्षणतो यत्र जातिर्व्यङ्ग्या तदेव सा ।
यत्राश्रयस्वभावात्ते तत्राप्यस्तु स एव सा ॥ ७ ॥

अस्तु वा उपाध्यनुक्त्यैव यत्र क्वचित् काश्यपादिगणिता जातिः । तथापि द्रव्यादिषु चतुर्षु वानुवृत्तसत्ता जातिर्न कल्प्या, सत्तायास्तदभीष्टपदार्थान्तरेष्विव च सच्छब्दार्थे भावत्वप्रामाणिकत्वाद्युपाधितस्सम्भवात्, अतो लोकदृष्टं सद्वा सत्ता वा शास्त्रवेद्यं सर्वाधारभूतं ब्रह्म न भवतीति सिद्धम् । एवं संस्थानजातिपक्षे अतिरिक्तजातिपक्षेप्याद्यप्रत्ययस्य तद्विशिष्टविषयतया भेदग्राहित्वं द्रढयितुं प्रसक्तयोः साधितशेषमसद्व्यपदेशमात्राभिप्रेतयुक्त्या साधयति ( जातीति ) जातिशब्दाः इह प्रदर्शनार्थाः प्राक्पश्चाच्चादिशब्दोपादानात् । अत्र ह्यन्योन्याभावमतिरिक्तं कल्पयतामपि न जात्यदर्शने तद्धीः, अन्यथा कथमगृहीतगोत्वादेरश्वत्वादिभ्रमसन्देहौ । पृथक्त्वमपि न पृथक्कल्प्यम्, गुणादिष्वपि सम्भवतः पृथग्व्यवहारस्यान्योन्याभावेनैव चरितार्थत्वात् । अत एवात्यन्ताभावोपि नान्यः । गोत्वस्यैव गोरश्वाद्यन्योन्याभावतयाश्वत्वाद्यत्यन्ताभावतया च तदनन्यतदभावशब्दविषयत्वोपपत्तेः । तदिह भिन्न

न्तरादर्शनात्, अर्थान्तरवादिनाप्यभ्युपगतत्वाच्च गोत्वादिरेव भेदः। ननु च—जात्यादिरेव भेदश्चेत् तस्मिन् गृहीते

* श्रुतप्रकाशिका *

न्तरादर्शनादिति ) नामान्तरेणेतरेतराभावाभ्युपगमशङ्कां व्युदस्यति ( अर्थान्तरेति ) अर्थान्तरवादिना—इतरेतराभावरूपो भेदोऽप्यस्तीति वदतेत्यर्थः। पूर्वं प्रतियोग्यपेक्षया भेदव्यवहार इत्युक्तम् , अत्र तन्निरपेक्षगोत्वादिभेद उक्तः । तर्हि भेदव्यवहारोऽपि प्रतियोगिनिरपेक्षः प्रसजेदित्याभिप्रायेण चोदयति ( ननु चेति ) एकार्थविषयानेक-

७ तत्त्वटीका ७

इति व्यवहारोऽन्यथासिद्ध इत्यवधारणाभिप्रायः । माभूत्क्लृप्तिः, कथं दृष्टापह्नव इत्यत्राह ( पदार्थान्तरादर्शनादिति ) अन्यथा गौरवमप्याह ( अर्थान्तरादर्शनादिति) एवं क्वचित्पृथक्त्वसंज्ञान्तरं विशेषाख्यपदार्थान्तरञ्च न कल्प्यमित्यभिप्रायेणाह ( गोत्वादिरेव भेद इति ) गौरवात् । 'पृथग्व्यवहारस्य लक्षणरूपेणापि हेतुना व्यावृत्तिस्साध्या' इति वदन्तोप्यत्र लक्षणस्यैव भेदत्वोक्त्या निरस्ताः कथं हि पक्षस्य व्यतिरेकदृष्टान्ताद्भेदाग्रहे केवलव्यतिरेकिप्रवृत्तिः । कथमितराभ्यो भिद्यन्त इति साध्यप्रयोगः । व्युत्पत्तिस्तु वृद्धव्यवहारादिसाध्या तत्र किं लक्षणेन ? अन्यथा यथेष्टं यत्किञ्चिच्छब्दवाच्यत्वानुमित्यादिप्रसङ्गात् । इत इदं पृथक् इत इदमन्यदिति व्यवहारयोरव्यतिरेकार्थभेदो न कल्प्यः, अतः पृथक्त्वमपि गोत्वादिरेव । द्विपृथक्त्वादिक्लृप्तिस्तु दूरापास्ता । एवं नित्यद्रव्येषु विशेषोपि न कल्प्यः । मुक्तात्मादिषु गुणादिभिर्वैषम्यरहितेषु मिथो व्यावृत्तधीर्भेदकधर्ममन्तरेण कथं स्यादिति चेत्, प्रत्यक्षतोस्ति , शास्त्रादिनापि शुक्लत्वादिप्रसिद्धोपाधिरेव स्यात्, सा तावन्नास्मदीयानाम् । योगिप्रभृतीनामपि प्राचीनैरुपाधिभिरेव विचित्रैः प्रत्येकनिष्ठतया प्रत्यक्षितैर्भेददृष्टिस्स्यादेव । अलं तदन्यक्लृप्त्या। अस्ति चास्मन्मते प्रत्यात्मनियतः मुक्तावस्थायामप्यात्मनां स्वतन्त्रेच्छाहेतुक इच्छादिभेदः श्रुतिसिद्धः। यत्तु— पृथक्त्वैकजात्या समत्वाद्गुणादावपि समत्वाच्च पृथक्त्वं नैतेषु भेदकमित्याहुः । तदप्ययुक्तम्, अन्यत्रापि तस्याभेदकत्वप्रसङ्गात्, विशेषत्वोपाधिना समत्वेन कल्प्यानामप्यकिञ्चित्करत्वप्रसङ्गात् । वदन्ति हि 'विशेषलक्षणमनुवृत्तं जातिशून्यत्वे सत्येकवृत्तित्वम्'

तद्व्यवहारवद्भेदव्यवहारस्स्यात्। सत्यम्, भेदश्च व्यवह्रियत एव, गोत्वादिव्यवहारात्। गोत्वादिरेव हि सकलेतरव्यावृत्तिः, गोत्वादौ गृहीते सकलेतरसजातीयबुद्धिव्यवहारयोर्निवृत्तेः। भेदग्रहणेनैव ह्यभेदनिवृत्तिः।

* श्रुतप्रकाशिका *

चोद्यपर ईदृशश्चशब्दः। ( सत्यमिति ) प्रतियोग्यनपेक्षभेदस्वरूपव्यवहारेऽभ्युपगमः, भेदशब्दादिव्यवहारविशेषे त्वनभ्युपगमः, ( भेदश्च व्यवह्रियत एवेति ) न केवलं गृह्यते प्रतियोगिनिरपेक्षं व्यवह्रियते चेति चार्थः। उपपादयति ( गोत्वादिव्यवहारादिति ) कथं गोत्वादिव्यवहारे सति भेदव्यवहार ? इत्यत्राह ( गोत्वादिरिति ) गोत्वादिरेव कथं व्यावृत्तिरित्यत्राह ( गोत्वादाविति ) निर्दिष्टसामान्यानन्तरपरसामान्यापेक्षया तद्विशेषाणां सजातीयत्वं विवक्षितम्, अत्र तिर्यक्त्वेन सजातीयो महिषादिर्गोत्वव्यवच्छेद्यः। व्यावृत्तेः सजातीयबुद्धिव्यवहारनिवृत्तिहेतुत्वमस्तु ततः किं व्यावृत्तेर्भेदत्व इत्यत्राह ( भेदग्रहणेनैव ह्यभेदनिवृत्तिरिति) अभेदनिवृत्तिः— अभेदधीनिवृत्तिः। एवं गोत्वादेः प्रतीतौ हानोपादानादौ गोत्वादिशब्दव्यवहारे च

* तत्त्वटीका *

इति। अथैवं जात्यादिधर्माणां भेदत्वेपि स्वरूपाभेदपक्षे प्रागुक्तं चोद्यमवतारयति ( ननु चेति ) अत्र भेदव्यवहारशब्देन वस्तुतो भेदशब्दवाच्यस्य व्यभिचारो वा भेदत्वेन व्यवहारो वेति विकल्पं मत्वा पूर्वकोटिमिष्टतयाङ्गीकरोति ( सत्यमिति ) तद्विवृणोति ( भेद इति ) वस्तुतस्तत्तद्भेद रूपश्च जात्यादिर्व्यवह्रियत इत्यर्थः। कथमित्यत्राह ( गोत्वादीति ) ततोपि कथं तत्सिद्धिरित्यत्राह ( गोत्वादिरेवेति ) अत्र सकलेतरशब्दस्तत्तद्विरुद्धाकारविशिष्टपरः। भेदलक्षणं गोत्वादौ दर्शयति ( गोत्वादाविति ) इतरैः—सकलैर्विशेषतस्सजातीयत्वबुद्ध्यादिनिवृत्तैरित्यर्थः। यद्ग्रहाद्यत्र यदध्यासस्सर्वेष्टः यद्ग्रहे चासौ न स्यात् नहि तस्य तस्माद्भेदः तदेवाभेदनिवृत्तिः। तद्धीनिवृत्तिं व्यनक्ति ( भेदग्रहणेनेति ) एवकारो विरोधव्यञ्जकः। हिः प्रसिद्धौ। ननु भावस्यैवाभावत्वमनेकस्यैवैकाभावत्वमेकस्यानेकाभावत्वञ्च कथम् ? इत्थमेव, यथादृष्टि सर्वत्र विरोधाद्यभावात्। अभावाभावादौ परैरपि तथाङ्गीकाराच्च। एतेन

**अयमस्माद्भिन्न इति तु व्यवहारे प्रतियोगिनिर्देशस्य तदपेक्षत्वात्प्रतियोग्यपेक्षया भिन्न इति व्यवहार इत्युक्तम् ॥**

* श्रुतप्रकाशिका *

न प्रतियोग्यपेक्षेत्युक्तम् . तर्हि कथमयमस्माद्भिन्न इत्यत्र प्रतियोग्यपेक्षेति शङ्कायामाह ( अयमस्मादिति ) न हानादिव्यवहारे नापि शाब्दव्यवहारमात्रे, अपि तु शाब्दव्यवहारविशेष एवेति ज्ञापयति तुशब्दः । भेदश्च व्यवह्रियत एवेत्यादिना भेदग्रहणेनैव ह्यभेदनिवृत्तिरित्यन्तेन कस्यचिद्वस्तुनो वस्त्वन्तराद्व्यावर्तकधर्मस्यैव स्वयमेव स्वव्यावृत्तिरूपत्वसम्भवः । परनिर्वाहकत्वाभावे स्वनिर्वाहकत्वासम्भवात् . स्वरूपे प्रकाशमाने भ्रमविरोधिनश्च न व्यावृत्तिरूपधर्मान्तरापेक्षेत्युक्तं भवति; एवञ्च सति ब्रह्मणः कस्यचिद्वस्तुनो वस्त्वन्तराद्व्यावर्तकधर्मरूपत्वाभावात् स्वरूपे भासमाने अध्याससहत्वाच्च न स्वरूपमेव व्यावृत्तिरिति सिध्यति । ननु धर्मिणः स्वरूपमेव तद्गतभावाभावरूपसकलधर्मान्तरापेक्षया भेद इत्यन्ततो गत्वाऽभ्युपगन्तव्यम्, भेदान्तराभ्युपगमे तस्मात्स्वरूपस्य भेदापेक्षायामनवस्थाप्रसङ्गात् । सत्यम्,—स तु स्वरूपभेदो नाध्यासविरोधी, तन्निवृत्तौ धर्मान्तरान्वयसापेक्षत्वात् . पटद्रव्यस्य रूपाव्यतिरेकभ्रमो हि स्पर्शसामानाधिकरण्यबुद्धिनिवर्त्यः, अतो धर्मिस्वरूपस्य स्वगतधर्मापेक्षया भ्रमविरोधिभेदो धर्मान्तरान्वयः । अतो धर्माणां स्वरूपस्यैव स्वाश्रयस्य स्वविरुद्धधर्मान्तरधर्म्यन्तरापेक्षयाऽध्यासविरोधिभेदत्वसम्भवः । विशिष्टस्य तु वस्तुनः स्वरूपमेव विशिष्टं स्वविरुद्धविशेषणविशिष्टवस्त्वन्तराद्व्यावृत्तिरिति च युक्तम् । अर्थान्तरैक्यभ्रमविरोधित्वात् . तत्र विशेषणापेक्षया विशेष्यस्य स्वरूपमेव भेदः, विशेष्यापेक्षया विशेषणस्य स्वरूपमेव भेदः, तदुभयापेक्षया च सम्बन्धस्य स्वरूपमेव भेदः, विशिष्टस्य विशिष्टान्तरापेक्षया स्वरूपमेव भेदः, स्वरूपस्य भेद इति निर्देशस्तु पदार्थस्वरूपमितिवदनतिरिक्तार्थः । तत्तदसाधारणशब्दवाच्यं स्वरूपम् . स च शब्दो

ꣳ तत्त्वटीका ꣳ

निर्विशेषेप्यतद्व्यावृत्तिरूपधर्मसत्यत्वपक्षेपि तैरेव भावरूपधर्मायमाणैस्तत्प्रतिबन्द्या वा भावरूपधर्मवत्त्वे सिद्धे द्वितीयकोटौ दत्तोत्तरत्वमाह ( अयमिति ) प्रतियोगिनिर्देशस्य—प्रतियोगिना निर्देशस्य । तदपेक्षत्वात्—प्रतियोगिधीसापेक्षत्वादित्यर्थः ।

यत्पुनर्घटादीनां विशेषाणां व्यावर्त्तमानत्वेनापारमार्थ्य-मुक्तम्, तदनालोचितबाध्यबाधकभावव्यावृत्त्यनुवृत्ति-

* श्रुतप्रकाशिका *

व्युत्पत्तिसिद्धः, प्रतियोगितयाऽभिमतार्थान्तरैक्यधीविरोधि वा स्वरूपम्; अतः कस्य-चिद्धर्मत्वाभावात् धर्मविशिष्टत्वाभावात् स्वरूपे भासमानेऽपि भ्रमसहत्वाच्च ब्रह्मणः स्वरूपमेव जडत्वाद्यध्यासविरोधिनी व्यावृत्तिर्भवितुं नार्हतीति सिद्धम्। इत्थं प्रमाण-प्रमेयानुपपत्ती परिहृते॥ *॥ अथ परोक्तमनुमानमनूद्य दूषयति ( यत्पुनरित्यादिना ) पुनःशब्दः केवलतर्कादनुमानस्य वैषम्यं द्योतयति। दृश्यत्वानुमानस्य सूत्रकारैरेव दूषयिष्यमाणत्वाद् वक्ष्यमाणदूषणस्य मिथ्यात्वविषयसर्वानुमानानां दूष्यत्वप्रदर्श-नार्थत्वाच्च व्यावर्त्तमानत्वानुमानमिह दूष्यते। साधारणदूषणानि कालात्ययापदेश-सोपाधिकत्वव्याघाताः, तत्राश्रयः प्रतीतो न वा? न चेदाश्रयासिद्धिः, प्रतीतत्वे प्रतीतिश्च प्रत्यक्षादिप्रमाणैः सत्यत्वेनेति तस्य मिथ्यात्वसाधनं धर्मिग्राहकप्रमाणबाधि-तम्. प्रतिपन्नोपाधौ बाधितत्वस्य मिथ्यात्वे प्रयोजकतया सोपाधिकत्वञ्च वक्ष्यते, तत्र देशकालविषयभ्रमेष्वपि वस्त्वन्तरस्योपाधित्वादनुदितबाधकज्ञानेषु भ्रान्तिष्वपि चोदयितृपुरुषज्ञानेन बाधितत्वाच्च विशेषणविशेष्यांशसिद्धेर्विशिष्टोपाधिसिद्धिरिति

७ तत्त्वटीका ७

तदपेक्ष्यत्वादिति पाठे तु प्रतियोगिनो निर्देशस्य भिन्न इति व्यवहारेणापेक्षणीयत्वा-दिति भाव्यम्। उक्तम्— भेददूषणनिस्तारोपक्रमे।

भेदसाधकवर्गस्य भेदसिद्ध्युपजीविनः।
तत्साधकत्वायुक्तिश्च दुर्भणा स्वोक्तभङ्गतः॥ ७॥
भेदोऽस्तीति विधानन्तु भवेत्स्वपररक्षकम्।
स नास्तीति निषेधस्तु मूलघ्नस्वात्मघातकः॥ ७॥

एवं भेदस्य मानाद्यनुपपत्तिर्निरस्ता। तथानुमानबाधं दुदूषयिषुरनुवक्ति ( यत्पुनरिति ) हेतौ सोपाधित्वं विवक्षुः प्रयोजकानभिज्ञमुपालभते ( तदिति ) बाध्यबाधकभावस्सर्वत्र विरोधगर्भः, व्यावृत्तविशेष एव मिथ्यात्वसाधकः, अनुवृत्ति-विशेष एव सत्यत्वसाधक इत्यनालोचनात्तत्सामान्ये बाधकत्वभ्रान्त्या तदुक्तिरित्यर्थः।

* श्रुतप्रकाशिका *

विस्तरेण वक्ष्यामः । साध्यधर्मस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये चेदद्वैतहानिः, दृश्यत्वहेतोरनैकान्त्यञ्च । परमार्थेऽपि तस्य वृत्तेरपारमार्थ्ये प्रपञ्चसत्यता, "बाधकबाधे बाध्यस्वरूपाबाध" इति न्यायात् । अत एव हि "द्वौ नञौ प्रकृतमर्थं सूचयत" इति शाब्दप्रसिद्धिः । धर्मे धर्मान्तरारोपणेन प्रत्यवस्थानादियं नित्यसमा जातिरिति न वाच्यम्; अप्रामाणिकधर्मपरम्परापादनेन दूषणं हि नित्यसमा । मिथ्यात्वमिथ्यात्वं प्रामाणिकम्, माध्यमिकोक्तस्य ज्ञानबाध्यत्वस्य भवता बाध्यत्वाभ्युपगमात् परमार्थरज्जौ रज्जुबुद्धेः सर्पबुद्ध्या बाध्यत्वस्य बाध्यत्वदर्शनाच्च । तर्हि सत्यत्वेऽपि सत्यत्वं किमस्ति ? उत नास्ति ? न चेदसत्यं जगत्स्यात्, अस्ति चेत्तस्यापि सत्यत्वमित्यनवस्थेति चेन्न; स्वपरनिर्वाहकत्वाभ्युपगमात् । यदि त्वया मिथ्यात्वेऽपि स्वपरानिर्वाहकत्वमङ्गीक्रियते तर्हि मिथ्यात्वस्यैव स्वमिथ्यात्वनिर्वाहकत्वान्मिथ्यात्वं मिथ्यात्वान्तरमनपेक्ष्य स्वयमेव मिथ्येति प्रपञ्चः सत्यः स्यात् । साधनस्य पारमार्थ्यापारमार्थ्यविकल्पे कृते पारमार्थ्ये अद्वैतहानिः, अपारमार्थ्ये धूमबुद्ध्या गृहीतबाष्पवदसाधकत्वमिति व्याघातः, भेदवादिनापि हि न प्रपञ्चसत्यत्वहेतुसत्यत्वसाधनपूर्वकमनुमानान्युपन्यस्यन्ते, तथापि तदुपपद्यते तद्वन्ममापीति चेन्न, सत्यत्वासाधनेऽपि नास्माकं स्वाभ्युपगमव्याहतिः । तव तु मिथ्यात्वाभ्युपगमसाधकत्वाभ्युपगमव्याहतिरिति वैषम्यात् । ननु न साधनधर्मपारमार्थ्यमपेक्षितम्. नाशके मुद्गरे नष्टेऽपि पूर्वनष्टो घटो नष्ट एव दृष्टः, नोत्पन्नः, तद्वद्बाधकज्ञानस्य मिथ्यात्वेऽपि तद्बाधितस्य मिथ्यात्वं तिष्ठत्येवेति चेन्न; कारकज्ञापकयोर्वैषम्यात् । नाशको हि कारकः, अतस्तन्नाश्यस्य तस्मिन्नष्टेऽपि नाश एव, तथा दर्शनात्. बाधकञ्च ज्ञापकम्, तस्मिन् बाधिते तद्बाध्यं च सत्यमेव स्यात्. अपवरकस्थघटाभावे केनचिदुक्तेऽस्तीतिवचनेन बाधिते घटसत्यत्वदर्शनात्, बाधकबाधे पूर्वबाधितस्य सत्यत्वं वक्तुमयुक्तम् । वृन्तविषयभ्रमरत्वभ्रमबाधेऽपि भ्रमरत्वबुद्धिबाधितस्य पलाशपुष्पविषयाग्निभ्रमस्य अबाधितत्वदर्शनादिति चेत्; तत्र किं वस्तुनिवृत्तिर्बुद्धिनिवृत्तिर्वोच्यते ? न प्रथमः,—दावत्वस्य परमार्थभूतवृन्तबाध्यत्वदर्शनात्, बुद्धिनिवृत्तिश्चेत् सा न बाधकाधीना. ज्ञानानां क्षणिकत्वात् स्वयं निवृत्तेः, भ्रमरबुद्धिस्तूत्तरकालीनदावबुद्ध्युत्पत्तिप्रतिबन्धिका । तत्प्रतिबन्धकत्वञ्च

* श्रुतप्रकाशिका *

भ्रमरपारमार्थ्यबुद्धेरेव, अन्यथा पूर्वभ्रमनिवृत्त्यभावदर्शनात् ; ततश्च त्वन्मते कदाचिदपि न निश्शेषभ्रमनिवृत्तिस्सिध्यति, बुद्धिनिवृत्तेर्बाधकविज्ञानजन्यत्वपक्षेपि निवर्त्तकज्ञानानां सर्वेषां भ्रान्तिरूपोत्तरोत्तरनिवर्त्तकज्ञानापेक्षतया भ्रमपरम्पराप्तेः। उत्तरस्य कस्यचित् ज्ञानस्य स्वयंनाशे काल्पनिकघटादिनाशस्येव तन्नाशस्य काल्पनिकत्वान्नाशक्लृप्तिरूपभ्रान्तिः स्थिरेति निश्शेषभ्रमनिवृत्तिरूपो मोक्षोऽनुपपन्न इति कृत्स्नमिथ्यात्वनिश्शेषाविद्यानिवृत्तिव्याघातः, एवमादिव्याघाता अनुसन्धेयाः। सोपाधिकत्वं चानन्तरमेव वक्ष्यते। दृश्यत्वव्यावर्तमानत्वयोरसाधारणं दूषणं ब्रह्मण्यनैकान्त्यम्। अध्यस्तं स्वाधिष्ठानसमानाधिकरणतया वेद्यं यथा इदं रजतमिति, एवं घटस्सन् पटस्सन्नित्यधिष्ठानस्य सतः प्रपञ्चस्य चैकधीवेद्यत्वाद्दृश्यत्वमनैकान्तिकम्। यद्यपि नभो मलिनमित्यध्यासे नभसोऽचाक्षुषत्वादेकधीवेद्यत्वमध्यस्ताधिष्ठानयोर्न नियतम्, तथापि सन्मात्रस्य प्रत्यक्षग्राह्यत्वं परोपगतमिति सिद्धमनैकान्त्यम्। ननु दृश्यत्वनियमोऽत्र हेतुतया विवक्षितः, दृश्यत्वनियमः सतो नास्ति सतः स्वयंप्रकाशत्वात्। तदपि कथम्? सदनुभूत्योर्भेदाभावादिति चेन्न, अन्योन्याश्रयणात् ; सदनुभूत्योर्भेदाभावे सिद्धे सतः स्वयंप्रकाशत्वेन दृश्यत्वनियमासिद्धेर्दृश्यत्वहेतोरनैकान्त्यपरिहृतिः, अनैकान्तिकत्वे परिहृते भेदभाव इति। यद्यनुमानान्तरेण भेदनिषेधः, तर्ह्यस्मिन् सिद्धसाध्यता; एवं परोपगमेनैकान्त्यमुक्तम्। किञ्च ब्रह्मणो दृश्यत्वं श्रुतिसिद्धम् "दृश्यते त्वग्र्यया बुद्ध्या" 'आत्मा वा अरे द्रष्टव्यः" इति। अनुभूतित्वादित्याद्यनुमानेन दृश्यत्वाभावे साध्ये कालात्ययापदेशः,। 'यत्तदद्रेश्य'मिति वाक्याद्दृश्यत्वश्रुतिर्बाध्येति चेन्न, दृश्यत्वसामान्यनिषेधपरत्वात्तस्य 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि'रित्यस्य दृश्यत्वविशेषविधानविषयत्वाच्च। "न चक्षुषा गृह्यते नापि वाचा 'नान्यैर्देवैः, 'मनसा तु विशुद्धेन" इत्यादौ दृश्यत्वविशेषनिषेधदर्शनादद्रेश्यमित्यादिसामान्यनिषेधस्य तत्पर्यवसायित्वाच्च। अद्रेश्यमित्यादिसामान्यश्रुत्या दृश्यत्वाभावसाधकानुमानेन च ब्रह्मणो न दृश्यत्वमिति चेन्न, तर्हि 'न हिंस्यात् सर्वाभूतानि' इति सामान्यनिषेधश्रुत्या हिंसात्वादित्यनुमानेनच अग्नीषोमीयहिंसानिवृत्तिप्रसङ्गात् ; अतो ब्रह्मणि दृश्यत्वमनैकान्तिकम्, अनैकान्तिके परिजिहीर्षिते ब्रह्मणो मिथ्यात्वं वाभ्युपगन्तव्यं स्यात्, दृश्यतैकस्वभावत्वं हि हेतु-

विशेषस्य भ्रान्तिपरिकल्पितम् ॥ द्वयोर्ज्ञानयोर्विरोधे हि

* श्रुतप्रकाशिका *

त्वाभिमतमिति नानैकान्त्यम्, ब्रह्म हि स्वयंप्रकाशमिति न दृश्यतैकस्वभावमिति चेन्न, तदानीं हेतोर्भागासिद्धिः स्यात्, चिदचिदात्मके प्रपञ्चे जीवांशस्य स्वयंप्रकाशत्वात्. अचिदंशमात्रपक्षीकारे हेतोर्जीवगतनित्यत्वादिधर्मेष्वनैकान्तिकत्वम्; ते हि तद्धर्मभूतज्ञानवेद्या एव परमार्थभूताश्च. व्यावर्त्तमानत्वमपि ब्रह्मण्यनैकान्तिकम्, अनृतादिभ्यो व्यावृत्तत्वेनाभ्युपगमात् । तच्च स्वरूपमात्रमिति न शक्यं वक्तुम्, ब्रह्मणः कस्यचिद्धर्मत्वाभावादध्यासासहत्वाच्च। व्यावर्त्तमानत्वस्य स्वरूपत्वेऽपि तत्त्वकार्यकरम् अनुभूतित्ववत्. हेतोः स्वरूपानतिरेकेऽपि साधनदशायां कार्यकरत्वम्, न तु दूषणदशायामिति नियामकाभावात् । किञ्च ब्रह्मणि स्वरूपं व्यावृत्तिश्चेत् घटादिष्वपि तथाऽस्तु, यदि ब्रह्मणि स्वरूपातिरिक्ता सा तर्हि घटादिष्वपि तथा स्यात् । सर्वथानैकान्त्यमवर्जनीयम् । जडादिव्यावृत्तत्वं ब्रह्मणोऽपरमार्थश्चेद्वस्तुतो ब्रह्म जडमेव स्यात् अपरमार्थशब्दश्च निष्फलः, घटादावपि व्यावर्त्तमानत्वस्य मिथ्यात्वेन व्यावर्त्याभावात्, ततश्चानैकान्त्यं सुस्फुटम्, अपरमार्थस्यैव हेतुतया त्वयाङ्गीकृतत्वात् तस्य च विपक्षेऽपि वर्त्तमानत्वात्। किञ्च अनुवर्त्तमानस्य सन्मात्रस्य व्यावर्त्तमानेभ्यो घटादिभ्यो व्यावृत्तिरस्ति वा न वा? अस्ति चेत् तत एव व्यावर्त्तमानत्वहेतुर्ब्रह्मण्यनैकान्तिकः, नो चेत् घटादिष्विव व्यावर्त्तमानत्वं ब्रह्मणि स्यात्, व्यावर्त्तमानेभ्यो व्यावर्त्तमानत्वाभावात् । यथा रजतादव्यावृत्तं रजतं, तथा व्यावर्त्तमानादव्यावृत्तमपि हि व्यावर्त्तमानमेव भवति, अथ उभयथापि ब्रह्मण्यनैकान्त्यम् । ननु ब्रह्म जडादिव्यावृत्तमेव, व्यावर्त्तमानत्वं च सत्यम्. तच्च स्वरूपमिति नाद्वैतहानिः, तस्य च सत्यत्वान्न जडत्वादि ब्रह्मणः, ततश्च नानैकान्त्यम् । अपरमार्थभूतं घटादिगतं व्यावर्त्तमानत्वं हि हेतुरिति चेत् यद्यपरमार्थभूतं व्यावर्त्तमानत्वं हेतुतया विवक्षितं तर्हि असिद्धो हेतुः, घटादीनां मिथो व्यावृत्तेरसत्यत्वोपगमात् यत्पुनरित्यादिना सोपाधिकत्वं प्रतिजानीते । पूर्वं परेण बाधस्यापि पक्षादव्यावृत्त्युपपादनेनोपाधित्वं प्रत्युक्तम्; तद्व्युदासाय पक्षे बाधाभावं दर्शयितुं बाधं शिक्षयति (द्वयोरिति) विरोधे

* तत्त्वटीका *

कथमत्र बाध्यबाधकभावस्यानालोचितत्वमित्यत्राह (द्वयोरिति) ज्ञानयोर्विरोधोत्र

बाध्यबाधकभावः । बाधितस्यैव व्यावृत्तिः । अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति । यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः, तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत् तत्र विरोधाद्बल-

* श्रुतप्रकाशिका *

सत्येव बाध्यबाधकभावः, न त्वस्तिनास्तीतिप्रत्ययमात्रयोरित्यर्थः । ( बाधितस्यैव व्यावृत्तिरिति ) प्रतिपन्नोपाधौ बाधितस्यैव मिथ्यात्वसाधिका व्यावृत्तिः, न त्वगृहीतत्वमात्रं मिथ्यात्वसाधकमित्यर्थः । अत्र व्यावृत्तिविशेषो व्यावृत्तिशब्दोक्तः उत्तरत्र व्यावर्तमानत्वमात्रमिति मात्रच्प्रत्ययसद्भावात् । ततः किं पक्षे बाधाभावस्येत्यत आह ( अत्रेति ) देशयोः कालयोश्च भेदे सत्यविरोधं दर्शयितुं तयोरैक्ये विरोधबाधौ दर्शयति ( यस्मिन्निति ) भावाभावविरोधादन्यतरस्य बाध्यत्वे सति बलवत्तो बाधकत्वमितरस्य बाधितत्वान्निवृत्तिश्चेत्यर्थः । च एवार्थे । बाधितस्यैव स्वद-

* तत्त्वटीका *

विषयविरोधायत्त । अत्र व्यावर्तमानत्वमात्रमप्रयोजकं तद्विशेषस्त्वसिद्ध इत्यभिप्रायेणाह (बाधितस्येति) व्यावृत्तिशब्देन प्रतिपन्नोपाधौ निषेधप्रतियोगित्वलक्षणव्यावृत्तिर्विवक्षिता, अन्यथाऽवधारणायोगान्न व्यावर्तमानत्वमात्रमिति वक्ष्यमाणत्वाच्च. तदिह प्रयोजकस्यासिद्धत्वं सिद्धस्याप्रयोजकत्वञ्च हार्दम् । ननु सच्छब्दवाच्ये ब्रह्मणि घटादेः प्रतीतत्वात्तत्रैव निषेधाच्च शुक्तिरूप्यस्येव विधिनिषेधयोर्विरोधस्सिद्ध इत्यत्राह ( अत्रेति ) घटादिष्वस्तिनास्तिबुद्ध्योरित्यर्थः । एवकारो बाधस्य मूलाभावेन कैमुत्यनिरस्तत्वार्थः । अयं भावः,—ब्रह्मरूपं सन्नासदादेर्दृश्यम् - दृष्टन्तु सन्न घटादेस्साधारतया भाति तद्रूपत्वात्, तत्र च निषिद्धे तास्मिन्निति मध्ये तन्मिथ्यात्वायोगात्, घटत्वादिधर्मास्तु शुक्तौ रूप्यत्ववत् स्वाश्रयभूते घटादौ सच्छब्दोक्तेन निषिध्यन्ते, सत्ता च घटादिधर्मतया न तद्दृशत्वशङ्कार्हा, सम्प्रतिपन्नौ घटादिविधिनिषेधदेशकालौ तु भिन्नाविति बाधरूपस्योपाधेस्साधनव्यापकत्वपरिहाराय देशकालैक्यतो विरोधबाधव्यावृत्तीशिक्षयति (यस्मिन्निति ) देशकालग्रहणमुपलक्षणम् , देशकालादीति वक्ष्यमाणत्वात् , तत्रादिशब्देन कालाद्यवच्छेदकः क्रियादिस्तत्तदधिष्ठानस्वरूपञ्च गृह्यते ।

वतो बाधकत्वं बाधितस्य च निवृत्तिः । देशान्तरकाला-
न्तरसम्बन्धितयानुभूतस्यान्यदेशकालयोरभावप्रतीतौ
न विरोध इति कथमत्र बाध्यबाधकभावः ? अन्यत्र निवृ-
त्तस्यान्यत्र निवृत्तिर्वा कथमुच्यते ? रज्जुसर्पादिषु तु तद्दे
शकालसम्बन्धितयैवाभावप्रतीतेर्विरोधो बाधकत्वं न्या-

* श्रुतप्रकाशिका *

भिमतव्यावृत्तिविशेष इत्यर्थः । सामानाधिकरण्यानर्हत्वं विरोधः, अदुष्टकारणजन्या निषेधधीर्बाधः । अदुष्टकारणजन्यत्वे सति निषेधरूपत्वं बाधकत्वम् । पुरोवर्तिन्यभावोऽनवभासो वा सत्यत्वावभासाभावो वा निवृत्तिः, पक्षे घटादौ देशकालभेदेन विरोधबाधाभावावुपपादयति । (देशान्तरेति) विरोधबाधाभावात्तत्फलभूतनिवृत्तिरपि नेत्याह (अन्यत्रेति) अन्यत्र निवृत्तस्य—विरोधबाधस्थले निवृत्तस्य । अन्यत्र—विरोधबाधरहितस्थले । यद्वा, अन्यत्र—स्वदेशकालव्यतिरिक्तदेशकालयोः । अन्यत्र—स्वदेशकालयोः । एतद्वैधर्म्यं दृष्टान्तेन विवृणोति (रज्जुसर्पादिष्विति) तुशब्दो घटादिवैषम्यपरः । इत्थं दूषणोपयोगिनी व्याप्तिः शिक्षिता । अथानुमानदूषणासिद्धि

७ तत्त्वटीका ७

देशकालौ विहायापि ह्यन्यत्वं क्वापि कल्प्यते ।
तदेव तत्राधिष्ठानं प्रतीतोपाधिशब्दभाक् ।
देशकालान्तरत्वञ्च कल्प्यते देशकालयोः ॥ ७ ॥

अनवस्थितिपरिहाराय बलवत इत्युक्तम् । चकारो विरोधबाधाभ्यां सह निवृत्तेस्समुच्चयार्थः । बाधितस्यैवेत्यवधारणार्थो वा । पूर्वोक्तव्यावृत्तिविशेष एवात्र निवृत्तिशब्देनाप्युक्तः । पक्षीकृते विरोधादित्रिकं नास्तीत्याह (देशान्तरेति) अन्यत्रशब्दो विरोध्यभाव—तत्सद्भावस्थापनपरौ, स्वदेशादौ निवृत्तिवचनमनन्यनुष्णात्ववत्स्यात् । ततोन्यत्र साधने तु सिद्धसाध्यता साध्याविशेषश्चेत्यभिप्रायेण कथमुच्यत इत्युक्तम् । बाधफलभूताविषयनिवृत्तिर्व्यावृत्तिरिति हि पूर्वपक्षोक्तम् । स्वपक्षे विरोधान् व्यनक्ति (रज्जुसर्पादिष्विति) देशकालविशेषसमुदायस्य प्रतिपन्नोपाधित्वाद्दृष्टप्रकारेण परोक्त

## वृत्तिश्चेति ×देशकालान्तरव्यावर्त्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्त्तमानत्वमात्रमपारमार्थ्यहेतुः ॥

* श्रुतप्रकाशिका *

दर्शयति (इति देशकालान्तरेति) इतिर्हेतौ। मिथ्यात्वं व्यापकम्, व्यावर्तमानत्वं व्याप्यम्, व्यावर्तमानत्वमात्रमिति मात्रशब्देन विरोधबाधहेतुकव्यावृत्तिर्व्यावर्त्त्यते। यद्वा, व्यावर्त्तमानत्वहेतोरसिद्धिं प्रतिजानीते—यत्पुनरित्यादिना। तदर्थं बाधमूलं विरोध इत्याह—द्वयोरिति। पक्षे तदभावं दर्शयति—अत्रेति। विरोधाभावमुपपादयति—यस्मिन्निति। तत्फलनिवृत्तिमाह—अन्यत्रेति। दृष्टान्ते तद्वैधर्म्यं दर्शयति—रज्ज्वति। एवमसिद्धिं वक्तुं विभागो दर्शितः। अथासिद्धिमाह— इति देशकालान्तरेति। सोपाधिकत्वमार्थम्। अयमर्थः, किं— पटोऽस्तीत्यत्र घटाभावः सिषाधयिषितः? उत घटोऽस्तीत्यत्रापि तदभावः? प्रथमे सिद्धसाध्यता। द्वितीये व्यावर्त्तमानत्वशब्देन किं व्यावृत्तिबुद्धिबोध्यत्वं मिथ्यात्वहेतुतया विवक्षितम्? उत प्रतिपन्नोपाधौ बाधितस्य व्यावृत्तिः।? प्रथमे सोपाधिकत्वम्। द्वितीये हेत्वसिद्ध्या घटादेः सत्यत्वमिति। ननु बाधार्हताया उपाधित्वे साध्याविशिष्टता

* तत्त्वटीका *

हेतोर्व्याप्त्यभावं तत एवासाधकत्वञ्चाह (इतीति) पूर्व इतिः प्रकारे। उत्तरो हेतौ। मात्रचा बाधफलत्वव्युदासः। अत्रेदमाकूतम्,— व्यावर्त्तमानत्वं नाम, किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वं वा? कुतश्चिदन्यत्वं वा? कस्याश्चिद्बुद्धेरविषयत्वं वा? प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा? अन्यद्वा किञ्चित्?। नाद्यः,—उक्तस्य बाधितत्वस्योपाधित्वात्। असत्यस्य खनैर्मल्यादेर्बाधादर्शनान्न साध्यव्यापकत्वमिति चेत्— न; ईश्वरादिबुद्ध्या बाधसिद्धेः त्वया च कुतश्चिदसत्यत्वं तस्य गृहीत्वा चोद्यते। नच तस्योपाधेस्साध्याविशिष्टत्वम्, अपरमार्थशब्देन मिथ्यात्वस्य बाधार्हत्वसदसदन्यत्वादेर्वा विवक्षितत्वे तदयोगात्। पूर्वपक्षोक्तं मिथ्यात्वलक्षणमपि बाधार्हत्वमेव। बाधितत्वस्यैव साध्यत्वे योग्यानुपलब्ध्या कालात्ययापदेशात् सर्वदा सर्वेषामबाधितत्वं दुर्ज्ञानमितिचेत् ब्रह्मणि कस्समाश्वासः?—

× देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्त्तमानत्वम् इति . पा.

* श्रुतप्रकाशिका *

स्यादिति बाधितत्वमेवोपाधिः स्यात् . तस्य न साध्यसमव्याप्तिः । असहायेन गच्छता पथि दृष्टस्य रज्जुसर्पस्य केनाप्यबाधितत्वादिति चेत् । नैवम्,—ईश्वरादिज्ञानेन बाधितत्वनियमात्, अनभ्युपगतेश्वरादीनां पक्षेऽप्ययमुपाधिरेव, किं त्वया तस्य पथि दृष्टस्य रज्जुसर्पस्य मिथ्यात्वं प्रमाणतोऽवगतम् न वा ? न चेत् सम्यक् सर्प एवेति तत्रावृत्तिर्न साध्यसमव्याप्त्यभावाय स्यात्, अवगतं चेत् तत एव ज्ञानात्तस्य बाधितत्वं सिद्धमिति साध्यसमव्याप्तिसिद्धिः । ननु किं प्रतिपन्नोपाधौ बाधो मिथ्यात्वे प्रयोजकः ? उत केवलबाधः ? प्रथमे,—देशकालयोरुपाधित्वात्

७ तत्त्वटीका ७

अनिर्वाच्येषु बाधश्च स्वकालासत्त्वमावहन् ।
जनिध्वंसाभ्युपगमा—द्दुर्वचो जनिबाधतः ॥ ७ ॥
पश्चादभावः कार्येषु न साध्यस्सिद्धसाधनात् ।
नित्येषु तु विरुद्धत्वान्न चेद्ब्रह्मणि का गतिः ॥ ७ ॥
नित्यानित्यश्रुतिप्राप्तं ब्रह्मान्यत्कल्पनापदम् ।
ब्रह्मण्यपि तथात्वोक्तिरविशेषात् प्रसज्यते ॥ ७ ॥

ग्राहकाद्यनुपपत्त्या भेदबाधस्तु प्रागेवापास्तः । ब्रह्मणि चानिर्वाच्यनिष्ठात्यन्ताभावप्रतियोगित्वं नैकान्त्यम् । यदि तस्मिन्नयं धर्मो मिथ्या तथासत्यस्यानिर्वाच्यधर्मत्वप्रसक्तिः । अन्ततस्स्वनिष्ठात्यन्ताभावप्रतियोगित्वञ्च सिद्धम् । अन्यथात्माश्रयापातात्, आत्माधारत्वोक्तिरन्यपरा । न द्वितीयः,— ब्रह्मण्यनृतजडाद्यन्यत्वस्य त्वयैवोक्तेः । तन्मिथ्यात्वे च सत्यपरिशेषे व्यावर्त्यासिद्धेस्तत्प्रतियोगिकव्यावृत्तिविधिविरोधो ऽद्वैतमतभङ्गश्च जायते । असत्यपरिशेषे निरधिष्ठानभ्रमः, विरुद्धोभयैक्ये जैनादिप्रस्थानम् । व्यावर्त्तमानतादात्म्याच्च सतोऽपि तथात्वापत्तिः । मिथ्याभूतमेव च व्यावर्त्तमानत्वं घटादौ मिथ्यात्वसाधकं मन्यसे, ब्रह्मण्यपि स्यात् । न तृतीयः,— सतोऽप्यसद्बुद्धेरनिर्वाच्यतद्विषयत्वे च तद्व्यावृत्तिसाधनायोगात्, स्वप्रकाशस्य सर्वबुद्ध्यविषयत्वाद्वा भ्रान्त्या तद्विषयत्वं स्यादिति चेत्, तद्वत्पक्षीकृतेपि सर्वधीवेद्यत्वभ्रमस्स्यादिति हेत्वसिद्धिः । त्रिष्वपि कल्पेषु सत्यानुमानदृष्टान्ततया त्वयैवोक्ते सर्पाद्यधिष्ठानरज्ज्वादौ हेतुप्रवृत्तिर्दुर्वारा । कथञ्चित्कस्यचित्सत्यत्वसाधनेऽन्वयदृष्टान्तस्य तदन्यासत्यत्वस्य

* श्रुतप्रकाशिका *

देशकालभ्रमस्य देशकालोपाधिकत्वाभावेन सर्वसपक्षाननुयायित्वेन साध्यसमव्याप्त्यभावात् प्रतिपन्नोपाधौ बाधो नोपाधिः स्यात्. द्वितीये कृत्स्नमिथ्यात्वमिति । अत्रोच्यते,—न हि देशकालावेवोपाधिरिति नियमः, किन्तु वस्त्वन्तरमप्युपाधिः, उपाधिरवच्छेदकः, अत एव हि देशकालादिप्रतिपन्नोपाधौ अबाधितत्वादित्यत्रादिशब्देन वस्त्वन्तरस्याप्युपाधित्वं भाष्यकारैर्वक्ष्यते; तस्माद्देशकालभ्रमे वस्त्वन्तरमुपाधिः। देशकालभ्रमस्य वस्त्वन्तरोपाधिकत्वेऽपि वस्तुभ्रमस्य देशकालोपाधिकत्वे नान्योन्याश्रयः, भ्रमव्यक्तिभेदात्; तस्माद्यदवच्छेदकावच्छिन्नं यत्प्रतिपन्नं तदवच्छेदकावच्छिन्नस्य

७ तत्त्वटीका ७

पक्षीकारः । व्यावहारिकव्यवस्थया दृष्टान्तत्वेपि तथैव तत्रासत्यत्वसाधनं बाध्येत । परमार्थसत्यत्वनिषेधे तु तद्दृष्टान्तेन ब्रह्मण्यपि व्यावहारिकसत्यत्वं वा सत्यत्वमात्रं वा निदर्शितं स्यात् . तथाच न विवक्षितासिद्धिः । परमार्थसत्यमितिसाधनेन कथञ्चिद्दृष्टान्तासिद्ध्येत् । चतुर्थस्तु,—देशान्तरेत्यादिना निरस्तः । पञ्चमोपि,— यदि सर्ववृत्तिस्तदा नैकान्त्यं स्थितम् . अथ न, तदा तस्यैव व्यावर्तमानतया मिथ्यात्वेन स्वरूपासिद्धेरसाधकत्वं स्यात् . सत्यसिद्धिस्तु दूषयिष्यते । साध्येपि सर्ववृत्तित्वकतिपयवृत्तित्वविकल्पेन ब्रह्ममिथ्यात्वादि स्यादेव ।

पक्षत्वे चास्य साध्यादे—र्व्याघातो दुरतिक्रमः ।
अन्यथा सदसत्त्वादि—विकल्पैरप्युपप्लवः ॥ ७ ॥

एवं ब्रह्मान्यत्वात्कल्पितत्वाद्भिन्नत्वादित्यादीनां प्रपञ्चमिथ्यात्वसाधकतया परोक्तानां सर्वेषामनुमानादीनां बाधोपाधिव्यभिचारव्याघातादयो दोषा यथायथं द्रष्टव्याः । 'यः प्रत्ययस्स निरालम्बनः यथा स्वप्नादिप्रत्ययः विमतश्च तथेति' योगाचारोक्ते तु "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रमुत्तरं भविष्यति । सर्वधियाञ्च स्वेतरालम्बनशून्यत्वं वदतस्स्वेष्टं सन्तत्यन्तरं क्षणान्तरञ्च न सिद्ध्येत् । माध्यमिकस्तु कार्याणां पूर्वापरकालयोरभावेन मध्येप्यसत्त्वं साधयन् व्यावर्त्तमानत्वानुमानदूषणन्यायेन बाधादिभिर्निष्कास्यः । तन्मतञ्च 'सर्वथानुपपत्तेश्च' इति प्रतिक्षेप्स्यति । यत्तु विगीतं मिथ्यादृश्यत्वाच्छुक्तिरूप्यवदिति ब्रूथ । तत्र वेद्यत्वमात्रमेव हि हेतुः स्यात्, दृष्टिगोचरत्वादेर्भागासिद्धेः । ततश्च ब्रह्मजिज्ञासेति स्थापयद्भिर्विपक्षे ब्रह्मण्यपि

* श्रुतप्रकाशिका *

बाधो मिथ्यात्वे प्रयोजकः । यद्वा, आरोपितेन सायन्त्वादिना तन्निवर्त्तकेन दिवात्वादिना च विना क्रियान्तरावच्छिन्नकालस्य भ्रान्त्युपाधित्वम् ; एवं देशेऽपीति न कश्चिद्दोषः । एवं विशिष्टोपाधौ विशेषणविशेष्यांशयोः परिहृताऽनुपपत्तिकत्वेन विशिष्टोपाधिसिद्धिः, अतो न व्यावर्त्तमानत्वमात्रमपारमार्थ्यहेतुः । कैश्चिदेवमुक्तम्,— घटोऽस्तीत्यत्र किं घटोस्तिशब्दौ पर्यायौ ? उत न ? पर्यायत्वे सह प्रयोगो न स्यात्, नो चेत् सद्विलक्षणो घट इति । नैवम् ; 'अस्ति ब्रह्मेति चेद्वेद'इत्यादौ चास्ति-

७ तत्त्वटीका ७

हेतुवृत्तिरेष्टव्या, अतएव आत्मा न दृश्यः आत्मत्वात् यन्नैवं तन्नैवं यथा घट इत्यपि न वाच्यम् ; आत्मादिशब्दैस्तन्निर्देशेन स्ववाग्विरोधात् । "आत्मा वा अरे द्रष्टव्यः 'दृश्यते त्वग्र्यया 'तमक्रतुं पश्यति वीतशोकः" इत्यादिभिर्बाधाच्च । "गूढोत्मा न प्रकाशते 'अद्रेश्यमग्राह्यम्' इत्यादिनिषेधस्तु तत्तद्वाक्यशेषैः 'न चक्षुषा गृह्यते' इत्यादिविशेषनिषेधकवाक्यान्तरैश्च सङ्कोच्यः, अन्यथा कथमद्वैतम् ? कथं वा द्रष्टृदृश्यसम्बन्धानुपपत्तिः ?। किञ्च विश्वाध्यासाधिष्ठानस्य यथादृष्टि तदेकधीविषयत्वं स्वीकार्यम् . अन्यथा निरधिष्ठानभ्रमापातात् ब्रह्मणो धीविषयत्वं भ्रान्तिसिद्धमिति चेत् ; अब्रह्मणोऽपि तथेति त्वमेव ब्रूषे । ब्रह्मणस्तु दृग्विषयत्वमात्रमितिचेन्न, तस्याभिलप्यमानत्वात् । घटादिवदनित्यस्वप्रकाशस्य प्रकाशरूपं फलं न साद्ध्यमिति चेत् ; कथं तर्हि ब्रह्मबुद्धेरध्यासनिवर्त्तकत्वम् ? स्वरूपत इति चेत्, तद्वद्घटादिष्वपि तदतिरिक्तव्यक्त्यभिव्यक्तिरूपक्लृप्तिर्न स्यात्, प्राकट्यभङ्गन्यायाच्च अतस्साधारणे विषयत्वमात्रे हेतौ स्थितमनैकान्त्यम् । अपिच—

दृश्यत्वाद्यदि मिथ्यात्वं भासमानत्वतो न किम् ।
तत्र दोषांस्त्वदुक्तांश्च तुल्ययेत्तुल्यसौगतः ॥ ७ ॥
असिद्ध्युपाधिव्याघात—बाधादिरुभयोस्समः ।
अनैकान्त्यस्थलं तस्य नास्तीत्यतिशयो भवेत् ॥ ७ ॥
असत्यात्सत्यनिष्पत्तिप्रतिपत्ती च दर्शयन् ।
असत्यादप्यधिष्ठानादध्यासं किं न मन्यसे ।
विपक्षे बाधकादत्र वैषम्यमपि दुर्वचम् ॥७ ॥

# यत्तु–अनुवर्तमानत्वात्सत्परमार्थ इति, तत्सिद्धमेवेति न

* श्रुतप्रकाशिका *

ब्रह्मशब्दयोः पर्यायत्वे पौनरुक्त्यम्, नो चेत् ब्रह्मणोऽपि सद्विलक्षणत्वमिति। उभयश्चायं परिहारः स्वशब्दप्राप्तस्य स्वभावस्यैव निषेधार्थानुवादशङ्कापरिहारायास्तिशब्देन नियमः क्रियत इति ॥ * ॥ अथ पारमार्थ्यसाधकत्वेनोक्तमनुवर्तमानत्वं दूषयति (यत्त्वित्यादिना) प्रमाणसम्बन्धार्हतत्तद्घटादिस्वरूपस्य सच्छब्दवाच्यस्य किं पारमार्थ्यं

* तत्त्वटीका *

दृग्दृश्ययोर्हि योगाचारोक्तवद्युक्तौ न हेतुर्दृश्यो भवेत्। साध्यञ्च तत्र मिथ्यात्वं सत्यं वा ? नवा ?। आद्येपि धीस्वरूपम् अन्यद्वा ? पूर्वत्र तत्प्रकाशनित्यतया जगदध्यास एव न स्यात्, स्याच्चेत् सर्वत्र सर्वदा सर्वाध्यासस्स्यात्। अन्यथा बाधेपि बाधितानुवृत्तिश्च त्वन्मते प्रागेव निरस्ता। अन्यत्वे सद्वितीयतापत्तिः। कथञ्चासत्यस्य सत्यो धर्मः, खपुष्पे कोमलपरिमलशैत्यादेस्तथानुपलब्धेः। द्वितीये तु प्रपञ्चसत्यतापत्तिः, सत्यरजतादेर्ब्रह्मणश्च सर्वत्र सर्वदाध्यासस्स्यात्, मिथ्यात्वे मिथ्याभूते तत्सत्यत्ववत्, न चेयं नित्यसमा. युक्ताङ्गहान्यादेस्स्वव्याघातस्य चाभावात्। नच सत्यत्वं सत्यमसत्यं वेत्यादि प्रतिबन्दि, तस्यासत्यत्वानभ्युपगमात्. तत्सत्यत्वे च घटादिसत्यत्वाविरोधात्. मिथ्यात्वमिथ्यात्वे तु वैपरीत्यदृष्टेः, अत एव नेदं स्वपरनिर्वाहस्थानम्, सत्यन्तु तथा स्यात्, उदाहृतस्वप्रकाशादिसमानयोगक्षेमत्वात्। अनवस्थापि तद्वन्निवर्त्त्या, अन्यथा कथं ब्रह्मणोपि सत्यत्वम् ? स्वतश्चेत्सममेतत्. सत्यासत्यविवेकाभावे च सामान्यतो विशेषतश्च माध्यमिकेतरसर्वराद्धान्तव्यवस्थोच्छेदः।

महीमिव च मर्यादामनधिष्ठाय शाश्वतीम्।
पदन्यासो न चोराणां प्रच्छन्नप्रकटात्मनाम् ॥ * ॥
मर्यादास्थापनार्थं यौ मानतर्कौ समुत्थितौ।
सिंहारण्यवदन्योन्यं गुप्तौ तौ स्वान्यसाधकौ ॥ * ॥
परमद्यादयो ब्रूयुः परव्याहतिमित्यसत्।
स्वव्याघातादिभङ्गानां परानङ्गीकृतेरिति ॥ * ॥

अथ सत्पारमार्थ्यसाधने साध्यस्य सिद्धतया हेत्वंशो दूष्यत इत्याभिप्रयंस्तर्कपुरस्सरमनुवक्ति (यत्त्विति) तदेतन्माध्यमिकं प्रति दुर्वचम्, दृष्टान्ताद्यसिद्धेः।

## साधनमर्हति, अतो न सन्मात्रमेव वस्तु ॥ अनुभूति-सद्विषययोश्च विषयविषयिभावेन भेदस्य प्रत्यक्षसिद्धत्वा-

* श्रुतप्रकाशिका *

साध्यते ? उताधिष्ठानतयाऽनुवृत्तस्यार्थान्तरस्य ? इति विकल्पे द्वितीयशिरस्याश्रयासिद्धिमाभिप्रेत्य प्रथमे शिरसि सिद्धसाधनत्वं दूषणमुक्तम् । ननु सदेव परमार्थ इति हि ग्रन्थकाराभिप्रायः, तत्कथं सिद्धसाधनत्वमिति ? उच्यते,—एतदनुमानं किं सतः पारमार्थ्यसाधकम् ? उत व्यतिरिक्तापारमार्थ्यस्य ? उतोभयस्य ? । प्रथमे सिद्धसाध्यता । द्वितीये व्यधिकरणाऽसिद्धता च । तृतीये अंशे सिद्धसाध्यता, अंशे व्यधिकरणासिद्धिश्चेति । निगमयति ( अत इति ) परेण प्रमाणप्रमेयानुपपत्तिकृतं भेददूषणमुपजीव्यानुभूतेः सतो भेदोऽपास्तः । अत्र च भेददूषणहेत्वाभासनिरासमुपजीव्यानुभूतिसतोर्भेदश्च निरस्यते ( अनुभूतीत्यादिना ) अनुभूतिसद्विशेषयोरित्यत्र

❀ तत्त्वटीका ❀

अस्मान् प्रति स्वत्परिभाषया व्यावहारिकस्य वा प्रातीतिकस्य वा सतः पक्षीकारे सिद्धसाध्यता , प्रातीतिकसतोपि स्वदेशादौ सिद्धत्वात्, तव तु प्रतिज्ञाविरोधः , परमार्थसतः पक्षीकारे सत् परमार्थ एवेति वा सदेव परमार्थ इति वा विवक्षितम् । पूर्वत्र सिद्धसाध्यता धर्मिसाध्यपदयोरैकार्थ्यं चेत्यभिप्रायेणाह ( तदिति ) उत्तरपक्षस्योत्तरमाह ( अत इति ) अयं भावः,—साध्यस्यायोगव्यवच्छेदे तावत्तदन्यमिथ्यात्वं नोक्तं स्यात्, अन्ययोगव्यवच्छेदेऽनुवर्तमानत्वादिति हेतुरपक्षस्तोऽन्यथापि विरुद्धश्च । उभयसाधने त्वंशत उभयदोषापत्तिः, सत् स्वेतरपरमार्थशून्यमिति विवक्षायां रज्ज्वादिदृष्टान्तस्साध्यविकलः, तदनारोपितपारमार्थ्यसिद्धेः । अयन्तु निगमनग्रन्थ इति केचित्; तदा सच्छब्दवाच्यांशवद्घटादिवाच्यांशोपि वस्त्वित्याशयः । अनुवर्त्तमानानुभूतिरेव परमार्थ इति प्रागुक्तमप्येतेन निरस्तं वेदितव्यम् ।

सत्सदित्यनुवृत्त्या च सतस्सत्यत्वसाधने ।
अस्तित्वाद्यनुवृत्त्यापि तत्सत्यत्वं न किं भवेत् ॥ ❀ ॥
घटो नास्तीति बोधेपि तन्नास्तित्वास्तितास्ति चेत् ।
घटोस्तीति विधानेपि किं न नास्तित्व[म] नास्तिता ॥ ❀ ॥

दबाधितत्वाच्च अनुभूतिरेव सतीत्येतदपि निरस्तम् ॥ यत्त्वनुभूतेः स्वयम्प्रकाशत्वमुक्तम्; तद्विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव; न तु सर्वेषां सर्वदा तथैवेति निय-

* श्रुतप्रकाशिका *

विशेषशब्देन अनुवर्त्तमानत्वहेतोराश्रयासिद्धिः सूच्यते, सच्छब्दवाच्यस्य वस्तुनो व्यावृत्तत्वादनुवृत्तार्थान्तराभावाच्च. सच्छब्दः प्रमाणसम्बन्धयोग्ये हि वर्त्तते. घटः सन् पटः सन्नित्यनुवृत्तव्यवहारो व्यावृत्तशब्दवदुपपन्न इति प्रमाणसम्बन्धार्हाः पदार्थाः परस्परव्यावृत्ताः सच्छब्दवाच्याः ॥ * ॥ अथ परोक्ते स्वयंप्रकाशत्वे ऽभिमते तत्र शिक्षणीयांशोऽस्तीत्यभिप्रायेणाह ( यत्त्वनुभूतेरिति ) तुः पक्षवैषम्ये । वक्तव्यांशमाह ( तद्विषयप्रकाशनवेलायामिति ) उत्तरत्र वर्त्तमानदशायामिति हि वक्ष्यते, तस्य ज्ञानस्य नित्यद्रव्यत्वेन सदा वर्त्तमानत्वात् वर्त्तमानदशायामिति पदं निरर्थक-

७ तत्त्वटीका ७

घटादिसत्ता सत्या चेद्धटादेस्सत्यता न किम् ।
न त्वदिष्टानुवृत्तिस्स्याद्यदि सा व्यावहारिकी ॥ ७ ॥
किञ्चानुमानसिद्धत्वं शास्त्रसिद्ध्यै निरस्यता ।
प्रत्यक्षादिप्रसिद्धत्वं शास्त्रेणैव निरस्यते ॥ ७ ॥

सैव सतीत्युक्तमपि भेदसाधकनिस्तारं पूर्ववन्निरस्यति ( अनुभूतीति ) अनुभूतेरपि सद्रूपतया तत्र सदनुभूत्योर्भेदायोगात्तद्व्यावृत्तघटादिव्यञ्जनाय विशेषशब्दः । यदा अनुभूतिरनुभूत्यन्तरेण विषयीक्रियते तदापि घटतद्धीन्याया द्विषयविषयिणोस्सतोर्भेदस्सिद्धः । परेष्टानुवर्त्तमानत्वासिद्धिव्यञ्जनार्थो वा विशेषशब्द इति केचित् । तुच्छत्वपरिहाराय परोक्तं स्वतस्सिद्धत्वम्, तथात्वग्राहकाभावे स्वाश्रयेण सह तुच्छत्वं स्यादिति वक्तुमनुवक्ति ( यत्त्विति ) तुशब्दोत्र युक्तायुक्तांशविशेषव्यावृत्त्यर्थः । स्वयंप्रकाशत्वोक्त्याऽन्यनिरपेक्षप्रकाशत्वस्याश्रयतः कालतश्चात्यन्तायोगव्यवच्छेदो वा, अन्याधीनप्रकाशात्यन्ताभावो वा अभिप्रेत इति विकल्पं मत्वा प्रथमे सिद्धसाध्यतामाह ( तदिति ) ज्ञातुः— स्वाश्रयस्येत्यर्थः । द्वितीयं दूषयति ( न त्विति ) तुशब्दोऽवधारणपरः स्वानभ्युपगतांशविवेको वा । सर्वेषां सर्वदेत्यनूदि-

मोऽस्ति, परानुभवस्य हानोपादानादिलिङ्गकानुमानज्ञान विषयत्वात्, स्वानुभवस्याप्यतीतस्य अज्ञासिषमिति ज्ञान विषयत्वदर्शनाच्च; अतोऽनुभूतिश्चेत् स्वतस्सिद्धेति वक्तुं न शक्यते ॥ अनुभूतेरनुभाव्यत्वे अननुभूतित्वमित्यपि दुरुक्तम्; स्वगतातीतानुभवानां परगतानुभवानाञ्चानुभाव्यत्वेनाननुभूतित्वप्रसङ्गात्। परानुभवानुमानानभ्यु-

---

* श्रुतप्रकाशिका *

मिति शङ्कापनुत्तये विषयप्रकाशनवेलायामित्युक्तम्, वर्त्तमानदशाशब्देन विषयसम्बन्धप्रसरस्य वर्त्तमानता विवक्षितेत्यवगम्यते । न तु सर्वेषामित्येतदुपपादयति ( परानुभवस्येति ) सर्वदेत्येतदुपपादयति ( स्वानुभवस्यापीति ) अनुभूतिश्चेदित्यनेन स्वाश्रयं प्रति विषयप्रकाशनवेलायामित्युक्तवैषम्यविरहो गर्भितः । एवमनुभूतेरनुभाव्यत्वसम्भवमुपपाद्य तदसम्भवे परोक्तमनुमानं दूषयति ( अनुभूतेरिति ) कुत इत्यत्राह ( स्वगतेति ) परानुभवानुमेयत्वानभ्युपगमे लौकिकव्यवहारविरोधमनिष्टमाह (परेति )

* तत्त्वटीका *

तस्य नियमद्वयस्य बाधं ग्रन्थद्वयेनाह ( परानुभवस्येति ) आदिशब्देन प्रेक्षणभक्षणपुलकादिसङ्ग्रहः । अतीतोदाहृतिरागाम्युपलक्षणार्था । स्ववचनविरोधं सूचयन्नियमाभावं निगमयति ( अत इति ) अनुभूतिश्चेदित्यनेनाश्रयकालरूपविशेषणद्वयरहितस्वरूपानुवादः । ननु व्यतिरेकिबलाद्वेद्यत्वमवच्छेदकवृत्तिमात्रस्य नतु साक्षादनुभूतेः, इत्यत्र हेतदूषणाय तदनुग्राहकतर्कं दूषयितुमनुवक्ति ( अनुभूतेरिति ) व्याप्तिरूपाङ्गवैकल्यमाह ( स्वगतेति ) अनुभूतिशब्दार्थो हि लोकतोवसेयः, अतो न घटादिज्ञानेष्वनुभूतित्वं त्यक्तुं शक्यम्; तत्र च वेद्यत्वमनुभूतित्वञ्च सहदृष्टम्, वृत्तिपक्षेपि तदुपहितसंवित्स्वरूपग्रहणं सिद्धम् अतोऽत्र तर्कस्यानुमानस्य च व्याप्तिर्दुर्ग्रहा । अवेद्यत्वसाधनञ्च कालात्ययापदिष्टम्, धर्मिसाध्यहेत्वादिपदनैरर्थक्यप्रसङ्गहतञ्च । धाष्ट्र्याद्दृष्टापह्नवे लौकिकवैदिकसर्वव्यवहारभङ्गमाह ( परेति ) अयम्भावः,—गामानयेत्यादौ पुत्रस्ते जात इत्यादौ वा वक्ष्यमाणभाष्यप्रकारेण चेष्टासहचरिताम्बादि-

पगमे च शब्दार्थसम्बन्धग्रहणाभावेन समस्तशब्दव्यवहारोच्छेदप्रसङ्गः। आचार्यस्य ज्ञानवत्त्वमनुमाय तदुपसत्तिश्च क्रियते; सा च नोपपद्यते। न चान्यविषयत्वेऽननुभूतित्वम्; अनुभूतित्वं नाम वर्त्तमानदशायां स्वसत्तयैव

* श्रुतप्रकाशिका *

अथ वैदिकव्यवहारविरोधमाह ( आचार्यस्येति ) परानुभवानुमानानभ्युपगम इत्यादिना चार्वाकनिरासश्च फलितः, अनुमानानभ्युपगमे शब्दार्थसम्बन्धग्रहणायोगात्; एवं बाध उक्तः। अथ व्याप्तिं दूषयति (न चान्येति) न ह्यसाधारणाकारो धर्मिग्राहकमानसिद्धः, साधारणाकारे सत्यपगच्छतीत्यभिप्रायेणानुभूतिस्वरूपं शिक्षयति ( अनुभूतित्वमिति ) अत्रानुभूतिशब्दो ज्ञानमात्रपरः, न तु स्मृतिविलक्षणपरः। प्रकाशमानत्वमित्युक्ते घटादेरप्यनुभूतित्वं स्यादिति तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तम्। अणुत्वनित्यत्वाद्यात्मधर्माणां ज्ञानान्तरप्रकाश्यत्वात्तद्व्यावृत्त्यर्थं स्वसत्तयैवेत्युक्तम्। अतीतानुभवव्यावृत्त्यर्थं वर्तमानदशायामित्युक्तम्। यद्यप्यतीतानुभवस्य ज्ञानान्तरमन्तरेण प्रकाशानुपपत्तेरर्थाद् व्यवच्छेदः तथाऽप्यतीतस्य ज्ञानान्तरेण सिद्धिं परानभिमतां व्युत्पादयितुमिदं विशेषणम्, विषयसम्बन्धस्य वर्तमानदशायामित्यर्थः। वर्त्ते-

छ तत्त्वटीका छ

शब्दप्रयोगे वा व्युत्पद्यमानानां परबुद्ध्यानुमानसापेक्षत्वं सिद्धम्, तदभावे सर्वेषामप्युत्पन्नतया न मिथो भाषणम्, नच दृष्टादृष्टसर्वविद्यास्थानप्रवृत्तिस्स्यादिति। अदृष्टार्थप्रवृत्तौ विशेषतश्चोदाहरति ( आचार्यस्येति ) तदनुमानाभावेऽनिष्टं प्रसञ्जयति (सा चेति ) एवं वादिप्रतिवादिशिष्यादिबुद्ध्यनुमानं द्रष्टव्यम्। ननु वेद्यत्वप्रयुक्तमेवाननुभूतित्वं घटादौ दृष्टम्, इहापि तदनभ्युपगमे तत्प्रसङ्गो दुर्वार इत्यत्राह ( न चेति ) वेद्यत्वं नानुभूतित्वव्याप्यमित्यर्थः। अननुभूतित्वप्रसङ्गं परिहर्त्तुं तत्प्रतियोगिस्वरूपं लक्षणतः शिक्षयति ( अनुभूतित्वमिति ) अहमर्थात्मत्वस्य परेणानभ्युपगमादहमिदमर्थाभ्यामुपहितानुभूतिरत्रावेद्यत्वेन साध्यते, तस्याश्च कस्यचित् प्रकाशत्वरूपत्वमनुभूतित्वम्। स्वगोचरज्ञानमनपेक्ष्य स्वाश्रयाय प्रकाशमानत्वञ्च तल्लक्षणम्। वर्त्तमानदशा—विषयग्रहणकालः। तदुक्तिः पूर्वोत्तरदशयोर्वेद्यत्वदृष्ट्या

**स्वाश्रयं प्रति प्रकाशमानत्वं स्वसत्तयैव स्वविषयसाधनत्वं वा । ते चानुभवान्तरानुभाव्यत्वेऽपि स्वानुभवसिद्धे**

* श्रुतप्रकाशिका *

मानदशायां स्वसत्तयैव प्रकाशमानत्वमित्युक्ते परानुभवे तदसम्भवात्तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तम् । एतल्लक्षणं स्वयम्प्रकाशत्ववादिनामेवेष्टमिति सर्वसम्प्रतिपन्नं लक्षणमाह (स्वसत्तयैवेति) स्वाश्रयं प्रति वर्तमानदशायामिति पदद्वयानुकर्षस्योपलक्षणं स्वसत्तयैवेति पदम्, साधनमित्युक्ते दण्डचक्रादेरपि तथात्वात्तद्व्यावृत्त्यर्थं स्वाश्रयं प्रतीत्युक्तम् । चाक्षुषज्ञानं श्रावणविषयं न साधयतीति सर्वविषयसाधनत्वासम्भवव्यावृत्त्यर्थं स्वशब्दः । इन्द्रियव्यावृत्त्यर्थं स्वसत्तयैवेति पदम् । इन्द्रियादिकं हि न केवलं स्वसत्तया प्रकाशकम् अपि तु ज्ञानोत्पादनद्वारा. वर्तमानदशायामित्यतीतानुभवव्यावृत्तिः, स्वाश्रयं प्रतीति परानुभवव्यावृत्तिः । ततः किमित्यत्राह (ते चेति) एवमन-

७ तत्त्वटीका ७

स्वसत्तयैवेत्यवधारणव्युदासार्था । वर्तमानदशायामप्यहमर्थान्तरेण वेद्यत्वदर्शनात्स्वाश्रयं प्रतीति विशेषितम्, तेनैव स्वप्रकाशात्मव्यावृत्तिश्च, स्वाश्रयं प्रति प्रकाशमानेभ्य आत्मधर्मान्तरेभ्यो व्यावृत्त्यर्थं स्वसत्तयैवेत्युक्तम् । परस्याप्यत्र काल्पनिक आश्रयाश्रयिभावस्सिद्धः । स्वसत्तया चानुभूतिः कल्पितस्वाश्रयाय प्रकाशते । उक्तं लक्षणं स्वयम्प्रकाशवादिभिर्नाङ्गीक्रियते ; अतस्तैरपि स्मृतमनुभूतेर्लक्षणान्तरमाह (स्वसत्तयेति) कस्यचिदर्थस्य साक्षाद्व्यवहारानुगुण्यापादकमित्यर्थः । तेनेन्द्रियादिव्यवच्छेदः, अत्र ह्यवधारणं नैरपेक्ष्यपरम् ।

सापेक्षहेतुभिस्सिद्धं कारणं सहकारिभिः ।
एवं सर्वत्र सापेक्षे तदन्यैरनपेक्षता ॥ ७ ॥

वर्तमानदशायां स्वाश्रयं प्रतीत्युभयमिहापि योज्यम् । सिद्धान्ते त्वहमर्थस्यात्मनो ज्ञानरूपत्वे विषयाश्रयोपधानाभावात्ततो व्यावृत्तिः । उभयसाधारणं लक्षणमनुक्त्वा प्रकृतोपयुक्तं लक्षणमिहोक्तम् । अनयोर्लक्षणयोरत्र निरर्थकं वचनमिति शङ्कायां तयोर्वेद्यत्वेन सहदृष्ट्या तदाश्रयेऽनुभूतित्वाभावस्य प्रसञ्जयितुमशक्यत्वमाशङ्क्याह (ते चेति) स्वानुभवसिद्धे इति हेतुगर्भे द्विवचनान्तं, सप्तमीत्वेप्यनुभवो विशेष्यो

नापगच्छत इति नानुभूतित्वमपगच्छति । घटादेस्त्व-ननुभूतित्वमेतत्स्वभावविरहात्; नानुभाव्यत्वात् । तथा अनुभूतेरननुभाव्यत्वेपि अननुभूतित्वप्रसङ्गो दुर्वारः, गगनकुसुमादेरननुभाव्यस्याननुभूतित्वात् ॥ गगन-

* श्रुतप्रकाशिका *

नुभाव्यत्वलक्षणसाध्यधर्मप्रतिक्षेपेणानुभाव्यत्वेनानुभूतित्वस्य सामानाधिकरण्य दर्श-नात् अननुभाव्यत्वेन व्याप्तिर्निराकृता । तर्हि कथमनुभाव्यत्वे ऽननुभूतित्वदर्शनमिति शङ्कायां सोपाधिकत्वमाह ( घटादेस्त्विति) अननुभूतित्वम्—अनुभूतिशब्देन व्यवहर्तव्यत्वाभाव इति न साध्याविशिष्टता । यद्वा, उक्तयोर्लक्षणयोरन्यतरदनुभूतित्वम् न तु समुच्चितमुभयम् अन्योन्यनिरपेक्षत्वात् वाशब्दप्रयोगाच्च । न हि चशब्दः प्रयुक्तः, तत्रान्यतरलक्षणराहित्यरूपम् अननुभूतित्वम् अन्यतराकारविरहप्रयुक्तमिति सोपाधिक-मित्यर्थः । अथ प्रतितर्कपराहतिमाह ( तथाऽनुभूतेरिति ) यद्वा आभाससमानयोग-क्षेमत्वमाह । गगनकुसुमादेरननुभूतित्वस्य उपाध्यन्तरसत्त्वं शङ्कते (गगनेति) घटादे-

ॐ तत्त्वटीका ॐ

ऽध्याहार्यः । यदि वेद्यत्वेप्यनुभूतित्वं स्यादन्यत्रापि किं न स्यादित्यत्राह ( घटादे-रिति ) तुः स्वभाववैचित्र्यपरः, शङ्काव्युदासार्थो वा । अनुभूतित्वं कस्यचित्प्रकाश-मानत्वाभावः, अनुभूतिशब्दानभिलप्यत्वं वा । एतत्स्वभावविरहादुक्तलक्षणद्वया-सम्भवः । घटादिष्वन्यप्रयुक्ते ऽननुभूतित्वे वेद्यत्वस्य तद्व्याप्यत्वाभावं व्यनक्ति ( नानुभाव्यत्वादिति ) तर्कस्य व्याप्त्यभावः स्थापितः । प्रतितर्कप्रतिहतिमप्याह (तथेति ) घटादौ सर्वत्रानुभाव्यत्वाभावात्कुत्र व्याप्तिधीरित्यत्राह ( गगनकुसुमादेरिति) तुच्छे कथं व्याप्तिग्रह इति चेत् । तदसत् ,—'नासत्त्वे ख्यातिबाधने' इति वदन्तो यूयमेव प्रष्टव्याः । निषेधसाधनेन च पक्षत्वमप्यसतामिच्छतां व्यवहारे भट्टनय इति वदद्भिर्युष्माभिरुपजीव्याश्चैवमाहुः— ' यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते । तस्मिन् यथा खपुष्पादाविति शक्यं हि भाषितुम् " ॥ इति—

असत्यशुक्तिरजतं दृष्टान्तत्वेन कल्पयन् ।
खपुष्पस्य तथा भावं किं नाङ्गीकर्तुमर्हति ॥ ७ ॥

॥ तत्त्वटीका ॥

अयोग्यपदसंयोगात् कैश्चिद्दोषान्तरैरपि ।
अध्यासश्च खपुष्पादेर्दुस्त्यजश्शुक्तिरूप्यवत् ॥ ७ ॥
प्रत्यक्षेण प्रमित्या वा नासत् ख्यायेत किं ततः ।
घटादेश्शुक्तिरूप्यस्याप्येवं तत्प्रतिपादनात् ॥ ७ ॥
एवं वेद्येप्यवेद्यत्वं परोक्तं परवर्त्मनः ।
अवेद्यत्वमधीत्वेन न व्याप्तं भवतोच्यते ॥ ७ ॥
सर्वथैवाप्रतीतञ्चे—दसदित्यभिमन्यसे ।
कथं त्वया प्रतीतं तत् यत्त्वमेवं ब्रवीषि नः ॥ ७ ॥
शून्यं तुच्छमसच्चेति सदेवास्माभिरुच्यते ।
खरे शृङ्गं नरे गोत्वमित्यादेस्तादृशत्वतः ॥ ७ ॥
यत्र यन्न मितं मानैस्तत्तत्रासदिति स्थिते ।
अवेद्यमसदित्याहुर्व्याप्तिर्नस्तत्र सिध्यति ॥ ७ ॥
प्रतितर्काच्च तर्कस्य प्राबल्यमिह दुर्वचम् ।
युक्तो विपरिवर्तस्तु प्रत्यक्षाद्यनुसारतः ॥ ७ ॥
त्वदुक्तस्य प्रसङ्गस्य सिध्यन्नपि विपर्ययः ।
असाधकं त्वदिष्टस्य व्याप्तिभङ्गसमर्थनात् ॥ ७ ॥
प्रातिस्विकस्वभावाच्च सामान्यं यदि बाध्यते ।
सर्वस्यैवं घटत्वाद्यै—रवेद्यत्वं न किं भवेत् ॥ ७ ॥
घटादेरपि वेद्यत्वे किं न स्यादघटादिता ।
सममेव समाधानं तत्र दोषप्रसञ्जने ॥ ७ ॥

एवं वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिधर्मत्वादित्यत्र बहुधा विकल्प्य स्ववाग्विरोधादि द्रष्टव्यम्. अधिकन्तु खपुष्पादिभिरर्थान्तरत्वं मतान्तरेण सिद्धसाधनं वा । यदि खपुष्पादीनां वेद्यत्वाभावो न स्यात् तदा प्रपञ्चस्य सत्त्वकोट्यां ख्यात्यनुपपत्तिं कथं वदयसि ? अपरोक्षधीविषयत्वाभावादिति चेन्न ; दोषविशेषैस्तत्सम्भवस्योक्तत्वात्. तेषु वेद्यत्वात्यन्ताभावाधिकरणत्वं मिथ्याभूतम्, सत्यन्तु साध्यत इति चेन्न, तादृशस्य ब्रह्मण्यपि त्वया वक्तुमयुक्तत्वात्. किञ्चिच्छब्दार्थो-

**कुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत्; एवं तर्हि घटादेरप्यज्ञानाविरोधित्वमेवाननुभूतित्वनिबन्धनम्, नानुभाव्यत्वमित्यास्थीयताम्।**

* श्रुतप्रकाशिका *

रननुभूतित्वस्याप्युपाध्यन्तरमज्ञानाविरोधित्वमाह (एवं तर्हीति) प्रकाशनियमाभावाविरोधित्वम्; अज्ञानाविरोधित्वम्। न च सुखादावभावात्साध्यसमव्याप्त्यभावः शङ्कनीयः, सुखादेर्ज्ञानविशेषत्वेनाननुभूतित्वाभावात्। अज्ञानाविरोधित्वस्योपाधित्व-

* तत्त्वटीका *

ऽनुभूतिरेव न घटादिरिति नियन्तुञ्च न शक्यम्. सुलभश्च नियामको घटत्वादिरधीत्वहेतुः, वेद्यत्वस्य घटत्वादिनेवानुभूतित्वेन स्वप्रकाशत्वेन वा विरोधगन्धाभावादिति। ननु वेद्यत्वे स्वगोचरज्ञाननिरपेक्षव्यवहारानुगुण्यरूपं स्वयम्प्रकाशत्वं कथं स्यात्? इत्थम्,— वर्तमानावर्तमानदशाभेदेन द्वयोर्व्यवस्थापनात्, स्वप्रकाशलक्षणे व्यवहारानुगुण्यं निवेशयता त्वयापि व्यवहारार्हत्वबुद्धेर्व्यवजिहीर्षायास्तन्मूलव्यवहारजन्यधियश्च गोचरत्वमेष्टव्यम्, तथासति का कथा विरोधस्य? विसंवेद्यत्वे नाशित्वादिप्रसङ्गो व्याप्त्यभावादिभिर्निर्द्धूतः। अथ प्रतितर्कस्योपाधिबलाद्दौर्बल्यं शङ्कते (गगनेति) असत्त्वभावत्वयोर्विरोधाद्भावविशेषरूपानुभूतित्वाभावस्तत्रासत्त्वप्रयुक्त इत्यर्थः। यद्यप्यननुभूतित्वस्यासत्त्वमव्यापकम्, घटादावदृष्टेः, ततश्च न तस्योपाधिः, तथाप्यनुभूतित्वस्य सत्त्वं व्यापकं तावता च तस्य तदुपाधित्वं कैश्चित् सम्मतम्; अतस्सत्त्वनिवृत्तिप्रयुक्तमननुभूतित्वमित्युच्यते। यद्वा, शाकाद्याहारपरिणतिन्याय इहाभिप्रेतः स ह्यसौ श्यामत्वव्यापिका [अतन्निबन्धनमतन्निवृत्तिः] अतो दोषविशेषनिष्ठश्यामत्वविशेषस्तन्निबन्धन इति वाच्यम्। तद्विदिहापि खपुष्पनिष्ठमननुभूतित्वमसत्त्वप्रयुक्तमिति नियम्यते, तदिदं गगनकुसुमादेरननुभूतित्वमिति विशिष्टोक्त्या व्यज्यते; एवं सत्यनुभाव्यत्वनिबन्धनमननुभूतित्वमसत्त्वनिवृत्त्या न निवर्तते। परोक्ततर्केऽप्युपाधिमाह (एवमिति) नात्र मतानुज्ञा, प्रतिबन्देर्दुस्तरत्वे तात्पर्यात्। अज्ञानाविरोधित्वम्—ज्ञानधर्मस्य स्ववेद्यविषयाज्ञाननिवर्तकत्वाभावः। अज्ञानस्य हि भावरूपस्याभावरूपस्य वा ज्ञानमेव निवर्तकम्। उक्तस्योपाधेः

अनुभूतेरनुभाव्यत्वे अज्ञानाविरोधित्वमपि तस्याः घटादेरिव प्रसज्यत इति चेत्, अननुभाव्यत्वेपि गगनकुसु-

* श्रुतप्रकाशिका *

निरासाय पक्षे तत्प्रसञ्जयति (अनुभूतेरिति) तद्वत्पक्षेऽपि तुल्यमित्याह ( अननुभाव्यत्वेऽपीति ) अनुभूतेरनुभाव्यत्वेऽननुभूतित्वस्य उपाधित्वेनोक्तमज्ञानाविरोधित्वमननुभाव्यत्वेऽपि प्रसज्यत इत्यर्थः । अनुभाव्यत्वेऽननुभूतित्वमज्ञानाविरोधित्वञ्च यदुक्तं तदननुभाव्यत्वेऽपि गगनकुसुमादेरिव प्रसज्यत इत्युक्तम्। गगनकुसुमादावननुभूतित्वमज्ञानाविरोधित्वं चासत्त्वप्रयुक्तम्, नाननुभाव्यत्वप्रयुक्तमिति चेत्, अननुभाव्यत्वे तद्वदसत्त्वमपि प्रसज्यते. गगनकुसुमादेरसत्त्वं नाननुभाव्यत्वमात्रप्रयुक्तम् अपि तु स्वयम्प्रकाशत्वे सत्यननुभाव्यत्वाविरहप्रयुक्तमित्यनुभूतेरननुभाव्यत्वमात्रान्नासत्त्वप्रसक्तिरिति चेत्, अननुभाव्यत्वे तद्वद्स्वयम्प्रकाशत्वमपि प्रसज्यते; अतः

❀ तत्त्वटीका ❀

प्रसङ्गहेतुव्यापकतया प्रतिबन्दिनिस्तारं शङ्कते ( अनुभूतेरिति ) 'यत्रोभयोस्समो दोषः 'इति न्यायेनात्रापि प्रतिवक्ति ( अननुभाव्यत्वेपीति ) अवेद्यखपुष्पादिव्यावृत्तं ज्ञानस्याज्ञानविरोधित्वं वेद्यत्वं साधयेदिति भावः । नन्वस्य घटादिसपक्षसद्भावे पक्षमात्रस्थस्य कथं हेतुत्वम्? कथं वा खपुष्पादिसपक्षसद्भावे तादृशस्य धीत्वस्येति पश्य । किमत्र प्रतितर्कस्यानुग्राह्यम्? किं वा त्वदुक्तस्य श्रुत्यादिकम् इति चेत्; तुल्यम् । यदप्यत्र प्रकृतानुरोधादसत्त्वमपि प्रसज्यत इति प्रतिवक्तव्यम्, तथापि शिष्याणामूहशक्त्यर्थं तर्कवैभवात्प्रकारान्तरेण प्रत्युक्तम्, प्रसञ्जनीयमसत्त्वमत्र द्वितीयेनापिशब्देन वा समुच्चीयते; अतएव खपुष्पादेरज्ञानाविरोधित्वञ्चासत्त्वप्रयुक्तम् 'इत्युक्तम्। असत्त्वस्य चाननुभूतित्वादिप्रयोजकत्वं स्वसद्भावे तत्सद्भावनियमाद्वा? स्वाभावे तदभावनियमाद्वा? आद्ये,-धूमालोकनयाद्वेद्यत्वमपि तत्प्रसञ्जकमस्तु तद्व्याप्यत्वात् । द्वितीये,-घटादेः कथमधीत्वादि? तथाच तद्वदनुभूतावप्यसत्त्वाभावेप्यवेद्यत्वे श्रुत्यादिकमिति चेत्, तुल्यं धीत्वादिप्रसङ्गस्सुस्थः ।

खपुष्पादिगता धीत्वाद्यसत्त्वनियतं यदि ।
स्यादन्यत्राप्यधीत्वादि-मात्रं श्यामत्वमात्रवत् ॥ ❀ ॥

मादेरिवाज्ञानाविरोधित्वमपि प्रसज्यत एव; अतोऽनु-भाव्यत्वेऽननुभूतित्वमित्युपहास्यम् ॥

यत्तु—संविदः स्वतस्सिद्धायाः प्रागभावाद्यभावादुत्पत्ति-र्निरस्यते, तदन्धस्य जात्यन्धेन यष्टिः प्रदीयते । प्राग-

* श्रुतप्रकाशिका *

अस्वयम्प्रकाशत्वे सति अननुभाव्यत्वप्रयुक्तमसत्त्वमनुभूतेर्दुर्वारम्, असत्त्वन्तु धर्मिग्राहकप्रमाणविरुद्धमिति चेत्, अनुभाव्यत्वेऽननुभूतित्वमपि तथेत्येवमनुसन्धेयमिति भाष्याभिप्रायः । खपुष्पोदाहरणे तु नाश्रयवैकल्यदोषः शङ्कनीयः, ख्यातेर्नासदिति व्यतिरेकदृष्टान्तत्वस्य परैः स्वीकृतत्वात् । "शब्दज्ञानानुपाती वस्तुशून्योऽवभासो विकल्पः स खभावस्त्ववभासः प्रतीति"रिति हि तैरुच्यते; तत्राभासप्रतीतस्यापि निषेधाधिकरणत्वं युक्तमिति भाट्टाङ्गीकृतञ्च, अतः परमतप्रक्रियया खपुष्पमुदाहृतम्. उपहास्यम्—समीपस्थैरपि हास्यमित्यर्थः ।

अथ परोक्तनित्यत्वं व्युदस्यति (यत्त्वित्यादिना) ननु ज्ञाननित्यत्वमभ्युपयद्भिः कथं तन्निरसनं युक्तम्? उच्यते;—ज्ञानाश्रयभूत आत्मा तदाश्रितं च सङ्कोचविकासार्हं नित्यं ज्ञानद्रव्यं परस्यानभिमतम् । यत्तु प्रस्तुतमिन्द्रियसंयोगाद्यन्वयव्यतिरेकानुविधायि प्रत्यक्षत्वपरोक्षत्वप्रमाणत्वाप्रमाणत्वावस्थं लोकसिद्धं ज्ञानम्, तस्य यदि नित्यत्वमुपपाद्यते तद्व्युदस्यते. विषयसम्बन्धिज्ञानस्य हि स्वयम्प्रकाशत्वं परेण समर्थितम् स्वयम्प्रकाशत्वसमानाधिकरणं च नित्यत्वं परस्येष्टं, स्वतस्सिद्धतया नित्यत्वसमर्थनात्; अतस्तन्निरासो युक्तः । तत्र च मृद्द्रव्यस्य सिद्धत्वेपि घटत्वाद्यवस्थमृद्द्रव्यानित्यत्ववत् ज्ञानाख्यद्रव्यस्य नित्यत्वेपि स्मृतित्वानुभूतित्वाद्यवस्थज्ञानानित्यत्वं युक्तमिति न स्वपक्षविरोधः । स्वयम्प्रकाशत्वे किञ्चिदुपादेयत्वमस्तीति तद्व्यावृत्त्यर्थस्तुशब्दः ( अन्धस्य

❦ तत्त्वटीका ❦

तदिह दुरुक्तमिति प्रक्रान्तं दुस्तरोपलब्धिबलान्निगमयन् द्रढयति ( अत इति )

यावज्जीवमहं मौनी माता वन्ध्या ममेति वत् ।
वित्तेरवेद्यतोक्तिस्स्या—दिति हास्यत्वभाषणम् ॥ ❦ ॥

अवेद्यत्वं ज्ञानस्य निरस्तम्। अथ प्रागुपन्यस्तं बौद्धोक्ताद्वैषम्यं दूषयितुमनुवक्ति(यत्त्विति)

भावस्य ग्राहकाभावादभावो न शक्यते वक्तुम्; अनुभूत्यैव ग्रहणात्। कथमनुभूतिस्सती तदानीमेव स्वाभावं विरुद्धमवगमयतीति चेत्; न ह्यनुभूतिः स्वसमकालवर्त्तिनमेव विषयीकरोतीत्यस्ति नियमः, अतीतानागतयोरविषयत्वप्रसङ्गात् ॥

* श्रुतप्रकाशिका *

जात्यन्धेन यष्टिः प्रदीयत इति ) असिद्धमत्यन्तासिद्धेन हेतुना साध्यत इत्यर्थः । तत्र हि ग्राहकाभावाद्ग्राह्याभावाच्च प्रागभावाभाव उक्तः, तमाशङ्क्य ग्राहकोऽस्तीत्याह ( प्रागभावस्येति ) तत्र विकल्पे पूर्वपक्षिणोक्ते सत्येवावगमयतीति पक्षं स्थापयितुं तत्रोक्तं विरोधं शङ्कते ( कथमिति ) तदानीमित्यभावविशेषणम् न क्रियाविशेषणम् । परिहरति (नहीति) स्वसमकालवर्त्तित्वनियमः किं ग्राह्यसामान्यप्रयुक्तः ? उतैतद्ग्राह्यविशेषप्रयुक्तः ? इति विकल्पाभिप्रायेण प्रथमं ग्राह्यसामान्यप्रयुक्तत्वपक्षं प्रतिवदति ( न ह्यनुभूतिरिति ) यद्वा—वर्त्तमानग्रहणनियमः किं ग्राहकानुभूतिस्वभावात्? उत ग्राह्यानुभूत्यभावस्वभावादिति विकल्पमभिप्रेत्य प्रथमं दूषयति ( न हीति ) हिशब्दो हेतौ । नेति प्रतिज्ञाऽध्याहर्त्तव्या ॥

* तत्त्वटीका *

असिद्धमत्यन्तासिद्धेन दुस्साधमित्यभिप्रयन् प्रत्याह ( तदन्धस्येति ) जात्यन्धेनेति निदर्शितं विवृणोति ( प्रागभावस्येति ) ग्राह्यकालमात्रे ग्राहकाभावाद्ग्राह्यसत्त्वं न स्यादिति भावः । स्वतोऽन्यतो वा धियः प्रागभावग्रहणमिति प्रागुक्तविकल्पे स्वत इति पक्षं तावदाह ( अनुभूत्येति ) एवकारो विरोधशङ्कानिरासार्थः । सत्यसतीवेति विकल्पे सतीतिपक्षस्याङ्गीकारात्तत्र पूर्वोक्तं विरोधं शङ्कते । ( कथमिति ) अविद्यमानस्वभावबोधने बुद्धेर्भ्रान्तित्वं स्यादिति भावः । स्वाभावस्य हि स्वकालवृत्तित्वे विरोधः । तथा ग्रहणेन च भ्रान्तित्वं स्यात् , इह तूभयमपि नास्तीत्यभिप्रायेण प्रत्याह ( नहीति ) समकालत्वनियमो हि संयोगादिसम्बन्धे, अत्र न तथेति ज्ञापयितुं विषयीकारोक्तिः । तदेव स्थापयति ( अतीतेति ) ॥

अथ मन्यसे—अनुभूतिप्रागभावादेः सिद्ध्यतस्तत्सम-कालभावनियमोऽस्तीति; किं त्वया क्वचिदेवं दृष्टम्? यन्न नियमं ब्रवीषि। हन्त तर्हि तत एव दर्शनात्प्रागभावादिस्सिद्ध इति न × तदपह्नवः। तत्प्रागभावं च तत्समकालवर्त्तिनमनुन्मत्तः को ब्रवीति। इन्द्रियजन्मनः प्रत्यक्षस्य

* श्रुतप्रकाशिका *

ग्राह्यविशेषपक्षं दूषयितुं शङ्कते ( अथ मन्यस इति ) ग्राह्यविशेषस्य समकालवर्त्तित्वनियमोक्तिर्दर्शनपूर्विकैव स्यादित्यभिप्रायेणाह ( किं त्वयेति ) क्वचित्—अनुभूतौ। व्याप्तिग्रहणभूमित्वेनाभावस्य दृष्टत्वात्प्रागभावो दुरपह्नव इत्याह ( हन्त तर्हीति ) प्रागभावस्य समकालसिद्ध्या व्याप्तिरनुभूतिप्रागभावरूपे धर्मिणि गृहीते हि सिध्यतीत्यर्थः। आदिशब्दः प्रध्वंसपरः। समकालवर्त्तित्वनियममभ्युपगम्य दूषणमुक्तम्। समकालवर्त्तित्वं चानुपपन्नमित्याह (तत्प्रागभावञ्चेति) यदि स्वसमकालवर्त्तिग्रहणनियमोऽनुभूतेर्नास्ति तर्ह्यविद्यमाने घटेऽपि चाक्षुषं ज्ञानमुपपद्येत. तत्राह ( इन्द्रियजन्मन इति ) प्रत्यक्षशब्देन प्रत्यक्षज्ञानमुच्यते। अयमभिप्रायः,—स्वसम-

ᛃ तत्त्वटीका ᛃ

यथा ग्राहकविशेषे प्रत्यक्षे सत्सम्प्रयोग इत्यादिना ग्राह्यसमकालत्वमुच्यते, तथा ग्राह्यविशेषधीप्रागभावे ग्राहकसमकालत्वमस्तीति सोपालम्भं शङ्कते (अथेति) किमयं नियमः त्वदन्यैरिव त्वयापि क्वचिदप्यदृष्ट एवोच्यते? उत दृष्टः? इति विकल्पं मत्वा आदिमाक्षिपति (किमिति) दृष्टम्— प्रमितमित्यर्थः। अदर्शने तदुक्तिर्युक्ता न स्यात् यथादृष्टार्थवादित्वञ्च न स्यादिति भावः। दृष्टत्वाभ्युपगमे दोषमाह ( हन्तेति ) अनेन हर्षमनुकम्पां वा द्योतयति, धीप्रागभावं निरस्यता तत्रैव प्रमाणमुपन्यस्तमिति परस्य जडीकारश्चायम्। स्वान्यप्रागभावसमकालत्वनयात् स्वप्रागभावसमकालत्वदृष्टिर्भ्रान्तिरेव ; अतस्ते यथार्थदर्शित्वमपि न स्यादित्यत्राह ( तत्प्रागभावमिति ) अनादिब्रह्मस्वरूपमेवागामिनी मुक्तिरित्युन्माद्यंस्त्वमेवैवं वक्तुमर्हसीति किं-

× तदभावनिह्नवः इति पा०

ह्येष स्वभावनियमः, यत्स्वसमकालवर्त्तिनः पदार्थस्य ग्राहकत्वम्; न सर्वेषां ज्ञानानां प्रमाणानाञ्च, स्मरणानु-

* श्रुतप्रकाशिका *

कालवर्त्तिग्राहकत्वनियमो न ज्ञानमात्रस्य, न च तदवान्तरभेदप्रमाणज्ञानस्य, न च तदवान्तरभेदप्रत्यक्षस्य, अपि तु प्रत्यक्षविशेषरूपस्य ऐन्द्रियिकज्ञानस्येति। (न सर्वेषां ज्ञानानां प्रमाणानां चेति) चशब्देन प्रत्यक्षस्य चेत्युक्तं भवति, उपपादकग्रन्थानुगुण्यात्। कुत इत्यत्राह (स्मरणानुमानेति) स्मरणशब्देन सर्वज्ञानानां समकालवर्त्तिविषयत्वनियमव्युदासः। अनुमानागमशब्देन प्रमाणमात्रस्य तन्नियम-

* तत्त्वटीका *

शब्दाभिप्रायः। नन्वविद्यमानग्रहे सर्वं सर्वत्र सर्वदा गृह्येत, प्रत्यक्षेपि भिन्नकालं ग्राह्यमिति वदद्भिस्सौत्रान्तिकैश्च किमपराद्धमित्यत्राह (इन्द्रियेति) अस्मदादीति विशेषणे तात्पर्यम्, योगिज्ञानस्यानन्तरोक्तेः। क्वचिल्लिङ्गभूतेन्द्रियजन्यज्ञानव्यवच्छेदाय प्रत्यक्षोक्तिः। दीपादीनामपि स्थितिक्षणेक्षसम्प्रयोगान्नश्यत्क्षणे जायमाना धीस्तद्विषयैवेति समकालत्वं सिद्धम्। नश्यत्क्षणसम्बन्धस्तु धियं जनयतीत्यत्र न प्रमाणम्. तत्सद्भावेप्यगत्या तावन्मात्रे कालभेदः, तेन च भिन्नकालस्यापि ग्राह्यत्वं वदतामस्माकमभिमतसिद्धिः। यद्वा,— वर्तमानस्येन्द्रियसंयोगस्यातीतानागतादिनिष्ठत्वायोगात्कारणभूतस्य संयोगस्य स्वसमकालवृत्तिग्राहकत्वं तत्कार्ये प्रत्यक्षज्ञाने लक्षणयोक्तम्. अतोऽत्र नातिप्रसङ्गः, नच भ्रान्तितुल्यत्वम्, यदा विषयस्तदा तथै-[थै]व ग्रहणात्। नन्वनुमानागमजन्यज्ञानयोरपि क्वचित्समकालस्ववृत्तिविषयत्वं दृष्टम्. यथा नित्यविषयेषु रसाद्रूपानुमानादिषु च; तस्मान्नोक्तनियमः। ज्ञानत्वादिकमेव प्रयोजकं स्यादित्यत्राह (न सर्वेषामिति) अयम्भावः,—नित्यप्रभृतिषु ज्ञानस्य समकालत्वं न धीत्वादिप्रयुक्तम् व्यभिचारात्। अस्मदादीन्द्रियजन्यप्रत्यक्षस्य तु नियतोयं स्वभाव इति। (ज्ञानानामिति) भ्रान्तिप्रमित्योः प्रत्यक्षपरोक्षयोश्च सामान्येनोपादानम्. चकारात्प्रत्यक्षाणाञ्च। ज्ञातत्वादित्रिकस्याप्रयोजकत्वं व्यभिचारेण व्यनक्ति (स्मरणेति) भ्रान्तिरपि स्मरणेनोपलक्ष्यते, अबाधितस्मृतेः प्रमाणत्वमिच्छतां पक्षेपि प्रमाणत्वादिप्रयोजकत्वोक्तिरेवोचरम्. स्मरणशब्दो यथार्थायथार्थसाधारणः। आदिशब्देन मुक्तादि

मानागमयोगिप्रत्यक्षादिषु कालान्तरवर्त्तिनोऽपि ग्रहण-दर्शनात्; अत एव च प्रमाणस्य प्रमेयाविनाभावः—न हि प्रमाणस्य स्वसमकालवर्त्तिनाऽविनाभावोऽर्थसम्बन्धः, अपि तु यद्देशकालादिसम्बन्धितया योऽर्थोऽवभासते, तस्य तथाविधाकारमिथ्यात्वप्रत्यनीकता; अत इदमपि

---

* श्रुतप्रकाशिका *

व्युदासः। योगिप्रत्यक्षादिशब्देन प्रत्यक्षमात्रस्य तन्नियमव्युदासः। आदिशब्देन ईश्वरप्रत्यक्षं गृह्यते। प्रमेयसद्भावो न चेत्प्रमाणाप्रमाणज्ञानयोः कथं वैषम्यमित्य-त्राह (अत एवेति) अत एव—ज्ञानमात्रस्य समकालवर्त्तिग्राहकत्वनियमाभावेन। प्रमेयाविनाऽभावश्च सिद्ध इत्यर्थः। अन्यथा वर्त्तमानविषयालाभादसमकालवर्त्ति-ग्राहिणां तत्तत्प्रमाणानां प्रमेयाविनाभावो न सिध्येदिति भावः। तत्सिद्धिः कथ-मित्यपेक्षायां तमेवाविनाभावं विवृणोति (न हि प्रमाणस्येति) प्रमाणस्यार्थसम्बन्ध इत्यन्वयः। तर्हि प्रमेयाविनाभावः क इत्यत्राह (अपि त्विति) यद्देशकालादीत्यादि शब्देन संस्थानमुच्यते। (मिथ्यात्वप्रत्यनीकता) मिथ्यात्वस्य प्रमाणं प्रत्यनीकं

ॐ तत्त्वटीका ॐ

प्रत्यक्षसङ्ग्रहः। ग्रहणदर्शनात्— ग्रहणस्य प्रमितत्वादित्यर्थः। ननु प्रमेय-व्याप्यं हि प्रमाणम्. अन्यथा क्वचिदर्थशून्यत्वेप्यविरोधात्; तस्मात् प्रमितेः कथं स्वविषयभिन्नकालत्वम्? तत्राह (अत इति) समकालत्वानियमं हित्वा यथादर्शनं व्यवस्थापनादिति यावत्। एवकारश्चोद्यनिरासस्यैव परिहारगम्यत्वार्थः। अयं भावः,—यदि मानमेययोरविनाभावस्समकालत्वेन, तदातीतादिविषयप्रमितीनां प्रमात्वं न स्यात्. व्याप्तिश्च कार्यकारणादिभिः, कार्यकारणाद्यनुमाने भिन्नकालतयापि दृष्टे इति. तथापि भिन्नकालत्वे तत्रतत्र दृष्टम्। तथानुभूतिप्रागभावप्रमाणस्यापि स्यात्, अन्यथा कथं बुद्धेरर्थसम्बन्धः? नच दीपोऽतीतं प्रकाशयति। अत्रात एवेत्यभि-प्रेतं विवृणोति (नहीति) प्रमाणस्यार्थसम्बन्धो नहि स्वकालवर्तिनाविनाभाव इत्यन्वयः। किं तर्ह्यत्र विना न भवतीति वा विवक्षितमित्यत्राह (अपि त्विति) तथाविधाकारस्तद्देशत्वादिसम्बन्धित्वप्रकारः। मिथ्यात्वप्रत्यनीकता— अनारो-

निरस्तम्, स्मृतिर्न बाह्यविषया नष्टेऽप्यर्थे स्मृतिदर्शनात्-इति ॥

* श्रुतप्रकाशिका *

भवति तस्य भाव इत्यर्थः। यद्वा, मिथ्यात्वप्रत्यनीकोऽर्थो भवति तस्य भावो मिथ्यात्वप्रत्यनीकता, सा प्रमाणस्यार्थसम्बन्ध इत्यन्वयः। अत एवेत्यादिभाष्यस्यैवं वाऽर्थः, अत एव—प्रमाणत्वेन सम्प्रतिपन्नानां कालान्तरवर्तिग्राहकत्वदर्शनात्तत्रापि प्रमेयाविनाभावः कल्प्यत इत्यर्थः। कथं तत्राविनाभावप्रकारः ? इत्यत्राह— न हीत्यादि। अनेनैव प्रमाणप्रमेयाविनाभावरूपविषयविषयिभावरूपशिक्षणेन बौद्धैकदेशिभिरुक्तं स्मृतेर्निर्विषयत्वं निरस्यत इत्यवश्याभ्युपेतव्यमिदमित्यभिप्रायेणाह (अत इदमपीति) एवमनुभूतिरेव प्रागभावग्रहणक्षमेत्युपपादितम् ॥

अथ तद्ग्राहिणाऽनुभवेन प्रत्यक्षाद्यन्यतमेन भवितव्यमिति तदसम्भवेन प्रमाणा-

५ तत्त्वटीका ५

पितत्वम्। भ्रान्तिशङ्कोद्धारक्रमसूचनाय व्यतिरेकोक्तिः। अत्र प्रसङ्गात्परोक्तमर्थान्तरमपि निरस्यंति (अत इति) भिन्नकालत्वस्यापि विषयत्वस्थापनादित्यर्थः। नष्टेऽपीति वर्तमानत्वसङ्ग्रहः। नष्टविषयस्मृतिन्यायात् वर्तमानविषयस्मृतावपि बाह्यविषयत्वं त्याज्यमिति मन्यते, अत्रैवमुत्तरम्,— स्मृतेर्बाह्यविषयत्वाभावे निर्विषयत्वं वा स्वमात्रविषयत्वं वा कल्पितस्वाकारविषयत्वं वा आन्तरवस्त्वन्तरविषयत्वं वा स्यात्। नाद्यः,—अयुक्तत्वादनिष्टत्वाच्च। न द्वितीयः,—अतएव योगाचारविजयप्रसङ्गात् स्वरूपप्रकाशातिरिक्तस्मृत्यसिद्धिप्रसङ्गाच्च। न तृतीयः,—तुल्यन्यायतया। नापि चतुर्थः,—तादृग्वस्त्वन्तरे मानाभावात्। अनुभूतिविषयस्वरूपान्तःकरणवृत्तिरेव स्मृतेर्विषय इति चेन्न, स्मृतिरूपायास्तदतिरिक्ताया वा निष्प्रमाणकतया दत्तोत्तरत्वादिति। एतेन स्मृत्युदाहरणेन प्रत्यक्षेतरमानेषु सर्वेष्वपि बाह्यतुल्यान्तःकरणवृत्तिरेव बाह्यवद्भवतीति पक्षोपि निरस्तः।

बाह्यत्वेन प्रतीतश्चे—द्बाह्यं क्वापि कल्प्यते।
अविशेषेण सर्वत्र तथा क्लृप्तिः प्रसज्यते ॥ ५ ॥

यदि तत्र स्वतः स्वप्रागभावग्रहणं साधयता प्रत्यक्षविशेषे वर्तमानग्राहित्वनियमो नान्यत्रेति विभक्तं तत्र केन प्रमाणेन जनिता धीस्स्वाभावग्राहिणीति विकल्प-

अथोच्येत—न तावत्संवित्प्रागभावः प्रत्यक्षावसेयः, अवर्त्तमानत्वात्। न च प्रमाणान्तरावसेयः, लिङ्गाद्यभावात्। न हि संवित्प्रागभावव्याप्तमिह लिङ्गमुपलभ्यते + न चागमस्तद्विषयो दृष्टचरः। अतस्तत्प्रागभावः प्रमाणाभावादेव न सेत्स्यति —इति; यद्येवं स्वतस्सिद्धत्वविभवं

* श्रुतप्रकाशिका *

भावात्प्रागभावाभावं शङ्कते ( अथोच्येतेति ) लिङ्गाद्यभावादिति आदिशब्देन अनुमानशब्दौ विवक्षितौ। तद्विवृणोति ( न हीत्यादिना ) निगमयति ( अत इति ) उपमानस्य प्रतिपन्नवस्तुसादृश्यसंज्ञासंज्ञिसम्बन्धयोरन्यतरमात्रगोचरत्वेनाप्रति-

ϐ तत्त्वटीका ϐ

गर्भां प्रत्युक्तिं शङ्कते ( अथेति ) तत्र सम्प्रतिपन्नांशाभिप्रायेणाह ( न तावदिति ) न प्रत्यक्षावसेयः—प्रत्यक्षस्वरूपया स्वप्रतियोगिन्या धिया दुर्ग्रह इत्यर्थः। परोक्षग्राह्यत्वमपि निरस्यति ( न चेति ) लिङ्गाद्यभावं पृथग्व्यनक्ति ( न हीति ) अनुमानार्थापत्त्योरदूरविप्रकर्षोद्व्यवहितत्वोक्तिः। स्वेष्टस्याप्यत्रोपमानस्यात्यन्तासम्भवादनुक्तिः। फलितं स्वाभिमतषष्ठप्रमाणबाध्यत्वमाह ( अत इति ) प्रमाणाभावात्—प्रमाणपञ्चकनिवृत्तेरित्यर्थः। तथाच शाबरम् × 'अभावोपि प्रमाणाभावो नास्तीत्यस्यार्थस्य' इति। कारिका च + 'प्रमाणपञ्चकं यत्र वस्तुरूपे निवर्तते।

+ नानुपपत्तिरपि कस्यचिद् दृश्यते. इति क्वचित्पुस्तकेषु कुण्डलितं दृश्यते.

× मीमांसादर्शने—१-१-५—औत्पत्तिकसूत्रे उक्तम्.

+ इयञ्च कारिका अभावोपि प्रमाणाभावो नास्तीत्यस्यार्थस्येति भाष्यम्. तदयुक्तम्,—नहि प्रमाणाभावः, प्रमाणलक्षणं सम्भवति विपरीतत्वात्; अत आह ( प्रमाणेति ) पूर्वोक्तसदुपलम्भकप्रमाणपञ्चकाभिप्रायोयंप्रमाणशब्दः. तदभावश्च षष्ठस्य युक्तमेव लक्षणम्. तेनेदृशं वस्तुसत्तावबोधार्थं यत्प्रमाणपञ्चकं तद्यत्र घटादौ वस्तुरूपे सत्यामेव प्रसक्तौ न जायते तत्र घटादावभावस्य प्रामाण्यमिति. नन्वप्रमीयमाणे घटे कथमभावस्य प्रामाण्यमिति, न ह्यप्रमीयमाणस्य प्रमेयता सम्भवति, तत्रोत्तरं भाष्यकारेणोक्तम्—नास्तीत्यस्यार्थस्यासन्निकृष्टस्य—इति. तद्व्याचष्टे ( वस्त्विति ) इति न्यायरत्नाकरे व्याख्याता॥

# परित्यज्य × प्रमाणाभावेऽवरूढश्चेत् योग्यानुपलब्ध्यैवा-

* श्रुतप्रकाशिका *

पन्नपदार्थप्रतिपादनासामर्थ्यादनुपन्यासः । परिहरति (यदीति) यदिशब्दः किमर्थः । चेच्छब्दो यद्यर्थः । स्वपरिपाटीं विहाय शास्त्रमर्यादायां किमवतीर्णोऽसि तथा चेदित्यर्थः । प्रमाणमाह (योग्यानुपलब्ध्यैवेति) परेणाभावप्रमाणस्याङ्गीकृतत्वात् योग्यानुपलब्ध्यैवेत्युक्तम् । स्वपक्षपर्यालोचनायामपि ज्ञानस्य योग्यानुपलब्धिर्नाम भावरूपावस्थान्तरोपलब्धिः, पिण्डत्वाद्युपलब्धिरेव हि घटस्य योग्यानुपलब्धिः । अतोऽतीतकालावच्छिन्नज्ञानाभावो नाम ज्ञानस्य सङ्कोचोऽर्थान्तरज्ञानं वा, पूर्वकालीनगजज्ञाने बुभुत्सिते तत्कालीनस्वापादिप्रतिसन्धानं घटादिज्ञानप्रतिसन्धानं वा गजज्ञानस्य योग्यानुपलब्धिः, सा च लिङ्गतया पूर्वकालीनज्ञानाभावनिश्चायिका । यदुक्तं—संविद इयमिति विषयीकारानर्हत्वेन अभावो दुर्ग्रहः—इति । तदयुक्तम् ,—तथा सति प्रागभावनिरासानुपपत्तेः, न ह्यन्यस्य घटादेः प्रागभावो निरस्यते, अपि त्वनुभूतेः, तस्मादनुभूतिम् इयमिति विषयीकृत्य तस्याः प्रागभावो निराकरणीयः । इयमिति विषयीकाराभावेऽपि तत्प्रागभावो निराकर्तुं शक्यते चेत्; तदभावेऽपि प्रागभावस्साधयितुं शक्यते। यदि त्वया विषयीकृता तद्वदस्माभिरपि विषयीकृतेति तदभावः सुसाध इत्यनुसन्धेयम् . उत्तरत्र नित्यश्चेदिति ग्रन्थेऽप्ययमर्थो ह्यभिप्रेतः। एवं प्रागभावस्य योग्यानुपलब्धिसिद्धत्वमभिधायार्थापत्ति-

☙ तत्त्वटीका ☙

वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ " इति । परोक्तामनुपपन्नोक्तिं दूषयितुमाह * [ दुरपह्नवमिति ] ( यद्येवमिति ) प्रागसदुपक्षिप्तयैवेत्येवकाराभिप्रायः । ग्रहणासम्भवात्संवित्प्रागभावस्याभावं वदतो निषेध्यवत्त्वव्याघातः स्यादित्यभिप्रायेणानूक्तमेव विवृणोति ( स्वत इति ) चेदित्येतत् केषुचित् कोशेषु न दृश्यते, तदा यदीत्यादिकम् अवरुढ इत्यन्तमेकं वाक्यम् । यदा त्वया स्वतस्सिद्धबलं त्यक्तम् तदाऽहमपि स्वतस्त्वाभावग्रहणमादृत्य त्वदुपक्षिप्तं प्रतियोगिविषयप्रमाणाभावमेव संविदभावे प्रमाणयामीत्याह ( योग्येति ) प्रतिबन्दिमात्रशङ्का-

× प्रमाणभावे. इत्यपि-पा०

6 कुण्डलितस्सर्वकोशेषूपलभ्यते, श्रीमाष्ये परं न दृश्यते.

भावः समर्थित इत्युपशाम्यतु भवान् ॥ किञ्च—प्रत्यक्षज्ञानं स्वविषयं घटादिकं स्वसत्ताकाले सन्तं साधयत्तस्य न सर्वदा सत्तामवगमयद्दृश्यत इति घटादेः पूर्वोत्तरकाल-

* श्रुतप्रकाशिका *

मप्याह (किञ्चेत्यादिना) ज्ञानस्य स्वावभासास्थिरत्वलक्षणयोग्यानुपलब्ध्या अनित्यत्वमुक्तम्। अथ विषयप्रकाशनिरूपणमुखेनापि तदुपपाद्यते, अविशेषेण ज्ञानाभावस्य ग्रहणमुपपन्नमित्युक्तम्। अथ किं भवता नित्यत्वं सविषयज्ञानस्य सिषाधयिषितम्? उत निर्विषयस्य? इति विकल्पमभिप्रेत्य सविषयपक्षं दूषयति (प्रत्यक्षेत्यादि) सर्वदा—घटसत्ताकाले सर्वस्मिन्न प्रतीयत इत्यर्थः। घटादेः पूर्वोत्तरकालसत्ता न

७ तत्त्वटीका ७

व्युदासाय समर्थितशब्दः। प्रत्यक्षसामग्रीप्रविष्टेन षष्ठप्रमाणेन ज्ञानस्याभावं साधयन् महाप्राज्ञोसीत्युपहासार्थं इह भवच्छब्दः।

स्वज्ञानाभावदृष्ट्या हि ज्ञानिनस्त्वं प्रपद्यसे।
अज्ञातं पृच्छमानश्च न जानामीति भाषसे ॥ ७ ॥
परधीजननार्थञ्च त्वया वाक्यं प्रयुज्यते।
शृणोषि च स्वधीसिद्ध्यै कथं नित्यां ब्रवीषि ताम् ॥ ७ ॥
प्रत्यक्षाद्यैस्सुषुप्त्यादौ न हि धीः क्वापि गम्यते।
ग्राह्यग्राहकधीस .... .... .... .... .... ॥ ७ ॥
पूर्वोत्तरसुषुप्त्यादि—ग्राहिणी च स्वयं मतिः।
स्वाभावमपि गृह्णाति तत्तन्मानसमुद्भवम् ॥ ७ ॥
अतो यथोचितैर्मानैः स्वस्यान्येषाञ्च संविदः।
विषयादिविशिष्टायाः प्रागभावः प्रसाध्यते ॥ ७ ॥
[ज्ञानद्रव्यस्य नित्यत्वं युक्तिभिः स्थाप्यतेऽपि तु।
तत्तत्प्रसृतिभेदानामुत्पत्त्यादीति भाष्यते ॥ ७ ॥]
तत्र यद्यपि नित्यत्वं ज्ञानद्रव्यस्य वक्ष्यते।

+ मातृकासु त्रुटितमेव दृश्यते ॥ स्वे ग्रहणं न कुतो भवेत् ॥ इत्यर्थकं स्यातव्यमिति भाति ॥

सत्ता न प्रतीयते । तदप्रतीतिश्च संवेदनस्य कालपरिच्छिन्नतया प्रतीतेः । घटादिविषयमेव संवेदनं स्वयं कालानवच्छिन्नं प्रतीतं चेत्; संवेदनविषयो घटादिरपि काला-

* श्रुतप्रकाशिका *

प्रतीयताम् । ततः किमित्यत्राह (तदप्रतीतिश्चेति) अप्रतीतिः—ज्ञानस्य घटव्यवहारानुगुण्याभावः, अतो न साध्याविशिष्टता; नियमेन स्वसमकालवर्तिग्राहिणः प्रत्यक्षज्ञानस्य पूर्वोत्तरकालयोर्विद्यमानेऽपि घटे तदप्रकाशकत्वं तदानीं स्वभावादेवेत्यर्थः । एवं विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्त्या ज्ञानानित्यत्वमुक्तम् । अर्थापत्त्यन्तरमाह ( घटादिविषयमेवेति) विषयसमकालवर्तिनः प्रत्यक्षसंवेदनस्य नित्यत्वे

७ तत्त्वटीका ७

तथापि प्रस्तुताकारे प्रागभावादिभाषणम् ॥ ७ ॥
मृद्घटादिनयाद्बुद्धेः स्थिरागन्तुकधर्मणः ।
नित्यानित्यत्ववादानां यथाभागं प्रमाणता ॥ ७ ॥
परस्तु सविकारत्वं श्रुतं ज्ञानस्य नेच्छति ।
अस्मत्पक्षसमानत्वमतस्तैर्नात्र दुर्वचम् ॥ ७ ॥
उक्तसंविदनित्यत्व–ग्राहकानुग्रहक्षमम् ॥ ७ ॥
प्रसङ्गत्रितयं वक्तुमथ किञ्चेति भाषते ॥ ७ ॥

किं सर्वलोकविदितसविषयमेव ज्ञानं नित्यमिति त्वया साध्यते ? उत निर्विषयमन्यत् ? इति विकल्पं मत्वा प्रथमे बाधका उच्यन्ते. 'अत्रार्थापत्तिरेका, अस्या अनुग्राहकं द्वयम्' इति केचित् । प्रत्यक्षज्ञानम्– अस्मदादीन्द्रियजन्यधीरित्यर्थः । योगिप्रत्यक्षे हि त्रैकालिकविषयमिति । स्वशब्दावत्र धीविषयौ । साधयत्– व्यवहारानुगुणीकुर्वत् । सर्वदा– यावत्स्वविषयकालम् । पूर्वोत्तरकाल- [ ज्ञान ] सत्ता–प्रागभावध्वंसकालावच्छिन्नसत्ता । न प्रतीयते–न व्यवहारानुगुणी भवतीत्यर्थः । तेन ज्ञानानित्यत्वस्य को विरोध इत्यत्राह ( तदिति ) कालपरिच्छिन्नतया– स्वविषयावच्छिन्नकालमध्ये अल्पतरकालवृत्तितयेत्यर्थः । घटादेर्यावत्सत्त्वं प्रकाशमानत्वं प्रसञ्जितम् न केवलं तावन्मात्रं नित्यत्वमपि प्रसक्तमित्याह (घटादीति)

नवच्छिन्नः प्रतीयेतेति नित्यः स्यात्। नित्यं चेत् संवेदनं स्वतस्सिद्धं नित्यमित्येव प्रतीयेत, न च तथा प्रतीयते ॥ एवमनुमानादिसंविदोपि कालानवच्छिन्नाः प्रतीताश्चेत् स्वविषयानपि कालानवच्छिन्नान् प्रकाशयन्तीति ते च

* श्रुतप्रकाशिका *

घटादिरपि नित्यः स्यात्; अतो घटाद्यनित्यत्वाऽन्यथानुपपत्त्या ज्ञानानित्यत्वमित्यर्थः। अर्थापत्त्यन्तरमाह ( नित्यश्चेदिति ) संविदो नित्यत्वसाधनं संविदियमिति विषयीकृत्यैव कर्तव्यम्. स्वतस्सिद्धत्वेनेयमिति विषयीकारानर्हत्वात् स्वयमेव नित्यमिति प्रतीयेत, न च तथा प्रतीयते; तस्मादनित्यत्वमेवेत्यर्थः। एवं नित्यतयाऽनवभासान्यथाऽनुपपत्त्या ज्ञानानित्यत्वमुक्तम्। अनित्यतयाऽनवभासान्नित्यत्वमिति चेन्न, पूर्वापरावधिद्वयसापेक्षस्य अनित्यत्वस्य सद्भावेप्यवधिद्वयास्वयम्प्रकाशत्वादेव अनित्यत्वाप्रकाशत्वोपपत्तेः। यद्वा, घटादिनित्यत्वप्रसङ्गो नित्यत्वेनावभासप्रसङ्गश्च विषयव्यवहारानुगुण्यकादाचित्कत्वान्यथानुपपत्तेरनुग्राहकतर्कतयोक्तौ भवतः॥ अथानुमानादिविषयाणामपि नित्यत्वमनिष्टं प्रसञ्जयति ( एवमिति ) एवम्—प्रत्यक्षज्ञाननित्यत्वे

७ तत्त्वटीका ७

अस्मदादिप्रत्यक्षमतीतानागतालम्बनं यावत्स्वकालं स्वविषयसत्तां स्थापयतीति भावः। प्रत्यक्षज्ञानमित्यादि स्यादित्यन्तमेकतर्कविषयं वा. एवं वेद्यप्रकाशव्यवस्थया तदनित्यत्वाच्च विरोध उक्तः। वित्तिप्रकाशव्यवस्थयाप्याह ( नित्यमिति ) स्वतः सिद्धमिति हेतुगर्भम् ; बुद्धेरनित्यत्वं बुद्ध्यन्तरश्चानिच्छता त्वयान्यतो धीनित्यत्वस्य वक्तुमयुक्तत्वादित्यर्थः। एवकारस्संशयाद्यसम्भवप्रसञ्जनार्थः।

वित्त्यन्तरेण [ वित्तित्वेनैव ] तु धियो नित्यत्वं यदि साध्यते।
अभावप्रतियोगित्व—मपि तद्वत्प्रसाध्यताम् ॥ ७ ॥
विषयीकृत्यनर्हत्वात् प्रागभावादि निर्वदन्।
अन्योन्याभावमप्येवं त्यक्त्वा मिथ्यैकमिच्छतु ॥ ७ ॥

प्रत्यक्षधियो नित्यत्वं पुरस्कृत्योपलम्भविरोधो विषयनित्यत्वञ्च प्रसञ्जितम्। परोक्षधियामपि नित्यत्वे तत्प्रसञ्जयति ( एवमिति ) प्रत्यक्षोक्तप्रकारसाम्यादित्यर्थः।

सर्वे कालानवच्छिन्ना नित्याः स्युः, संविदनुरूपस्वरूप-

* श्रुतप्रकाशिका *

विषयनित्यत्वप्रसक्तौ सत्यामित्यर्थः । कुतो नित्यत्वमत्राह ( संविदनुरूपेति ) यथा संवित्स्वविषयं दर्शयति तथाभावादिति तदर्थः । ननु प्रत्यक्षस्य समकालवर्त्तिविषयत्वनियमात्तन्नित्यत्वे विषयनित्यत्वप्रसङ्ग उपपन्नः, अनुमानादिसंविदाम् अतीतानागतविषयत्वसम्भवात्कथं तन्नित्यत्वे विषयनित्यत्वप्रसङ्गः ? उच्यते,—अतीततानागतते ह्यापेक्षिके वर्तेते. ततः संविदपेक्षया हि विषयस्यातीतत्वानागतत्वे. संविदो नित्यत्वे तदपेक्षया विषयस्यातीतत्वानागतत्वे संविन्न दर्शयतीति कालानवच्छिन्नतया प्रतीतौ विषया नित्याः स्युरिति. कालानवच्छिन्नत्वमेवानुगतं नित्यत्वलक्षणमित्यभिप्रायेण कालानवच्छिन्ना नित्या इत्युक्तम् । ननु न संविदपेक्षया विषयस्यातीतत्वागामित्वे, किन्तु लिङ्गाद्यर्थान्तरापेक्षया, ततो विषयस्य लिङ्गाद्यपेक्षयाऽतीतत्वमागामित्वञ्च सम्भवतीति न नित्यत्वप्रसङ्गः । उच्यते,—लिङ्गादेः प्रत्यक्षज्ञानविषयत्वात्तन्नि-

५ तत्त्वटीका ५

( संविद इति ) नन्वनुमानादिधियां न स्वकालवर्त्तिप्रकाशननियमः । सत्यम्,—अयन्त्विह विभागः । यत्रासां वर्त्तमानप्रकाशकत्वं तत्र संविदवच्छिन्नकालवर्त्तित्वग्रहाद्विषयनित्यत्वप्रसक्तिस्स्यादेव. अनादिप्रकाशनेपि धीनित्यत्वे तदवच्छिन्नकालप्रतियोगिकस्य विषयातीतत्वादेरसिद्धिः । यत्र लिङ्गस्य प्रत्यक्षत्वं तत्र तन्नित्यत्वं पूर्वोक्तप्रकारेण प्राप्तम्, तथाच तद्व्यापकस्यापि नित्यत्वप्रसक्तिरिति । ननु स्वयं नित्यापि घटादिसंवित् कदाचिदेव घटादीनुल्लिखतु । मैवम्,—

अर्थोल्लेखस्वभावा चे—न्मितिस्तस्य विसर्जने ।
निस्स्वभावा प्रसज्येत तथा वा परिणामिनी ॥ ५ ॥
अथ निर्विषयत्वं तत्स्वभावस्तादृशी कथम् ।
अर्थबोधस्वरूपा स्या—दवस्थाद्वयवर्जनात् ॥ ७ ॥

कालानवच्छिन्नशब्देन कालादिसर्वानुगतनित्यशब्दानिमित्तोक्तिः, अतो न पुनरुक्तिः यद्वा— त्वन्मतेपि देहिनां कालावच्छिन्नतया भातानामपि श्रुत्याद्यैस्तद्विपरीतत्वं सिद्धम्, तद्वत्संविदि तद्विषयेषु चापातप्रतीतविपरीतं नित्यत्वमनित्यत्वञ्च स्यादित्याह (संविदिति ) संविदनुरूपत्वं तत्प्रकाशितप्रकारेणावस्थानम् । अयन्त्विह भावः,—

स्वात् विषयाणाम् । न च निर्विषया काचित् संविदस्ति ; अनुपलब्धेः । विषयप्रकाशनतयैवोपलब्धेरेव हि संविदः स्वयम्प्रकाशता समर्थिता ; संविदो विषयप्रकाशनता

* श्रुतप्रकाशिका *

त्यत्वेन तद्विषयभूतलिङ्गादेरपि नित्यत्वापातात् तदपेक्षयानुमानविषयस्यातीतत्वमागामित्वञ्च संविन्न दर्शयतीति कालानवच्छिन्नो नित्य एव विषयः स्यादिति, एवं पूर्वोक्तदोषमुपजीव्यानुमानविषयनित्यत्वप्रसक्तिरित्याभिप्रायेणैवमित्युक्तम् ; एवं पूर्वोक्तविकल्पे सविषयानुभवस्य नित्यत्वं निराकृतम् । अथ निर्विषयानुभवस्य नित्यत्वपक्षं निराकरोति ( न चेति ) कुत इत्यत्राह ( अनुपलब्धेरिति ) न केवलं निर्विषया संविदनुपलब्धेरेव, सविषयसंविद एव परेण स्वयम्प्रकाशत्वसमर्थनात्तदभ्युपगमप्रकारेणापि निर्विषया संविन्नास्तीत्याह (विषयेति ) ततः किमित्यत्राह ( संविदोविषयेति ) सविषयज्ञानोत्तीर्णायाः संविदः कदाचिदपि विषयसम्बन्धाभावेन स्वयम्प्रकाशत्वासिद्धेर्ज्ञानान्तरावेद्यत्वाच्च तुच्छतेत्यर्थः । ननु यदि विषयप्रकाशकतया

ঙ तत्त्वटीका ঙ

संविदेव हि नीलपीतादिव्यवस्थायां शरणम्, स्वतः प्रमाबाधे त्वन्यथा, तव तु बाधकज्ञानस्याप्युक्तरीत्या स्वरूपतो विषयतश्च नित्यत्वप्रसक्त्याध्यासानुदयप्रसङ्गः । ततश्च बाधकासम्भवाद्यथाप्रकाशं विषयनित्यत्वं सिद्ध्येदिति । भवतु सविषयस्यान्तःकरणवृत्तिविशेषस्य तदवच्छिन्नचैतन्यस्य चोत्पत्त्याद्युपलब्धिः । विषयाश्रयशून्या तु संविन्नित्या स्यादिति पूर्वोक्तविकल्पयोः कोट्यन्तरं निरस्यति (न च निर्विषयेति ) एतेन निराश्रयत्वमप्युपलक्ष्यते । यद्वा—विषिणोतीति विषयः, विशेषेण सम्बध्नातीत्यर्थः । तेन संविदवच्छेदकं वेद्यं वेदिता च सङ्गृह्यते । किमत्र घटादिविषयसंविदोऽन्या काचिन्निर्विषयेत्युच्यते ? उत वस्तुवृत्त्या सैवेति विकल्पे द्वयोरप्ययोगमभिप्रेत्याह ( काचिदिति ) तथैव दृष्टेस्तदभावे तदसिद्धिरित्युक्तमुभयत्र बाधकमाह ( अनुपलब्धेरिति ) योग्यत्वे सतीति विशेषणीयम् । पराभ्युपगतविरोधमप्याह ( विषयेति ) प्रसिद्धायास्संविदो निर्विषयत्वं वा तादृशसंविदन्तरं वा युक्तिशास्त्राभ्यां साधयाम इत्यत्रानिष्टमाह ( संविद इति ) विषयप्रकाशनतास्वभावशब्देन प्रागुक्तानु-

स्वभावविरहे सति स्वयम्प्रकाशत्वासिद्धेः अनुभूतेरनुभवान्तराननुभाव्यत्वाच्च संविदस्तुच्छतैव स्यात् । न च स्वापमदमूर्च्छादिषु सर्वविषयशून्या केवलैव संवित्परि-

* श्रुतप्रकाशिका *

स्वयम्प्रकाशत्वमुपपाद्यते तदाऽयं दोषः स्यात्, विषयसम्बन्धाभावेऽपि अनुभूतित्वादित्यनेन साध्यस्वप्रकाशत्वसिद्धिरिति चेत्; किमिदमनुभूतित्वम् ? किं स्वतः सिद्धत्वम् ? तदा साध्याविशिष्टता स्यात् । यदि विषयप्रकाशकत्वमनुभूतित्वं तदानीमुक्तदोषः स्यादेव. विद्यमानदशायां सर्वदा भासमानत्वमपि न त्वया हेतुत्वेन वाच्यम्, सुखदुःखेच्छादौ जडत्वेन त्वदभिमते व्यभिचारात् ; अतो विषयप्रकाशकत्वमनुपजीव्य स्वयम्प्रकाशत्वं दुस्साधनमित्युक्तदोषानतिवृत्तिः । कथं स्वप्रकाशत्वरूपसाध्यधर्मनिवृत्तौ धर्मिभूतसंविदसिद्धिरित्यत्राह (अनुभूतेरनुभवान्तराननुभाव्यत्वाच्चेति) नन्वेकस्या एव संविदः अन्तःकरणवृत्तिद्वारा विषयसम्बन्धःकादाचित्कः, तद्विगमेपि स्वापादिदशासु स्वप्रकाशा संविच्चकास्तीति न तुच्छताप्रसक्तिरित्यत्राह ( न चेति )

७ तत्त्वटीका ७

मानं सूच्यते । अयम्भावः,— विषयप्रकाशत्वं संवित्स्वरूपम्, धर्मो वा ? आद्ये,— तन्निवृत्तिं वदतः कथं धर्मिसाध्ययोस्सिद्धिः ? । तत्र द्वितीये तस्य स्वप्रकाशत्वसमकालतयैव दृष्टेस्तदभावे तदसिद्धिरिति । स्वतः परतो वा प्रकाशमानं तुच्छं मन्यसे । संविदि तूभयासम्भवात्तुच्छाद्व्यावृत्तिर्दुर्लभेत्यवधारणाभिप्रायः । यद्वा— सत्त्वकोटिर्दूरनिरस्ता, अनिर्वचनीयकोटिरप्यलभ्येति भावः । अनुभूतित्वात्तत्सिद्धिरिति चेत्; अनुभूतित्वं नाम विषयप्रकाशत्वञ्चेत् तद्दूषितमेव । स्वप्रकाशत्वञ्चेत् साध्याविशेष इति ।

स्वावच्छेदकनिर्मुक्तसंविन्नित्यत्वमिच्छता ।
संयोगच्छेदनादौ च किं न तादृक्त्वमिष्यते ॥ ७ ॥
घटाकाशादिनीतिश्च त्वया संविदि दुर्भणा ।
तत्तत्संयोगविश्लेष— तुल्यागन्तृगुणोज्झनात् ॥ ७ ॥

अनुपलब्धेरित्युक्तस्यावस्थान्तरेष्वसिद्धिशङ्कां परिहरति (न च स्वापेति) आदिशब्देन समाध्यवस्थासङ्ग्रहः, केवलाहङ्कारविगमान्निराश्रयेत्यर्थः । अत्र दत्तोत्तरत्वमभि-

स्फुरतीति वाच्यम्; योग्यानुपलब्धिपराहतत्वात्। तास्वपि दशास्वनुभूतिरनुभूता चेत्, तस्याः प्रबोधसमयेऽनुसन्धानं स्यात्; न च तदस्ति॥ नन्वनुभूतस्य पदार्थस्य स्मरणनियमो न दृष्टचरः, अतः स्मरणाभावः कथमनुभावाभावं साधयेत्? उच्यते,—निखिलसंस्कारातिर-

* श्रुतप्रकाशिका *

केवलशब्देन निराश्रयत्वमुच्यते। कुत इत्यत्राह (योग्येति) तदेवोपपादयति (तास्वपीति) विपर्यये पर्यवसानं दर्शयति (न च तदस्तीति) व्यापकाभावो हि व्याप्याभावसाधकः, स्मरणञ्च नानुभवव्यापकम् अतस्तदभावो नानुभवाभावसाधक इत्याह (नन्विति) पथि गच्छता स्पृष्टतृणादीनां प्राग्जन्मानुभूतार्थानां चास्मरणादिति भावः। परिहरति (उच्यत इत्यादिना) विषयान्तरव्यासङ्गादिरस्मरणमात्रहेतुः, विषयवैचित्रीविरहः, निष्प्रयोजनतया तात्पर्याभावः, तादात्विकतीव्रसंवेदनान्तरमनुभवानभ्यासश्च, अस्मरणमात्रहेतुतया हि प्रसिद्धाः। अतो नियमशब्दः, असमरणनियम इत्युक्तेः। जन्मान्तरानुभूतस्याप्यनुभवाभावप्रसङ्गात्तद्व्यावृत्त्यर्थं निखिलसंस्कारेत्युक्तम्। देहविगमादीत्यादिशब्देन नारकदुःख-

* तत्त्वटीका *

प्रेत्याह (योग्येति) ननु स्वापादिदशावर्त्तिनी जागरवर्त्तिनी वा योग्यानुपलब्धिरिहोपलक्ष्यते। नाद्यः,—तदानीमिदानीं वा तदित्यसत्, अध्यासाश्रययोगादेरप्यनुपपादनात्. तात्त्विकानुपलम्भस्यानुपलम्भात्। न द्वितीयः,—कालान्तरसंविदः कालान्तरे प्रत्यक्षयोग्यत्वायोगात्. तत्तदधीनव्यतिरिक्तहेतुसाकल्यं हि योग्यत्वम्; अतो योग्यानुपलब्धिपराकृतत्वादिति हेतुरसिद्धः। तत्राह (तास्विति) अयम्भावः—स्वापादिषु संविदासीदित्यद्यतनोपलब्धिस्तावद्योग्यानुपलब्ध्या निरस्ता, तदानीन्तनसंविदस्तदातनोपलब्धिश्च व्यापकानुपलब्ध्या बाधितेति। स्मर्तव्यस्य स्मरणमुपलम्भव्यापकम्, तदाभावात्तदभाव इत्यभिप्रायेणाह (न च तदिति) स्मृतेरनुभवव्यापकत्वाभावात्तदभावस्य तदभावलिङ्गत्वं नास्तीति चोदयति (नन्विति) विशिष्टरूपेण व्याप्तिं स्थापयति (उच्यत इति) निखिलशब्दः प्राचुर्याभिप्रायः, अन्यथा जात-

स्कृतिकरदेहविगमादिप्रबलहेतुविरहेप्यस्मरणनियमोऽनुभवाभावमेव साधयति ; न केवलमस्मरणनियमादनुभवाभावः, सुप्तोत्थितस्य इयन्तं कालं न किञ्चिदहमज्ञासिषमिति प्रत्यवमर्शेनैव सिद्धेः । न च सत्यप्यनुभवे तद-

* श्रुतप्रकाशिका *

प्रसूतिव्यसनकालविप्रकर्षा विवक्षिताः । यथा संवित्सिद्धौ "प्रायणान्तरकक्लेशात्प्रसूतिव्यसनादपि । चिरान्निवृत्ताः प्राग्जन्मभेदा न स्मृतिगोचराः "॥ इति देहविगमादीनां निखिलसंस्कारतिरस्कृतिकरत्वं स्वभावः। पुण्यविशेषादपवादात्कस्यचिदेकजातिस्मृतिः। प्रबलशब्दो व्यासङ्गाद्यपेक्षया प्राबल्यपरः । उक्ततिरस्कारकाभावे कदाचिदपि स्मरणमनुभवव्यापकम्, अतस्तदभावोऽनुभवाभावसाधक एवेत्यर्थः । न केवलमनुभवसाधकाभावः, बाधकप्रमाणान्तरमप्यस्तीत्याह (न केवलमिति) (सिद्धेरिति) अनुभवाभावस्येत्यनुषङ्गः । अथास्मरणनियमस्यान्यथासिद्धिमाशङ्कते ( न चेति ) अहङ्कार-

* तत्त्वटीका *

मात्रस्य स्तन्याभिलाषायोगात्, तिरस्कृतिरिह नाशः प्रतिबन्धो वा । 'प्रायणान्तरकक्लेशात् प्रसूतिव्यसनादपि' इत्यादिषु प्रसिद्धमाह ( देहविगमादीति ) प्रभूतं सुखमप्यादिशब्देन सङ्गृहीतम्. जातिस्मरणादीनां तादृशप्रबलप्रतिबन्धकसद्भावेपि स्मृतिरदृष्टातिशयाद्भवति, तदभावादन्येषु देहविगमादेः प्रबलत्वम्, दुर्बलव्याक्षेपादेर्विरोधित्वनियमो न स्यादिति भावः । न ह्यन्यदेहविगमादिभिरन्यथासिद्धिरित्यवधारणाभिप्रायः, नात्र साधकस्य स्मरणस्याभावमात्रम्, किन्तु साक्षान्निषेधबुद्ध्या बाध एवेत्याह ( न केवलमिति ) ननु सुषुप्तिकालस्तदवच्छिन्नसर्वविषयज्ञानञ्च तदानीमनुभूतं कथमिदानीं परामृश्यते ? इत्थम्,—सुषुप्तिकालस्तावदनुमानादिसिद्धः, तदानीं यदि किञ्चिन्मयानुभूतं तदद्य मया स्मर्येत, नच स्मर्यत इत्यस्मरणनियमादेव तदानीमनुभवाभावसिद्धिरिति । सुखमहमस्वाप्समित्यतीतकालावच्छिन्नं स्वापं परोप्युदाहरति, अत्रास्मर्यमाणस्यान्यथासिद्धिमनूद्य निरस्यति ( न चेति ) सुषुप्तौ बाह्यार्थास्सन्तोपि नोपलभ्यन्ते , तच्छरीरस्थोऽहङ्कारोपि लीयते . अज्ञानं सुखरूपमात्मा च साक्षी प्रत्यक्षेण गृह्यत इति पराभिमतप्रकारेणायमनुवादः । यदि विषयाश्रयविरहेण

स्मरणनियमो विषयावच्छेदविरहादहङ्काराविगमाद्वेति शक्यते वक्तुम्; अर्थान्तराननुभवस्यार्थान्तराभावस्य चानुभूतार्थान्तरास्मरणहेतुत्वाभावात्। तास्वपि दशास्वहमर्थोऽनुवर्तत इति च वक्ष्यते॥

ननु– स्वापादिदशास्वपि सविशेषोनुभवोऽस्तीति

* श्रुतप्रकाशिका *

विगमः–अहंप्रत्ययविगमः। परिहरति ( अर्थान्तरेति ) घटाननुभवः पटविनाशश्च अनुभूतकुड्याद्यस्मरणकारणं न दृष्टमित्यर्थः। ननु कुड्यादेः स्मरणं प्रति घटादेरकारणत्वात्तदभावो नास्याः स्मरणहेतुः, इह तु स्मरणकारणस्याभावोऽस्मरणहेतुरेव। नैवम्,–कुड्यादिस्मरणं प्रति घटादेरिव ज्ञातृज्ञेययोरपि स्मरणं प्रति अकारणत्वमकामेनापि स्वीकार्यमित्यभिप्रायेण अर्थान्तरशब्दः प्रयुक्तः। अयमर्थः,–ज्ञातृज्ञेययोः स्मरणं प्रति कारणत्वं दृष्टत्वादङ्गीक्रियते चेत्, दृष्टत्वादेवानुभवेऽपि ज्ञातृज्ञेययोः कारणत्वमङ्गीकार्यम्। यदि ज्ञातृज्ञेययोर्दृष्टत्वे ऽप्यनुभवकारणत्वं नाङ्गीक्रियते स्मृतावपि कारणत्वं न स्यात्, अतस्तदभावान्न स्मरणाभाव इति एतद्दूषणमहमर्थाभावमभ्युपगम्योक्तम्। अहमर्थाभावो नास्तीत्युपपादयिष्यत इत्याह ( तास्वपीति ) अनुवर्त्तते–प्रकाशते। ततो हेतुरसिद्धश्चेत्यर्थः॥

पूर्वं सविशेषोऽनुभवः स्वापादिदशास्वस्तीत्युक्तमिति तदालम्ब्य व्याघाताभिप्रायेण चोदयति ( नन्विति ) अत्राह ( सत्यमुक्तमिति ) स स्वात्मानुभवः–

* तत्त्वटीका *

स्मृत्यसम्भवः, तथानुभवस्वरूपमपि तद्विरहे न स्यात्. सर्वत्र तद्वत्तयैव तस्यापि दृष्टेरित्यभिप्रायेणाशक्यत्वोक्तिः। ननु सुषुप्तावाश्रयाभावाद्वृत्त्यसिद्धेस्तस्यास्मरणम्, साक्षिस्फुरणन्तु न संस्कारजनकम्; अतो स्मरणमेव स्यात्। नैवम्,––त्वदभिमतपरामर्शेप्यसिद्धिप्रसङ्गादित्यभिप्रायेण न शक्यते वक्तुमित्युक्तम्। अतिप्रसङ्गसूचकं हेतुमाह ( अर्थान्तरेति ) अत्राहङ्कारशब्देन त्रिगुणकार्यविवक्षायामाप्रलयात् तस्यावस्थानमस्ति। अहमर्थभूतप्रत्यगात्मविवक्षायां प्रलयेपि स्थायिनस्तस्य कथं सुषुप्तौ विच्छेद इत्यभिप्रायेणाह ( तास्वपीति )

पूर्वमुक्तम् । सत्यमुक्तम् ; स त्वात्मानुभवः । स च सविशेष एवेति स्थापयिष्यते । इह तु सकलविषयविरहिणी निराश्रया च संविन्निषिध्यते । केवलैव संविदात्मानुभव इति चेत् न. सा च साश्रयेति ह्युपपादयिष्यते ; अतोऽनु-

* श्रुतप्रकाशिका *

नानुभूत्यनुभव इत्यर्थः । अनुभूतिविरहे स आत्मा निर्विशेषस्स्यादित्यत्राह (स चेति) प्रत्यक्त्वानुकूलत्वविशिष्ट इत्यर्थः । इह किं निषिध्यत इत्यत्राह (इह त्विति) शब्दान्तरेणास्मन्मतमङ्गीकृतमिति शङ्कते ( केवलैव संविदात्मानुभव इति चेदिति ) आत्मानुभवे—केवलात्मानुभवदशायाम् । स्वापादिदशायां या संवित्त्वया नित्यतया अभ्युपेता, सा प्रसरणाभावेन विषयावच्छेदविरहात्तदानीं केवला निर्विशेषा अस्मदुक्तैव स्यादिति । परिहरति ( सा चेति ) सा च—धर्मभूता संवित् । विषयविरहिता वा साश्रयेत्यर्थः । केवलैवेत्यादेरेवं वार्थः,— आत्मानुभवरूपा आत्मस्फुरणरूपा या संवित् सा केवलैवेति चेत् ; अस्मदुक्तसकलविषयादिविशेषशून्यैवेति चेदित्यर्थः । परिहरति—सा चेति । सा—धर्मिस्फुरणरूपा या संवित् ; सा साश्रयेति वक्ष्यते । स्फुरणं हि स्फुरतो धर्मः । यथा प्रभाश्रयस्य दीपस्य धर्मिणः औज्ज्वल्यं दीपाख्यधर्मिगतो धर्मस्तद्वदित्यर्थः । धर्मिस्वरूपभूतज्ञानस्य स्फुरणं नित्यम्, तच्च भासमानता । व्यवहारानुगुण्यम् धर्मभूतज्ञानस्य स्फुरणं विषयसम्बन्धजन्यं तदानीमेव, न त्वन्यदा; तत एव हि विषयप्रकाशनवेलायामिति पूर्वमुक्तम् "पुंस्त्वादिवत्त्वस्य" इत्यत्र च वक्ष्यते । स्वापादौ तु तस्य सर्वविषयसम्बन्धार्हता प्रतिबद्धा वह्नेर्दाहकत्वशक्तिवत् ; अतो न तदा स्फुरणम् । अथ प्रासङ्गिकमात्मानुभवं परिसमाप्य प्रस्तुतप्रागभावसिद्धिं निगमयति (अत इति ) अतः—निर्विषयज्ञानस्याप्रामाणिकात्तदवच्छिन्नज्ञानमित्यत्वस्योक्तानुपपत्तिपराहतत्वात्प्रागभावग्राहकसमर्थनाच्चेत्यर्थः । कथमनुभूतिः

* तत्त्वटीका *

सुषुप्तावनुभवाभावं वदतः प्राक्तनस्ववचनविरोधः स्यादिति चोदयति ( नन्विति ) पूर्वोक्ततात्पर्यं न जानासीति प्रतिवक्ति ( सत्यमिति ) विरोधव्युदासाय विवक्षितं विशेषं व्यनक्ति (स इति) तुशब्दो ऽनुभूत्यनुभवव्यवच्छेदार्थः । आत्मा-

भूतिः सती स्वयं स्वप्रागभावं न साधयतीति प्रागभावासिद्धिर्न शक्यते वक्तुम्, अनुभूतेरनुभाव्यत्वसम्भवोपपादनेनान्यतोऽप्यसिद्धिर्निरस्ता ; तस्मान्न प्रागभावाद्यसिद्ध्या संविदोऽनुत्पत्तिरुपपत्तिमती ॥

यदप्यस्या अनुत्पत्त्या विकारान्तरनिरसनम्; तदप्यनुपपन्नम्, प्रागभावे व्यभिचारात। तस्य हि जन्माभावेपि विनाशो दृश्यते। भावेष्विति विशेषणे तर्ककुशलताविष्कृता भवति। तथा च भवदभिमताऽविद्यानुत्पन्नैव विविधविकारास्पदं तत्त्वज्ञानोदयादन्तवती चेति तस्यामनैकान्त्यम्। तद्विकाराः सर्वे मिथ्याभूता इति चेत्, किं भवतः परमार्थभूतोऽप्यस्ति विकारः? येनैत-

---

* श्रुतप्रकाशिका *

सती स्वप्रागभावं साधयेत्? इत्थम्,—स्मर्तव्यास्मरणलिङ्गेन इयन्तं कालं किञ्चिदहमज्ञासिषमिति सुषुप्त्यवस्थापरामर्शेन ज्ञानसामान्याभावगोचरेण तदन्तर्गतस्वाभावोपि स्वेनैव विषयीकृत इति स्वतःपक्षे प्रागभावसिद्धिरुक्ता। परतः पक्षेपि सिद्ध्यतीत्याह (अनुभूतेरिति) अथ प्रागभावाभावहेतुकाननुत्पत्तिदूषणमुपसंहरति (तस्मादिति)

अथानुत्पत्त्या विकारान्तरनिरसनं दूषयति (यदपीत्यादिना) अनुत्पत्तिरूपहेत्वसिद्ध्या विकारान्तरनिरासोऽनुपपन्नः, तदभ्युपगमेपि हेतोर्व्यभिचारमाह (प्रागभाव इति) तद्विवृणोति (तस्य हीति) भावशब्दोपादाने तद्विरहेपि व्यभिचारसाम्याभिप्रायेण भावशब्दोपादानमुपालभते (भावेष्वितीति) नात्र प्रतिज्ञान्तरं दूषणमुच्यते, तद्धि उक्तिदूषणम् न त्वर्थदूषणम्। भावरूपत्वे व्यभिचारं दर्शयति (तथा चेति) तथाशब्देन भावरूपत्वं विवक्षितम्, तैर्भावरूपाज्ञानस्य समर्थितत्वात्। तत्र परिहारं शङ्कते (तद्विकारा इति) अस्य विशेषणस्य व्यावर्त्याभावान्नैरर्थक्यमाह (किं भवत इति) व्यावर्त्यमस्ति चेदद्वैतहानिः, न चेद्विशे-

द्विशेषणमर्थवद्भवति। न ह्यसावभ्युपगम्यते ॥

यदपि–अनुभूतिरजत्वात्स्वस्मिन् विभागं न सहते· इति· तदपि नोपपद्यते, अजस्यैवात्मनो देहेन्द्रियादिभ्यो

* श्रुतप्रकाशिका *

षणवैयर्थ्यमित्यर्थः। किं विकारमात्राभावः साध्यते ? उत परमार्थविकाराभावः ? प्रथमेऽनैकान्त्यम्। द्वितीयेऽप्यनुभूतिः परमार्थविकाररहिता अजत्वादित्युक्तं स्यात्। यत्परमार्थविकारवत्तदुत्पन्नम्, यथा घट इति व्यतिरेकोदाहरणं वाच्यम्; घटस्य परमार्थविकारानभ्युपगमाद्दृष्टान्तस्साध्याव्यास इति हेतोर्व्याप्यत्वासिद्धिर्भवेदिति भावः ॥

अथाजत्वान्नानात्वनिषेधं प्रतिवदति ( यदपीति ) अत्र किं भेदमात्रं दुदूषयिषितम् ? उत विजातीयभेदः ? उत सजातीयभेदः ? उत स्वगतभेदः ? इति पक्षेषु हेत्वसिद्ध्या निरस्तेष्वपि हेतुत्वाभ्युपगमेन प्रथमं द्वितीयं शिरश्च दूषयंश्चार्वाकव्यतिरिक्तसर्ववादिसम्मतस्थले व्यभिचारं दर्शयति ( अजस्यैवेति ) मृषावाद्यभिमतस्थल एव

ॐ तत्त्वटीका ॐ

नुभवः–×स्वयंप्रकाशस्याहमर्थस्य। स्वधर्मप्रमाणलक्षणवैघट्यमाह ( किमिति ) विशेषणसाफल्यार्थं क्वचित्सत्यविकाराभ्युपगमेऽपसिद्धान्तमभिप्रेत्याह ( नहीति ) यत्सत्यविकारवत्तदुत्पन्नमिति व्यतिरेकिव्याप्तिश्च त्वया दुर्वचा। घटादेस्सत्यविकाररहित्ये साद्ध्याद्व्यावृत्ततया न व्यतिरेकदृष्टान्तत्वम्. केवलान्वयिदृष्टान्तत्वविवक्षायां हेतोरस्याभीष्टं व्यावृत्तिसाधकत्वं भज्येत, व्यर्थञ्च भावत्वविशेषणम्, प्रागभावस्यापि त्वन्मते परमार्थविकाररहितत्वात् ॥ ॐ ॥ हेतुरयं साध्यान्तरेपि दुष्ट इति वक्तुमनुवक्ति ( यदपीति ) इहापि हेतोरसिद्धिर्विपक्षवृत्तिश्च समेत्यभिप्रायेणाह ( तदपीति ) अत्र यतः कुतश्चिद्वा विजातीयाद्वा सजातीयाद्वा भेदो निषिध्यत इति विकल्पे त्रिष्वपि प्रागभावे व्यभिचारः स्पष्टः। प्रथमद्वितीययोः प्रामाणिकमतेन विपक्षवृत्तित्वमाह ( अजस्येति ) 'न जायते म्रियते वा विपश्चित्' पिण्डः पृथग् यतः" इत्यादिकमिह सूच्यम्। यद्वा– बोधोत्र प्रदर्श्यते, तव खल्वनुभूतिरेवात्मा स चानुत्पन्नो देहादिविलक्षणश्च त्वयापि श्रुत्यापि स्थापित इति। परमतेन विपक्ष-

× अत्र ग्रन्थो गलित इव भाति ॥

विभक्तत्वात्. अनादित्वेन चाभ्युपगताया अविद्याया आत्मनो व्यतिरेकस्यावश्याश्रयणीयत्वात्। स विभागो मिथ्यारूप इति चेत्; जन्मप्रतिबद्धः परमार्थविभागः किं क्वचिद्दृष्टस्त्वया? अविद्याया आत्मनः परमार्थतो विभागाभावे वस्तुतो ह्यविद्यैव स्यादात्मा। अबाधित-

* श्रुतप्रकाशिका *

हेतोरनैकान्त्यमाह (अविद्याया इति) तमःप्रकाशयोरिव विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सत्यामिति हि तद्ग्रन्थः, तद्विभागस्य मिथ्यात्वमाशङ्क्य तदभ्युपगमेन परिहरति (स विभाग इत्यादिना) जन्मप्रतिबद्धः—उत्पत्तिव्याप्तः। घटादिषु परमार्थविभागस्यैव उत्पत्तिव्याप्यत्वाभ्युपगमे घटादिविभागस्य पारमार्थ्यप्रसङ्गात् तस्यापारमार्थ्ये विशेषणवैयर्थ्यादुक्तदोषः स्यादेवेत्यर्थः। हेतुदूषणस्य बुभुत्सायां दृष्टान्तस्य साध्यव्यावृत्तत्वमुखेन व्याप्यत्वासिद्धिरभिप्रेतानुसन्धेया। यत्परमार्थविभागवत्तदुत्पन्नम्। यथा घट इति हि व्यतिरेकदृष्टान्तः, घटस्य परमार्थविभागवत्त्वानभ्युपगमात् साध्याव्यावृत्तत्वं हि स्पष्टम्। विभागस्य मिथ्यात्वे दूषणान्तरमाह (अविद्याया इति) अथ सजातीयभेदाभावं व्युदस्यति (अबाधितेति) पूर्वं प्रमाण-

* तत्त्वटीका *

वृत्तित्वमाह (अनादित्वेनेति) आत्मा ह्यविद्याव्यतिरिक्तः, तस्यास्तस्माद्भेदश्च त्वयैव साध्यत इति भावः। प्राग्वत्साध्यविशेषणं शङ्कते (स इति) विभाग इह भेदः। तथैव मिथ्यात्वविशेषणवैयर्थ्यव्याप्तिभङ्गादिकञ्च व्यनक्ति (जन्मेति) प्रतिबद्धः—व्याप्य इत्यर्थः। सर्वोपप्लावकमनिष्टान्तरमाह (अविद्याया इति) हिः प्रसङ्गस्य दुस्तरत्वप्रसिद्ध्यर्थः। एवकारस्स्वपरप्रतिक्षिप्तचार्वाकादिमतोत्थानं व्यनक्ति॥

किञ्च धीस्ते खपुष्पादेर्भिन्नाभिन्नापि वा भवेत्।
भेदेऽसौ बाधितो हेतुरभेदे तुच्छतादयः॥ ७॥

तृतीयमपि कल्पं निरस्यति (अबाधितेति) ननु दृश्यभेदेऽपि दर्शनैक्यं दृष्टमिष्टञ्च. छेद्यभेदादित्यादि चात्रासाधकमयुक्तञ्च। एकेन च्छेदेन व्यापारेणानेकेषु छिन्नत्वदर्शनात्। मैवम्,—दृश्यभेदसमर्थनन्यायेनाबाधितप्रतिपत्तिसिद्धतया दर्शन

## प्रतिपत्तिसिद्धदृश्यभेदसमर्थनेन दर्शनभेदोऽपि समर्थित एव छेद्यभेदाच्छेदनभेदवत् ॥

* श्रुतप्रकाशिका *

प्रमेयानुपपत्तिमिथ्यात्वानुमाननिरासमुखेन दृश्यभेदः समर्थितः । तत्तुल्यन्यायतया दर्शनभेदोऽपि सिद्ध इत्यर्थः । अवच्छेदकगतो भेदः न त्ववच्छेद्यगत इति घटकरकाकाशदृष्टान्तमाशङ्कयाह ( छेद्यभेदादिति ) यथा संवित्सिद्धौ "प्रतिप्रमातृविषयं परस्परविलक्षणाः । अपरोक्षं प्रकाशन्ते सुखदुःखादिवद्धियः ॥ सम्बन्धिव्यङ्ग्यभेदस्य संयोगेच्छादिकस्य तु । न हि भेदः स्वतो नास्ति नाप्रत्यक्षश्च सम्मतः" ॥ इति । प्रतिप्रमातृविषयं ज्ञानभेदोऽपरोक्षः, परज्ञानं परोक्षतया भासते, स्वज्ञानमपरोक्षतया, घटादिविषयज्ञानानां परस्परवैलक्षण्यं चापरोक्षम ; अतस्तद्भेदापलापः स्वानुभवप्रत्यक्षबाधित इति प्रथमग्रन्थार्थः । सर्वमेकं ज्ञानं ज्ञातृज्ञेयरूपावच्छेदकसम्बन्धभेदाद्भेदेन प्रतीयत इत्यत्राह—सम्बन्धीति । सम्बन्धिव्यङ्ग्यभेदस्येति शङ्काबीजानुवादः । न च ज्ञातृज्ञेयरूपसम्बन्धिव्यङ्ग्यत्वमात्रेण ज्ञानस्य भेदः सम्बन्धिभेदकृत इति औपाधिकः स्यात् . संयोगादेरपि सम्बन्धिव्यङ्ग्यत्वमात्रेण घटकरकावच्छिन्नाकाशवदेकत्वप्रसक्तेः, सम्बन्धी हि द्वेधा—सत्ताहेतुर्व्यक्तिहेतुश्चेति । यस्य संयोगादेः सम्बन्धिव्यतिरेकेण स्वरूपे प्रमाणं नास्ति तस्य सम्बन्धी सत्ताहेतुः, यस्य तु शब्दाकाशादेरस्ति तस्य तदुपाधिको भेदावभासो न स्वतः, तस्मात् ज्ञातृज्ञेयव्यतिरेकेणालब्धसद्भावस्य ज्ञानस्य स्वाभाविक एव भेदः, तस्मान्न सजातीयभेदापलाप इत्यर्थः । एतदभिप्रेत्य छेद्यभेदादित्युक्तम् ॥

छ तत्त्वटीका छ

भेदोपि सिध्यतेत्येवेति तात्पर्यात्, दृष्टान्तोक्तेश्च । घटाद्यवच्छिन्नाकाशैक्यदृष्टान्तवादिनां विरुद्धदृष्टान्तसम्भवख्यापनपरत्वादिति केचित् । न्यायसुदर्शनोक्तन्तु ब्रूमः,—दृश्यभेदः दृशिकर्मत्वाकारेण भेदः । यदि सर्वत्रैकैव दृशिः तर्हि दृष्टादृष्टविभागो न स्यात् । सन्ति हि सर्वज्ञेतरदृशीनां प्रतिनियता हि दृश्यभेदाः । एवं छेद्यभेदोपि छिदिकर्मत्वाकारेण भेदः, एकेन छेदनेन यन्नच्छिन्नं तस्य पूर्वच्छिन्नाद्भिन्नत्वेन तद्विषयच्छेदनमपि पूर्वच्छेदनाद्भिन्नम् , तद्वदिहेति निदर्शनं ग्राह्यम् । प्रयोगश्च

यदपि—नास्या दृशेर्दृशिस्वरूपाया दृश्यः कश्चिदपि धर्मोऽस्ति, दृश्यत्वादेव तेषां न दृशिधर्मत्वम्—इति च। तदपि स्वाभ्युपगतैः प्रमाणसिद्धैर्नित्यत्वस्वयंप्रकाशत्वादिधर्मैरुभयमनैकान्तिकम्। न च ते संवेदनमात्रम्,

* श्रुतप्रकाशिका *

अथ स्वगतनित्यत्वैकत्वादिभेदनिरासार्थं पूर्वपक्षिणा अनुभूतिं पक्षीकृत्योक्तम् अनुभूतित्वादिति व्यतिरेकि दृश्यं पक्षीकृत्योक्तं दृश्यत्वादित्यन्वयि च दूषयति (यदपीत्यादिना) (अनैकान्तिकमिति) अनियतम्; व्याप्तिशून्यमित्यर्थः। दृश्यत्वादित्यन्वयिनः पक्षत्रयवृत्तित्वलक्षणमानियतत्वम्. दृशित्वादिति व्यतिरेकिणः साध्यव्यावृत्तावपि साधनाव्यावृत्तिलक्षणमानियतत्वमात्रम्। अनुभूतिर्न दृश्यधर्मवती दृशित्वात् यद् दृश्यधर्मवत्तन्न दृशिः, यथा घट इति ह्यनुमानशरीरम्, अत्र दृश्यधर्मवत्त्वस्य अदृशित्वव्याप्तिरनुभूतौ भग्ना, तस्याः दृशित्वनित्यत्वादिधर्मवत्त्वादिति भावः। नित्यत्वादिमिथ्यात्वे नित्यत्वादिविपरीताकारानित्यत्वं प्रसजेदिति तत्परि-

७ तत्त्वटीका ७

विगीता दृशिरेतद्दृशिगोचरानालम्बिदृशेरन्या, तद्गोचरानालम्बित्वात् घटवत्। व्यतिरेकतो वा यथा सैव दृशिरिति

अथवानुमितिर्माभूत् प्रत्यक्षेणैव सिद्ध्यति।
दृष्टादृष्टतया सिद्धैर्विषयैर्भिन्नता धियाम्॥ ७॥

अथ स्वगतभेदनिरासाय पूर्वोक्तं केवलव्यतिरेकिणं केवलान्वयिनञ्च यदपीत्यादिनानूद्य तदपीत्यादिना दूषयति (दृशिस्वरूपाया इति) हेतुपरम्। नित्यत्वादिधर्मपरित्यागेऽपसिद्धान्तो बाधश्च स्यादित्यभिप्रायेण— स्वाभ्युपगतैः प्रमाणसिद्धैरित्युक्तम्। अत्र व्यतिरेकिणोऽसाधारणानैकान्तिकत्वमन्वयिनस्साधारणानैकान्तिकत्वञ्च विभजनीयम्। नित्यत्वादिधर्माणां च धर्मान्तराभ्युपगमेऽनवस्था स्यात्। परिहारार्थञ्च क्वचिन्निर्धर्मकत्वे श्राद्धे वरं नित्यत्वादेरेव तथात्वस्वीकरणम्।

मूलच्छेदोज्झतेऽन्यत्र सोढा चेदनवस्थितिः।
सधर्मकत्वे सर्वेषां भातत्वाद्धीस्तथा न किम्॥ ७॥

# स्वरूपभेदात् । स्वसत्तयैव स्वाश्रयं प्रति कस्यचिद्विषयस्य प्रकाशनं हि संवेदनम् । स्वयंप्रकाशता तु स्वसत्तयैव

* श्रुतप्रकाशिका *

हाराय तेषां स्वरूपमात्रत्वमाशङ्क्य परिहरति ( न चेत्यादिना ) तेषां स्वरूपमात्रत्वं किमन्वयरूपाणाम्? उत व्यतिरेकरूपाणाम्? इति विकल्पमभिप्रेत्य अन्वयमुखेन स्वरूपमात्रत्वं सम्भावितं शिर इति दूषितम् न तु पराभ्युपगमात् । हेतुमाह (स्वरूपभेदादिति ) स्वरूपाद्भेदस्तेषां परस्परं भेदश्च विवक्षितः, अनेन पूर्वं विधाभेदविवाददर्शनादित्युक्तं विवृतं भवति । संवेदनत्वस्वयम्प्रकाशत्वयोः स्वरूपभेदमाह ( स्वसत्तयेत्यादिवाक्यद्वयेन) प्रकाश्यतेऽनेनेति प्रकाशनम्, व्यवहारानुगुण्यापादकमित्यर्थः ।

ॐ तत्त्वटीका ॐ

निर्द्धर्मकत्वधर्मे च नित्यत्वादेर्विशेषणम् ।
अनुभूतेस्सधर्मत्वमयत्नादेव सेत्स्यति ॥ ॐ ॥

अतो नित्यत्वादावन्यत्र वा क्वचिदाश्रयविशेषसद्भावेपि धर्मानाश्रयतया सपक्षे दृशित्वादिति हेतुरवर्तमानोऽसाधारणादनैकान्तिकः । अत्र हेतुसाध्यधर्मसदसद्भावयोः स्ववचनविरोधबाधादिकमपि द्रष्टव्यम् । बाधितस्यापि व्याप्तिभङ्गादनैकान्तिकोक्तिरिति केचित् । दृश्यत्वादित्यत्र किं नित्यत्वादयो धर्माः पक्षीकृताः? उत न? आद्ये,– स्वाभ्युपगमादिविरोधः । द्वितीये,– विपक्षेषु तेषु वृत्तिरिति । ननु संवित्स्वरूपमेव नित्यत्वादिशब्दैरभिलप्यते, अतो व्यतिरेकिणि स्वपक्षोऽन्वयिनि विपक्षश्च नास्तीत्याह ( न चेति ) अत्र विरोधगर्भं हेतुमाह ( स्वरूपेति ) धर्मिस्वरूपाद्धर्मान्तरस्वरूपाच्च भेदादित्यर्थः ।

स्वरूपे सम्मते यत्र विवादी प्रतिवर्तते ।
स्वरूपादधिको धर्मस्तत्र सर्वत्र दुस्त्यजः ॥ ॐ ॥

वस्तुमात्राभ्युपगमे सत्यपि विधाभेदविवाददर्शनादिति प्रागुक्तमिह प्रतिसन्धेयम् । हेतुव्यावृत्तिसिद्ध्यै धर्मिस्वरूपं तावदाह ( स्वसत्तयेति ) दीपादिवत्स्वजन्यज्ञानमनपेक्ष्येत्येवकारार्थः । अतिप्रसङ्गनिरासाय स्वाश्रयग्रहणम् । ननु प्राकट्यं पूर्वपक्षिणा निरस्तम्, न वास्माभिः क्वचित् प्रतिसमाहितम्, तदिह ग्रन्थद्वयोक्तौ विषये

**स्वाश्रयाय प्रकाशमानता। प्रकाशश्च चिदचिदशेषपदार्थसाधारणं व्यवहारानुगुण्यम् ॥**

* श्रुतप्रकाशिका *

उभयत्रानुगतप्रकाशशब्दार्थमाह ( प्रकाशश्चेति ) चिदचिदशेषपदार्थास्तदा हि व्यवहारानुगुणाः, यदा तद्व्यवहारहेतुषु ज्ञानं सन्निधत्ते; तत्राचिदंशस्य स्वव्यवहारसामग्र्यन्तर्भूतज्ञानवत्त्वं व्यवहारानुगुण्यम् । वेद्यत्वे चिदंशस्याप्येवम्, स्वप्रकाशत्वे तु स्वव्यवहारसामग्र्यां ज्ञानान्तरानपेक्षया स्वस्यान्तर्भावः । यद्वा, एवञ्चाहुः,—व्यवहारानुगुण्यं व्यवहारप्रतिसम्बन्धित्वम्, प्रकाश इत्यर्थः । तच्च ज्ञप्तिज्ञात्रोः स्वतः, ज्ञेयस्य तु ज्ञानाधीनम्, अतः पुरोवर्त्तिनो घटादेरपि तदेव प्रकाशः, न प्राकट्यम्, तदतिरिक्ताभ्युपगमेऽपि न ज्ञानस्य स्वप्रकाशत्वविरोधः, तस्य तन्निरपेक्षसिद्धतया प्राकट्यस्य ज्ञानानुमापकत्वानभ्युपगमात् । यद्वा, ज्ञानगतप्रकाशासाधारणं लक्षणमाह ( चिदचिदिति ) चिदचिदशेषपदार्थापेक्षया साधारणं ज्ञानगतं चिद्व्यवहारानुगुण्यञ्च प्रकाशः, स्वपरव्यवहारानुगुण्यं प्रकाश इत्यर्थः । नन्वचितो विषयत्वमविगीतम्, तच्च भासमानत्वम् अचितो व्यवहारानुगुण्यं हि ज्ञानगतं चेत्, घटः प्रकाशत इति व्यवहारामुख्यत्वं स्यात्. ज्ञानगतप्रकाशस्य तत्सम्बन्धिन्युपचरितत्वात् । न च ज्ञानसम्बन्ध एव घटादेर्व्यवहारानुगुण्यम्, व्यवहारानुगुण्यापादनस्वभाव इति ज्ञानलक्षणकथनायोगात्, सम्बन्धस्य द्विनिष्ठतया पुरोवर्तिनो घटादेरपि तद्धेतुत्वेन सम्बन्धरूपव्यवहारानुगुण्यापादकत्वं हि ज्ञानज्ञेयसाधारणं स्यात् । उच्यते,—व्यवहारकर्मत्वरूपं व्यवहारानुगुण्यं साधारणम्; तद्धि व्यवहारप्रतिसम्बन्धित्वम् तदेव भासमानत्वम्. घटः प्रकाशत इति व्यवहारश्च तन्निबन्धनतया मुख्यः, व्यवहारप्रतिसम्बन्धित्वं प्रति

* तत्त्वटीका *

विषयिणि च कः प्रकाशशब्दार्थ इत्यत्राह (प्रकाश इति) अप्रकाशमानस्य कस्यापि सत्तैव न सिध्येदित्यभिप्रायेण विशेषशब्दः । व्यवहारानुगुणमिह व्यवजिहीर्षातिरिक्तो व्यवहारहेतुविशेषः । उत्पन्ने हि ज्ञाने विषयस्य विषयिणश्च ज्ञानानुत्पत्तिरूपमपि व्यवहारानर्हत्वं निवर्तते ; अनेनैव ग्रन्थेन परोक्तं प्राकट्यमङ्गीकृतमिति केचित् । प्रमेयान्तरविरोधाभावात् । ज्ञानस्य तदनुमेयत्वानङ्गीकारस्तु विशेषः ॥

सर्वकालवर्त्तमानत्वं हि नित्यत्वम् । एकत्वमेकसङ्ख्या॰ वच्छेद इति । तेषां जडत्वाद्यभावरूपतायामपि तथाभूतै॰ रपि चैतन्यधर्मभूतैस्तैरनैकान्त्यमपरिहार्य्यम् . संविदि

* श्रुतप्रकाशिका *

हेतुत्वरूपव्यवहारानुगुण्यं ज्ञानस्यैव; तत्र प्रत्यक्त्वानुकूलत्वैकत्वलक्षणस्य स्वस्य व्यव॰ हारप्रतिसम्बन्धितां प्रतिहेतुत्वरूपं व्यवहारानुगुण्यं ज्ञातृस्वरूपभूतज्ञानस्यैव. स्वस्वरूप॰ स्वगतैकत्वपराक्त्वानुकूलत्वाद्याकारस्वाश्रयतत्सम्बन्धस्वविषयतत्सम्बन्धानां व्यवहार॰ प्रतिसम्बन्धित्वे हेतुत्वरूपं व्यवहारानुगुण्यं तु धर्मभूतज्ञानस्यैव, अतः स्वपरव्यव॰ हारानुगुण्यं ज्ञानासाधारणप्रकाशलक्षणमिति युक्तम् ॥

अथ नित्यत्वमाह ( सर्वेति ) यद्यपि कालानवच्छिन्नत्वमनुगतं नित्यत्वलक्षणं प्रागुक्तम् . सदकारणत्वञ्च नित्यत्वं प्रसिद्धम्, तथापि संविदः कालव्यतिरिक्तत्वात् कालव्यतिरिक्तार्थनित्यत्वं कृत्स्नकालसम्बन्धव्याप्तमिति तेनापि सविशेषत्वापादनाय कालव्यतिरिक्तार्थनित्यत्वलक्षणमत्रोक्तम् । धर्माणामभावरूपत्वेऽप्यनैकान्त्यमाह ( तेषामिति ) अभावरूपाणामपि स्वरूपानतिरिक्तत्वे दूषणमाह ( संविदीति ),

* तत्त्वटीका *

कालव्यतिरिक्तानुगतं संविदि नित्यत्वमाह (सर्वेति) अशेषनित्यानुगतं कालानव॰ च्छिन्नत्वम् । प्रागुक्तमेकं ब्रह्मेति साधयता परेण नहि मुख्यत्वान्यत्वादिकं साध्यते, अपितु आत्मद्वित्वादिव्यावर्तकं किञ्चित्, तच्च मतभेदेन गुणपदार्थो वा अतिरिक्तपदार्थो वा गुणैकत्वं नायनधीविशेषोपस्थाप्यतदितरसमुच्चयराहित्यं वा अन्यद्वा किमपि स्वरू॰ पातिरिक्तं नानात्वशङ्कानिरासकमेष्टव्यमित्यभिप्रायेणाह ( एकत्वमिति ) एकसङ्ख्या॰ वच्छेदः—एकसङ्ख्यारूपो व्यावर्तकधर्म इत्यर्थः । एकमिति सङ्ख्याया द्व्यादिभ्यो व्यावृत्तिर्वा । प्रकारज्ञानत्वादिधर्मान्तरप्रदर्शनार्थ इतिशब्दः । इति स्वरूपभेदादित्स॰ न्वयः । भावाद्वैतपक्षेणातद्व्यावृत्तित्वमाशङ्क्याह ( तेषामिति ) ( तथाभूतैरपीति ) अभावरूपैरपीत्यर्थः । एतेन तेषां निर्द्धर्मकत्वं सूच्यते । ततश्च व्यतिरेकिणस्स्व॰ वृत्तिशून्यसपक्षवत्त्वादनैकान्त्यम् . चैतन्यधर्मभूतैरित्यन्वयिनोऽनैकान्त्यार्थम् । स्व॰ धर्मशून्यत्वपक्षे दोषमाह ( संविदीति ) यथा शौक्ल्यादौ स्वरूपे कार्ण्यादिसंशया॰

तु स्वरूपातिरेकेण जडत्वादिप्रत्यनीकत्वमित्यभावरूपो भावरूपो वा धर्मो नाभ्युपेतश्चेत्; तत्तन्निषेधोक्त्या किमपि नोक्तं भवेत्। अपि च संवित्सिद्ध्यति वा न वा? सिद्ध्यति

* श्रुतप्रकाशिका *

तुशब्देन प्रागुक्तशौक्ल्यादिदृष्टान्तवैषम्यमिहाभिप्रेतम्. तस्य कस्याचिद्धर्मत्वेन स्वपरनिर्वाहकत्वात्स्वरूपे प्रतिपन्ने भ्रमाविरोधित्वाच्च स्वरूपमेव व्यावृत्तिः, ब्रह्मणस्तु कस्यचिद्धर्मत्वेनानभ्युपगमात् स्वरूपे प्रतिपन्नेऽपि भ्रमसहत्वाच्च पुरोऽवस्थितशुक्लभास्वरशकलस्येव न स्वरूपमेव व्यावृत्तिरिति । संविदस्तीतिशब्दो नित्यस्वयंप्रकाशादिशब्दाश्च किमधिकार्थाः? उतानधिकार्थाः? अधिकार्थत्वे सविशेषत्वम्; अन्यथा पदान्तरवैयर्थ्यं, स्वरूपमात्रस्याविगीतत्वात्. नित्यत्वादिसाधनैर्हेतुभिः किं संविन्मात्रं साध्यते? उत तदतिरिक्तं किञ्चित्? प्रथमे सिद्धसाध्यत्वम्। द्वितीये सविशेषत्वमित्येवं समानाधिकरणपदप्रयोगानुपपत्तिर्नित्यत्वादिसाधकहेतूनां सिद्धसाधनत्वं चाभिप्रेतम्, यथा संवित्सिद्धौ "न वेद्यं वित्तिधर्मः स्यादिति यत्प्रागुदीरितम्। तेनापि साधितं किञ्चित्संविदोऽस्ति न वा त्वया। अस्ति चेत्पक्षपातः स्यान्न चेत्ते विफलः श्रमः॥" इति। नित्यत्वादिधर्माणां परस्परभेदानभ्युपगमे एकेनैव धर्मेण साधितेनालम्, न तु धर्मान्तरं साध्यम्, तस्य पूर्वप्रसाधितधर्मानतिरिक्तत्वात्, न हि नित्यत्वे प्रसाधिते कालापरिच्छेदः पुनरपि साध्योऽवतिष्ठते, एवं नित्यत्वादीनां स्वरूपाद्भेदः परस्परभेदश्च सिद्धः, परेण संविदो निर्भेदत्वापादनमुखेन तस्य आत्मत्वं साधितम्। अत्र निर्भेदत्वनिराकरणमुखेन संविदात्मत्वं निराकर्तुमारभते। (अपि चेत्यादिना) तत्र सविशेषत्वमापादयितुं विकल्पयति (संवित्सिध्यति वा न वेति)

❀ तत्त्वटीका ❀

नर्हतया ततो भेदस्तथा संविदि दुर्वचमित्यभिप्रायवांस्तुशब्दः। किमपि नोक्तं भवेत्—प्रतिवाद्यनभिमतं पदान्तरैरनुक्तञ्च किञ्चिन्नोक्तं स्यात्। ततश्च सिद्धसाधनत्वपौनरुक्त्यादिप्रसङ्ग इति भावः। तिष्ठन्तु नित्यत्वस्वयम्प्रकाशत्वादयः, स्वरूपप्रकाशमात्रेणापि सधर्मकत्वासिद्धिं वक्तुमाह (अपिचेति) स्वतः परतो वेति विचारं त्यक्त्वा सिद्धिमात्रं विकल्पयति (संविदिति) सिद्ध्यति— प्रकाशत इत्यर्थः। पूर्वत्र

चेत् सधर्मता स्यात् । न चेत्तुच्छता, गगनकुसुमादिवत् । सिद्धिरेव संविदिति चेत्; कस्य कं प्रतीति वक्तव्यम् ; यदि न कस्यचित्कञ्चित्प्रति ; सा तर्हि न सिद्धिः । सिद्धिर्हि

* श्रुतप्रकाशिका *

किं प्रतीता ? उताप्रतीतेत्यर्थः । प्रथमं शिरो दूषयति ( सिध्यति चेदिति ) सर्वप्रमाणानां सविशेषविषयत्वस्य पूर्वमुपपादितत्वादिति भावः । यद्वा, सिध्यद्वस्तु सिद्धेराश्रयतया सविशेषं स्यात् । सिद्धिः—प्रकाशः, व्यवहारानुगुण्यधर्मयोगी स्यादित्यर्थः । शिरोद्वयापादितदोषपरिहाराय परोक्तं शङ्कते ( सिद्धिरेवेति ) सिद्धेः सिध्यन्तरानपेक्षत्वात् प्रमितिविषयत्वप्रयुक्तं सिद्धिसम्बन्धित्वरूपं सविशेषत्वं न स्यात् ; अथापि तुच्छत्वं च न भवेत्, न च शशशृङ्गं सिद्धिरूपमिति भावः । तत्रापि सविशेषत्वमाह ( कस्येति ) प्रतीतिश्चेत्कस्यचिदाश्रयस्य किञ्चिद्विषयं प्रति भवति तदुभयं वक्तव्यमित्यर्थः । विपक्षे बाधकमाह (यदीति) तद्विवृणोति ( सिद्धिर्हीति ) पितुः स्थाने विषयः, पुत्रस्थाने आश्रयः, पुत्रत्वस्थाने सिद्धिः, पुत्रत्वस्य हि पुत्रः

* तत्त्वटीका *

इदमनुमानद्वयं बाधितविषयमित्यभिप्रायेणाह ( सिध्यति चेदिति ) सधर्मता—सिद्धिरूपेण धर्मेण तत्साधकप्रमाणोपनीतैः प्रत्यक्षत्वपरोक्षत्वादिभिरिति शेषः । घटो घटत्वान्निर्द्धर्मा दृश्यत्वात्, तच्च तत्र न इत्यादिवदिमौ हेतू हास्याविति च सूच्यते । उत्तरत्र व्यतिरेकिण आश्रयासिद्धिमन्वयिनस्साध्यप्रतियोगिनिरूपणासिद्धिञ्चाभिप्रेत्याह ( न चेदिति ) स्वतोऽन्यतो वा भानाभावाद्धि खसूनादेस्तुच्छतां ब्रवीमीति निदर्शयति ( गगनेति ) अत्र गमनं गच्छति वा न वा ? वचनं वक्ति वा नवा ? इत्यादिवज्जात्युत्तरत्वं मन्वानेन सधर्मकत्वं तुच्छत्वञ्च परिजिहीर्षता परेणोक्तं शङ्कते ( सिद्धिरिति ) एवकारसिद्धेः किं सिद्ध्यन्तरेणेति द्योतनार्थः । तथापि सविशेषत्वं दुस्त्यजमित्यभिप्रायेण पृच्छति ( कस्येति ) साश्रयत्वं सविषयत्वञ्च धर्मिग्राहकसिद्धं नास्तीति वक्तुं न शक्यमिति भावः । उभयपरित्यागेन प्रत्युक्तिं शङ्कते ( यदीति ) तत्र स्वरूपस्यापि त्यागं प्रसञ्जयति ( सेति ) उक्तं निदर्शनेन स्थापयति ( सिद्धिर्हीति ) यथा व्युत्पत्तिसिद्धिशब्दार्थस्संज्ञायाः, अन्यथाति-

पुत्रत्वमिव कस्यचित्कञ्चित्प्रति भवति । आत्मन इति चेत्; कोऽयमात्मा? ननु संविदेवेत्युक्तम् । सत्यमुक्तम्; दुरुक्तं तु तत् । तथा हि,— कस्यचित्पुरुषस्य किञ्चिदर्थजातं प्रति सिद्धिरूपतया तत्सम्बन्धिनी सा संवित्

* श्रुतप्रकाशिका *

आश्रयः । कस्यचिदित्युक्तं ज्ञात्रपेक्षाप्रतिक्षेपं शङ्कते ( आत्मन इति चेदिति ) आत्मानं प्रतीत्यर्थः । आत्मशब्दः स्ववाची, अनेन प्रत्यक्त्वं फलितम्, सिद्धिप्रतिसम्बन्धी स्वात्मा हि प्रत्यक् . स्वस्मै भासमानत्वं प्रत्यक्त्वमिति हि वक्ष्यते । तच्च संविदोऽनुपपन्नमित्यभिप्रायेणाह (कोऽयमात्मेति) अयंशब्दः सिद्धिप्रतिसम्बन्धित्वपरः । सिद्धिप्रतिसम्बन्ध्यात्माकः, किंशब्दः क्षेपे, संविन्न सिद्धिप्रतिसम्बन्ध्यात्मा संविदः प्रत्यक्त्वमनुपपन्नमित्यर्थः । संविदात्मत्वस्योपपादितत्वान्नानुपपन्नमिति चोदयति ( नन्विति ) परिहरति ( सत्यमुक्तमिति ) संविदात्मत्वस्य दुरुक्तत्वं संविदात्मत्वनिराकरणमुखेनोपपादयितुमारभते ( तथा हीति ) कर्मनिर्देशो दृष्टान्तत्वेन । ( अर्थजातमिति ) धर्मधर्मिरूपपुञ्ज एव प्रमितिविषय इति भावः । सिद्धिरूपा—

ᛃ तत्त्वटीका ᛃ

प्रसङ्गादित्याशयः । प्रत्यगात्मनः प्रत्यगात्मानं प्रति सिद्धिरियम् । परोक्तमनुवक्ति ( आत्मन इति ) आवृत्त्या षष्ठी चतुर्थी वात्र योज्या । षष्ठ्या एव वा सामान्यमुखेन सम्बन्धद्वयपरत्वम् । परपक्षे ब्रह्मणो बोद्धृत्वाभावात् संविन्मात्रस्य तस्य प्रकाशफलित्वाभावेन स्वस्मै भासमानत्वाभावाच्च आत्मन इत्युक्तिरयुक्तेत्याक्षिपति (क इति ) अयंशब्देन सिद्धिप्रतिबन्धितया प्रत्यक्त्वं सूच्यते । ईदृशात्मलक्षणमहमर्थस्यैव , नतु त्वदिष्टस्य चिन्मात्रस्येति भावः । अज्ञाताभिप्रायः प्रश्नभ्रान्त्या पूर्वपक्षोक्तमुद्गृह्णाति ( नन्विति ) एवकारो भेदमिथ्यात्वाभिमानादाश्रयाश्रयिभावव्युदासार्थः । संविदात्मत्वं निराचिकीर्षुस्तदुक्तिमात्रमभ्युपगच्छति ( सत्यमिति ) तत्प्रतिपाद्ये त्वद्धाङ्गीकारोऽपि नेत्याह ( दुरुक्तमिति ) तुर्वचनदोषमात्रव्युदासार्थः । कस्य कं प्रतीति प्राक्सूचितेन विरोधेन दुरुक्ततां विवृणोति ( तथाहीति ) निर्विशेषस्यैकस्यैव निर्विकल्पकेऽप्यसिद्धेस्तत्रापि विशिष्टानेकस्फुरणव्यञ्जनाय जातशब्दः ।

स्वयं कथमिवात्मभावमनुभवेत् ? एतदुक्तं भवति,—अनुभूतिरिति स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभावो ज्ञानावगतिसंविदाद्यपरनामा सकर्मकोऽनुभवितुरात्मनो धर्मविशेषो घटमहं जानामीममर्थमवगच्छामि पटमहं संवेद्मीति सर्वेषा·

* श्रुतप्रकाशिका *

प्रकाशरूपा ; अत एव तदुभयसम्बन्धिनी । ( कथमिति ) आत्मधर्मभूता संवित् स्वयं कथमात्मेत्यर्थः । सिद्धिशब्द उत्पत्तिज्ञप्तिसाधारणः । अहमर्थः प्रकाशश्चेदिह विवक्षितः । स कः ? तस्य कर्मकर्तृसम्बन्धित्वे किं प्रमाणम् ? वृत्तिज्ञानं हि सकर्मकर्तृकम्, संवित्तु केवला । इह कर्मनिर्देशे किं फलमिति शङ्कायामाह ( एतदुक्तं भवतीति ) अनुभूतिरित्यनेन ज्ञप्तिपरत्वमुक्तम् । स्वाश्रयं प्रति स्वसद्भावेनैव कस्यचिद्वस्तुनो व्यवहारानुगुण्यापादनस्वभाव इत्यनेन तत्स्वरूपमुक्तम् ; एवं सिद्धिशब्दार्थ उक्तः । ज्ञानावगतिसंविदाद्यपरनामेत्यनेन ज्ञानसंविच्छब्दयोः पर्यायतया वृत्तिज्ञानसंविदोर्विभागस्य निष्प्रमाणकत्वं फलितम् । घटमहं जानामीत्यादिना

* तत्त्वटीका *

तत्सम्बन्धिनी— विषयाश्रयवतीत्यर्थः । अहमर्थस्वरूपसंविद्व्यवच्छेदार्थं सेत्युक्तम् । स्वस्य स्वाश्रयत्वविरोधव्यक्त्यै स्वयंशब्दः । नन्वात्मनः स्वयम्प्रकाशत्वमिच्छतां सर्वेषामात्मविषय [संवित्त्व] योर्न विरोधः । सिद्धिरूपतयेत्यत्र च उत्पत्तिरूपत्वविवक्षायामनन्वयः । ज्ञप्तिरूपत्वे विवक्षितेऽपि तस्याः किं विषयाश्रयसम्बन्धनियमे प्रमाणम् । वृत्तिज्ञानस्य तन्नियमसद्भावेऽपि ततोऽन्यस्यां संविदि त्वदुक्तात्मस्वरूपवन्माभूत्तद्योगः । आत्मधियोरैक्ये प्रतिक्षेप्ये विषयग्रहणं न व्यर्थमित्यत्राह (एतदिति) अयंभावः,— अस्मन्मते हि प्रसिद्धस्याहंशब्दार्थस्य प्रसिद्धज्ञानादन्यस्यैव स्वधर्मवत्स्वस्यापेक्षया प्रकाशत्वरूपं संवित्त्वं स्वयंज्योतिष्ट्वादि श्रुत्यनुसारात्स्वकृतामिति न विरोधः । त्वया तु प्रसिद्धायास्संविदः प्रतीतिविरुद्धमात्मत्वं साध्यते ।

परागर्थप्रमेयेषु या फलत्वेन सम्मता ।
संवित्सैव हि नस्सिद्धा वेदान्तोक्तिप्रमाणतः ॥ ७ ॥

मात्मसाक्षिकः प्रसिद्धः। एतत्स्वभावतया हि तस्याः स्वयम्प्रकाशता भवताप्युपपादिता। अस्य सकर्मकस्य कर्तृधर्मविशेषस्य कर्मत्ववत् कर्तृत्वमपि दुर्घटमिति॥ तथा हि;—अस्य कर्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिवोत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते।

* श्रुतप्रकाशिका *

आत्मसाक्षिकः प्रसिद्ध इत्यन्तेन कर्मकर्तृसम्बन्धस्य स्वानुभवसिद्धत्वं ज्ञानसंविदोः पर्यायत्वञ्चोक्तम्। तत्र पराभ्युपगतिमाह (एतत्स्वभावतयेति) आत्मनः स्वयम्प्रकाशत्वं साधयता कर्मकर्तृसम्बन्धिज्ञानस्य स्वयम्प्रकाशत्वं साधितमिति सकर्मकं ज्ञानं जडरूपमात्मभूतज्ञानादन्यत् वृत्तिरूपमित्यभ्युपगमो ऽनुपपन्न इति भावः। अस्येत्यादिना कर्मनिर्देशस्य फलं दर्शितम्। ननु न वयं संविदः कर्तृत्वमिच्छाम इति कथमयं प्रसङ्गः? उच्यते,—संविद आत्मत्वं वदता प्रत्यक्त्वमभ्युपेतव्यम् प्रत्यक्त्वञ्च ज्ञानाश्रयस्यैवेति संविदो ज्ञातृत्वमवर्जनीयम्, तच्च दुर्घटमित्यर्थः। कर्तृत्वमाश्रयत्वम्, धात्वर्थाश्रयो हि कर्ता; एवं धर्मधर्मिभावेन प्रतीत्या संविदात्मत्वं निराकृतम्। अथ स्थिरत्वास्थिरत्ववैधर्म्येण तद्व्युदस्यते (तथेति) हिर्हेतौ। तथा-

* तत्त्वटीका *

इति निष्कर्षात्, अत एवास्मन्मते धर्मधर्मिज्ञानभेदवत् त्वन्मते वृत्तिज्ञानस्वरूप संविद्भेदक्लृप्तिश्चायुक्ता। लोके च ज्ञानसंविदादिशब्दाः पर्यायाः पठ्यन्ते। उपलम्भश्च तथैव। अतस्साङ्ख्यस्य पृथक्पाठो ऽनादरणीयः। विषयवत्यास्संविद आत्मधर्मत्वञ्च सर्वलोकप्रत्यक्षसिद्धम्, संविदस्स्वयंप्रकाशत्वञ्च साधयता त्वयापि विषयाश्रयसम्बन्धिस्वभावतया हेतुरुक्त इति। कर्मोपादानञ्च कर्त्रैक्यव्याहतेर्दृष्टान्तार्थं तन्मुखेन प्रतिबन्ध्यर्थं सम्बन्धिशब्दत्वव्यक्त्यैव सविषयत्वादेव निर्विषयादात्मस्वरूपाद्विवेकार्थञ्च। धर्मधर्मिभावसिद्ध्या संविदात्मनोरैक्यं दुर्घटमित्युक्तम्। तदेव धर्मान्तरैरपि व्यनक्ति (तथाहीति) +[ नित्यधर्मैक्यवच्छेदाय कार्यमिति ] (संवेदनाख्यस्येति) न ह्यसौ समाख्या पारिभाषिकीति च भावः। (सुखदुःखादेरिवेति) स्वमते सुखादेर्धीविषय-

\+ कुण्डलितस्य: प्रतीको मूले न दृश्यते॥

कर्तृस्थैर्यं तावत् स एवायमर्थः पूर्वं मयानुभूत इति प्रत्य- भिज्ञाप्रत्यक्षसिद्धम् । अहं जानामि अहमज्ञासिषम्, ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः

* श्रुतप्रकाशिका *

शब्देन चार्थेन हेत्वन्तरमुच्यते । कर्तृस्थैर्यमुपपादयति ( कर्तृस्थैर्यं तावदिति ) प्रत्यभिज्ञायमानत्वाद्धि घटादेः स्थैर्यसिद्धिः, तद्वत् तत्र घटप्रत्यभिज्ञाकाले पूर्वं मया अनुभूत इति कर्तुरपि प्रत्यभिज्ञाविषयत्वात् स्थैर्यसिद्धिरित्यर्थः । अथ ज्ञानस्योत्पत्ति- स्थितिनिरोधान् दर्शयति ( अहमित्यादिना ) जानामीत्यनेनोत्पत्तिस्थिती सिद्धे, अज्ञासिषमित्यतीतत्वप्रतीतिः, एतद्वैशद्यायानन्तरपूर्वकालसञ्जातज्ञानविशिष्टत्वपरा- मर्शद्योतनार्थं ज्ञातुरेव ममेत्युक्तम्, उत्पत्त्यादय इत्यादिशब्देन स्थितिनिरोधग्रहणम्, संविद उत्पत्तिर्नाम त्रिचतुरक्षणस्थायिन्याः प्रथमक्षणयोगः, क्षणान्तरसम्बन्धः स्थितिः, संविदः स्वप्रकाशत्वाचे प्रत्यक्षे । घटसंविदो निरोधो नाम पटसंवित्. सा च

* तत्त्वटीका *

तया प्रकाशरूपावस्थाया अस्थिरत्वे सुखादिदृष्टान्तः । परमते चान्तःकरणधर्मास्सुखा दयः । उक्तयोस्स्थिरत्वास्थिरत्वयोः प्रथमस्य वैनाशिकेतरसर्वसम्मन्तव्यत्वमाह ( कर्तृस्थैर्यमिति ) तावत्—आत्मत्वादि । स एवायमिति दृष्टान्तार्थम् । पूर्वमित्यनेन सुषुप्तेः पूर्वमित्यपि भाव्यम् । वक्ष्यति- " स एव तु कर्मानुस्मृतिशब्दविधिभ्यः " इति । मयानुभूत इति तु संवित्सन्ततेराधारत्वेन स्वात्मानुवृत्तिप्रत्यक्षोक्तिः । द्वितीयस्य च दुरपह्नवत्वमुदाहरणैर्विवृणोति ( अहमिति ) जानामीत्यनेन संविदुत्पत्ति- स्थित्योः प्रदर्शनम् । पूर्वमेतज्ज्ञानरहितोहमिदानीमेतज्ज्ञातवानिति तात्पर्यम् । सोय- मिति बाह्यार्थवत्सोहमित्यान्तरार्थेपि प्रत्यभिज्ञायामिह ज्ञानरूपातीताकारविशेषप्रत्यक्ष- विशेषविषय एवेत्याह ( अहमज्ञासिषमिति ) साक्षादेव धीप्रध्वंसप्रत्यक्षमाह ( ज्ञातु- रिति ) ज्ञानस्य पूर्वकाले सम्प्रतिपत्त्यर्थ एवकारः ।

आत्मा कर्ता च भोक्ता च स्थिरश्च स्थापयिष्यते ।
सुखादिवदनित्यात—दन्याधीस्स कथं भवेत् ॥ ७ ॥

इति । कर्तृस्थैर्ये प्रत्यभिज्ञा प्रमाणीकृता, संविदस्तदैक्यञ्च दुर्घटमिति स्थापितम् ।

प्रत्यक्षसिद्धा इति कुतस्तदैक्यम् । एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्वेद्युर्दृष्टमपरेद्युरिदमहदर्श-मिति प्रत्यभिज्ञा च न घटते, अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसम्भवः ॥ किञ्च—अनुभूतेरात्मत्वाभ्युपगमे

* श्रुतप्रकाशिका *

प्रत्यक्षा। इतिर्हेतौ। स्थिरत्वास्थिरत्ववैधर्म्येण न तदैक्यमित्यर्थः, एवं प्रत्यभिज्ञाविषय-त्वेनात्मनः स्थैर्यमुक्तम् । अथ प्रत्याभिज्ञाश्रयत्वेन स्थैर्यमुच्यते ( एवमिति ) पूर्वत्र प्रत्यभिज्ञाप्रत्यक्षसिद्धमित्युक्तम्, अत्र प्रत्यभिज्ञा न घटत इत्युक्तम्, अयमभिप्रायः,—प्रत्यभिज्ञाविषये ज्वालादौ यत्र क्वचिदन्यथासिद्धिः सम्भवेत् तत्र न स्थैर्यसिद्धिः । अत्र प्रत्यभिज्ञाविषयत्वान्यथासिद्धावपि प्रत्यभिज्ञाश्रयत्वस्यानन्यथासिद्धत्वात् भ्रान्ति-रूपप्रत्यभिज्ञायामपि तदाश्रयस्य स्थैर्यमनन्यथासिद्धमिति प्रत्यभिज्ञाश्रयत्वप्रयुक्तं स्थैर्यं दुष्प्रकम्पमिति । प्रत्यभिज्ञाश्रयतया स्थैर्यं विवृणोति ( अन्येनेति ) एवं स्थिरस्य ज्ञातुर्धर्मत्वेनास्थिरत्वेन च प्रतीतत्वादस्थिरत्वनिबन्धनात्प्रतिसन्धानासम्भ-वाच्च संविदात्मत्वं निरस्तम् ॥ अथ स्थिरत्वाभ्युपगमेऽपि प्रतिसन्धानासम्भवादात्मत्वं व्युदस्यति ( किञ्चेति ) ( अनुभूतेरात्मत्वाभ्युपगमे तस्या नित्यत्वेपीति )

७ तत्त्वटीका ७

अथ संविदात्मत्वे नश्वरत्वानश्वरत्वविकल्पेन पूर्वत्रसङ्गतानामिव प्रत्यभिज्ञाविरोध-माह ( एवमिति ) यद्वा— अर्थान्तरवत्प्रत्यभिज्ञाविषयत्वेन स्थैर्यमुक्तम् । अथ तदा-धारतया सूच्यते, धीसन्ततेरात्मतायां बोधे बोद्धरि च भ्रान्तिरूपापि प्रत्यभिज्ञा स्मृति-मात्रञ्च न स्यादिति वक्ष्यामः। अतएव ज्वालाप्रत्यभिज्ञादिवदन्यथासिद्धिवचनमिहा-नर्थकमित्यभिप्रायेणाह ( दृष्टमिति ) अत्र प्रतीत्यध्याहार्यम् । पूर्वेद्युर्दृष्टामिदमपरेद्युर-दर्शमितिवान्वयः । व्याघातप्रसङ्गेन सह प्रसङ्गान्तरसमुच्चयार्थश्चकारः । अथवा मया पूर्वेद्युर्दृष्टमिति स्वप्रत्यभिज्ञार्थमेव पृथग्वाक्यम्। न घटत इत्युक्तं तदेव 'अनुस्मृतेश्चेति' सूत्रतात्पर्येण स्थापयति ( अन्येनेति ) माभूदनित्यस्य घटादिप्रकाशस्य नित्यात्म-तादात्म्यम्, निर्धूतनिखिलावच्छेदा तु संविदात्मा स्यादित्यत्र प्रमाणाभावादेव प्रागेव दत्तोत्तरत्वेप्यासन्नतरोक्तप्रसङ्गेनापि दोषसाम्यं विवक्षुराह ( किञ्चेति ) प्रतिसन्धान-

तस्या नित्यत्वेऽपि प्रतिसन्धानासम्भवस्तदवस्थः । प्रतिसन्धानं हि पूर्वापरकालस्थायिनमनुभवितारमुपस्थापयति, नानुभूतिमात्रम् । अहमेवेदं पूर्वमप्यन्वभूवमिति । भवतोऽप्यनुभूतेर्न ह्यनुभवितृत्वमिष्टम् । अनुभूतिरनुभूतिमात्रमेव । संविन्नाम काचिन्निराश्रया निर्विषया

* श्रुतप्रकाशिका *

आत्मत्वाभ्युपगमौपयिकतया संविदो नित्यत्वाभ्युपगमेऽपीत्यर्थः । न केवलमनित्यत्वपक्ष एव संविदात्मत्वानुपपत्तिः । नित्यत्वेपीत्यपिशब्दार्थः । आत्मा हि प्रतिसन्धत्ते; प्रतिसन्धानमत्र न सम्भवतीत्यर्थः । तदसम्भवमुपपादयति ( प्रतिसन्धानमिति ) तदुदाहरति ( अहमिति ) ततः किमिति शङ्कायां तस्य परानिष्टत्वमाह ( भवत इति ) न केवलं भवदनभ्युपगमः, अनुभूतेरनुभवितृत्वं गमनक्रियाया गन्तृत्ववदनुपपन्नं चेत्यभिप्रायेणाह ( अनुभूतिरिति ) मात्रचाऽनुभवितृत्वव्यावृत्तिः । ननु धर्मत्वास्थिरत्वाप्रतिसन्धातृत्वैः संविदो नात्मत्वं यदुक्तं तन्न वक्तव्यम् अनुभवितृत्वस्यात्माकारत्वेनानभ्युपगमात् विषयाश्रयशून्यायाः संविदो गुणभावाभावात्तदुभयसम्बन्धप्रयुक्तानित्यत्वप्रसङ्गाभावाच्चेत्यत्राह ( संविन्नामेति ) ननु

* तत्त्वटीका *

मिह प्रत्यभिज्ञामात्रम्, पूर्वापरज्ञानानामेकाश्रयधीर्वा । असम्भवं विवृणोति ( प्रतिसन्धानमिति ) कालद्वयवृत्तेः प्रकाशस्य प्रतिसन्धातृत्वं युक्तमित्यत्राह ( नानुभूतिमात्रमिति ) ज्ञातृत्वाभावे प्रकाशस्यापि कालद्वयवृत्तिर्निष्फलेति भावः । ज्ञातुः स्थिरत्वसाधकं प्रतिसन्धानस्वरूपमाह ( अहमिति ) एवकार आश्रयभेदशङ्कानिरासार्थः । अविद्यावैभवाद्भ्रान्त्या प्रतिसन्धातृत्वं स्यादित्यत्राह ( भवत इति ) भ्रान्तिरपि ज्ञातुरेव स्यात् । यदि कश्चिदहमर्थं त्यक्त्वाऽनुभूतेरेवानुभवितृत्वमिच्छेत्तत्राप्याह ( अनुभूतिरिति ) नहि केनचित् स्वीकृतमित्येतावता सर्वलोकप्रत्यक्षविरुद्धं सिद्ध्येदित्याकूतम् । एवं प्रसिद्धसंविदो विषयाश्रयशून्यत्वं तादृशसंविदन्तरं वा न स्वीकृत्य तत्र नित्ये निर्विशेषे ज्ञातृत्वकल्पनं निरस्तम् । तत्कल्पनाधिष्ठानञ्च निरस्तमित्याह ( संविदिति ) ननु त्वन्मतेऽहमर्थ आत्मा, स नित्यस्वप्रकाशः । तद्धर्मभूता धीरपि

वा अत्यन्तानुपलब्धेर्न सम्भवतीत्युक्तम्। उभयाभ्युपेता संविदेवात्मेत्युपलब्धिपराहतम्। अनुभूतिमात्रमेव पर-

* श्रुतप्रकाशिका *

कथं विषयाश्रयशून्यज्ञानाभावः? स्वरूपभूतं ज्ञानं विषयाश्रयशून्यं त्वन्मते। उच्यते,—स्वविष्ठमिदं चोद्यम्, किं त्वया ज्ञातुरेव ज्ञानशब्दवाच्यस्याजडत्वानित्यत्वादिकं विषयाश्रयशून्यत्वमात्मत्वं च साध्यते तत्सिद्धसाधनम्, यदि ज्ञातृव्यतिरिक्तस्य ज्ञानस्य, तर्हि ज्ञातृव्यतिरिक्तं विषयाश्रयविरहितं ज्ञानं शून्यमिति ब्रूमः, ज्ञातृज्ञेयतदवच्छिन्नज्ञानस्वरूपत्रिकातिरिक्तं ज्ञानमनुपलम्भानिरस्तमित्यर्थः बौद्धैकदेशिभिर्द्धर्मिकल्पनातो वरं धर्मकल्पनेति लाघवन्यायात् ज्ञात्रात्मवादिना ज्ञानात्मवादिना च सम्प्रतिपन्ना संविदेवात्मेत्युक्तम्। तदाशङ्क्य परिहरति (उभयेति) कल्पनायामेव लाघवन्यायः, न तूपलब्धौ; अन्यथा अत्यन्तलाघवार्थं माध्यमिकमतानुसारेण ज्ञानञ्च त्यज्येत, कल्पने तु लाघवन्यायः। संवित्तूपलभ्यत इति चेत्, ज्ञाताऽपि तथोपलभ्यते' अत उपलब्धिपराहतत्वात्संविदात्मत्वमनुपपन्नमित्यर्थः। साश्रयैव संविदुपलभ्यते; तथाऽपि युक्तिभिर्निर्विशेषत्वं साधितमित्यत्राह (अनुभूतिमात्रमिति) यद्वा संविदः परमार्थत्वेनोभयवादिसम्मतत्वात् सैवात्मेत्युक्तमित्याशङ्क्य दूषयति—उभयेति। उपलब्धिपराहतम्—प्रत्यक्त्वलक्षणस्यात्मत्वस्याहं जानामीति ज्ञातृत्वसामानाधिकर-

* तत्त्वटीका *

तथा, ततो नित्यधीद्वयाङ्गीकारगौरवं स्यात्। असदुक्तेरपि लाघवमित्यत्राह (उभयेति) अयं भावः,—क्लृप्तौ हि गौरवं दोषः, न तूपलम्भे; अन्यथा माध्यमिकमतेऽत्यन्तलाघवं स्यात्, संविद उपलब्धत्वादेव हि त्वयापि तन्मतनिरासः। अत्र च स्थिरस्य ज्ञातुरहमर्थस्य आत्मत्वमुपलम्भादिसिद्धं दुस्त्यजम्, तद्धर्मभूताया धियश्च नित्यत्वं न क्लृप्तम्, श्रुत्यादिसिद्धन्तु न त्यक्तम्. न चात्रोपलम्भविरोधः। स्वरूपतोऽवस्थाभेदैश्च नित्यत्वानित्यत्वव्यवस्थापनात्। तदिहानहमर्थभूतां संविदात्मतया निष्कृष्याहमर्थत्याग उपलब्धिविरुद्ध इति। अस्त्वेवम्; असन्मतेपि शुद्धायामेवानुभूतौ तत्त्वतो भ्रान्त्या च निर्विषयत्वसविषयत्वादिविरोधशान्तिः, उपलब्धमपि नभस्स्थलमालिनादिवद्युक्तिविरुद्धं त्याज्यमित्यत्राह (अनुभूतिमात्रमिति) मात्रचा

मार्थ इति निष्कर्षकहेत्वाभासाश्च निराकृताः ॥ ननु च अहं जानामीत्यस्मत्प्रत्यये योऽनिदमंशः प्रकाशैकरसश्चित्पदार्थस्स आत्मा । तस्मिन् तद्बलनिर्भासिततया

* श्रुतप्रकाशिका *

रायेनोपलब्ध्या पराहतमित्यर्थः । ज्ञातुरेव प्रत्यगात्मत्वमुपलब्धिसिद्धमित्युक्तम् । तस्या उपलब्धेर्निर्विशेषसंविदात्मत्वसाधकयुक्तिभिर्बाधितत्वमाशङ्क्याह—अनुभूतिमात्रमिति । प्रत्यगर्थो ह्यात्मा ॥ प्रत्यक्त्वं चाहमर्थात्मत्वे तु न सिध्यति, संविदात्मत्वपक्ष एव सेत्स्यतीति चोदयति ( ननु चेति ) अहं जानामीत्यस्मत्प्रत्यये—अस्मत्प्रत्ययत्वेन पराभ्युपगते । यश्चित्पदार्थः स आत्मा । कुत इत्यत्राह ( अनिदमंश इति ) इदमंशव्यतिरिक्तः, परागर्थव्यतिरिक्तः प्रत्यगर्थः, हेतुगर्भमिदम्, प्रत्यगर्थत्वादित्यर्थः । प्रत्यक्त्वं च कुत इत्यत्राह ( प्रकाशैकरस इति ) स्वयम्प्रकाशत्वादित्यर्थः । हेत्वभिप्रायश्चिच्छब्दः, ज्ञानत्वात्स्वयम्प्रकाशत्वमित्यर्थः । प्रत्यक्त्वं स्वस्मै प्रकाशमानत्वम् स्वयंप्रकाशत्वमनन्याधीनप्रकाशत्वम् । अहमर्थस्तु युष्मदर्थलक्षणः, युष्मदर्थलक्षणत्वात् परागर्थविशेषोऽहमर्थ इत्यर्थः । युष्मदर्थलक्षणत्वं कुत इत्यत्राह (तद्बलेति) तद्बलनिर्भासितत्वात्—ज्ञानाधीनप्रकाशत्वात् तच्च चिन्मात्रातिरेकित्वादित्यर्थः । अस्मिंश्चोद्यग्रन्थे संविदात्मत्वे व्यतिरेकित्रयम्, अहमर्थानात्मत्वेऽन्वयित्रयञ्चाभिप्रेतम् । तत्र व्यति-

ॐ तत्त्वटीका ॐ

विषयाश्रयवर्गस्यावधारणेन स्वगतविशेषाणाञ्च व्युदासः । निष्कर्षकहेत्वाभासाः—दृशित्वदृश्यत्वादयः । निराकृता इत्यत्र सामान्यतो विशेषतश्चेति भाव्यम् । अत्र परेण विषयेषु घटत्वादिरहितं सन्मात्रम्, विषयिणि च कर्मकर्तृक्रियात्वरहितं प्रकाशमात्रमात्मेति यत्प्रलपितं तत्प्रत्युक्तम् । अथ तु ज्ञातरि प्रत्यगर्थेऽहन्त्वादिकं त्यक्त्वा तत्रत्यं प्रकाशमात्रमात्मेति प्रत्यवतिष्ठते ( ननु चेति ) अस्मत्प्रत्यये—अस्मदर्थस्वरूपस्फुरणे । अनिदमंशः—प्रत्यग्रूप इत्यर्थः । तत्र स्वयम्प्रकाशत्वं हेतुमाह ( प्रकाशैकरस इति ) तत्रापि धीत्वं हेतुरुच्यते (चित्पदार्थ इति) स आत्मा—प्रत्यक्त्वादात्मेत्यर्थः । एवं प्रकाशांशस्यापि आत्मत्वे परमसाद्ध्ये क्रमाद्व्यतिरेकित्रयं प्रयुक्तम् । ज्ञातुरनात्मत्वे तथान्वयित्रयमाह ( तस्मिन्निति ) चिन्मात्रातिरेकित्वाद्धीबलनिर्भासितत्वम्, तदेव

युष्मदर्थलक्षणोऽहं जानामीति सिद्ध्यन्नहमर्थश्चिन्मा-त्रातिरेकी युष्मदर्थ एव। नैतदेवम्; अहं जानामीति धर्मधार्मितया प्रत्यक्षप्रतीतिविरोधादेव ॥

* श्रुतप्रकाशिका *

रेकिणां व्यतिरेकिदृष्टान्तोऽन्वयिनां सपक्षश्च युष्मदर्थशब्देन सूचितः। अनुभूतिरात्मा, प्रत्यक्त्वात् . यदनात्मा तन्न प्रत्यक् यथा घटः, अनुभूतिः प्रत्यग्भूता स्वयंप्रकाशत्वात् . यन्न प्रत्यक् तन्न स्वयम्प्रकाशम्, यथा घटः। अनुभूतिः स्वयम्प्रकाशा, अनुभूतित्वात्, यन्न स्वतस्सिद्धि न तदनुभूतिर्यथा घट इति व्यतिरेकित्रयम्। अहमर्थो ज्ञानाधीनप्रकाशः चिद्व्यतिरिक्तत्वात् घटवत्, अहमर्थः पराक् ज्ञानाधीनप्रकाशत्वात् घटवत्, अहमर्थो नात्मा पराक्त्वाद्घटवदित्यन्वयित्रयम्। स्वयम्प्रकाशत्वमेव संविदात्मत्वे साक्षाद्धेतुतया पूर्वमुक्तं पूर्वपक्षोपन्यासे, अत्र तु तेन प्रत्यक्त्वं साधयित्वा तेनात्मत्वं साधितम्। एतत्परिहरति ( नैतदेवमिति) संवित्स्वयम्प्रकाशत्वमिष्टम्. शिक्षणीयांशश्चोक्तः, अतः स्वतस्सिद्धत्वसाधकहेतोः सिद्धसाध्यता। ज्ञातुरस्वतस्सिद्धत्वसाधकहेतोश्चिदन्यत्वस्यासिद्धिर्वक्ष्यते इतरानुमानचतुष्टयमिह निरस्यते। संविदात्मत्वादि किं प्रतीत्याऽभ्युपगतम्? उत प्रत्यक्त्वासिद्ध्यनुपपत्त्या? उत श्रुत्यर्थापत्त्या? उत श्रुतिस्मृतिसूत्रस्वारस्यात्? इति विकल्पमभिप्रेत्य प्रथमपक्षे प्रत्यक्षप्रतीतिविरोधमाह ( अहं जानामीति ) एतेन परोक्तानां ज्ञानप्रत्यक्त्वात्मत्व-

* तत्त्वटीका *

युष्मदर्थलक्षणोपेतत्वम् . तत एव, युष्मदर्थः—प्रत्यक्त्वरहित इत्यर्थः। ततस्सोनात्मेति वा वाक्यशेष अहन्तया प्रत्यक्त्वं शङ्कनीयमित्यवधारणाभिप्रायः। एवं वा, अहं जानामीत्यत्रास्मत्प्रत्यये—उत्तमपुरुषोपात्तज्ञातृविषयायां धातूपात्तायां ज्ञप्तावित्यर्थः। शेषं प्राग्वत्। उभयमपि निरस्यति( नैतदिति ) अहमर्थस्यैव प्रत्यक्त्वमात्मत्वञ्च तद्धर्मतया सिद्ध्यतः, प्रकाशस्य तु परस्मा एव भासमानत्वान्नोभयमिति। विपरीतप्रकाश[र] व्यवच्छेदार्थ एवंशब्दः। वैपरीत्यं विवृणोति ( जानामीति ) अहमर्थस्वरूपप्रकाशश्चेदात्मेत्युच्यते स तर्हि तद्धर्मः, धातूपात्तश्चेत्; इच्छाद्वेषादिधात्वन्तरार्थवदात्मस्वरूपादन्यः प्रसिद्धः। एवकारो दत्तोत्तरत्वद्योतकः। उपलब्धिपराहतमिति युक्तम्। अत्र

किञ्च—"अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् । अहम्बुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते ॥ निरस्ता-

* श्रुतप्रकाशिका *

ज्ञातृत्वपराक्त्वानात्मत्वसाधकानामन्वयव्यतिरेक्यनुमानानां कालात्ययापदेश उक्तः । अहं जानामीत्यत्राहमर्थः स्वावभासेऽपि घटावभास इव प्रतिसम्बन्धितया अहमिति प्रतीयते । धर्मितया ऽवभासादेव न ज्ञानशेषतावभासः, अतः स प्रत्यक् आत्मा च, ज्ञानं धर्मतया प्रतीयमानं सुखादिवदन्यस्मै भासत इति न प्रत्यक्, नाप्यात्मा, अपितु परागनात्मा च, अतश्चतुर्णां हेतूनां प्रत्यक्षबाध उक्तो भवति ।

अथ प्रत्यक्त्वं विपरीतसाधकं चेत्याह (किञ्चेति) स्वस्मै प्रकाशमानत्वरूपं प्रत्यक्त्वम् परस्मै प्रकाशमानत्वं पराक्त्वं चाहमिदम्बुद्धिभ्यां हि विभज्यते, तस्मादहम्बुद्धि-विगमे प्रत्यक्त्वमेव न सेत्स्यतीति प्रत्यक्त्वमेवाहमर्थस्यैवात्मत्वसाधकमित्यर्थः । संविदि प्रत्यक्त्वाभावादात्मत्वसाधकहेतोरसिद्धिश्च फलिता । अहमर्थस्य पराक्त्वाभावादनात्मत्व-साधकहेतोरसिद्धिश्च सिद्धा । अहम्बुद्ध्येत्यनेन युष्मदस्मत्प्रत्ययगोचरयोरिति

* तत्त्वटीका *

धीत्वात्स्वप्रकाशत्वसाधनं सिद्धसाध्यम् । आत्माश्रयनियमादिविशेषस्तु प्रागेवोक्तः, साधनं बाधितम् स्वप्रकाशतया प्रत्युक्तश्च । तत आत्मत्वं किं पुनः, अहमर्थे चित्पदा-र्थान्यत्वं सामान्यतश्चेदसिद्धमिति वक्ष्यते । विशेषतश्चेदप्रयोजकम् चिदन्तरे चिद्विशेषान्यत्वात्, अतो जडत्वपराक्त्वे चासिद्धे, साध्यरूपत्रयं बाधितम्. संविदि आत्मत्वञ्च प्रत्यक्त्वज्ञातृत्वप्रकाशत्वादिना विकल्प्य यथायथं बाधापसिद्धान्तसिद्धसाध-नत्वादीनि वाच्यानि, एवमहमर्थस्यानात्मत्वेपि विकल्पानुपपत्तिरिति भावः ।

आत्मनोऽहमर्थादन्यत्वेऽहमर्थादन्यस्यात्मत्वे च साध्येनिष्टान्तराणि विवक्षुराह ( किञ्चेति ) अहमर्थः—अहंशब्दवाच्यः, अहन्त्वविशिष्टो वा । प्रतीपमञ्चन् प्रत्यक् तस्य भावः प्रत्यक्त्वं स्वतोन्यतो वा स्वस्मै भासमानत्वमित्यर्थः । योसावहमिति व्यवह्रियते तस्य सामान्यतस्स्वपरात्मसाधारणतया परस्मै भासमानेप्यहंशब्दानुवृत्तिः । योसावह-मिति व्यवह्रियते स एव हि स्वस्मै भाति । तदन्यस्तु बोधोपि स्वयम्प्रभोपि परस्मा एव भासनादिति परागेव, अतोऽहमर्थे पराक्त्वं तदन्यस्मिन् प्रत्यक्त्वञ्चासिद्धम् । यत्र तु ते स्तः

**खिलदुःखोऽहमनन्तानन्दभाक् स्वराट् । भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्त्तते ॥ अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥**

* श्रुतप्रकाशिका *

स्वोक्तिविरोधश्च. "कोऽहमित्येव निपुणः शब्दोऽहमिति दोषाय नात्मन्येष" इत्याद्यागमविरोधश्च गर्भितः । हिशब्दस्य प्रसिद्धिपरत्वाद्धेतौ वा, अनुभूतिः पराची, अहमर्थव्यतिरिक्तत्वात् घटवदिति . प्रत्यक्त्वहेतोरसिद्धिदाढर्य्यं, तत्प्रत्यक्त्वसाधकस्य स्वयम्प्रकाशत्वहेतोस्सत्प्रतिपक्षत्वञ्च, अनुभूतिरनात्मा, अहमर्थव्यतिरिक्तत्वात् घटादिवदिति संविदात्मत्वसाधकस्य प्रत्यक्त्वहेतोश्च सत्प्रतिपक्षत्वं चाभिप्रेतमित्यवगम्यते, अहम्बुद्ध्या परागर्थात्प्रत्यगर्थस्य भेदसमर्थनात् । हिशब्दाच्चात्र संवित्प्रत्यक्त्वहेतोरसिद्धिश्च सिद्धा । श्रुत्यर्थापत्तिं वक्तुं मुमुक्षोरभिसन्धिमाह (निरस्तेति) ततः किमित्यत्राह (अहमर्थविनाश इति) यत्सम्बन्धित्वेन दुःखज्ञानं यत्सम्बन्धिनी दुःखविनिवृत्तिर्यत्सम्बन्धिनी सुखप्राप्तिश्चेप्स्यते, तद्विनाशो मोक्षश्चेदधिकारिविरहादप्रामाण्यं भवेत्. प्रमितिजनकत्वं हि शास्त्रस्य प्रामाण्यम्, बुभुत्सितप्राह्यस्य शास्त्रस्य पुरुषार्थपर्यवसायित्वाभावे श्रवणमननाद्यधिकारी न सिध्येत्, न हि शास्त्रं श्रवणादिनिरपेक्षं कस्यचित्प्रमितिं जनयति, अतोऽधिकारिविरहात्प्रामाण्यं न भवेदिति शास्त्रप्रामाण्यान्यथानुपपत्तिरूपश्रुत्यर्थापत्तिरुक्ता । अहमर्थे नष्टेऽपि ज्ञप्तिर्नित्य.

ॐ तत्त्वटीका ॐ

तत्रैव ताभ्यां तत्साध्यं सिद्ध्येदिति त्वदिष्टविरुद्धमापन्नमिति भावः । रक्तारक्तादिवदहन्त्वपराक्त्वयोर्विरोधं धीभेदेन व्यनक्ति (अहं बुद्ध्येति) परागर्थात्—परस्मा एव भासमानादित्यर्थः । आत्मभेदमते तु प्रत्यगर्थान्तरादपि प्रातिस्विकाहंबुद्ध्या भेदासिद्धिः । बद्धमुक्तावस्थयोरात्मयोरहंशब्देनाम्नानादागमबाधश्चात्र सिद्ध इति भावः । मुमुक्षुप्रवृत्त्यन्यथानुपपत्त्या स्वेष्टसिद्धिं परेष्टबाधञ्चाह (निरस्तेति) विशेषणत्रयेण तत्तच्छास्त्रार्थसरणम्, दुःखनिवृत्तिः आनन्दावाप्तिः अकर्मवश्यावस्था च स्वार्थाः स्वीक्रियन्ते । मुक्तौ तु स्वनाशे विदुषस्तदुद्देशप्रवृत्त्ययोगान्मोक्षशास्त्रस्याधिकारिविरहेऽप्रामाण्ये स्यादित्यभिप्रायेणाह (अहमर्थ इति) अन्यथापि प्रवृत्त्युपपत्ति-

मयि नष्टेपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता ।
इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥
स्वसम्बन्धितया ह्यस्याः सत्ताविज्ञप्तितादि च ।
स्वसम्बन्धावियोगे तु ज्ञप्तिरेव न सिद्ध्यति ॥
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ।

* श्रुतप्रकाशिका *

तिष्ठतीत्यत्राह (मयि नष्टेऽपीति) न हि मयि नष्टेऽपि स्तम्भस्तिष्ठतीति स्वशिरश्छेदः पुरुषार्थः स्यादिति भावः । न हि केवलसंविदः श्रवणादौ प्रवृत्तिः, अपि त्वहमर्थस्यैव; अतः प्रवर्तमानोऽयं स्वनाशाय न प्रवर्त्तते, अहमर्थविगमे ज्ञप्त्यवस्थानमभ्युपगम्य दूषणमुक्तम् । अथ तदवस्थानमेव नास्तीत्याह ( स्वसम्बन्धितयेति ) सामान्याकारः सत्ता, विज्ञप्तिता—विषयप्रकाशत्वरूपविशेषाकारः, आदिशब्देन स्वयम्प्रकाशत्वं विवक्षितम्. सत्ताया आश्रयसम्बन्धाधीनत्वात्, स्वरूपलाभे सति ज्ञप्तित्वादिसम्भवाच्च सर्वं तदधीनमित्यर्थः । अतो यत्सम्बन्धायत्ता सत्ता तत्सम्बन्धवियोगे ज्ञप्तिसत्तैव नेत्याह ( स्वसम्बन्धेति ) घटकरकाकाशदृष्टान्तव्यावृत्त्यर्थं विषयाश्रयसम्बन्धस्य सत्ताहेतुत्वे दृष्टान्तमाह ( छेत्तुरिति ) छेदनादेरित्यादिना सत्ता

७ तत्त्वटीका ७

माशङ्क्याह ( मयीति ) खादेरिव स्वान्यस्य स्थितिर्हि स्वनाशार्थप्रवृत्तिहेतुर्न स्यात्, स्ववधः कथम् ? इत्थम्,— सहि धर्मबुद्ध्या चेत् अनश्वराहमर्थभोगार्थः । अविवेकिनान्तु संसारमोचकानां यदहमर्थस्यैवासह्यदुःखनिवृत्तिमात्रार्थः । न चेह तथा, अहम आत्मत्वानभ्युपगमात् । आत्मानमधिकृत्यैव मोक्षोपदेशादिप्रवृत्तेः । यत्तु प्रागुक्तं कर्त्तुर्देहाद्भोक्तुरात्मनोऽन्यत्वं प्रामाणिकानां प्रसिद्धमिति । तदयुक्तम्,—देहस्य क्रियावत्त्वेपि स्वधीपूर्वं प्रवृत्तिलक्षणमिति कर्तृत्वायोगात् । तदपेक्षया 'शास्त्रफलं प्रयोक्तरि' इति स्थापनात् । इह त्वहङ्कारस्य कर्तृत्वे संसारोपि तस्यैव स्यात् । भोक्तृत्वञ्चात्मनस्त्वमेव प्रतिक्षिपसीत्यात्मनो बन्धमोक्षौ न स्याताम् । तथा च वृथा मुमुक्षोः शास्त्रारम्भः, मुक्तावहमर्थनाशे धीस्थितिमन्वारुह्योक्तम् । सैव न स्यादित्याह ( स्वसम्बन्धीति ) ननु धर्मो धीश्चेतनैकान्तत्वम् एकायुक्तत्वं वा, अतः परमते

अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥
[1]'विज्ञातारमरे' 'केन जानात्येवेति च श्रुतिः ।
[2]'एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ' इतिच स्मृतिः ॥
[3]'नात्माश्रुते'रित्यारभ्य सूत्रकारोऽपि वक्ष्यति ।
[4]'ज्ञोऽत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम्' ॥

* श्रुतप्रकाशिका *

तत्फलं द्वैधीभाव इत्यादि विवक्षितम् । एवं प्रत्यक्षविरोधादसिद्धत्वाद्विपरीतसाधकत्वात्सत्प्रतिपक्षत्वाच्च संविदात्मत्वानुपपत्तेः श्रुत्यर्थापत्त्या चाहमर्थात्मत्वमाह— ( अत इति ) पूर्वोत्तरहेतूनामियं प्रतिज्ञा । श्रुतिस्मृतिसूत्राणि दर्शयति ( विज्ञातारमिति ) ज्ञातव्यस्यात्मनो ज्ञातृत्वमुक्तं 'विज्ञातारमरे केन विजानीया'दिति । ज्ञातृत्वस्य स्वाभाविकतया मुक्तावपि ज्ञातृत्वमस्तीति दर्शयति ( जानात्येवेति ) "ज्ञोऽत एव"इत्यत्र ज्ञशब्दनिर्दिष्ट आत्मेति ज्ञापनार्थं "नात्मा श्रुते"रिति सूत्रमुपात्तम् ,

* तत्त्वटीका *

जातिवत् , घटादिसंयोगरूपधर्मनाशे खादिवच्च, स्वाश्रयाहमर्थनाशे तिष्ठेदित्यत्राह ( छेत्तुरिति ) आस्तामन्यत् । सकर्मकस्य धात्वर्थस्य कर्मकर्तृविरहे कथं सत्तेति भावः । छेत्तुरित्यादिप्रदर्शनार्थम् । आदिशब्देन हि सकर्मकक्रियान्तरेऽव्याप्तिः प्रदर्श्यते । न ह्यत्र धर्म्यभावे धर्मसत्तायां किञ्चित्प्रमाणम् । ज्ञातुरभावे च कस्मै स्वात्मानमन्यद्वा प्रकाशयेत् । तदिहोक्तैः प्रमाणतर्कैसिद्धं निगमनेन द्रढयति ( अतोहमिति ) एतदेव मिथोनुगुणश्रुतिस्मृतिमात्रस्वारस्येन सम्वादयति ( विज्ञातारमित्यादिना श्लोकद्वयेन ) जानात्येवेत्यवधारणेन मुक्तावपि ज्ञातृत्वं सूच्यते । अयोगव्यवच्छेदो ह्यत्र स्वरसः । अन्यप्रकरणत्वशङ्कानिरासार्थमात्मस्वरूपानुबन्धित्वेन मुक्तावप्यनुवृत्तिसम्भवार्थं च नात्मेत्यादिकमुपात्तम् । अपिस्सूत्रोक्तातिक्रमेऽपसिद्धान्तं सूचयति । अहमर्थस्यात्मत्वं निगमितम् । ज्ञप्तेरनात्मत्वन्तु निगम्यते ( अत इति) प्रत्यक्षागमयुक्तिबलादित्यर्थः । ज्ञप्तिर्नात्मा परस्मा एव भातत्वात् अनहन्त्वात्

१– बृ. ४. ब्रा. १४. वा. ३–शा. १-अ. ३० पा. १८ सू.
२ ॥ ३– गी- १३-अ. १ श्लो. ॥ ४–शा. २. अ. ३- पा. १९- सू.

**अहंप्रत्ययसिद्धो ह्यस्मदर्थः, युष्मत्प्रत्ययविषयो युष्मदर्थः । तत्राहं जानामीति सिद्धो ज्ञाता युष्मदर्थ इति**

* श्रुतप्रकाशिका *

त्वया अनित्यतया अभ्युपेतस्याऽहमर्थस्य नित्यत्वकथनमपि तस्यैवात्मत्वसाधकमिति च ज्ञापनार्थम् ; अतो नात्मेति संविदात्मत्वप्रतिक्षेपनिगमनात् पूर्वोक्ताहमर्थात्मत्वप्रतिज्ञायां संविदात्मत्वप्रतिक्षेपे च यथायथमुक्तहेतवोऽनुसन्धेयाः । दूषणान्तरं व्याहतिरप्यस्तीत्याह ( अहंप्रत्ययेत्यादिना ) अहंप्रत्ययसिद्ध इति सिद्धशब्देन स्वतस्सिद्धिः सूचिता, अत एव ह्यन्यत्र युष्मत्प्रत्ययविषय इत्युक्तम् । अहंप्रत्ययसिद्धो हीति हिशब्देनास्मदर्थयुष्मदर्थशब्दतश्च युष्मदस्मत्प्रत्ययगोचरयोरिति तद्ग्रन्थप्रसिद्धिं दर्शयति । ज्ञानमेव स्वयम्प्रकाशं तद्व्यतिरिक्तत्वादहमर्थोऽन्याधीनप्रकाशः, अतो नात्मेति शङ्कायां हेतोरसिद्धिमभिप्रयन्नहमर्थस्य प्रकाशान्तरनैरपेक्ष्यं प्रतिजानीते

ஒ तत्त्वटीका ஒ

घटादिवदिति प्रयोगः । प्रसङ्गाश्च द्रष्टव्याः । यद्यपि स्वमतेऽस्मदर्थस्यैव युष्मदर्थत्वमात्मव्यक्तिभेदात् स्यात् । परमते चाहङ्कारभेदादहमर्थ एव त्वमर्थोऽपि, तथापि घटादिवत्प्रत्यक्त्वसामान्याभावलक्षणं युष्मदर्थत्वमिह व्याहतमित्यभिप्रायेण स्ववचनविरोधमाह ( अहम्प्रत्यय इत्यादिना वाक्यत्रयेण ) अस्या प्रयोजकत्वं प्रत्येतुं प्रत्येतव्यातिरेकेण प्रत्यक्त्वञ्च नैयायिकादयः प्राहुः, बाधितत्वञ्चात्र दर्शितम् ।

किञ्च युष्मत्वमस्मत्वमप्यनात्मादिगोचरम् ।
परो बभाषे भग्नं तन्मानतः स्वमतादपि ॥ ஒ ॥
प्रतियोगिविशेषाद्धि युष्मदस्मत्पदार्थता ।
चेतनस्यैव विख्याता न जन्यज्ञप्तिमात्रयोः ॥ ஒ ॥
उन्मादादिव यद्युक्ता युष्मद्युक्तिरचेतने ।
क्वचित्तत्तदधिष्ठातृ-पुंविशेषविवक्षया ॥ ஒ ॥
ब्रह्मोपलक्षणत्वञ्च युष्मदर्थेऽपि मेनिरे ।
नातो विषयनिर्देशे-प्यस्मदर्थविशेषवान् ॥ ஒ ॥

अथाहमर्थपराक्त्वसाधकतयोक्तस्यान्यत एव भातत्वस्यासिद्धिरप्यस्तीति साधयति

वचनं जननी मे वन्ध्येतिवद्व्याहतार्थञ्च। न चासौ ज्ञाता अहमर्थोऽन्याधीनप्रकाशः, स्वयम्प्रकाशत्वात्। चैतन्यस्वभावता हि स्वयम्प्रकाशता। यः प्रकाशस्वभावः सो

* श्रुतप्रकाशिका *

(न चासाविति) कुत इत्यत्राह (स्वयम्प्रकाशत्वादिति) प्रकाशः—व्यवहारानुगुण्यम्, स्वत एव व्यवहारानुगुण्यशक्तियुक्तत्वादहमर्थः प्रकाशान्तरनिरपेक्ष इत्यर्थः। तच्च कथमित्यत्राह (चैतन्यस्वभावता हि स्वयम्प्रकाशतेति) चेतना ज्ञानम्, तद्भावश्चैतन्यं ज्ञानत्वं तत्स्वभावत्वं ज्ञानत्वगुणकतेत्यर्थः। ज्ञानत्वमेव हि ज्ञानस्य स्वयम्प्रकाशत्वम्, तद्वदत्रापि ज्ञानत्वं प्रामाणिकं चेत्तदेव स्वयम्प्रकाशत्वं भवतीत्युक्तं भवति, अहमर्थस्य चैतन्यस्वभावत्वे श्रुतिं प्रमाणं वक्ष्यंस्तदनुग्राहकतर्कमुपन्यस्यति (यः प्रकाशस्वभाव इत्यादिना) आत्मदीपधर्मभूतज्ञानप्रभयोः साक्षाद्वा प्रणाल्या वा यादृशव्यवहारानुगुण्यं तादृशं व्यवहारानुगुण्यमिह प्रकाशशब्देन विवक्षितम्. दीपस्य तमोविरोधिरूपमौज्ज्वल्यं प्रकाशः, ज्ञानस्य तु स्फुरणम्. यस्तत्स्वभावस्तद्धर्मकः

ᛤ तत्त्वटीका ᛤ

(नचेति) नहि वेद्यत्वमात्रादनात्मत्वं सुवचम् विज्ञावपि प्रसङ्गात्। धर्मभूतज्ञाने दृष्टव्याप्तिकं हेतुमाह (स्वयमिति) स्वधर्मवत्स्वयमपि प्रकाशरूपत्वादित्यर्थः। यद्वा— स्वयंज्योतिष्ट्वेन श्रुतत्वादिति यावत्। ज्ञानत्वे सिद्धेऽनन्याधीनस्वप्रकाशत्वं नियतमित्याह (चैतन्यस्येति) अत्र धूमवत्त्वमेव ह्यग्निमत्त्वमितिवत्सम्बन्धदार्ढ्यादुपचारः। अनन्याधीनस्वप्रकाशत्वे स्वयम्प्रकाशत्वहेतुस्साध्याविशिष्ट इति शङ्कायां स्वयम्प्रकाशत्वशब्देन ज्ञानत्वं विवक्षितमित्युच्यते। ज्ञानत्वस्वप्रकाशत्वयोर्व्याप्तिं व्यनक्ति (य इति) धर्मभूतज्ञानवदिति दृष्टान्तोऽभिप्रेतः। अत्र दीपाद्युदाहरणं लोकबुद्ध्यनुसारेण सम्भावनामात्रस्थापनार्थम्। स्वयम्प्रकाशत्वात्— स्वतस्सिद्धप्रकाशधर्मत्वात्। अत्र विशेष्यमेव हेतुः। यद्वा, हेत्वंशं पक्षस्थविशेषणं विवृणोति। चैतन्येति— नन्वेवं ज्ञातृत्वादिति हेतुरुक्तस्स्यात्, तथासत्यसाधारणानैकान्त्यम्। मैवम्,— व्यतिरेकिणोऽनभिसंहितत्वात्। अन्वयि त्वेवं भाव्यः। आत्मा स्वधर्मभूतज्ञाननिरपेक्षप्रकाशः, स्वप्रकाशे स्वात्यन्तसजातीयनिरपेक्षधर्मवस्तुधर्मत्वादिति। अत्र व्याप्ति-

नन्याधीनप्रकाशः दीपवत्। नहि दीपादेः स्वप्रभाबलानिर्भासितत्वेनाप्रकाशत्वमन्याधीनप्रकाशत्वञ्च, किं तर्हि ? दीपः प्रकाशस्वभावः स्वयमेव प्रकाशते । अन्यानपि

* श्रुतप्रकाशिका *

स्वव्यवहारानुगुण्यापादनशक्तियुक्तः । सोऽनन्याधीनप्रकाशः—स्वधर्मानिरपेक्षप्रकाश इत्यर्थः । प्रकाशस्वभावत्वासिद्धिर्न शङ्कनीया, यथा प्रभाश्रयस्य दीपस्यौज्ज्वल्यं प्रत्यक्षसिद्धम्, तथा ज्ञातुरपि. स्वत एव स्वव्यवहारानुगुण्यस्य वक्ष्यमाणश्रुतिस्वारस्यावगतत्वात्. प्रकाशस्वभावस्य स्वधर्मभूतप्रकाशानपेक्षप्रकाशत्वमुपपन्नमित्येतावदेव ह्युच्यते ऽनेन ग्रन्थेन। अथ चक्षुर्ग्राह्यत्वे सति प्रभाव्यतिरिक्तत्वाद्दीपो घटादिवत्प्रभाबलनिर्भास्य इति दृष्टान्तस्य साध्यवैकल्यमाशङ्क्याह ( नहीति ) नच चक्षुर्ग्राह्यत्वे सति प्रभान्यत्वात् घटादिरिव दीपः प्रभावभास्यः, अन्धकारे व्यभिचारात्, अतो न दीपस्य प्रभापेक्षेत्यभिप्रायः । ( अप्रकाशत्वमन्याधीनप्रकाशत्वञ्चेति ) स्वयमौज्ज्वल्यधर्मकत्वाभावस्तत्कृतप्रकाशान्तरसापेक्षत्वञ्च नास्तीत्यर्थः । अर्थसिद्धं वक्तुमाकाङ्क्षां दर्शयति ( किं तर्हीति ) उत्तरमाह ( दीप इति ) दीपो न केवलं स्वात्मानमेव प्रकाशयति, अपि तु स्वपरिकरेणान्यानपि प्रकाशयतीत्यतिशयमाह ( अन्यानपीति ) एवं वार्थः,—दीपः प्रभानिरपेक्षप्रकाशश्चेत्प्रभावद्विषयानपि

* तत्त्वटीका *

दृष्टान्तावाह—य इति । दीपो घटवत् प्रभातमोन्यत्वे सति प्रभानुग्राह्यचक्षुर्ग्राह्यत्वात् प्रभाधीनप्रकाशस्स्यादित्यत्राह ( नहीति ) घटवद्दीपस्य यद्यभास्वर रूपत्वं स्यात्, ततो भास्वरद्रव्यसम्बन्धाधीनप्रकाशस्स्यात्, न तदस्ति अतो नोक्तशङ्केति भावः। ननु प्रभाश्रयस्यापि मण्यादेः प्रभाधीनप्रकाशत्ववद्दीपादेरप्यस्त्वित्यभिप्रायेण कथं प्रकाशत इत्याकाङ्क्षां दर्शयति ( किं तर्हीति ) घटादेर्मण्यादिपार्थिवांशस्य च स्वयमभास्वरतया प्रभासापेक्षप्रकाशत्वम्. उद्भूतानभिभूतभास्वररूपस्य तु स्वभावात्तन्नैरपेक्ष्यं युक्तमित्याह ( दीप इति ) ननु भास्वरत्वं प्रभानैरपेक्ष्ये न प्रयोजकम् किन्तु प्रभात्वमेव । मैवम्,— व्यभिचारादर्शनेप्यत्र व्याप्तिसङ्कोचेऽतिप्रसङ्गात्, प्रभात्वाभावेपि तमसि प्रभानैरपेक्ष्यदृष्टेश्च. ज्योतिष्ट्वाभावेपि तत्र तद्दृष्टिरस्तीति चेत्;

* श्रुतप्रकाशिका *

प्रकाशयेदित्यत्राह—अन्यानपीति । विषयप्रकाशनक्षमोऽपि स्वरूपस्य क्वाचित्कतया विषयसम्बन्धाभावात् स्वरूपेण न प्रकाशयति, किन्तु विषयसम्बन्धिन्या स्वपरिकर-भूतया प्रभयेत्यर्थः । "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः" इत्यादिनिर्देशोऽभिप्रेतः । यद्वा,—अनुमानविवक्षयाह—चैतन्यस्वभावता हीति । चैतन्यस्वभावता—ज्ञानधर्मकत्वम्, एतदेव हि स्वयम्प्रकाशत्वम्, ज्ञानधर्मकत्वात् स्वयम्प्रकाशत्वम् इत्युक्तं भवति । यथा धूमवत्त्वं ह्यग्निमत्त्वमित्युक्ते धूमवत्त्वादग्निमत्त्वमित्युक्तं स्यात् तद्वत्. अयं चान्वयी हेतुः । व्याप्तिं दर्शयति—य इति । प्रकाशस्वभावः—प्रकाश-धर्मकः । यो धर्म्यन्तरापरोक्षावभासे साक्षाद्वा परम्परया वा भासमानतयैव हेतुः सोऽनन्याधीनप्रकाशशब्दविवक्षितः । रूपितत्समवेतार्थचाक्षुषत्वनिमित्तस्य रूपस्य स्वाश्रयेतरद्रव्यानुमापकधूमादेश्च प्रकाशत्वव्युदासाय धर्म्यन्तरापरोक्षशब्दौ । इन्द्रिय-व्यवच्छेदार्थो भासमानशब्दः, पक्षसपक्षयोरनुगतत्वाय साक्षाद्वा परम्परया वेत्युक्तम् । ज्ञाता स्वधर्मभूतप्रकाशनिरपेक्षसिद्धिः प्रकाशधर्मकत्वाद्दीपवदित्यनुमान-शरीरम्, भासमानतया साक्षाद्वा परम्परया वा धर्म्यन्तरापरोक्षावभासहेतुधर्मकत्वा-दिति हेतुवाचिशब्दार्थः । दीपस्य स्वधर्मभूतप्रभानपेक्षप्रकाशत्ववत् ज्ञातुरपि स्वधर्म-भूतज्ञाननिरपेक्षप्रकाशत्वं सिद्धमिति पक्षधर्मताबलात् स्वयम्प्रकाशत्वसिद्धिः । दृष्टान्ते साध्यान्वयं दर्शयति— नहीति । साधनान्वयं दर्शयति—अन्यानपीति । अनुमान-परत्वादपि ग्रन्थस्य श्रुत्यनुग्राहकतर्कपरत्वं युक्तम्, उत्तरत्र तथा हि श्रुतय इति वक्ष्यमाणत्वात् पूर्वमनुमानं विवक्षितं चेत् तथा चेति हि वक्तव्यम् । उपक्रमे चैतन्य-स्वभावता हि स्वयम्प्रकाशतेति समानाधिकरणनिर्देशस्वारस्याच्च । पञ्चम्यर्थत्वे हि स्वारस्यं भज्यते. निगमने च चिद्रूपता हि स्वयम्प्रकाशतेत्युक्तम् । चिद्रूपशब्दो ज्ञानस्व-रूपत्वपरः न तु ज्ञानधर्मकत्वपरः, अनन्तरपूर्वग्रन्थे चिद्रूप एव चैतन्यगुण इति

❀ तत्त्वटीका ❀

सत्यम्,— नहि वयं ज्योतिष्ट्वं व्यापकं ब्रूमः, प्रभात्वमप्येवमिति चेत्, तर्हि लिङ्गं भवतु . ननु स्वनिवृत्त्या प्रभानैरपेक्ष्यं निवर्त्तते, नच दीपादेः प्रभाधीनप्रकाशत्वं दृष्टम् . येन प्रभातमोन्यतरनिष्ठतया व्याप्तिस्सङ्कोच्येत, तर्हि स्वप्रभावद्दीपोपि घटा-दीन् स्वयमेव प्रकाशयेदित्यत्राह ( अन्यानिति ) असम्बद्धं कथं प्रकाशयेत्? यथा

**प्रकाशयति स्वप्रभया ॥ एतदुक्तं भवति,—यथैकमेव तेजो-द्रव्यं प्रभाप्रभावद्रूपेणावतिष्ठते । यद्यपि प्रभा प्रभावद्द्रव्य-गुणभूता । तथापि तेजोद्रव्यमेव, न शौक्ल्यादिवद्गुणः ।**

* श्रुतप्रकाशिका *

ज्ञानधर्मत्वस्य पृथगुक्तत्वात् , एवं निगमने स्वयम्प्रकाशतापदसमानाधिकरणस्य चिद्रूपताशब्दस्य ज्ञानस्वरूपतापरत्वदर्शनात् , पूर्वमपि स्वयम्प्रकाशतापदसमा-नाधिकरणस्य चैतन्यस्वभावतेतिपदस्य ज्ञानस्वरूपतापरत्वस्य समुचितत्वाच्च चैतन्यस्वभावतेत्यादिभाष्यं श्रुत्यनुग्राहकतर्कपरम्, एवमनुग्राहकतर्कस्य श्रौतत्वे सत्यनुमानमप्यर्थसिद्धम् ज्ञानधर्मकत्वज्ञानस्वरूपत्वोक्तेः, एकजातीयद्रव्ययोर्नियतधर्म-धर्मिभावे प्रभाप्रभावद्दृष्टान्तोक्तेश्च । ज्ञानस्य द्रव्यत्वे द्वयोर्ज्ञानयोर्नियमेन धर्मधर्मिभावो नोपपद्यते अन्यत्रादर्शनात् . गुणत्वे तु न ज्ञानाश्रयत्वसम्भवः गुणानामगुणत्वात् . न च द्रव्यत्वेऽपि नियताश्रयाश्रयिभावः प्रभाप्रभावतोर्दृश्यत इति वाच्यम् ; प्रभाया विशीर्णदीपावयवत्वादित्याशङ्क्याह ( एतदुक्तमिति ) यथैकमेव तेजोद्रव्यं प्रभा-प्रभावद्रूपेणावतिष्ठते, एवमात्मा चिद्रूप एव चैतन्यगुण इति यथाशब्दस्योत्तरत्रा-न्वयः । प्रथमं प्रभाया विशीर्णावयवान्यत्वं प्रतिजानीते ( एकमेवेति ) एकम्—सजा-तीयम् । नियतधर्मस्य कथं द्रव्यत्वमित्यत्राह ( यद्यपीति ) गुणभूता—परतन्त्रभूता;

७ तत्त्वटीका ७

दर्शनं व्यवस्थायां धर्मद्वारा सम्बन्धः प्रकाशनञ्चेति भावः । नन्वात्मनस्तद्धर्मस्य च सत्तावान्तरजात्या सजातीयत्वे कथं धर्मधर्मित्वम् ? नच दीपप्रभानिदर्शनम् विशरण-पूर्वदीपावयवरूपायाः प्रभाया उत्तरदीपधर्मत्वप्रसङ्गाभावात् , अवयवविशरणाभावे च दीपादेराशुतरविनाशित्वं न सिद्ध्येत् । रजःपटलादिन्यायेन मूलमध्याग्रवैषम्यं च विशीर्णावयवत्वलिङ्गमित्यत्राह ( एतदिति ) यथेत्यत्रोत्तरत्रैवमिति प्रतिनिर्देशः । अवान्तरवैषम्येऽपि तेजस्त्वेन सजातीयत्वं स्थितमित्यभिप्रायेण एकमेवेत्युक्तम् । ननु प्रभाप्रभावतो धर्मधर्मिभावो भ्रान्तः । यदि प्रभाया दीपगुणत्वं तर्हि द्रव्यत्वं साजात्यञ्च न स्यादित्यत्राह ( यद्यपीति ) द्रव्यत्वे कथं गुणत्वमित्यत्राह ( शौक्ल्या-दिवदिति ) अद्रव्यत्वलक्षणं गुणत्वं माभूत्, आश्रितस्वभावत्वं तदस्तीति भावः ।

स्वाश्रयादन्यत्रापि वर्त्तमानत्वाद्रूपवत्त्वाच्च शौक्ल्यादि-धर्मवैधर्म्यात्, प्रकाशवत्त्वाच्च तेजोद्रव्यमेव; नार्थान्तरम्। प्रकाशवत्त्वञ्च स्वस्वरूपस्यान्येषाञ्च प्रकाशकत्वात्। अस्यास्तु गुणत्वव्यवहारो नित्यतदाश्रयत्वतच्छेषत्व-

* श्रुतप्रकाशिका *

अयुतसिद्धविशेषणभूतेत्यर्थः। तेजोद्रव्यमेवेतिप्रतिज्ञातद्रव्यविशेषत्वसिद्ध्यर्थं प्रथमं द्रव्यत्वमुपपादयति ( स्वाश्रयादिति ) द्रव्यत्वमस्तु तत्रापि तेजस्त्वे किं प्रमाणमित्यत्राह (प्रकाशवत्त्वादिति) प्रकाशः—तमोविरोध्याकारविशेषः, औज्ज्वल्यम्। प्रकाशवत्त्वमुपपादयति ( प्रकाशवत्त्वं चेति ) स्वविषयपरविषयज्ञानविरोधितमोनिरसनरूपकार्यदर्शनादित्यर्थः। तर्हि कथमस्या गुणत्वव्यवहार इत्यत्राह ( अस्या इति ) तुशब्दः शौक्ल्यादिवैषम्यपरः। अथ विशीर्णावयवानां प्रभावत्त्वं प्रतिक्षिपति

* तत्त्वटीका *

तद्द्रव्यत्वे किं प्रमाणमित्यत्राह ( स्वेति ) द्रव्याणां दण्डादीनां केशनखादीनाञ्च संयोगत आश्रितानां तावत् स्वाश्रयरहितप्रदेशेऽपि वृत्तिर्दृष्टा। प्रभायास्त्वयुतसिद्धाया अपि धर्मिदेशातिवृत्तिर्दृश्यते, अद्रव्याणान्तु न तथा तदत्रायुतसिद्ध्या दण्डादिभ्यो धर्मिदेशातिवृत्त्या शौक्ल्यादिभ्यश्च विशेष इति भावः। तथाप्यौष्ण्यवत्तेजोधर्मस्य द्रव्यत्वतेजस्त्वे न स्यातामित्यत्राह ( प्रकाशत्वादिति )तिमिरनिरासकस्वभावादित्यर्थः। प्रकाशोपाधिकस्वरूपादिति च हार्दो हेतुः। भ्रान्तिशङ्काव्युदासार्थमवधारणं विवृणोति ( नार्थान्तरमिति ) नहि प्रभाया मण्यादेरिवौपाधिकी भास्वरत्वधीरितिभावः। दीपधर्मस्य गुणान्तरस्येव प्रकाशत्वं न स्यादित्यत्राह ( प्रकाशत्वमिति ) प्रकाशत्वमिह तमोनिरासद्वारा मनुष्यादिचक्षुस्सहकारित्वम्, न चैतल्लिङ्गम्, दृश्यमानस्तु स्वभावविशेषः प्रदर्श्यते, उक्तञ्च पञ्चपादिकाविवरणकृता, "ज्ञानप्रकाश्यत्वादज्ञानविरोधिनोऽन्यदेवालोकप्रकाश्यत्व"मिति। तमोविरोधित्वसिद्धोऽद्रव्यनियतो गुणव्यपदेशः कथमिह स्यादित्यत्राह ( अस्या इति) चोदितनिमित्तव्यावृत्त्यर्थस्तुशब्दः। अयम्भावः,— गुणशब्दो हि दानादिष्वपि प्रयुज्यते, कर्मणि क्रियान्तरशेषभूते सन्धिविग्रहादिष्वपि विवक्षान्तरेण, तद्वदिहापि

निबन्धनः । न चाश्रयावयवा एव विशीर्णाः प्रचरन्तः प्रभेत्युच्यन्ते, मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गात् ॥

* श्रुतप्रकाशिका *

( नचेति ) कुत इत्यत्राह ( मणीति ) प्रतिक्षणं विनाशप्रसङ्गादित्यर्थः । तदभ्युपगमे मण्याद्यनुपलम्भप्रसङ्गपरिहाराय प्रतिक्षणोत्पत्तिरभ्युपेत्या; प्रतिक्षणोत्पत्तिविनाशाभ्युपगमश्चानुपपन्नः, दीपस्येवोत्पत्तिविनाशसामग्र्यनुवृत्त्यभावात्तदभावेऽपि तेजस्त्वसामान्याद्दीप इव प्रत्यभिज्ञाबाधेन प्रतिक्षणं विनाशादिकल्पने सत्त्वद्रव्यत्वादिभिर्घटादावपि क्षणिकत्वप्रसङ्ग इति भावः । रत्नेषु क्षणिकत्वं रत्नशास्त्रविरुद्धम्, कालविशेषे तदुत्पत्त्याद्यवगतेः । आदित्यादिषु च क्षणिकत्वं श्रुतिविरुद्धम्, 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" " नाग्नीषोमौ न सूर्य "इति कालविशेषे तदुत्पत्तिविनाशावगतेः । नच सूर्यादिसृष्टिप्रलयपरवाक्यानां सन्तत्युपक्रमोच्छेदपरत्वं वाच्यम्, रत्नसूर्यादिमात्रक्षणिकत्वे प्रमाणाभावात् । तेजस्त्वन्तु तेजःपरमाणुनिच्छद्भिर्न हेतुतया वाच्यम्, तेजःपरमाणुषु व्यभिचारात्. सत्त्वादिभिः क्षणिकत्वे जगत्क्षणिकत्वं स्यादित्युक्तम् । ननु कर्पूरादीनां दूरोपलभ्यगन्धानां गन्धाश्रयभूतावयवविशरणस्यावर्जनीयत्वादुत्तरकालोपलम्भाच्च प्रतिक्षणोत्पत्तिविनाशावभ्युपगन्तव्यौ, तद्वन्मण्यादिष्वपीति । नैवम्,—समुद्गकसम्पुटादिनिवातदेशनिहितदृढपिहितघनसारादेर्दूरे गन्धोपलम्भाभावादाश्रयावयवविशरणाभावेन यथापूर्वं स्थित्युपलम्भोपपत्तेर्न प्रतिक्षणोत्पत्तिविनाशौ कल्प्यौ । सवातदेशस्थघनसारादीनां दूरोपलभ्यमानगन्धानामल्पावयवविशरणमस्त्येव, अवयविनि च सूक्ष्मपरिक्षयो विद्यत एव, तुलया परीक्षणेऽप्यल्पाल्पपरिमाणापकर्षदर्शनात्; अतः प्रतिक्षणमवयवान्तरोपनिपातविश्लेषहेतुकोत्पत्तिविनाशौ न कल्प्यौ, कल्पनेऽपि परितः केषाञ्चिदवयवानामुपलभ्यमानगन्धाश्रयत्वेन

ঌ तत्त्वटीका ঌ

द्रव्यत्वाविरुद्धनिमित्तविवक्षया गुणोक्तिरविरुद्धेति । विशरणपक्षं प्रतिक्षिपति ( नचेति ) तथानुपलम्भादिति भावः । कल्पने निर्बाधलोकदृष्ट्याऽनिष्टप्रसङ्गमाह (मणीति) दीपादिवत्प्रतिक्षणविनाशप्रसङ्गादित्यर्थः । स्थिरत्वेन सर्वलोकविदितानां पुष्कलकारणक्रमाद्यनुपलम्भेऽपि क्षणिकत्वकल्पनावतिप्रसङ्ग इतिभावः ॥

* श्रुतप्रकाशिका *

उभयवादिसम्प्रतिपन्नानामेव स्थितिमात्रं कल्प्यम्, तावता गन्धोपलब्ध्युपपत्तेः, अनेक धर्मितदुत्पत्तिविनाशापरिदृष्टतदुभयसामग्रीकल्पने गौरवाच्च। यद्वा—घ्राणस्यापि चक्षुष इव रश्मिद्वारा सम्बन्धाद्दूरस्थपदार्थगतगन्धग्राहित्वं कल्प्यम्-गौरवाभावात्; न केवलं कल्प्यं रश्मिमत्त्वम् । उक्तञ्च भारते ' न ह्यात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः । प्रवर्तमानैरनयैर्दुर्द्धर्षैरकृतात्मभिः ॥ तेषां तु मनसा रश्मीन् यदा सम्यङ् नियच्छति। तदा प्रकाशते ह्यात्मा दीपो दीप्यन्निराकृतिः ॥ "इति । इन्द्रियाणां पञ्चीकृतभूताप्यायनैर्वायुतेजःप्रभृतिभिः सम्बन्धाद्रश्मिमत्त्वञ्चोपपद्यते । नन्वग्न्यातपसम्बन्धात्सलिलशिलादेरौष्ण्यतारतम्योपलम्भोऽग्न्यातपाद्यवयवसङ्क्रान्तिं विना नोपपद्यते, सलिलादेः स्वत औष्ण्याभावान्निराश्रयधर्मसङ्क्रमणायोगाच्च, औष्ण्याश्रयभूताग्न्यातपावयवस्य संक्रान्तिरभ्युपेत्या ; एवमवयवसङ्क्रान्तिश्च विशरणेन विना नोपपद्यते । गत्वराणां रश्मीनां चरणतलानामिव कथं विशरणेन विना क्वचित् सङ्क्रमः ? अवयवतारतम्याच्चौष्ण्यतारतम्यम् इति । उच्यते,— अग्नितप्तेष्वग्न्यवयवसङ्क्रान्त्यैवौष्ण्योपलम्भः, सलिलादौ सङ्क्रान्तिमन्तोऽग्न्यवयवा एव प्रभेति न वाच्यम्, दीपप्रभया ऽहोरात्रसंवृतेपि सलिलभूतलादावौष्ण्यानुपलम्भात् . आतपतप्तेष्वपि न किरणविशरणादवयवसङ्क्रमः, तुहिनकणानामिव रविकिरणोपात्तमुक्तानामग्न्यवयवानां संक्रमणादुष्णोपलम्भोपपत्तेः । नचात्र कल्पकमन्वेष्टव्यम्, नापि कल्पनागौरवं प्रसजति, आगमसिद्धत्वादस्यार्थस्य । तथाहि मात्स्ये पुराणे कथ्यते "वसन्ते ग्रीष्मके रश्मिशतैः सन्तपति त्रिभिः । शरद्यपि च वर्षासु चतुर्भिस्सम्प्रवर्षति ॥ हेमन्ते शिशिरे चैव हिममुत्सृजते त्रिभिः ॥" इति । यथा वर्षासु हेमन्ते च रविकिरणमुक्तास्सलिलकणास्तुहिनकणाश्च न विशीर्णकिरणावयवाः, किन्तु किरणोपात्तविमुक्ता आप्यावयवा एव; एवं ग्रीष्मे च रविकिरणजन्यं सन्तापनं न तद्विशीर्णावयवकार्यम्, किन्तु तदुपात्तमुक्ताग्न्यवयवकार्यमिति प्रतीयते, तथा "अग्निं वा वादित्यः सायं प्रविशति उद्यन्तं वा वादित्यमग्निरनुसमारोहति " इति श्रूयते । अत्र चादित्यतिरोधानदर्शनावच्छिन्नकालविशेषपरौ सायंप्रातशब्दौ, अस्य सायम्भावप्रातर्भावौ रविविप्रकृष्टसन्निकृष्टतत्तद्देशवृत्तिपुरुषापेक्षया सर्वदोपपद्येते इत्ययमर्थो भुवनकोशे स्पष्टतरः । ततश्च प्रविशतीत्यनेनाग्नावादित्यस्य

दीपेऽप्यवयवविप्रतिपत्तिः कदाचिदपि न स्यात्, नहि

* श्रुतप्रकाशिका *

व्याप्तिरुच्यमाना दूरस्थितस्य स्वरूपेण नोपपन्नेति किरणद्वारा भवति । अग्निरनुसमारोहतीत्यनेन अग्न्यवयवानामादित्येनोपादीयमानत्वमुच्यते, न चाग्न्यधिष्ठातृदेवतारोहणपरमिदं वाक्यम् "तस्माद्धूम एवाग्नेर्दिवा ददृशे" इत्यनन्तरवाक्येनाग्नेरादित्योपसर्पणनिमित्ततेजोमान्द्यकथनात्, अन्यथा सायंप्रातस्समययोस्सर्वदा सम्भवेन अग्नेरादित्ये सर्वदारोहणमग्नावादित्यस्य सर्वदारोहणञ्च प्रसजेत्. ततश्चाग्न्यादित्ययोः स्थानविनिमयेन सर्वदा स्थितिरुक्ता स्यात्, सा च प्रमाणान्तरविरुद्धा; अत आदित्यस्याग्नौ किरणद्वारा व्याप्तिः किरणैरग्न्यवयवोपादानं च वाक्यद्वयोक्तम् । अतश्चोपात्ताग्न्यवयववर्षेण तापनं मात्स्योक्तम् उत्सर्जनप्रकरणस्वारस्यात्; अतस्तुहिनकणानामिव रविकिरणमुक्तानामाग्नेयावयवानां विशीर्णकिरणावयवत्वाभावाद्रविकिरणेषु तन्मण्डले च प्रतिक्षणविनाशोत्पत्तिक्लृप्तिरनुपपन्ना; अतो न विशीर्णावयवाः प्रभा ॥

दूषणान्तरमाह ( दीपेति ) अवयवप्रतिपत्त्यनुपपत्तिमुपपादयति ( नहीति ) दीपः किं विशरणस्वभावः ? उत स्थिरस्वभावः ? विशरणमूर्तस्वभावत्वे पिण्डीभावो मूर्तद्रव्यप्रतिबन्धनिबन्धनः स्यात् । स्थिरस्वभावत्वे विशरणं द्रव्यप्रतिहतिहेतुकं स्यात् । अत्रोभयमनुपलम्भहतम्, विशरणस्वभावत्वे पिण्डीभावो वायुनोपपद्यत इति चेत्तर्हि निवाते पिण्डीभावो न स्यात्, स्तिमितसूक्ष्मवायुना पिण्डीभावश्चेद्विशरणं न स्यात्, तच्च सूक्ष्मवायुना चेदेकस्य विरुद्धस्वभावद्वयायोगात् पिण्डीभावविशरणहेतुभूतवायुद्वयमभ्युपेत्यम्, तयोर्मिथः प्रतिघातुकत्वादन्यतरविगमे पिण्डीभाव एव वा विशरणमेव वा स्यात्, तत्परिहाराय परस्परान्तरितविरुद्धस्वभाववायुद्वयपरम्परया सन्निधिविगमपरिकल्पने गौरवं स्यात्. तत्कल्पनेऽपि तिर्यग्गत्वराणां वाय्ववयवानां नोदनमात्रहेतूनां परितः प्रतिबन्धकत्वायोगात् पिण्डीभावो

* तत्त्वटीका *

मण्यादौ प्रत्यभिज्ञाविरोध उक्तः, दीपत्वेऽभिज्ञापि न स्यादित्यत्राह ( दीप इति ) अपिः पूर्वत्र परत्र च प्रत्यक्षाविरोधसाम्यद्योतकः । अवयविशब्दः परमते न, स्वमते तु सङ्घातविशेषपरः । कदाचिदपि—पूर्वोत्तरकालयोरिव मध्येपीत्यर्थः । योगस्य सत्यां सामग्र्यां कथमप्रतिपत्तिरित्यत्राह (नहीति) संहतस्वभावत्वे विशरणस्य विशेषकारण-

विशरणस्वभावावयवा दीपाश्चतुरङ्गुलमात्रं नियमेन पिण्डीभूता ऊर्ध्वमुद्गम्य ततः पश्चाद्युगपदेव तिर्यगूर्ध्वमधश्चैकरूपा विशीर्णाः प्रचरन्तीति शक्यं वक्तुम्; अतस्सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना विनश्यन्तीति

* श्रुतप्रकाशिका *

न स्यात्। ननु शोषणद्रवीभूतपार्थिवावयवसन्दंशात्पिण्डीभावः, ततस्तदवयवगतस्निग्धत्वापगमेन सन्दंशकत्वाभावादग्न्यवयवविशरणमित्याह (नहि विशरणेति) यद्यग्न्यवयवा उद्गमनस्वभावास्तर्हि विशरणे तिर्यग्गतिर्न स्यात्, यदि ते तिर्यग्गतिस्वभावास्तर्हि प्रथममूर्ध्वगतिर्न स्यात्, एकजातीयद्रव्यस्योपाधिना विना विरुद्धस्वभावत्वायोगात्; उपाधिश्च न दृश्यते. दीपप्रभयोर्भिन्नावयवित्वे तु विरुद्धस्वभावत्वमुपपद्यते। किञ्च चतुरङ्गुलादिपरिमितितारतम्यनियामकोऽपि नास्ति, विशरणे च पार्श्वेऽपि विशरणं सम्भवति समन्ततो युगपद्विशरणनियामकाभावादित्यभिप्रायः। किञ्च विशीर्णानामावयवानां पांसूनामिव ऋजुप्रसरणनियमने च न हेतुः, प्रसरणस्यार्जवनियमश्च तिरोधायकं पदार्थं प्रति ऋजुदेश एव च्छायायोगादवगम्यते. छायावैपुल्यन्तु निवार्यमाणरश्मीनां पृथ्वग्रत्वकृतम्, नाऽनार्जवकृतम्. छायाकौटिल्यन्तु तिरोधायककौटिल्यकृतम्, नतु प्रसारानार्जवकृतम्; तच्च ऋजुप्रसारित्वसाधकम्। विशीर्णावयवत्वे रेणूनामिव पवनानुत्सार्यमाणत्वञ्च न घटते, प्राचीनजालकनिष्क्रान्ता हि प्रभा दक्षिणानिलेन नोत्सार्यते, अन्यथा रजसामपि तत्र नोदनं प्रसजेत्, जालकनिष्क्रान्तप्रभायाश्च पवनानुत्सारित्वं ततः परस्मिन् भित्त्यादौ प्रभा संसर्गादेव गम्यते; अतो धनुष्याततताया मौर्व्या इव प्रभाया न विशीर्णावयवत्वमिति। ततः किमित्यत्राह— (अतस्सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इति) तेजस्त्वेन मण्यादिविनाशाभ्युप-

* तत्त्वटीका *

अभिघातादिकं दृष्टम्, तदन्यक्लृप्तिश्च गुर्वी। विशरणस्य स्वभावत्वे तु पिण्डीभावादिहेतुरदृष्टः कल्प्यः। "अग्नेरूर्ध्वज्वलन"मित्यादिभिरूर्ध्वगमनशीलतया प्रसिद्धानामेवाविशेषेण विष्वग्विशरणादिक्लृप्तिश्च गुरुतरेति भावः। तर्हि दीपस्य क्षणिकत्वे प्रमाणं न स्यादित्यत आह (अत इति) पक्षान्तरस्य गौरवहतत्वादित्यर्थः। पद्मकेसरादिविशिष्ट-

पुष्कलकारणक्रमोपनिपातात्तद्विनाशे विनाशाच्च·

गमेऽतिप्रसङ्गात्, विशरणाकारे पिण्डीभावयुगपद्वृष्टिविशरणानुपसरणाच्च-नेकनियमव्यवस्थापकाभावाद्यथादृष्टाभ्युपगमे विरोधाभावाच्च सप्रभाका एव दीपाः प्रतिक्षणमुत्पन्ना इत्यर्थः । तर्हि कथं प्रतिक्षणोत्पत्तिविनाशावित्यपेक्षायां यथा मश्यादीनां प्रतिक्षणविनाशो न प्रसजति तथा दीपक्षणिकत्वे हेतुद्वयमाह (पुष्कलकारणक्रमोपनिपाताच्च तद्विनाशे विनाशाच्चेति) पृथक्स्थितदण्डचक्रादिव्यावृत्त्यर्थं पुष्कलशब्दः । वर्त्यवयवाग्निसंयोगस्य दीपसामग्रीत्वं प्रथमवर्त्यवयवाग्निसंयोगे दृष्टम्, न च प्रथमावयवाग्निसंयोगस्यैव कारणत्वं शङ्कनीयम्, चरममध्यावयवयोरप्यग्निसंयोगे सति दीपोत्पत्तिदर्शनात्; अतः प्रत्यवयवमग्निसंयोगात्पुष्कलकारणपरम्परादृष्टेति प्रत्यवयवमग्निसंयोगाद्दीप उत्पद्यते । तत्र प्रतिक्षणमुत्पत्तौ सत्यां युगपदनेकदीपानुपलम्भाद्विनाशोऽपि सिद्धः । प्रतिक्षणविनाशस्य पृथगनुमापकमुच्यते—तद्विनाशे विनाशाच्चेति । वर्त्यवयवविनाशस्य दीपविनाशसामग्रीत्वं चरमवर्त्यवयवविनाशे दृष्टम्; एवं विनाशकारणानुवृत्तिदर्शनात् प्रत्यवयवविनाशं दीपो विनश्यत्येव, एवमुत्पत्तिविनाशसामग्र्यनुवृत्तिभ्यां प्रतिक्षणं तावदनुमीयत इत्यर्थः । प्रभा विशीर्णावयवा न चेद्दीपसमीपे तस्या औष्ण्याधिक्यादिकं कथं

॥ तत्त्वटीका ॥

वर्त्यादिसृष्टिप्रकारसाम्याभिप्रायेण सप्रभाका एवेत्युक्तम् । प्रतिक्षणमुत्पन्नाश्चेद्युगपदनेकदीपोपलम्भस्स्यादित्यत्राह (विनश्यन्तीति) अत्रापि प्रतिक्षणमिति योज्यम् । प्रतिक्षणोत्पत्तौ हेतुमाह (पुष्कलेति) उत्तरोत्तरक्षणेष्वपि दीपसामग्रीसम्पत्तेरित्यर्थः । विमीतस्समुदायो दीपजनकः, विशिष्टवह्निवर्त्यादिसमुदायत्वात् आद्यवदिति प्रयोगः । प्रतिक्षणविनाशे लिङ्गमाह (तद्विनाशे विनाशादिति) नात्र साध्याविशेषः । अयं ह्यत्र प्रयोगः,— आद्यादिस्नेहवर्तिध्वंसः तज्जन्यदीपध्वंसशिरस्कः विशिष्टस्नेहवर्तिध्वंसत्वात् अन्तिमवदिति । एवं दीपभेदानभ्युपगमे स्नेहनाशसन्धुक्षणादिभिः परिमाणभेदोपि दुश्शकनिर्वाहः । धारावाहिकधीभेदश्च ध्वंसश्चात्र दीपतत्प्रभयोरनभिव्यक्तावस्थाविशेषः, सत्कार्यद्रव्यस्य नित्यानुवृत्तेः । सा चावस्थान्तिमदीपसामग्रीनाशपूर्विका दृष्टा, अतोऽभिघातादिव्यतिरिक्तविशरणहेतुक्लृप्ताविव नात्र

गम्यते। प्रभायास्स्वाश्रयसमीपे प्रकाशाधिक्यमौष्ण्या-धिक्यमित्याद्युपलब्धिव्यवस्थाप्यमग्न्यादीनामौष्ण्या-दिवत्; एवमात्मा चिद्रूप एव चैतन्यगुण इति, चिद्रूपता हि स्वयम्प्रकाशता ॥

तथाहि श्रुतयः [1]" स यथा सैन्धवघनोऽनन्तरोऽ-

---

* श्रुतप्रकाशिका *

विशरणापत्ते अवयवबाहुल्यवैरल्याभ्यामाष्ण्याधिक्यमान्द्यादिकमुपपद्यत इत्यत्राह (प्रभाया इति) प्रकाशाधिक्यमौष्ण्याधिक्यमित्यादीत्यादिशब्देनाश्रयविप्रकृष्टदेशे प्रकाशमान्द्यमौष्ण्यमान्द्यञ्च विवक्षितम्। उपलब्धिव्यवस्थाप्यत्वे दृष्टान्तमाह (अग्न्यादीनामिति) उक्तं दार्ष्टान्तिकेऽतिदिशति (एवमिति) (चिद्रूप एवेति) रूपशब्दो धर्मिस्वरूपपरः, ततः किं स्वयम्प्रकाशत्वस्येत्यपेक्षायां चिद्रूपत्वं विवृणोति (चिद्रूपता हीति) अनेन वक्ष्यमाणश्रुतिवाक्ये ज्ञानादिशब्दो विवृतो भवति ॥

एवमनुग्राहकतर्कमुपन्यस्य प्रमाणमाह (तथाहि श्रुतय इति) स यथा सैन्धव-

* तत्त्वटीका *

गौरवम्। तत्समीकारं परिहरति (प्रभाया इति) आदिशब्देन बहुलत्वादिकं दूरे प्रकाशादिमत्त्वञ्च गृह्यते + उपलब्धानादरेतिप्रसङ्गमधाधादाष्टिसङ्कुचितप्रभोत्पत्तिः। एतदपि चोद्यमादिशब्दसङ्गृहीतमुपलब्धिव्यवस्थाप्यमित्यनेनैव प्रत्युक्तम्। अथवा स्वयम्प्रकाशत्वादित्यादेर्भाष्यस्य प्रयासबहुलानुमानपरत्वादपि वरं श्रुत्यर्थोपक्षेपपरत्वम्; दृष्टान्तादिभिर्लोकदृष्ट्या तत्सम्भावनाप्रदर्शनञ्च. तथाच प्रदीपिकानुमितिपरत्वा-दपि श्रुत्यनुग्राहकपरत्वं युक्तमिति। नाप्युत्तरत्रानुमानवच्छ्रुतिरपि, तथाचोदाह्रियते किन्तु तथाहीति, अतः पूर्वोपक्षिप्तं श्रौतमेवार्थं लोकदृष्टिप्रदर्शितसम्भावनयोपसंह-रति (एवमिति) ननु संविदात्मनोर्भेदः पूर्वमुक्तः, तत्कथमिहात्मनश्चिद्रूपत्वोक्ति-रित्यत्राह (चिद्रूपतेति) न स्वधर्मतादात्म्यमिहोच्यते, किन्तु तत्सजातीयत्वमिति ॥

चिच्छब्दस्यात्मनि स्वप्रकाशत्वनिबन्धनत्वमात्मनो ज्ञानत्वं ज्ञातृत्वञ्च जडत्वनिर्गुण-

---

१– बृ. ६-अ. ५-ब्रा. १३-वा.

× अत्र कश्चन ग्रन्थो गलित इव भाति ॥

बाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्माऽन-न्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव[1]" विज्ञानघन एव" [2]"अत्रायं पुरुषः स्वयंज्योतिर्भवति" न विज्ञातुर्विज्ञाते-

* श्रुतप्रकाशिका *

घन इति । अनन्तरः— अन्तरङ्गव्यतिरिक्तः । अबाह्यः— बहिरङ्गव्यतिरिक्तः, एवं व्यतिरेकनिर्देशेन निश्शेषग्रहणं कृतम् । तदेवाह—कृत्स्न इति । दार्ष्टान्तिकविषयो बाह्यशब्दो धर्मिपरः, अनन्तरशब्दो धर्मपरः, कृत्स्नशब्दस्तयोरेकदेशजडत्वशङ्का-व्युदासार्थः । अत्र सर्वत्रैकरूप्यमेव दृष्टान्तोपजीव्यम्, न त्वन्यत् । दृष्टान्तदार्ष्टान्तिक-विषयवाक्यद्वयेऽप्यनन्तरो ऽबाह्य इति ह्युक्तम् । शरीरित्वावस्थायामपि ज्ञानात्मकत्व-परं वाक्यमुपादत्ते-विज्ञानघन एवेति । घनशब्दोक्तनैरन्तर्यस्य जडांशमिश्रत्वं व्यावर्तयत्येवकारः । ज्ञानत्वं नाम स्वयम्प्रकाशत्वमिति ज्ञापनार्थमत्रायमितिवाक्यो-पादानम् । धर्मधर्मिभावं ज्ञापयति—न विज्ञातुरिति । ज्ञातृसम्बन्धिज्ञानस्य नित्यत्वे

ॐ तत्त्वटीका ॐ

वादनिरासाय श्रुतिभिराह (तथेति ) शब्दप्रमाणकोऽर्थो यथाशब्दं व्यवस्थाप्य इत्य-भिप्रायेण श्रुतिशब्दः । ततश्च विमतं न ज्ञानाश्रयः ज्ञानत्वात् . धर्मभूतज्ञानादि-वदित्यत्र व्याप्तिसिद्धौ तद्ग्राहकश्रुत्यादिबाधः, अन्यथात्वनुमितेरुत्थानम्, प्रज्ञानघनः— शास्त्रसिद्धेन सुखत्वप्रकर्षेण स्वरूपज्ञानस्य प्रकृष्टत्वम् अतः प्रकृष्ट सुखात्मक-ज्ञानैकरूप इत्यर्थः । सामान्योक्तेर्मानोपनीतविशेषविश्रमादपेक्षितसम्भावेऽनपेक्षित-विधिदौर्बल्याच्च ।

अत्र सैन्धवदृष्टान्तस्सर्वांशेष्वैकरस्यतः ।
जडांशरहितत्वन्तु बोध्यमात्मनि निष्कले ॥ ७ ॥
अस्तु वा सैन्धवन्यायाद् गुणवत्त्वोक्तिरात्मनः ।
वाक्यान्तरेण लभ्येत ज्ञानत्वमपि तादृशम् ॥ ७ ॥

देहादिविशिष्टावस्थायामपि तद्विलक्षणत्वव्यक्त्यै विज्ञानघनवाक्योपादानम्, विविधज्ञानवैशिष्ट्यार्थं वा । स्वयम्प्रकाशत्वस्फोरणमाह ( अत्रेति ) नहि पुरुष-

१– बृ. ४- अ. ४- ब्रा. १२- वा. २– बृ. ३- अ. ६- ब्रा. ९- वा.

र्विपरिलोपो विद्यते" १"अथ यो वेदेदं जिघ्राणीति स आत्मा" २" कतम आत्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" ३"एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः, ४"विज्ञातारमरे केन विजानीयात् ५"जानात्येवाऽयं पुरुषः"

* श्रुतप्रकाशिका *

कथिते ज्ञानमात्रस्य नित्यत्वशङ्काव्युदासार्थं ज्ञातुरेवात्मत्वं दर्शयति—अथ य इति। ज्ञानगुणकत्वस्वयम्प्रकाशत्वयोः सहप्रतिपादकं वाक्यमाह—कतम इति। ज्ञानगुणकत्वज्ञानस्वरूपत्वप्रतिपादकवाक्यमाह—एष हीति। ज्ञातव्यस्य निष्कृष्टात्मस्वरूपस्य ज्ञातृत्वमाह—विज्ञातारमिति। अनेन ज्ञातृत्वं स्वाभाविकमिति फलितम्। न केवलं संसृतिदशायाम्, मुक्तावपि ज्ञातृत्वं ज्ञापयति—जानात्येवायमिति। अवधारणासङ्कोचान्मुक्तावपि ज्ञातृत्वसिद्धिः, मुक्तौ ज्ञाननिषेधश्रुतीनां विषयविभागं

५ तत्त्वटीका ५

शब्दोऽत्रान्तःकरणदेहादिपरः, नच ज्योतिश्शब्दो भूततृतीयविषय इति भावः। आत्मनो ज्ञातृत्वं धर्मभूतज्ञानस्य नित्यत्वञ्च वदन्तीं श्रुतिमाह (न विज्ञातुरिति) ज्ञातुरनात्मशङ्काव्युदासायाह (अथ य इति) आत्मन एव विज्ञानत्वस्वयम्प्रकाशत्वे सहोक्ते इत्याह (कतम इति) शङ्कास्पदेषु क इत्यर्थः। प्राणेष्विति सप्तमी निर्द्धारणार्था। कयाचिद्वृत्त्या प्राणशब्दगोचरसमुदायाद्विज्ञानमयत्वेन कथञ्चित्पृथक्कृत्य तस्यात्मत्वमुच्यते। अथवा प्राणेषु हृदीत्युभयमपि स्थानविशेषव्यक्त्यर्थम् अन्तर्ज्योतिस्स्वप्रकाशः, आत्मज्योतिरित्यपि हि श्रूयते। ज्ञातृत्वकर्तृत्वज्ञानत्वादेरात्मनि सहोक्तिं दर्शयति (एष हीति) ज्ञातुरेव प्रत्यगात्मनोपि मुमुक्षुवेद्यत्वं सूचयति (विज्ञातारमिति) मुक्तावपि ज्ञातृत्वसिद्ध्यै ज्ञातृत्वायोगव्यवच्छेदपरां श्रुतिमाह (जानात्येवेति) विनाशश्रुतेः संज्ञानिषेधायुक्तेश्चान्यविषयत्वं स्थापयितु-

१–बृ. ६-अ. ३-ब्रा. ३०-वा.
२–छा. ८-प्र. १२-ख. ४-वा.
३–बृ. ६-अ. ३-ब्रा. ७-वा.
४–प्रश्न. उ. ४-प्रश्न. ४-वा.
५–बृ. ४-अ. ४-ब्रा. १४.

"न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्" [1] "स उत्तमः पुरुषः "[2]नोपजनं स्मरन्निदं शरीरम्"[3] 'एवमेवास्य परिद्रष्टुरिमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" [4] "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः" इत्याद्याः । वक्ष्यति च [5] "ज्ञोऽत एव"

* श्रुतप्रकाशिका *

दर्शयति—न पश्य इति, स उत्तम इति च । पुरुषं प्राप्तस्य मुक्तस्य ज्ञातृत्वेऽनुवर्तमान एव देहेन्द्रियविलयं दर्शयति—एवमिति । अन्तःकरणोत्तीर्णस्य ज्ञातृत्वमाह—तस्माद्वा इति । अस्यार्थस्य सूत्रकाराभिमेतत्वमाह (वक्ष्यति चेति) पूर्वं सूत्रोपादानमहमर्थात्मत्वं सूत्रकाराभिमतमिति ज्ञापनार्थम्, अत्रोपादानं ज्ञानगुणकत्वज्ञानस्वरूपत्ववादिनीनां श्रुतीनामविरोधः सूत्रकाराभिमत इति ज्ञापनार्थम्, ज्ञानत्वात् ज्ञानं न ज्ञानान्तराश्रय इति चेत्; यदि व्याप्त्यनुरोधेनैवमुच्यते, तर्हि धर्मत्वेन

* तत्त्वटीका *

माह (न पश्य इति) 'सर्वं ह पश्यः पश्यति' इति हि तत्रैवोक्तम् । स उत्तमः पुरुषः इत्यत्र वाक्यशेषान्मुक्तस्य जक्षणादिबुद्धिपूर्वव्यापारवत्त्वसिद्धिः । मुक्तस्य संस्कारजन्यधीनिषेधात् स्वतस्सिद्धसाक्षात्कारवत्त्वं व्यञ्जयति (नोपजनमिति) संस्कारो ह्यौपाधिकत्वात् तदानीं निवर्तते, तत एव न स्मृतिः । स्वर्गनरकादिगतस्तु प्रतिकूलमनुकूलञ्च प्राग्भुक्तं स्मरेत्; न तथा मुक्त इति भावः । तथापि द्रष्टुरवस्थानं करणादिमात्रनिवृत्तिञ्च श्रुत्यैव स्थापयति (एवमिति) षोडशकलाः—भूतेन्द्रियाणि, औपाधिकसमुदायैकदेशत्वात् कलात्वोक्तिः । पुरुषः— अत्र परमात्मा, तत्प्राप्तिदशायामिन्द्रियादयो न जीवमनुबध्नन्तीत्यर्थः । देहादेरीश्वराच्च व्यावृत्तस्य जीवस्य ज्ञातृत्वे श्रुतिमाह (तस्माद्वा इति) यथाश्रुति सूत्रकृता निर्णीतत्वमाह (वक्ष्यति चेति) पूर्वं श्लोकतस्सङ्क्षिप्तमिह प्रपञ्चितमित्यपुनरुक्तिः, स्वपद-

१- छा. ७- प्र. २६- ख. २- वा.
२- छा. ८- प्र. १२-ख.३ वा.
३- प्रश्न. उ. ६- प्रश्न- ५- वा.
४-तै. आन. ४- अनु. १- वा.
५- शारीर. २- अ. ३- पा १९ सू.

इति । अतस्स्वयम्प्रकाशोऽयमात्मा ज्ञातैव, न प्रकाश-

* श्रुतप्रकाशिका *

स्वीकार्यम् । यदि श्रुतिबलात् स्वातन्त्र्येण स्वीक्रियते, तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियताम् । न च व्याप्तिविरोधः, धर्मभूतज्ञानत्वप्रयुक्तत्वात् ज्ञाने ज्ञानानाश्रयत्वस्य । श्रुत्या ज्ञातृत्वस्वयम्प्रकाशत्वसिद्धिं निगमयति ( अत इति ) ननु घटमहं जानामीत्यत्र ज्ञानस्य ज्ञातृसम्बन्धः प्रतीयत इत्यभ्युपेत्यम् , अन्यथा स्वज्ञानपरज्ञानविभागस्य दुर्ग्रहत्वप्रसङ्गात् स्वसम्बन्धितया प्रतीतं ज्ञानं सम्बन्धाप्रतीतौ कथं स्वज्ञानमिति व्यवह्रियते, अतः स्वसम्बन्धः प्रतीयत एव, तत्प्रतीतिर्न तावदहमर्थाद्भवति, अहमर्थः प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भाति, न त्वर्थान्तरमहमर्थो विषयीकर्तुमलमिति भवतां प्रक्रिया; अतो धर्मभूतज्ञानेनैव सम्बन्धप्रतीतिः । सम्बन्धश्च सम्बन्धिभ्यां विना न प्रतीयत इति ज्ञातृज्ञानयोरपि सम्बन्धप्रकाशकज्ञानान्तरवेद्यत्वं स्यात् , ततः स्वतोऽवभासो ज्ञानान्तरेणावभासश्चेत्यवभासद्वयाभावात् ज्ञानान्तरेणैव प्रकाश्यतया स्वप्रकाश्यत्वासिद्धेर्ज्ञातुश्च ज्ञानस्य च जडत्वं स्यात् । किञ्च, ज्ञानान्तरेण सम्बन्धप्रतीतिरवश्यम्भाविनी चेत् सम्बन्धविषयज्ञानेन सह ज्ञातृसम्बन्धस्यापि ज्ञानान्तरेण प्रतीत्यवश्यम्भावात् सम्बन्धज्ञानपरम्पराप्रसङ्गः, अवश्यम्भावाभावे सर्वज्ञानेष्वहं जानामीति ज्ञानज्ञातृसम्बन्धप्रतीतिर्न स्यात् । नैवम्;—स्वयम्प्रकाशप्रत्यक्षेणैव सम्बन्धप्रतीतेः, नियतविशेषणविशेष्यभावो हि सम्बन्धः, अहमर्थो विशेष्यैकस्वभावं स्वात्मानं प्रकाशयति, धर्मभूतज्ञानं च विशेषणैकस्वभावं स्वात्मानं प्रकाशयति, विशेषणविशेष्यभावस्य परस्परप्रातियोगिकत्वं च ज्ञातृज्ञानयोः सहावभासादेव प्रतीयते ।

७ तत्त्वटीका ७

वर्णनञ्च भाष्यकृत्यं पठन्ति । एवं श्रुत्यादिभिर्ज्ञातुरनात्मत्वं निरस्तमिति निगमयति ( अत इति ) अन्याधीनप्रकाशत्वस्याभावादित्यर्थः ।

आत्मनोऽहन्त्वकर्तृत्व—ज्ञातृत्वादिविधूनने ।
वैफल्यं सर्वशास्त्राणां व्यञ्जयत्येवकारतः ॥ ७ ॥

ननु "प्रज्ञानघन एवे"त्यवधारणादन्ययोगव्यवच्छेदेन प्रकाशमात्रत्वं स्यादित्यत्राह ( नेति ) अयम्भावः, यथा "रसघन एवे"त्यत्र रूपादेरनिषेधः तथात्रापि मानसिद्धस्य ज्ञातृत्वादेः , अतो जडत्वगन्धाभाव एवात्रावधारणस्याप्य इति ।

मात्रम्। प्रकाशत्वादेव कस्यचिदेव भवेत्प्रकाशः दीपादि-प्रकाशवत्, तस्मान्नात्मा भवितुमर्हति संवित्, संविदनुभू-तिज्ञानादिशब्दाः सम्बन्धिशब्दा इति च शब्दार्थविदः, नहि लोकवेदयोजानातीत्यादेरकर्मकस्याकर्तृकस्य च

* श्रुतप्रकाशिका *

ननु सम्बन्धप्रतीतौ सम्बन्धिनोः सहावभासश्च एकज्ञानगम्यतया विना नोपपद्यत इति ज्ञातृज्ञानयोर्ज्ञानान्तरवेद्यत्वं स्यात् . सुरभि पुष्पमित्यादौ भिन्नसामग्रीवेद्ययो-रपि गन्धपुष्पयोस्सम्बन्धप्रतीतिवेलायामेकज्ञानगम्यत्वं हि दृश्यत इति चेन्न, तत्र सम्बन्धिनोः सम्बन्धेन सहैकज्ञानगम्यत्वस्य सहावभासप्रयुक्तत्वाभावात्; सम्बन्धिनो-र्जडत्वप्रयुक्तं हि तत्रैकज्ञानगम्यत्वम् , अत्र स्वयम्प्रकाशत्वात्स्वयमेव सहावभास-मानयोर्ज्ञातृज्ञानयोर्विशेषणविशेष्यतैकस्वभावत्वरूपसम्बन्धग्रहो ज्ञानान्तरानपेक्ष उप-पद्यते, अतः सम्बन्धाग्रहस्वरज्ञानविभागाभावसम्बन्धज्ञानपरम्पराप्रसङ्गाः दूरोत्सा-रिताः । एवं ज्ञातृत्वस्वयम्प्रकाशत्वोपपादनेन चिन्मात्रव्यतिरिक्तत्वादिति जडत्व-साधकहेतुर्निरस्तो भवति । ज्ञानव्यतिरिक्तत्वाज्जडत्वं वदता किं स्वयम्प्रकाश-व्यतिरिक्तत्वं हेतुरुक्तः ? उत विषयप्रकाशकान्यत्वम्? प्रथमे साध्याविशिष्टत्वम् । द्वितीये ब्रह्मण्यनैकान्तिकम् . श्रुत्यादिबाधश्च । अथ साश्रयत्वे तर्कमाह ( प्रकाशत्वादेवेति ) प्रकाशत्वात्—विषयेण साक्षात्सम्बध्यसाक्षात् परम्परया वा ज्ञायमानत्वेनाऽपरोक्षव्यवहारानुगुण्यहेतुत्वादित्यर्थः । अनेन स्वरूपभूतज्ञानेन्द्रिय-लिङ्गादिव्यावृत्तिः । हेत्वन्तरमप्याह ( संविदनुभूतीति ) सम्बन्धिशब्दत्वं शब्द-स्वभावायत्तमित्याशङ्क्याह ( नहि लोकवेदयोरिति ) यत्राऽर्थस्वरूपस्यान्यथात्वं

* तत्त्वटीका *

ज्ञातृत्वनिषेधे तदपेक्षं प्रकाशत्वमपि न स्यादित्यभिप्रायेणाह ( प्रकाशत्वादिति ) व्यवहारानुगुण्यप्रयोजकत्वादित्यर्थः । उक्तमर्थं परम्परया व्यवहारानुगुण्यापादके निदर्शयति ( दीपादीति ) नहि पुरुषमनपेक्ष्य दीपस्यार्थप्रकाशकत्वमिति भावः । संविद आत्मधर्मत्वं वदन्त्या श्रुत्यैव तस्या आत्मत्वं निषिद्धमित्यभिप्रायेणाह ( तस्मादिति ) तस्याविषयाश्रयवत्त्वे निरूपकसम्मतिमाह ( संविदिति ) व्युत्पत्तेः

प्रयोगो दृष्टचरः ॥

यच्चोक्तम्—अजडत्वात्संविदेवात्मेति, तत्रेदं प्रष्टव्यम्

* श्रुतप्रकाशिका *

दृश्यते, तत्र शब्दस्वभावायत्तत्वमाश्रयणीयम्, यथा दारा इत्यादिषु बहुत्वादेः। यत्र नान्यथात्वं तत्रार्थस्वभावायत्तत्वमेव, यथा भार्येत्यादिष्वेकत्वादेः, तथा लोकवेदयोः सकर्मकर्तृत्वदर्शनात् अर्थस्वभावायत्तमेव सम्बन्धिशब्दत्वमित्यभिप्रायः। यद्वा—कर्मकर्तृसम्बन्धित्वं व्युत्पत्तिनिमित्तमस्तु न प्रवृत्तिनिमित्तं तत्तु ज्ञप्तिमात्रमित्यत्राह—नहि लोकेति। प्रयोगाधीनं हि प्रवृत्तिनिमित्तान्तरकल्पनम्, प्रयोगश्च सम्बन्धिन्येवार्थे इति नार्थान्तरकल्पना स्यात्, स्वरूपभूतज्ञानवाचिशब्दानां सम्बन्धिशब्दत्वं त्वन्मतेऽप्यनुपपन्नमिति चेन्न, स्वरूपगोचराणां स्वयम्प्रकाशत्वे रूढानां ज्ञानादिशब्दानामनुभूत्यादिशब्देभ्यः शब्दान्तरत्वात्, अतः सम्बन्धिशब्दत्वोपदेशस्तु धर्मभूतज्ञाने सावकाशोऽस्मन्मते, विषयाश्रयसम्बन्धिज्ञानस्यैव विषयाश्रयसम्बन्धाबाधेन निराश्रयत्वनिर्विषयत्वाभ्युपगमात्त्वन्मते सम्बधिन्शब्दत्वोपदेशो निरर्थक इति भावः ॥

अथाजडत्वात्संविदात्मत्वसमर्थनं दूषयितुमनुवदति ( यच्चोक्तमिति ) अजडत्वं

* तत्त्वटीका *

[ तथा ] साधारणत्वेपि प्रयोगतोऽन्यथा व्यवस्था स्यादित्यत्राह ( नहीति ) नचात्र दारादिशब्देष्विव शब्दप्रतिपन्नमपि बाध्यम्, बाधकाभावस्योक्तत्वात्। आत्मस्वरूपविषयस्य ज्ञानशब्दस्य युष्मन्मते कथं सम्बन्धिशब्दत्वमितिचेन्न, धर्मभूतज्ञाने सम्बन्धिशब्दस्य सार्थत्वात्। स्वप्रकाशत्वेन निमित्तेन धर्मधर्मिणोशब्दानुवृत्तेः। तव तु दृश्यमानविषयाश्रयसम्बन्धापह्नवात्सम्बन्धिशब्दोपदेशवैफल्यमेव। ननु यथा गच्छतीति व्युत्पत्तावपि गोशब्दो जातिविशेषार्थः, तद्वदत्रापि भ्रान्तिसिद्धकर्मकर्तृविशिष्टव्युत्पत्तावपि तद्रहितस्वरूपे शक्तिरिति चेन्न; गतेरव्याप्त्यतिव्याप्तिभ्यां गोशब्दे गोत्वं निमित्तीकृतम्; इह तु न तथा। यद्यप्यव्याप्तिरात्मनि त्वयोक्ता तथापि ज्ञातारमात्मानमन्यमवस्थाद्वयञ्च सत्यमनादर्तुस्ते दृष्टातिक्रमनिमित्तं नास्तीति। निर्विषयनिराश्रयसंवित्साधनञ्चाप्यघाप्याशामोदकमात्रमिति भावः ॥

अथ संविदात्मत्वानुमानं दूषयितुमनुवक्ति ( यच्चेति ) एवकारो विरोधं पर-

अजडत्वमिति किमभिप्रेतम्? स्वसत्ताप्रयुक्तप्रकाशत्वमिति चेत्; तथासति दीपादिष्वनैकान्त्यम्; संविदति-

* श्रुतप्रकाशिका *

किं स्वसत्ताप्रयुक्तप्रकाशत्वम्? उत अव्यभिचरितप्रकाशसत्ताकत्वम्? उत स्वस्मै प्रकाशमानत्वम्? उत स्वस्मै स्वयम्प्रकाशत्वम्? उत स्वयम्प्रकाशत्वम्? इति पञ्चधा विकल्पमभिप्रेत्याह (अजडत्वमिति) (किमभिप्रेतमिति) अहं जानामीति प्रत्यक्षबाधः सर्वसाधारणं दूषणम्, प्रथमं स्वसत्ताप्रयुक्तप्रकाशत्वपक्षं दूषयितुमाह (स्वसत्तेति) स्वसत्ताप्रयुक्तः प्रकाशो यस्येति बहुव्रीहिः, वक्ष्यमाणासिद्धिदूषणोपयोगिभेदज्ञापनार्थं स्वसत्ताप्रयुक्तशब्दः। अनैकान्त्यमाह (तथा सतीति) स्वपक्षे ज्ञातुरात्मत्वात्सपक्षभूते तस्मिन् विपक्षे ऽनात्मनि दीपे च वृत्त्याऽनैकान्त्यं पक्षत्रयवृत्तित्वलक्षणमुक्तं परपक्षे. अनियतत्वमेवानैकान्त्यम् . सपक्षाभावाद्दूषणान्तरद्वयमाह (संविदतिरिक्तेति) संवित्प्रयोजिका प्रकाशः प्रयोज्य इति तदतिरेकेणानभ्युपगमादसिद्धिः, अभ्युपगमे निर्विशेषत्वविरोधः, इमावसिद्धिविरोधौ विकल्पितसर्वशिरस्साधारणावनुसन्धेयौ। यद्वा, विरोधः—पक्षविपक्षयोरेव वर्त्तमानत्वं पक्षभूतसंविदि विपक्षे दीपादौ च वृत्तेः। परमतमात्रपर्यालोचनायां विरोध उक्तः, अत्र स्वसत्ताप्रयुक्तप्रकाशत्वमित्यत्र प्रकाशशब्देन साक्षाद्वा परम्परया वा व्यवहारानुगुण्यं विवक्षितम्? उत परम्परयैव? उत साक्षादेव? इति विकल्पोऽभिप्रेतः।

* तत्त्वटीका *

मते लाघवाभावञ्च व्यनक्ति। उक्तहेतौ विकल्पमुपक्षिपति (तत्रेति) निराचिकीर्षितकोटिचतुष्कमभिसन्धाय पृच्छति (अजडत्वमिति) स्वप्रकाशे स्वसद्भावस्य प्रयोजकत्वमिति शङ्कते (स्वसत्तेति) अत्र स्वसत्तामात्रप्रयुक्तप्रकाशत्वस्यासिद्धत्वात् स्वसत्तायास्स्वप्रकाशसामग्र्येकदेशत्वं वाच्यम्, तस्या अनात्मन्यपि वृत्तेस्सपक्षवृत्त्यभावाच्च विरुद्धहेत्वाभासत्वमभिप्रेत्याह (तथेति) स्वमते ज्ञातुरात्मतया तस्मिन् सपक्षे हेत्ववृत्तेस्साधारणानैकान्तिकत्वमिहोच्यत इति केचित्। नचानुभूतेस्सत्तास्त्यो धर्मः, सत्ताशब्देन स्वरूपविवक्षायामपि तत्प्रयुक्तप्रकाशधर्मानभ्युपगमात्। हेतोः स्वरूपासिद्धिं तदभ्युपगमे सिद्धान्तविरोधञ्चाभिप्रेत्याह (संविदिति) उत्तरकोटिष्वपि

रिक्तप्रकाशधर्मानभ्युपगमेनासिद्धिर्विरोधश्च । अव्यभि-
चरितप्रकाशसत्ताकत्वमपि सुखादिषु व्यभिचारान्निर-

* श्रुतप्रकाशिका *

प्रथमं शिरःस्वपरदर्शनपर्यालोचनया ऽभिहितयोरनैकान्त्यविरोधयोरन्यतरेण निरस्तं भवति । द्वितीये स्वासिद्धिः, परम्परयैव व्यवहारानुगुण्यस्य ज्ञप्तावुभयवाद्यनभिमतत्वात् । तृतीये सत्तारिक्तप्रकाशानभ्युपगमनिबन्धनासिद्धिर्निर्विशेषत्वविरोधश्च स्याताभित्यभिप्रायः । द्वितीयपक्षं प्रतिक्षिपति ( अव्यभिचरितेति ) न व्यभिचरति प्रकाशो यस्य सत्तायां सोऽव्यभिचरितप्रकाशसत्ताकः, प्रयोज्यप्रयोजकत्वाभावे ऽपि विद्यमानदशायां सर्वदा प्रकाशमानत्वमित्यर्थः । तस्यानात्मत्वेन सम्प्रतिपन्नेषु सुखदुःखादिषु व्यभिचार उक्तः । अथ तत्परिहारमुखेन स्वस्मै प्रकाशमानत्वपक्षमुपक्षि-

* तत्त्वटीका *

दूषणद्वयमिदं द्रष्टव्यम् । यावत्सत्तं प्रकाशमानत्वं हेतुरित्याशङ्कयाह ( अव्यभिचरितेति ) यद्यप्यस्मन्मते सुखादेर्ज्ञानविशेषत्वात्स्वप्रकाशत्वम् , यद्यपि च काश्यपादिमते तेषामसदादिमानसप्रत्यक्षविषयत्वं विषयोत्पत्तिसापेक्षतया तदनन्तरभावि, तथापि त्वन्मते अध्यस्तान्तःकरणधर्मभूतेषु सुखादिषु विपक्षेषु हेतुवृत्तिस्सिद्धा, तद्व्यतिरिक्तत्वे सतीति विशेषणेपि न निस्तारः ।

प्रकाशाव्यभिचारो हि घटादिष्वपि ते समः ।
भ्रान्तिसिद्धत्वसिद्धान्तान्न तेष्वात्मत्वमिच्छसि ॥ * ॥
अज्ञातत्वदशास्तीति घटादिषु यदि भ्रमः ।
संविद्यपि तथास्त्येव तज्जाड्यं हि परे विदुः ॥ * ॥
अज्ञातमपि ते पक्षे साक्षिणा ज्ञायते तथा ।
अतो ज्ञातवदज्ञातं ज्ञातमित्यभिमन्यसे ॥ * ॥

आदिशब्देन परमते घटादेस्सुखादितुल्यत्वं भाषितमेव । ननु सुखादिषु पुरुषभेदेन यावत्सत्त्वं प्रकाशमानत्वाभावान्न तत्रातिचार इति चेन्न, संविदोपि तथात्वात् । एकैव संवित्सर्वेषां प्रकाशत इति चेत्, एवमेव सुखं सर्वेषामिति किं न स्यात् । भेदकबलादिति चेत् समभेतत् । अजडत्वं नाम स्वस्मै प्रकाशमानत्व-

स्तम् । यद्युच्येत सुखादिरव्यभिचरितप्रकाशोऽप्यन्यस्मै प्रकाशमानतया घटादिवज्जडत्वेनानात्मेति । ज्ञानं वा किं स्वस्मै प्रकाशते ? तदपि ह्यन्यस्यैवाहमर्थस्य ज्ञातुरवभासते, अहं सुखीतिवज्जानाम्यहमिति, अतः स्वस्मै प्रकाशमानत्वरूपजडत्वं संविद्यसिद्धम्. तस्मात्स्वात्मानं प्रति स्वसत्तयैव सिध्यन्नजडोऽहमर्थ एवात्मा ।

* श्रुतप्रकाशिका *

पति ( यद्युच्येतेति ) परिहरति ( ज्ञानं चेति ) कस्येत्यत्राह ( तदपीति ) परस्मै भासमानत्वमुपपादयति ( अहमिति ) तस्मादेवंरूपाजडत्वमसिद्धमित्याह ( अत इति ) अथ चतुर्थं शिरो दूषयन्नसिद्धिमाह ( तस्मादिति ) स्वयम्प्रकाशत्वपक्षेऽपि स्वयम्प्रकाशत्वं नाम किं ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वम् ? उत ज्ञानान्तरनिरपेक्षप्रकाशत्वम् ? इत्यभिप्रेते विकल्पे प्रथमशिरस्तस्मादितिग्रन्थेन दूषितम्; इह स्वात्मव्यावृत्त्यर्थं स्वात्मानमित्युक्तम्, स्वसत्तयैव सिध्यन्नित्यनेन स्वयम्प्रकाशत्वमुक्तम् स्वस्मै स्वयं भासमानस्य स्वयम्भासमानत्वमप्यस्तीत्यभिप्रायेण स्वात्मानं प्रति स्वसत्तयैवेत्युक्तम् ; तेन ज्ञानकर्मतामन्तरेण व्यवहारानुगुणत्वं ज्ञातर्यप्यस्तीति

७ तत्त्वटीका ७

मिति कोट्यन्तरे प्रस्तुतदोषातिक्रमशङ्कामनुवक्ति ( यदीति ) तत्रापि स्वरूपासिद्धिमाह ( ज्ञानमिति ) वाकारश्चार्थः । किं क्षेपे । तद्विवृणोति ( तदपीति ) तदभावशङ्कामुपालम्भेन परिहरति ( अहमिति ) दृढधीबलात् असिद्धिं निगमयति (अत इति)

परेणैव घटाद्यर्थः परस्मा एव भासते ।
स्वान्याभ्यां पुरुषस्स्वस्मै परस्मै परधर्मतः ॥ ७ ॥
धीस्वान्याभ्यां स्वाश्रयाय तदन्यस्मै तु तद्धिया ।
परस्मा एव भातत्वात् पराची सा घटादिवत् ॥ ७ ॥

उक्तस्य कोटित्रयस्य संविद्यसिद्ध्यादिदुष्टत्वादहमर्थे सम्भवाच्च तस्यात्मत्वं दुस्त्यजमित्याह ( तस्मादिति ) कोट्यन्तरनिरासात्स्वयम्प्रकाशत्वमवशिष्यते. तच्च स्वगोचरज्ञाननिरपेक्षप्रकाशत्वम्. तस्य ज्ञातरि स्थापितत्वाच्चस्याप्यात्मत्वं स्यादित्यपि सूच्यते ।

ज्ञानस्यापि प्रकाशता तत्सम्बन्धायत्ता, तत्कृतमेव हि ज्ञानस्य सुखादेरिव स्वाश्रयचेतनं प्रति प्रकटत्वमितरं प्रत्यप्रकटत्वञ्च; अतो न ज्ञप्तिमात्रमात्मा, अपि तु ज्ञातैवाहमर्थः। अथ यदुक्तमनुभूतिः परमार्थतो निर्विषया निराश्रया च सती भ्रान्त्या ज्ञातृतयाऽवभासते रजततयेव शुक्तिर्निरधिष्ठानभ्रमानुपपत्तेरिति। तदयुक्तम्; तथा

* श्रुतप्रकाशिका *

तद्व्यभिचरितं स्वपक्षेऽनात्मनि ज्ञातर्यपि विपक्षभूते वृत्तेरिति दर्शितम्। ज्ञानान्तरनिरपेक्षप्रकाशत्वं संविद्यासिद्धम्, तस्याः स्वरूपभूतज्ञानाधीनत्वात् अहमर्थस्यैव तदित्यभिप्रायः स्वसत्तयैवेत्यनेन सूचितः। तमेव विवृणोति (ज्ञानस्यापीति) तत्सम्बन्धायत्तत्वमुपपादयति (तत्कृतमेव हीति) ज्ञानस्फुरणस्याश्रयसम्बन्धोऽपि सामग्र्यन्तर्भूत इति भावः। अजडत्वात्संविदात्मत्वासिद्धिं निगमयति (अत इति) अथाहमर्थस्य भ्रान्तिसिद्धत्वं दूषयितुमनुवदति (अथ यदुक्तमित्यादिना) संविदपि मिथ्या। किं न स्यादित्यत्राह (निरधिष्ठानेति) अनुभूतिव्यतिरिक्तापारमार्थ्यसिद्ध-

५ तत्त्वटीका ५

अनिष्टे ज्ञातुरात्मत्वं तस्यो हेतुरसौ कथम्।
इष्टे तु कथमात्मत्वं तद्धर्मस्य प्रसाध्यते ॥ ५ ॥

किञ्च, अन्यनिरपेक्षत्वमात्रं वा ज्ञानमात्रनिरपेक्षत्वं वा हेतुश्चेत् तयोस्संविदसिद्धिमाह (ज्ञानस्येति) यद्वा, ज्ञातृपरित्यागे ज्ञानस्य स्वयम्प्रकाशत्वं न सिध्येदिति स्वरूपासिद्धिसूचनमिदम्। प्रकाशता— व्यवहारानुगुण्यापादकता। तत्सम्बन्धाभावे प्रकाशमानत्वमपि तस्या न सिद्ध्येदित्यभिप्रायेणाह (तत्कृतमिति) प्रकटत्वम्—स्वयमपि स्वव्यवहारानुगुण्यापादकत्वमिति यावत्। परोक्तिनिरसनं स्वोक्तस्थापनञ्च निगमयति (अत इति) अथ वक्ष्यमाणच्छायापत्तिसंसर्गव्यञ्जनस्वपक्षाणां साधारणं ज्ञातृत्वाध्यासं दूषयितुमनुवक्ति (अथेति) सविषये वृत्तिज्ञाने ज्ञात्रपेक्षेत्यभिप्रायेण निर्विषयेत्युक्तम्। अविद्यायामेव ज्ञातुरप्यध्यासः स्यात्, किमनुभूत्येत्यत्राह (निरधिष्ठानेति) अविद्यापि ह्यसत्त्वादधिष्ठानसापेक्षेति भावः।

सत्यनुभवसामानाधिकरण्येनानुभविताऽहमर्थः प्रतीयेत, अनुभूतिरहमिति पुरोऽवस्थितभास्वरद्रव्याकारतया रजतादिरिव । अत्र तु पृथगवभासमानैवेयमनुभूतिरर्थान्तरमहमर्थं विशिनष्टि, दण्ड इव देवदत्तम्, तथा हि अनुभवाम्यहमिति प्रतीतिः, तदेवमस्मदर्थमनुभूति-

* श्रुतप्रकाशिका *

वत्कारेणायं हेतुरुक्तः । दूषयति ( तदयुक्तमित्यादिना ) अधिष्ठानसामानाधिकरण्येनाध्यस्तप्रतीतिं दृष्टान्तेनोपपादयति ( पुरोऽवस्थितेति ) पक्षे तद्विपर्ययं दर्शयति ( अत्र त्विति ) पृथगवभासमाना—व्यधिकरणतया अवभासमाना । तथा प्रतीतिं दर्शयति ( तथा हीति ) ततः किमित्यत्राह (तदेवमिति) तदेवम्—उक्तप्रकारेण, धर्मिधर्मिभावप्रतीतौ विशेषणतया प्रतिपन्ने तद्विशेषणविशिष्टस्याध्यासोऽनुपपन्न इत्यर्थः ।

* तत्त्वटीका *

निर्विशेषायां ज्ञातृत्वाध्यासस्तस्य त्वयाऽधिष्ठानापेक्षा च दुर्वचेत्यभिप्रायेणाह ( तदयुक्तमिति ) मिथ्यादोषादध्यासं वदतां मिथ्याधिष्ठानादपि स्यादिति भावः । परोक्तेऽनिष्टं प्रसञ्जयति (तथेति) यद्यपि रजतत्वमारोप्यम्, तथापि तद्विशिष्टवाचिना रजतशब्देनाधिष्ठानवाचिन इदंशब्दस्य सामानाधिकरण्यं दृश्यते इदं रजतमिति, तद्वदिहाप्यधिष्ठानाध्यस्तयोस्सामानाधिकरण्येन प्रकाशः प्रसज्येतेत्यर्थः । तत्प्रकारं दर्शयति ( अनुभूतिरहमितीति) भ्रान्तावपि शुक्तिरेव रजतमिति सामानाधिकरण्यं न दृष्टमित्यत्राह ( पुर इति ) अयम्भावः,—शुक्तिरजतादिभ्रमे प्रकाशमानेन सामान्याकारेण तत्सिद्धम्, शुक्तित्वाद्याकारस्तु न प्रकाशते, इह तु प्रकाशमानानुभूत्यतिरिक्ताकारानभ्युपगमादनुभूतित्वरूपशुक्तित्वसाम्येऽध्यासानुपपत्तेरिदन्त्वभास्वरत्वादिसमत्वे तेनैव रूपेण सामानाधिकरण्यप्रकाशो दुस्त्यज इति । इष्टप्रसङ्गोऽयमित्यत्र विपर्य्ययं दर्शयति ( अत्रेति ) तुः प्रमान्तरविषयाद्विशेषद्योतकः, शङ्कानिवृत्त्यर्थो वा । पृथक्— आरोप्यात्; अहन्त्वविशिष्टवैयधिकरण्येनेत्यर्थः । नह्यत्राऽधिष्ठानप्रकाशो दृष्ट इतिभावः । अतद्रूपतया विशेषणतया च भानं विवृणोति ( तथाहीति ) उक्तं विशिष्टप्रतीतिविरोधं प्रसिद्धोदाहरणेन निदर्शयति ( तदेवमिति )

विशिष्टं प्रकाशयन्ननुभवाम्यहमिति प्रत्ययो दण्डमात्रे दण्डी देवदत्त इति प्रत्ययवद्विशेषणभूतानुभूतिमात्रावलम्बनः कथमिव प्रतिज्ञायेत ? ॥

* श्रुतप्रकाशिका *

तत्र न सम्बन्धमात्राध्यासः, तथा सति सम्बन्धिनो ज्ञातुः पारमार्थ्यप्रसङ्गात्. न च तथाभ्युपेतम्। ननु विशेषणे विशिष्टाध्यासो दृश्यते, यथा प्रभायां मण्यध्यास इति; इदं चोद्यं पृथगवभासमानेत्यनेन परिहृतम्. नहि तथा वैयधिकरण्येन विशेषणीभूता प्रभा, किन्तु अयं मणिरिति मण्यध्यासाधिष्ठानभूता प्रभा मणिसामानाधिकरण्येनैव हि भाति। ननु, अनुभवसामानाधिकरण्येन प्रतीतिप्रसञ्जनमयुक्तम्, दिक्षु मालिन्यं नभसि राग इति वैयधिकरण्येनाप्यध्यासदर्शनात्। नैवम्,—पदद्वयप्रवृत्तिनिमित्तयोरेकाश्रयवृत्तित्वं हि सामानाधिकरण्यम्. इह दिक्कुमालिन्ययोर्नभस्त्वाख्ययोश्च एकाश्रयवृत्तित्वादर्थतः सामानाधिकरण्यमस्ति, वैयधिकरण्यन्तु शब्दगतम्। दिशो मलिनाः दिक्षु मालिन्यमित्यत्र कोऽर्थभेदः ? अध्यासेषु धर्म्यैक्यप्रतीतिरवर्जनीया; अतः सैवात्रापाद्यते अनुभूतिरहमिति प्रतीयेतेति। ननु, अनुभूतिरहमितिप्रसङ्गो दुर्वचः, अनुभूतित्वं ह्यधिष्ठानासाधारणाकारः, तदस्फुरणं भ्रमानुगुणमेव, नहि शुक्तीरजतमिति प्रतीयत इति। एवं तर्ह्यनुभूतेर्निर्विशेषतया रूपान्तरेण स्फुरणाभावादनुभूतितया स्फुरणे विरोधाच्च तदधिकरणाध्यासानुदयः, अविरोधेन कृत्स्नाध्यासे ग्रन्थोक्तसामानाधिकरण्यप्रतीतिप्रसङ्गो दुर्वारः, एतदभिप्रायेण हि पुरोऽवस्थितभास्वरद्रव्याकारतया रजतादिरिवेत्युक्तम्। ननु, अध्यासानुदयो दुर्वचः, विषयोपश्लिष्टानुभूतिरहं जानामीत्यत्र ज्ञात्रध्यासे प्रतीयते, सा तु नाधिष्ठानम्, निर्विषया निराश्रयानुभूतिरेवाधिष्ठानम्, तदप्रकाशादध्यासोदय इति। उच्यते,—तत्र प्रतिपन्नस्याधिष्ठानत्वायोगात् विषयाश्रयशून्यसंविदो योग्यानुपलब्धिनिरस्तत्वात् विषयप्रकाशकसंविद एवात्मत्वाभ्युपगमेन त्वया स्वयम्प्रकाशत्वसमर्थनाच्च सैवाधिष्ठानमिति तदवभासे तस्याश्च शुक्तित्ववत् भ्रमविरोधित्वेऽध्यासानुदय इति ॥

५ तत्त्वटीका ५

नहि स्वाध्यस्तदेवदत्तविशेषणतया भातीतिभावः ॥ ५ ॥ ५ ॥ ५ ॥

यदप्युक्तम्—स्थूलोऽहमित्यादिदेहात्माभिमानवत एव ज्ञातृत्वप्रतिभासनात् ज्ञातृत्वमपि मिथ्येति । तदयुक्तम्; आत्मतया अभिमताया अनुभूतेरपि मिथ्यात्वं स्यात्, तद्वत एव प्रतीतेः । सकलेतरोपमर्दितत्वज्ञानाबाधितत्वेनानुभूतेर्न मिथ्यात्वमिति चेत्; हन्तैवं सति तदबाधादेव ज्ञातृत्वमपि न मिथ्या ॥ यदप्युक्तम्—अविक्रियस्यात्मनो ज्ञानक्रियाकर्तृत्वरूपं ज्ञातृत्वं न सम्भवति, अतो ज्ञातृत्वं विक्रियात्मकं जडं विकारास्पदाव्यक्तपरिणामाहङ्कारग्रन्थिस्थमिति न ज्ञातृत्वमात्मनः, अपित्वन्तःकरणरूपस्याहङ्कारस्य, कर्तृत्वादिर्हि रूपादिवद्दृश्यधर्मः, कर्तृत्वे-

---

* श्रुतप्रकाशिका *

देहात्माभिमानवतो ज्ञातृत्वप्रतिभासात्तन्मिथ्येत्युक्तमनूद्य दूषयति (यदप्युक्तमित्यादिना) (तदबाधादेवेति) ज्ञातृत्वस्याबाधितत्वं मुक्तावपि ज्ञातृत्वपरश्रुतिवाक्यात् । ज्ञातृत्वस्य विक्रियात्मकत्वं निराकर्तुं तदनुवदति (यदप्युक्तमविक्रियस्येति) ज्ञानस्य धात्वर्थतया क्रियात्वम्, तत्कर्तृत्वञ्च विकाररूपम्; अत एव जडम्. अविक्रियस्याजडस्यात्मनो न सम्भवति. विक्रियात्मकत्वाज्जडत्वाच्च तादृशाहङ्कारग्रन्थिस्थमित्यर्थः । सर्वाध्यासमूलत्वात् ग्रन्थित्वम् ॥ अथ हेत्वन्तरेण च ज्ञातृत्वस्यान्तःकरणधर्मत्वमुपपादयति (कर्तृत्वादिरिति) दृश्यत्वादित्यर्थः । आत्मनो ज्ञातृत्वेऽनिष्टं प्रसञ्जयति

* तत्त्वटीका *

देहत्वादिवद्बोद्धृत्वादिकमपि भ्रान्तेरेव प्रतिपन्नत्वादध्यस्तम्, ततश्च मिथ्येति प्रागुक्तमनुवक्ति (यदपीति) अयं हेतुरतिप्रसञ्जक इति दर्शयितुमाह (तदिति) तत्र विश्वाध्यासाधिष्ठानस्य वैधर्म्यं शङ्कते (सकलेति) परोक्तहेतोस्स्वेष्टेऽपि प्रवृत्तेरविशेषमाह (हन्तेति) हर्षार्थको वा हन्तकारः । कर्तृत्वादेर्निर्विकारत्वादिभिर्विरोधं दृश्यत्वादनात्मधर्मत्वमात्मनोऽकर्तृत्वादिहेतुतर्कवर्गञ्च दूषयितुमनुवदति (यदपीति) कर्तृत्वादिरित्यादिशब्देन विकारित्वभोक्तृत्वयोर्जडत्वादित्यादिशब्देन परिच्छिन्नत्वादे-

ऽहम्प्रत्ययगोचरत्वे चात्मनोऽभ्युपगम्यमाने देहस्येवाना-त्मत्वपराक्त्वजडत्वादिप्रसङ्गश्चेति। नैतदुपपद्यते; देहस्ये-वाचेतनत्वप्रकृतिपरिणामत्वदृश्यत्वपराक्त्वपरार्थत्वादि-योगादन्तःकरणरूपस्याहङ्कारस्य, चेतनासाधारण-

* श्रुतप्रकाशिका *

(कर्तृत्व इति) अत्र व्यतिरेक्यनुमानान्यभिप्रेतानीति पूर्वमेवोक्तम्। परिहरति (नैतदिति) देहस्येत्यादिना अन्तःकरणस्य ज्ञातृत्वाभावोपपादनम्. आदिशब्दादन्तवत्त्वग्रहणम्। चेतनासाधारणेत्यादिना आत्मनो ज्ञातृत्वोपपादनम्, ज्ञातृत्वाभावः साध्योऽभिप्रेतः, अन्तःकरणं धर्मि. अचेतनत्वादयो हेतवः, देहस्येवेति सपक्षो दर्शितः, ज्ञातृत्वस्य चेतनासाधारणत्वकथनाद् व्यतिरेकव्याप्तिश्च कथिता; एवं परोक्तव्यतिरेकिणां प्रत्यनुमानान्युक्तानि भवन्ति। अन्तःकरणं न ज्ञातृ, अचेतनत्वात् प्रकृतिपरिणामत्वात् दृश्यत्वात् पराक्त्वात् परार्थत्वात् देहवदिति। ननु, अचेतनत्वात् अज्ञातृत्वे साध्ये साध्याविशिष्टता। नैवम्,—अचेतनशब्देनानात्मत्वस्य विवक्षितत्वात्. पुरुषार्थप्रतिसम्बन्धित्वं देहं प्रति नियन्तृतया अन्तःप्रविष्टत्वं वा आत्मत्वम्, तदभावोऽनात्मत्वम्। प्रकृतिपरिणामत्वम्-प्रकृतिकार्यत्वम्. दृश्यत्वम्—नियमेन ज्ञानान्तराधीनसिद्धित्वम्. पराक्त्वम्-परस्मै भासमानत्वम्. परार्थत्वम्—परप्रयोजनैकफलत्वं; जीवोपकरणत्वमित्यर्थः। आत्मनो ज्ञातृत्वे साध्ये अमी हेतवो यथासम्भवं तर्का योजनायीः। आत्मनो ज्ञातृत्वाभावे देहस्येवानात्मत्वप्रसङ्गः परार्थत्वप्रसङ्ग इति। ननु यथा घटदेहयोरचेतनत्वादिके तुल्येऽपि इन्द्रियाश्रयत्वादिकं देहासाधारणं भवति तथा देहान्तःकरणयोरप्यचेतनत्वादिके तुल्येऽपि ज्ञातृत्वमन्तःकरणासाधारणधर्मः स्यात्; अत

* तत्त्वटीका *

अ सङ्ग्रहः। अत्र विरोधचोद्यमेव विरोधहतमित्यभिप्रायेणाह (नैतदिति) आत्मन्यकर्तृत्वादिसाधकानामन्तःकरणे कर्तृत्वादिसाधकानाञ्च प्रमाणविरोधमभिसन्धायाह (देहस्येति) नन्वचेतनत्वहेतुर्ज्ञातृत्वनिषेधे साध्याविशिष्टः। नैवम्; क्षेत्रवर्गान्तर्भूतत्वेन शास्त्रसिद्धत्वे तात्पर्य्यात्। दृश्यत्वमिह स्वगोचरबुद्ध्यैव प्रकाशत्वम्। यद्वा, द्रष्टुरन्यतया तदुपकरणत्वेन दृशिविषयत्वम्। आदिशब्देन

स्वभावत्वाच्च ज्ञातृत्वस्य ॥ एतदुक्तं भवति—यथा देहादि-
र्दृश्यत्वपराक्त्वादिहेतुभिस्तत्प्रत्यनीकद्रष्टृत्वप्रत्यक्त्वादेर्वि-
विच्यते, एवमन्तःकरणरूपाहङ्कारोपि तद्द्रव्यत्वादेव
तैरेव हेतुभिस्तस्माद्विविच्यत इति । अतो विरोधादेव

* श्रुतप्रकाशिका *

इन्द्रियाश्रयत्वाभावस्येव ज्ञातृत्वाभावस्याप्यचेतनत्वादिकमप्रयोजकम्, अचिद्विशेषत्व-मेव प्रयोजकम् तथाऽऽत्मनो ज्ञातृत्वाभावेऽपि प्रत्यक्त्वादिरुपपद्यतामित्युभत्रापि विपक्षे बाधकाभावमाशङ्क्य परिहरति (एतदुक्तमिति) येन दृश्यत्वादिविरुद्धधर्मेण देहस्य द्रष्टृत्वाद्यनुपपत्तिः तेनान्तःकरणस्यापि तद्द्रव्यत्वाद् द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः। ज्ञातृ-त्वाभावं प्रत्यचेतनत्वादिकमप्रयोजकं चेत्; देहस्य ज्ञातृत्वप्रसङ्गः, ततश्च चार्वाकं प्रति देहात्मभेदस्त्वयाऽपि दुरुपपादः। नच देहस्य देहत्वादज्ञातृत्वं, घटादौ देहत्वा-भावेऽपि ज्ञातृत्वाभावात्; अतस्तत्राचित्त्वादिकस्य ज्ञातृत्वाभावप्रयोजकत्वमभ्युपगन्त-व्यमिति क्वचित् ज्ञातृत्वाभावप्रयोजकस्य तस्याचित्त्वादेः क्वचिदप्रयोजकत्वमयुक्तम्, अतोऽचित्त्वादिभिर्देहस्येवान्तःकरणस्य द्रष्टृत्वाद्यनुपपत्तिरित्यर्थः। प्रत्यक्त्वादेरित्यादि-शब्दादजडत्वग्रहणम्, (विविच्यते)प्रत्यक्त्वादिधर्मैः सम्बन्धरहितोऽवगम्यत इत्यर्थः।

ᛃ तत्त्वटीका ᛃ

परिणामित्वविनाशित्वसङ्ग्रहः। ननु प्राकृतत्वेऽपि यथा क्वचिदेवेन्द्रियत्वतदाश्रय-त्वादिकं तद्विकारादिशक्त्याऽध्यासशक्त्या वा तथा क्वचिदेव ज्ञातृत्वं स्यात्, यत्तु चेतनासाधरणस्वभावत्वाच्च ज्ञातृत्वस्येति; एतदपि तद्विवक्षितं न साधयेत्। अन्तःकरणस्यैवाऽसाभिश्चेतनत्वाङ्गीकारादित्यत्राऽऽह (एतदुक्तमिति) अयं भावः,—'पृथिव्यापस्तेजो वायुरिति तत्त्वानि तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्' इति बृहस्पत्युक्तं प्रतिवदता त्वयाऽपि यैः स्वभावैर्देहादिर्द्रष्टृत्वप्रत्यक्त्वभोक्तृत्वादि-रहितो निष्कृष्टस्तैरेवाऽहङ्कारद्रव्यमपि तद्रहितं स्थाप्यत इति। कर्तृत्वादिस्वीकारे जडत्वादिप्रसङ्गस्तु श्रुत्या शिथिलमूलः। देहेऽहम्प्रत्ययस्य भ्रान्तित्वात्तत्राऽनात्म-त्वम्, नच जडत्वादिकमहन्धीयुक्तम्, उपहिते ब्रह्मणि तदविषयत्वेऽपि त्वयैव अजडत्वादिस्वीकारात। आत्मनि वाऽहन्त्वादिकं प्रत्यक्षादिसिद्धं निर्बाधम्।

# न ज्ञातृत्वमहङ्कारस्य, दृशित्ववत्। यथा दृशित्वं तत्क-

* श्रुतप्रकाशिका *

( तैरेव हेतुभिस्तस्माद्विविच्यत इति ) पराक्त्वादिभिर्देहस्य ज्ञातृत्वाभाव उक्ते पराक्त्वं व्याप्यं ज्ञातृत्वाभावो व्यापक इति सिध्यति; ततश्च स्वाभावव्याप्तेषु परात्सु निरवकाशं ज्ञातृत्वं यदि प्रत्यग्वस्तुन्यपि न स्यात्, तदा निराश्रयं प्रसज्येदिति पूर्वोक्तव्याप्तिस्थापनाय विपक्षे बाधकस्तर्कोऽत्राप्यभिप्रेतः, तस्माद्विविच्यत इत्येतदुक्तमित्यन्वयः । अतोऽचेतनत्वजडत्वादिस्वभावविरोधान्नाहङ्कारस्य ज्ञातृत्वमित्याह ( अत इति ) नहि वयं द्रष्टृत्वाद्यनुपपत्त्या देहात्मविवेकं ब्रूमः, स तु परमतानुसारात्कृतः, वयं तु दृशित्वानुपपत्त्येति शङ्कायां द्रष्टृत्वाभावस्याचेतनत्वादिप्रयोज्यत्वे मृषावाद्यसाधारणप्रतिबन्दीमाह ( दृशित्ववदिति ) तदेव विवृणोति ( यथेति ) दृश्यत्वाद्यविशेषेऽपि देहस्य घटादिविलक्षणस्येन्द्रियाश्रयत्ववदन्तःकरणस्य दृशित्वमुपपद्यताम्, अन्तःकरणस्य दृश्यत्वादिना देहस्येव दृशित्वं नोपपद्यत इति चेत्, तथा दृश्यस्यान्तःकरणस्य दृश्यत्वादिनैव देहस्येव द्रष्टृत्वमपि नोपपद्यते; अतो दृशित्वाभाव इव द्रष्टृत्वाभावेऽपि अचेतनत्वादिकं प्रयोजकम्, अन्वयव्यतिरेकयोस्तुल्यत्वादुपाध्यन्तरादर्शनाच्चेति भावः । अहम्प्रत्ययगोचरत्वमनात्मत्वसाधकं देहस्येवेति यदुक्तं तदयुक्तम्, बाधिताहम्प्रत्ययगोचरत्वस्य पक्षे वृत्त्यभावादबाधिताहम्प्रत्ययगोचरत्वस्य सपक्षे देहादावभावाच्च । यद्यहम्प्रत्ययगोचरत्वमात्रेणात्मन्यनात्मत्वादिप्रसङ्गः, तर्हि रजतप्रत्ययगोचरत्वमात्रेण भ्रान्तवत् सम्यग्रजतेऽप्यरजतत्वाङ्गुलीयकनिर्माणानर्हत्वप्रसङ्गः स्यादित्यसङ्गतम्, श्रुतिभिः प्रत्यक्षेण च कालात्ययापदेशश्च । अनात्मत्वादिप्रसञ्जकं कर्तृत्वं किं प्रयत्नाधारत्वम्? उत स्पन्दरूपक्रियाश्रयत्वम्? उत धात्वर्थमात्राश्रयत्वम्? प्रथमे,—व्याप्त्यभावः, प्रयत्नाधारत्वानात्मत्वयोः क्वचित्सहदर्शनाभावात् । परमात्मन्यनात्मत्वादिप्रसङ्गश्चेत्

* तत्त्वटीका *

चेतनासाधारणस्वभावत्वोक्तिश्चाऽन्तःकरणातिरिक्तात्मस्वभावतया प्रमाणसिद्धत्वप्रकाशनार्था । अत्र शक्तिविशेषचोद्यं परिहरति ( अत इति ) यद्यात्मत्वमन्तःकरणस्य विरोधात्त्यज्यते, तथैव द्रष्टृत्वादिकमपि त्याज्यम् । अन्यथा देहस्यैवैतदुत्त्यजमिति भावः । अविक्रियात्मकत्वहेतोरात्मनि साक्षादन्वयविवक्षायामसिद्धि-

र्मणोऽहङ्कारस्य नाभ्युपगम्यते, तथा ज्ञातृत्वमपि न तत्कर्मणोऽभ्युपगन्तव्यम्। न च ज्ञातृत्वं विक्रियात्मकम्; ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वम् । ज्ञानञ्चास्य नित्यस्य

* श्रुतप्रकाशिका *

'कर्तारमीशं पुरुष'मित्यादिना कालात्ययापदेशश्च। जीवे चेत् 'साधुकारी साधुर्भवति' 'कर्ता शास्त्रार्थवत्त्वात्' 'यतः स्वकृतभुक् पुमान्' इत्यादिभिः प्रत्यक्षेण च कालात्ययापदेशश्च । द्वितीये,—परमात्मन्यसिद्धिः, जीवे तूत्क्रान्त्यादिश्रुतिभिः कालात्ययापदेशः । तृतीये,—भ्रमाश्रतया स्वाभिमतात्मन्यनात्मत्वप्रसङ्गः, भेददर्शनं तदाश्रयत्वं चापारमार्थिकमिति चेत् . किं परमार्थभूतधात्वर्थाश्रयत्वमनात्मत्वसाधकम्? उतापरमार्थभूतधात्वर्थाश्रयत्वम्? प्रथमे, घटादावपि परमार्थभूतधात्वर्थान्वयानभ्युपगमाद्व्याप्त्यभावः । द्वितीये, त्वदभिमतस्य भ्रमाश्रयस्याप्यात्मनोऽप्यनात्मत्वप्रसङ्गः । अथ विक्रियात्मकत्वं नेत्याह ( नचेति ) तदुपपादयति ( ज्ञातृत्वं हीति ) गुणक्रियाश्रयत्वेऽपि तत् कादाचित्कं चेत् क्रियाश्रयत्ववत् विक्रियात्मकं स्यादित्यत्राह ( ज्ञानं चास्येति ) धर्मस्य स्वाभाविकत्वेऽपि धर्मी अनित्यश्चेद्धर्मोऽप्यनित्यः स्यात्. धर्मिनित्यत्वे धर्मस्सोपाधिकश्चेत् . उपाधिविगमे धर्मो नश्यतीत्यनित्यः स्यात्; उभयव्यावृत्त्यर्थौ नित्यस्वाभाविकशब्दौ । अवस्थाविशेषेण कादाचित्कत्वन्तु प्रामाणिकत्वादिष्टम्. अनेन पदद्वयेन ' न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वादात्मन ' इति श्रुत्यर्थ उक्तो भवति। अस्याः श्रुतेरयमर्थः,—ज्ञातृसम्बन्धिविज्ञानं नित्यम् । कुतः अविनाशित्वादात्मनः, विशिष्टस्य नित्यत्वेन विशेषणभूतज्ञानस्यापि नित्यत्वात् । यद्वा, धर्मिनित्यत्वेन तत्स्वाभाविकधर्मस्यापि नित्यत्वादिति। आत्मनो नित्यत्वे ज्ञानस्य तत्स्वाभाविकधर्मत्वे च प्रमाणं स्मारयन् पूर्वमेव श्रुतिवाक्योपादानात् सूत्रमुदाहरति

७ तत्त्वटीका ७

मप्याह ( नचेति ) व्यवहितसम्बन्धं व्यञ्जयितुमाह ( ज्ञातृत्वमिति ) अपृथक्सिद्धविशेषणाभिप्रायेणाऽत्र गुणशब्दः । नन्वागन्तुकज्ञानगुणाश्रयत्वे साक्षाद्विकारित्वं स्यादित्यत्राह ( ज्ञानमिति ) चशङ्कानिवृत्त्यर्थः । " धर्मिनाशाद्विरोधिगुणागमाद्वा गुणस्य नाशं" परे वदन्ति । अत्र तु नोभयमित्यभिप्रायेण 'नित्यस्य स्वाभाविकधर्मत्वेने'त्युक्तम् । द्वयोरपि नित्यत्वस्य श्रुतिसिद्धत्वेऽप्याप्रलयस्थायित्वादिपक्षाणा-

स्वाभाविकधर्मत्वेन नित्यम्। नित्यत्वञ्चात्मनो [1]"नात्मा श्रुतेः" इत्यादिषु वक्ष्यति [2]"ज्ञोऽत एव" इत्यत्र ज्ञ इति व्यपदेशेन ज्ञानाश्रयत्वञ्च स्वाभाविकमिति वक्ष्यति। अस्य ज्ञानस्वरूपस्यैव मणिप्रभृतीनां प्रभाश्रयत्वमिव ज्ञानाश्रयत्वमप्यविरुद्धमित्युक्तम्। स्वयमपरिच्छिन्नमेव

---

* श्रुतप्रकाशिका *

(नित्यत्वञ्चेति) सूत्रोदाहरणेन तद्विषयभूता श्रुतिरपि ह्यर्थतो दर्शिता स्यात्. सूत्रञ्च पूर्वं ज्ञानगुणकत्वप्रदर्शनायोपात्तम्, इदानीं नित्यत्वज्ञापनायोपात्तम् 'ज्ञोऽत एवे'त्यत्र ज्ञ इति व्यपदेशस्य विवरणं 'यावदात्मभावित्वाच्च न दोषः' इति सूत्रम्। अत्र स्वाभाविकत्वसिद्धिरिति भावः। ज्ञानस्वरूपस्य ज्ञानाश्रयत्वं कथमित्यत्राह (अस्येति) ज्ञानं स्वाभाविकनित्यधर्मश्चेत्सर्वदा सर्वज्ञत्वप्रसङ्ग इत्यत्राह (स्वयमिति)

ө तत्त्वटीका ө

मपसिद्धान्तत्वं दर्शयितुं श्रुतिस्वारस्यपुरस्कारकं सूत्रद्वयमाह (नित्यमित्यादिना वाक्यद्वयेन) आत्मस्वरूपस्य ज्ञानत्वं वदद्भिर्वाक्यैः तस्य ज्ञानाश्रयत्वमर्थान्निषिद्धं स्यादित्यत्राऽऽह (अस्येति) ननु मणिः पार्थिवः, प्रभा तैजसी, अतो मणिप्रभयोः पर्वतोत्सङ्गप्रकारेण सम्बन्धः। मणिद्युमणिप्रभृतीनां विनाशप्रसङ्गादिति प्रागुक्तमपि चिन्त्यम्, अतिकठिनस्य पार्थिवांशस्य विशरणानभ्युपगमात्। मणिस्थस्य तेजोंशस्य नाशप्रसक्तेरिष्टत्वाच्च; तस्माद्विषमो दृष्टान्तः। मैवम्,— मणिर्हि नः पञ्चभूतमयः पिण्डः, तत्र पिण्डस्थस्य तेजोंशस्य सप्रभाकत्वात्तद्विशरणे च प्रतिक्षणमनुपलब्धिसङ्घातशैथिल्यक्लृप्तौ गौरवप्रसङ्गे तात्पर्य्याच्चेति। नन्ववयविवादपरित्यागिनां प्रभाप्रभावद्रूपस्य ज्ञानतदाधाररूपस्य वा मिथोऽत्यन्तभिन्नस्य द्रव्यद्वयस्य कथमपृथक्सिद्धिः। द्रव्याद्रव्ययोरपि वा कथम्?, यथादर्शनं स्वभावनियमादिति चेत् तुल्यम्। अत एवेश्वरं प्रत्यपि चिदचिद्द्रव्याणामपृथक्सिद्धिरनपाया। यद्यात्मनां ज्ञानमीश्वरस्येव स्वाभाविकमनश्वरञ्च, तर्हि सर्वे सर्वदा सर्वज्ञाः स्युरित्यत्राऽऽह (स्वयमिति) स्वभावत इत्यर्थः। एवं सति मुक्तावपि धीसङ्कोचः

---

१. २. शारी० अ. ३. पा० १८–१९. सू.

ज्ञानं सङ्कोचविकासार्हमित्युपपादयिष्यामः ॥ अतः क्षेत्रज्ञावस्थायां कर्मणा सङ्कुचितस्वरूपं तत्तत्कर्मानुगुणतरतमभावेन वर्तते, तच्चेन्द्रियद्वारेण व्यवस्थितम्, तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्योदयास्तमयव्यपदेशः प्रव-

* श्रुतप्रकाशिका *

स्वयम्—स्वतः, 'सम्पद्याविर्भाव' इत्यादिसूत्रे उपपादयिष्याम इत्यर्थः, अनन्तरमेवेति चार्थः । तर्हीदानीमपि कदाचित्सर्वज्ञत्वं मुक्तौ च कदाचिज्ज्ञानसङ्कोचः किं न स्यात्, यदि क्षेत्रज्ञावस्थायां सङ्कोचः तर्हि सर्वेऽप्यज्ञाः स्युरित्यत्राह (अतः क्षेत्रज्ञेति) अतः—सङ्कोचविकासार्हत्वात्। कर्मणेति सङ्कोचकोपाधिः (क्षेत्रज्ञावस्थायामिति) तदानीमेव सङ्कोच इत्यर्थः। सर्वेषामज्ञत्वप्रसक्तिश्च कर्मतारतम्यात्परिहृता। तारतम्यशब्देन 'तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते॥' इति वचनं स्मारितं भवति। कर्मणेतिपदेन तयेतिपदं श्लोकस्थं व्याख्यातं भवति। तया—कर्मरूपाविद्ययेत्यर्थः। 'अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा॥ संसारतापानखिलानवाप्नोत्यतिसंततान्' इति हि प्रकृतम्। ज्ञानस्य नित्यत्वेनानुत्पत्तिकत्वादिन्द्रियनैरपेक्ष्यं स्यादित्यत्राह (तच्चेति) यद्वा, स्थावरेष्वपि ज्ञानविकासः स्यादित्राह—तच्चेति। इन्द्रियद्वारकत्वं सङ्कोचविकासार्थमित्यर्थः। तर्ह्युत्पत्तिविनाशव्यपदेशो न स्यादित्यत्राह (तमिममिति) प्रसरान्वयव्यतिरेकावपेक्ष्य उदयास्तमयव्यपदेश इत्यर्थः। यद्वा प्रसृतांशः प्रसरः, तस्य प्रसरणसङ्कोचावुदयास्तमयावित्यर्थः। सङ्कोचविकासाभ्युपगमे

* तत्त्वटीका *

प्रलयमोक्षयोरिवेदानीमपि धीतारतम्यविरहस्स्यादित्यत्राह (अत इति) करिष्यमाणोपपादनप्रकारादित्यर्थः। मुक्तौ कर्माभावादद्य कर्मतारतम्याच्च शङ्काद्वयनिरासः। ननु धियस्स्वाभाविकत्वे कर्मणैव तस्याः तारतम्ये च किमर्थेन्द्रियसृष्टिः, अतोऽपर्यनुयोज्यविधातारतम्याद्धीतारतम्याध्यासः, इन्द्रियादिसृष्टिश्चेत्यत्राह (तदिति) तरतमभावेन वर्तमानमित्यर्थः। व्यवस्थितम्,— सद्वारकतयैव स्वतन्त्रेच्छासिद्धमिति यावत्। ज्ञानस्योत्पत्तिनाशौ प्राक् समर्थितौ, अत्र तु तन्नित्यत्वोक्तिः कथमित्यत्राह

र्तते- ज्ञानप्रसरे तु कर्तृत्वमस्त्येव । तच्च न स्वाभाविकम्; अपि तु कर्मकृतमित्यविक्रियस्वरूप एवात्मा । एवंरूप-विक्रियात्मकं ज्ञातृत्वं ज्ञानस्वरूपस्यात्मन एवेति न कदा-

* श्रुतप्रकाशिका *

विक्रियात्मकत्वं स्यादित्यत्राह ( ज्ञानप्रसरे त्विति ) तादृशविक्रियात्मकत्वं प्रामाणिकत्वादिष्टमित्यर्थः । अचेतनवत्परिणामो ह्यनभ्युपगत इत्यवकाराभिप्रायः, अनेन अविकारश्रुतीनां विषयो दर्शितः । मुखान्तरेणाप्यविकारश्रुतीनां निर्वाहं दर्शयति ( तच्चेति ) स्वाभाविकविकारनिषेधपरा अविकारश्रुतय इत्यर्थः । स्वाभाविकं रूपं कथमित्यत्राह ( अविक्रियेति ) स्वरूपम्—स्वाभाविकरूपम्, अविकारित्ववाक्यान्युपाधिविमुक्तस्वाभाविकरूपपराणीत्यर्थः । प्रसरणकर्तृत्वमपि विकाररूपत्वादन्तःकरणस्यैवेत्यत्राह ( एवंरूपविक्रियात्मकमिति ) स्वधर्मभूतज्ञानप्रसरणकर्तृत्वलक्षणविकारित्वमेवंरूपशब्देन विवक्षितम्, ज्ञानस्वरूपस्य—ज्ञानमेव स्वाभाविको धर्मः यस्य सः ज्ञानस्वरूपः, स्वधर्मभूतज्ञानप्रसरकर्तृत्वलक्षणविकारस्तद्धर्मकस्यात्मन एव सम्भवति, नतु जडत्वात् अतद्धर्मस्याहङ्कारस्येत्यर्थः । यद्वा स्वरूपशब्दो

* तत्त्वटीका *

( तदिति ) श्रुतिप्रसिद्धं कर्मतारतम्यञ्चेत्यर्थः । प्रसरशब्द इह सङ्कोचमभिप्रैति । तथापि जानातीत्यादिः पुरुषकर्तृक एव, अतः सविकारत्वं दुस्त्यजम्, ज्ञाननित्यत्वश्रुत्या ऽप्यचेतनसङ्कुचितप्रसर एव नित्यस्स्यात्, तारतम्यञ्च केशलोमकपालादिवैचित्र्यवत् स्वभावात्स्यादिति चोद्यत्रये 'ज्ञानप्रसर" इत्यादिवाक्यत्रयं प्रत्युक्तिः । अत्र देहविकारवद्व्यवहितविकारो नानिष्टः, श्रुतिश्च ज्ञानस्वरूपमात्रनित्यत्वमेव वक्ति, अतः तारतम्यस्य न स्वाभाविकत्वम्, धीतारतम्यस्य कर्मतारतम्यहेतुकत्वञ्च "अविद्या कर्मसंज्ञे"त्यादिशास्त्रसिद्धम् । तदनादरे लोकायतोत्थानप्रसङ्ग इतिभावः । आत्मा स्वरूपतस्तावन्न मृदादिवद्विक्रियते, धर्मतोऽपि दोषरूपो विकार औपाधिक इत्यभिप्रायेणाविक्रियस्वरूप एवेत्युक्तम् । तथापि निर्विकारश्रुत्या व्यवहितविकारस्यापि निषेधे प्राप्ते ज्ञातृत्वमौचित्यादन्तःकरणस्येत्यत्राह ( एवंरूपेति ) रूपशब्दोऽत्र निरूपकधर्मपरः । यस्य ज्ञानवत्त्वं प्रमितं तस्यैव हि तद्द्वारकविकारः, अतो

चिदपि जडस्याहङ्कारस्य ज्ञातृत्वसम्भवः ॥ जडस्वरूप- स्याप्यहङ्कारस्य चित्सन्निधानेन तच्छायापत्त्या तत्सम्भव इति चेत्; केयं चिच्छायापत्तिः? किमहङ्कारच्छायापत्तिः संविदः? उत संविच्छायापत्तिरहङ्कारस्य? न तावत् संविदः, संविदि ज्ञातृत्वानभ्युपगमात्। नाप्यहङ्कारस्य,

* श्रुतप्रकाशिका *

धर्मिपरः, ज्ञानस्वरूपस्यैव ज्ञानधर्मकत्वं सम्भवति नतु जडस्वरूपस्य, यथा घटादेरिति । ज्ञानस्वरूपत्वात् ज्ञानधर्मकस्यैव स्वधर्मभूतज्ञानप्रसरकर्तृत्वरूपविकार- सम्भवः, न तु जडस्वरूपत्वात् अतद्धर्मकस्याहङ्कारस्येत्यर्थः । एवं विक्रिया- त्मकत्वात् ज्ञातृत्वस्य आत्मधर्मत्वानुपपत्तिर्निरस्ता । अथ परोक्तान् ज्ञातृत्वनिर्वाह- प्रकारान् निरस्यति, ज्ञातृत्वं चिच्छायापत्तिकृतं चित्सम्पर्ककृतं चिदभिव्यञ्जकत्वकृत- मिति त्रयः पक्षाः, तत्र प्रथमं चिच्छायापत्तिपक्षमाशङ्कते ( जडेति ) दूषयति ( केयमिति ) केयम्—दुर्निरूपेत्यर्थः । विकल्पयति ( किमिति ) चिच्छायाशब्दयोः समासान्तर्गता विभक्तिः षष्ठी वा सप्तमी वेति भावः । अहङ्कारच्छायापत्तिस्संविदः— अहङ्कारे संविद्गतज्ञातृत्वच्छायापत्तिरित्यर्थः ( संविच्छायापत्तिरहङ्कारस्येति ) संविद- हङ्कारगतज्ञातृत्वच्छयापत्तिरित्यर्थः । प्रथमं दूषयति ( न तावदिति ) शिरोऽन्तरं व्युद- स्यति (नापीति) पूर्वमचेतनत्वप्रकृतिपरिणामत्वादिभिरहङ्कारस्य ज्ञातृत्वव्युदासमभिप्रे-

५ तत्त्वटीका ५

निर्विकारश्रुतिरत्र सङ्कोच्येति भावः । यद्वा त्वदुक्तयुक्त्यैवाऽन्तःकरणस्य घटवदेवा- त्मत्ववज्ज्ञातृत्वमपि न स्यादिति । अथ जलादिषु मणिप्रभावैधर्म्यायेन चान्द्रादि- च्छायापत्तिन्यायेन वा ज्ञातृत्वाध्यासं शङ्कते ( जडेति ) तत्र संविदहङ्कारयो- र्मध्ये किमीयाच्छाया कुत्रापन्नेति विकल्पासहत्वमभिप्रेत्याह ( केयमिति ) प्रकृति- पुरुषयोरनयोरितरेतरस्वभावाध्यासो हि साङ्ख्यैरुक्तः, तदनुसारोऽत्र परस्य सम्भव- तीति मत्वा 'तच्छायापत्त्ये' त्यत्र विवक्षाभेदबुद्ध्या विकल्पयति ( किमिति ) किमहङ्कारे संविदश्छायापत्तिः ? उत स्वाधिष्ठानभूतायां संविदि ? तदध्यासितस्यैवा ऽहङ्कारस्येत्यर्थः । आद्यं परसम्मतप्रकारेण दूषयति ( न तावदिति ) द्वितीये

उक्तरीत्या तस्य जडस्य ज्ञातृत्वायोगात्, द्वयोरप्यचाक्षुषत्वाच्च; नह्यचाक्षुषाणां छाया दृष्टा। अथ—अग्निसम्पर्कादयःपिण्डौष्ण्यवच्चित्सम्पर्काज्ज्ञातृत्वोपलब्धिरिति । नैतत्;संविदि वास्तवज्ञातृत्वानभ्युपगमादेव न तत्संपर्कादहङ्कारे ज्ञातृत्वं तदुपलब्धिर्वा। अहङ्कारस्य त्वचेतनस्य ज्ञातृत्वासम्भवादेव सुतरां न तत्सम्पर्कात्संविदि ज्ञातृत्वं

---

* श्रुतप्रकाशिका *

त्याह ( उक्तरीत्येति ) दूषणान्तरमाह ( द्वयोरपीति ) तद्विवृणोति ( नहीति ) चित्सम्पर्कं दूषयितुं शङ्कते (अथेति) पूर्ववद्विकल्प्य दूषयति (नैतदिति) इयं साधारणी प्रतिज्ञा. अहङ्कारे संवित्सम्पर्कात् ज्ञातृत्वं व्युदस्यति ( संविदीति ) अहङ्कारसम्पर्कात् संविदि ज्ञातृत्वं दूषयति ( अहङ्कारस्य त्विति ) ( सुतरामिति ) ज्ञानस्याजडत्वात्

ध तत्त्वटीका ध

युक्तिविरोधमाह ( नापीति ) उक्तरीत्या प्रकृतिपरिणामित्वादिनेत्यर्थः । यद्यपि अजडस्य ज्ञातृत्वमव्यापकम्, तथापि जडस्याऽज्ञत्वं व्यापकमित्यभिप्रायेण तस्य ज्ञातृत्वायोग उक्तः । अत्र 'विकल्पकोट्योर्व्युत्क्रमेणोत्तरं दत्त' मिति केचित् । तदा तु षष्ठीनिर्दिष्टयोर्दर्पणस्थानीयत्वम् । तत्र किमिह तद्धर्माध्यासमात्रं. तच्छायापत्तिः ? उत तत्प्रतिबिम्बापत्ति ? रिति विकल्पे प्रथमस्य दत्तोत्तरत्वं मत्वा द्वितीयेऽपि तेनैव दूषिते दूषणान्तरमप्यस्तीत्याह ( द्वयोरिति ) अपिशब्द एकैकाचाक्षुषत्वेऽपि प्रतिबिम्बसम्भवादत्र कैमुत्यार्थः । व्याप्तिं व्यनक्ति ( नहीति ) अचाक्षुषाणामित्यधिष्ठानानामारोप्याणाञ्च तन्त्रोक्तिः । "अयः पिण्डे यथावन्हिर्भिन्नस्तिष्ठत्यभिन्नवत्। तथा विश्वमिदं देवो व्यावृत्त्य परितिष्ठति ॥" इत्यादिवाक्यानुसारी पक्षान्तरं शङ्कते ( अथेति ) किमत्र रुमाक्षितिपार्थिवान्तरवत् संसर्गस्वभावोत्पत्त्या तदुपलब्धिः ? उत मञ्जिष्ठादिवत्तत्तदारोपादिविकल्पं मत्वा द्विधाऽप्यसम्भवमभिप्रेत्याह ( नैतदिति ) तत्र संविदोऽहङ्कारस्य वा रुमास्थानीयत्वमिति विकल्पे पूर्वं निरस्यति ( संविदीति ) आरोपितज्ञातृत्वेऽन्योन्याश्रयसूचनाय वास्तवशब्दः । परमपि प्रागुक्तयुक्त्यैव निरस्तमित्याह ( अहङ्कारस्येति ) तुशब्दोऽत्र

तदुपलब्धिर्वा ॥ यदप्युक्तम्—उभयत्र न वस्तुतो ज्ञातृत्वमस्ति । अहङ्कारस्त्वनुभूतेरभिव्यञ्जकस्स्वात्मस्थामेवानु-

* श्रुतप्रकाशिका *

ज्ञानाश्रयत्वं लभते न सम्भवति. अहङ्कारस्य जडत्वेन वस्तुतो ज्ञानाश्रयत्वस्य स्वपरपक्षयोरुभयोरप्यसम्भवान्न तत्सम्पर्कात्संविदि ज्ञातृत्वमिति भावः । रुमागतकाष्ठादीनां लवणसम्बन्धाल्लवणत्वोत्पत्तिर्दृश्यते, अयःपिण्डेऽग्निसम्पर्कादुष्णत्वमुपलभ्यते; अतो ज्ञातृत्वं तदुपलब्धिर्वेति पृथगुक्तम् । ननु पूर्वोक्ते पक्षद्वये ज्ञातृत्वस्य छायापत्तिसम्पर्कौ निरस्तौ, ज्ञानच्छायापत्तिसम्पर्कौ कस्मान्न निरस्तौ ? वक्ष्यमाणाभिव्यक्तिपक्षान्तर्भावादिति ब्रूमः । ज्ञानस्याहङ्कारच्छायापत्तिर्नाम दर्पणमुखस्येव तदाधेयतया ऽभिव्यक्तता . सम्पर्कपक्षेऽप्यधिष्ठानतया सम्पर्को ज्ञातृत्वप्रतीत्यनुपयुक्तः, अत आधेयतया सम्पर्को वक्तव्यः, स च तत्स्थतयाऽभिव्यक्तावन्तर्गतः, अतस्तत्रानुपन्यासः । किञ्च, छायापत्तिस्संविदोऽचाक्षुषत्वेनैव निरस्ता । सम्पर्कश्चोपलम्भानुगुणत्वेन वक्तव्यत्वादपृथक्सिद्धधर्मधर्मिभावेन वक्तव्यः । स च नोपपन्नः, अचेतनस्य चैतन्यस्य च तथाविधधर्मधर्मिभावायोगात्. दण्डदेवदत्तयोरिव ज्ञानज्ञात्रोः पृथगवस्थानादर्शनादपृथगवस्थितयोस्सम्पर्कश्चानुपपन्न इत्यनुसन्धेयम् । अथाभिव्यक्तिपक्षमनुभाषितुं छायापत्तिसम्पर्कपक्षयोरभिव्यक्तिपक्षस्य चान्योन्यवैषम्यं दर्शयति ( उभयत्रेति ) ( वस्तुत इति ) छायापत्त्यादिना आपाद्यमानादध्यासात्पूर्वमेव सिद्धत्वं विवक्षितम्, नतु पारमार्थिकत्वम्; अलातचक्रादेरपि प्रतिबिम्बदर्शनादुष्णजलसम्पर्कादनुष्णेऽप्युष्णोपलम्भाच्च. एकत्र पूर्वसिद्धज्ञातृत्वाध्यासादन्यत्र ज्ञातृत्वनिर्वाहः पूर्वस्मिन् पक्षद्वये । अभिव्यक्तिपक्षे तु ज्ञातृत्वस्य पूर्वसिद्धिमनपेक्ष्य ज्ञानाध्यासात् ज्ञातृत्वनिर्वाह इति वैषम्यम् । अभिव्यक्तिपक्षमाह ( अहङ्कारस्त्विति )

* तत्त्वटीका *

चूर्णहरिद्रादिन्यायतोऽपि ज्ञातृत्वाभ्युपगमे स्वेष्टविरोधं द्योतयति । 'अत्र अचेतनत्वे'ति प्रकृतिपरिणामत्वादिपरम् । असम्भवसाम्येऽपि संविद्यजडत्ववैषम्यम्, तत्सम्पृक्ताहङ्कारे तद्विशिष्टभ्रमः शङ्क्येतापि, अहङ्कारसम्पृक्तायान्तु संविदि तावदज्ञत्वजडत्वादिभ्रम एव स्यादित्यभिप्रायेण सुतरामित्युक्तम् । पक्षद्वयोक्तदोषातिक्रमाय 'जलाधारेष्विवांशुमान्' इत्याद्यनुगृहीतं प्रागुक्तव्यञ्जकस्वभावमनुवक्ति ( यदपीति ) नहि

भूतिमभिव्यनक्ति, आदर्शादिवदिति । तदयुक्तम् ; आत्मनः स्वयंज्योतिषो जडस्वरूपाहङ्काराभिव्यङ्ग्यत्वायोगात् । तदुक्तम्—

[1]"शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः ।
स्वयंज्योतिषमात्मानं व्यनक्तीति न युक्तिमत् ॥" इति ।

स्वयम्प्रकाशानुभवाधीनसिद्धयो हि सर्वे पदार्थाः । तत्र तदायत्तप्रकाशोऽचिदहङ्कारोऽनुदितानस्तमितस्वरूपप्रकाशमशेषार्थसिद्धिहेतुभूतमनुभवमभिव्यनक्तीत्यात्मविदः परिहसन्ति ॥ किञ्च—अहङ्कारानुभवयोः स्वभाव-

* श्रुतप्रकाशिका *

दूषयति ( तदयुक्तमिति ) कुत इत्यपेक्षायामात्मनोऽभिव्यञ्जकापेक्षा च नास्ति, अहङ्कारस्याभिव्यञ्जकत्वशक्तिरपि नास्तीत्याह ( आत्मन इत्यादिना ) स्वोक्तार्थस्य साम्प्रदायिकत्वदर्शनार्थं दृष्टान्तेन तद्विशदीकरणार्थं चात्मसिद्धिग्रन्थमाह ( तदुक्तमिति ) शान्ताङ्गार इत्यादिकं श्लोकं विवृणोति ( स्वयमिति ) स्वयम्प्रकाशशब्देन अभिव्यञ्जकापेक्षाया अभाव उक्तः । अनुभवाधीनसिद्धय इत्यनेन अहङ्कारस्याभिव्यञ्जकत्वाभाव उक्तः । अचिदहङ्कार इत्यनेन चिन्मात्रातिरेकित्वात्तदायत्तप्रकाश इति परोक्तहेतुस्सूचितः । अनुदितानस्तमितस्वरूपप्रकाशं कदाचिदप्रकाशं चेत्तदाऽभिव्यञ्जकापेक्षा स्यात्, तदभावात्कदाचिदप्यभिव्यञ्जकापेक्षा नास्तीत्यर्थः । अशेषार्थसिद्धिहेतुभूतम्-त्वया विषयप्रकाशकत्वेन हि स्वयम्प्रकाशत्वं समर्थितमिति भावः । (परिहस-

* तत्त्वटीका *

युक्तिविरुद्धं दृष्टान्तमात्रेण सिद्ध्येदित्यभिप्रायेणाऽऽह ( तदिति ) अयुक्तिं विवृणोति ( आत्मन इति ) स्वयञ्ज्योतिषः— नित्यस्वयम्प्रकाशे स्वरूपे व्यञ्जकान्तरनिरपेक्षस्येत्यर्थः । संवित्तेरिव साक्षाद्व्यञ्जकत्वं न सम्भवतीत्यभिप्रायेण जडरूपत्वेनोक्तिः । उक्तवैशिष्ट्यार्थमेतत्प्रकरणोक्तानां परमाचार्यसम्प्रदायसिद्धत्वेनार्थमाह ( तदुक्तमिति ) श्लोकविवृतिमाह ( स्वयमिति ) नह्यविद्यातद्विकारेषु किञ्चित्त्वयाऽपि स्व-

१. आत्मसिद्धौ ॥

विरोधादनुभूतेरननुभूतित्वप्रसङ्गाच्च न व्यङ्क्तृव्यङ्ग्य-भावः । यथोक्तम्—

[1]"व्यङ्क्तृव्यङ्ग्यत्वमन्योन्यं नच स्यात्प्रातिकूल्यतः ।
व्यङ्ग्यत्वेऽननुभूतित्वमात्मनि स्याद्यथा घटः ॥ इति ।

* श्रुतप्रकाशिका *

न्तीति) ईदृशमनुभवमीदृशोऽहङ्कारोऽभिव्यनक्तीति त्वदीया एव त्वत्समीपस्था एव हसन्तीति भावः । अहङ्कारानुभवयोरभिव्यञ्जकत्वाभिव्यङ्ग्यत्वानभ्युपगमेन दूषणमुक्तं तयोरभिव्यञ्जकत्वमभिव्यङ्ग्यत्वञ्चास्तु, तत्परस्परं नोपपद्यत इत्याह (किञ्चेति) स्वभाव-विरोधात्—अनुभवस्याशेषार्थसिद्धिहेतुत्वं तद्व्यतिरिक्तत्वेनाहङ्कारस्यास्य तदधीन-सिद्धित्वञ्च विरोधः, यथा पितापुत्रयोरन्यं प्रति पुत्रत्वे पितृत्वे च सत्यपि परस्परं पितृत्वपुत्रत्वव्यत्ययो नोपपद्यते, एवमन्यापेक्षया तयोर्व्यङ्क्तृव्यङ्ग्यभावसम्भवेऽपि परस्परं नोपपद्यत इत्यर्थः । दूषणान्तरं चाह (अनुभूतेरननुभूतित्वप्रसङ्गाच्चेति) अस्मिन्नर्थेऽप्यात्मसिद्धिग्रन्थं दर्शयति (यथोक्तमिति) प्रातिकूल्यतः—पूर्वोक्त-स्वभावविरोधशब्देन प्रातिकूल्यशब्दो व्याख्यातः । तद्व्यञ्जयस्यैव तद्व्यञ्जकत्वे

* तत्त्वटीका *

प्रकाशतया स्वीकृतमिति भावः । अचिच्छब्दश्चिदायत्त [प्रकाशत्वे] स्वरूपत्वे हेतुपरः । नित्ये न कारणापेक्षेति दर्शयितुमनुदितत्वादिकथनम् । तदायत्त-प्रकाश इत्यनेन सूचितं विरोधं व्यञ्जयितुमाह (किञ्चेति) स्वभावविरोधात्—पूर्वोक्ता-द्व्यञ्जकत्वायोगाच्चेत्येके । तात्पर्यान्तरमपि ब्रूमः, यथा कार्यस्य स्वकारणकारणत्वे स्वप्रागभावकालवृत्तित्वप्रसङ्गाद्विरोधः, तथाऽत्रापीति । नह्यहङ्कारः स्वयमव्यक्तो व्यञ्ज्यात्, संविन्निरपेक्षसत्ताकत्वेन स्वरूपसत्यत्वप्रसङ्गात्; अत एव न स्वयंव्यक्तः, तस्मात्संविदधीनासिद्धिव्यक्तिः, तदिदम् 'अशेषार्थसिद्धिहेतुभूत'मित्यनेन सूचितम् । संविच्च नाव्यक्ता व्यञ्जयेत् अजडत्वप्रसङ्गात्; तदसौ स्वव्यक्तिसापेक्षाहङ्कारायत्तस्व-व्यक्तिरित्यन्योन्याश्रय इति । एतदप्यात्मसिद्धौ श्लोकान्तरेण स्पष्टयति (यथोक्तमिति) प्रातिकूल्यमिह स्वभावविरोधशब्दोक्तम् । मिथो व्यङ्ग्यत्वसम्भवे प्रागुक्तं दृष्टान्तं

१–आत्मसिद्धौ ॥

नच रविकरनिकराणां स्वाभिव्यङ्ग्यकरतलाभिव्यङ्ग्य-त्ववत्संविदभिव्यङ्ग्याहङ्काराभिव्यङ्ग्यत्वं संविदस्साधीयः, तत्रापि रविकरनिकराणां करतलाभिव्यङ्ग्यत्वाभावात्, करतलप्रतिहतगतयो हि रश्मयो बहुलाः स्वयमेव स्फुट-तरमुपलभ्यन्त इति तद्बाहुल्यमात्रहेतुत्वात्करतलस्य नाभिव्यञ्जकत्वम् ॥

किञ्च—अस्य संवित्स्वरूपस्यात्मनोऽहङ्कारनिर्वर्त्या-भिव्यक्तिः किंरूपा? न तावदुत्पत्तिः, स्वतस्सिद्धतया

* श्रुतप्रकाशिका *

परोक्तदृष्टान्तं दूषयिष्यन्नाह (नचेति) दृष्टान्तस्य साध्यविकलत्वमाह (तत्रापीति) तत्र तथात्वस्यान्यथासिद्धिं दर्शयति (करतलेति) नहि प्रज्ञप्रसरणस्वभावं द्रव्यम्, अतस्तद्बाहुल्यहेतुत्वमहङ्कारस्याऽनुपपन्नमित्यर्थः ॥

तथा अहङ्कारेणास्याभिव्यक्तिं त्रिधा विकल्प्य दूषयति (किञ्चेत्यादिना) किंरूपा—किंशब्दः क्षेपार्थः, दुर्निरूपेत्यर्थः । कुत इत्यत्रापेक्षायामभिव्यक्तिर्नाम किमुत्पत्तिः? उत प्रकाशनम्? उतानुभवसाधनानुग्रहः? इति त्रिधा विकल्पमभि-प्रेत्योत्पत्तिपक्षं दूषयति (न तावदिति) अनुत्पन्नस्य घटादेरभिव्यक्त्यसम्भवादुत्पा-

* तत्त्वटीका *

दूषयति (नचेति) पक्षवद्दृष्टान्तेऽपि व्यञ्जकत्वासम्भवमाह (तत्रापीति) ननु स्फुटतर-प्रकाशः करतलायत्तः प्राग्दर्शितः, तत्राह (करेति) बाहुल्यद्वारा व्यञ्जकत्वे कारणानां सर्वेषां व्यञ्जकत्वप्रसक्तिर्मात्रचा सूच्यते । नचाहङ्कारः संवित्स्रोतःप्रतिघाती, नच सा बाहुलीकरणार्हा, यत इह करादिदृष्टान्तः स्यादिति च भावः ॥

व्यक्तिस्वरूपं निर्धार्य्य मिथो व्यञ्जकत्वं वाच्यम्, सैवाऽत्र दुर्वचेति विवक्षुराह (किञ्चेति) अस्येत्यनेन स्वयम्प्रकाशतया स्थापितत्वं सूच्यते । तत्र हेतुः संविद्रूपत्वम्, वक्ष्यमाणकोटीनां यथायोगं मानविरोधमभ्युपगमविरोधञ्च व्यञ्जयितुं 'आत्मन' इत्यु-क्तम् । किंरूपा— न किञ्चिद्रूपेत्यर्थः । विकल्पकोटीर्हृदि निधाय क्रमाद्दूषयति (न ताव-दिति) उत्पत्तिरेवाभिव्यक्तिरिति साङ्ख्यैरुच्यते । परस्य चानिर्वचनीयोत्पत्तिर्द्विधत

अनन्योत्पाद्यत्वाभ्युपगमात् ॥ नापि तत्प्रकाशनम्, तस्या अनुभवान्तराननुभाव्यत्वात्; तत एव च न तदनुभवसाधनानुग्रहः । स हि द्विधा; ज्ञेयस्येन्द्रियसम्बन्ध-

* श्रुतप्रकाशिका *

दकस्यापि दण्डचक्रादेरुत्पादनद्वारा अभिव्यक्तिहेतुत्वादुत्पत्तिरपि विकल्पशिरसि निवेशिता। किञ्च, व्यङ्ग्यप्रकाशोत्पादनं व्यञ्जनम्. संविदः स्वयमेव प्रकाशरूपत्वात्तदुत्पत्तिरेव तत्प्रकाशोत्पत्तिरूपाभिव्यक्तिरिति विकल्पशिरस्युत्पत्तिनिवेशः । ( स्वतस्सिद्धतयेति ) स्वतस्सिद्धतया हि प्रागभावाभाव उक्तः, अनादित्वादिति वार्थः ॥ अथ द्वितीयं व्युदस्यति ( नापीति ) प्रकाशनम्—अनुभवविषयप्रकाशोत्पत्तिः । अथ तृतीयं प्रतिवक्ति ( तत इति ) तत एव—प्रकाशानुपपत्तेरेव । नन्वनन्तरग्रन्थोत्थानमनुपपन्नम्, अनुग्राहकद्वैविध्यस्य तन्निरासानुपयोगित्वात्, उत्तरत्रात्मसिद्धिग्रन्थोदाहरणं च न सङ्गतम्, इन्द्रियासम्बन्धवाचित्वेनानुग्रहद्वैविध्यानुपयोगात्। अत्रोच्यते,—पूर्वमनुग्राह्यजन्यप्रकाशविषयानुभूतिपर्यालोचनया तदनुभवसाधनानुग्रहो दूषितः । इदानीमनुग्रहप्रकारविशेषपर्यालोचनया दूषणमाह ( स हीति ) द्विविधस्याप्यनुपपत्तिं दर्शयितुं प्रथमं द्वैविध्यमाह ( ज्ञेयस्येति ) शमदमादेः शास्त्रानुग्राहकत्वोक्तिः परमते न; तद्धि उपासनानुग्राहकम्। ननु स हि द्विधेति वक्तुमयुक्तम्, अनुग्रहस्य कोटिद्वयेऽप्यनन्तर्भावात्. अनुमानादेर्व्याप्तिग्रहादिरनुग्रहोऽप्यस्तीति ।

॥ तत्त्वटीका ॥

एव सिद्ध्यति, स्वमते च प्रत्यक्षधीहेतुभूतविषयोत्पादकमुत्पादनद्वारा व्यञ्जकतयैवोपचर्येत, उत्पत्तिकोटिरिहाशङ्क्य निरस्ता। स्वतस्सिद्धतया—अनादितयेत्यर्थः । अनन्योत्पाद्यत्वाभ्युपगमात्— सौगतवदुत्पाद्यत्वस्यानङ्गीकारादिति यावत् । तदिष्टं कोट्यन्तरवन्निषेधति (नापीति) तत्प्रकाशनम्—आत्मगोचरप्रकाशजननम्, इदञ्च ज्ञापकत्वेन कारणत्वेन वा भाव्यम् ( अननुभाव्यत्वात् ) स्थापितं ह्येतत्त्वयैवेति भावः । कोट्यन्तरेऽप्युक्तदोषानतिवृत्तिमाह (तत एवेति) चोऽत्र भिन्नक्रमः । अस्मिन् पक्षे दत्तोत्तरत्वमप्युत्तरं व्यञ्जयितुं विकल्पयति ( स हि द्विधेति ) अत्र पूर्वः कल्पो दृष्टोपकाररूपकारणानुग्रहमुपलक्षयति, उत्तरस्त्वदृष्टमुखेन, कर्तृ-

हेतुत्वेन वा, यथा जातिनिजमुखादिग्रहणे व्यक्तिदर्पणादीनां नयनादीन्द्रियसम्बन्धहेतुत्वेन; बोद्धृगतकल्मषापनयनेन वा, यथा परतत्त्वावबोधनसाधनस्य शास्त्रस्य शमदमादिना । यथोक्तम् "करणानामभूमित्वान्न तत्सम्बन्धहेतुता"इति ॥

* श्रुतप्रकाशिका *

उच्यते,—करणानुग्रहः कर्त्रनुग्रहश्चेति कोटिद्वयमेव, व्याप्तिग्रहणमपि करणानुग्रहान्तर्भूतम् । यद्वा, दृष्टमुखेन चानुग्रहः अदृष्टमुखेन चेति द्विधा, व्याप्तिग्रहणमपि दृष्टमुखेनानुग्रहः, तस्मादिन्द्रियसम्बन्धहेतुत्वेनेत्येतत्करणानुग्रहस्य दृष्टमुखेनानुग्रहस्य चोपलक्षणम्, तत्राहङ्काराभिव्यञ्जयायास्संविदोऽनुमानविषयत्वासम्भवादिन्द्रियसम्बन्धहेतुत्वेनेत्युक्तम् . बोद्धृगतकल्मषापनयनेनेति कर्त्रनुग्रहस्यादृष्टमुखेनानुग्रहस्य चोपलक्षणमुक्तम् । आत्मसिद्धिग्रन्थेऽप्ययमेव भावः । एवं द्वैविध्यदर्शनेन द्विधाभूतोऽप्यनुग्रहोऽहङ्कारस्य न सुवच इत्यनुषङ्गेण योजना । कथमत्र द्विविधस्याप्यनुग्रहस्यानुपपत्तिरिति शङ्कायामात्मसिद्धिग्रन्थमाह ( यथोक्तमिति ) 'करणानामभूमित्वान्न तत्सम्बन्धहेतुता''इति, हेतुत्वलक्षणानुग्रहोऽनुपपन्न इति दर्शितः, बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्न ग्रन्थस्था । अत्र केचिदाचार्या एवं व्याचक्षते, शमादेरनुग्राहकत्वं शास्त्रसिद्धम्, न तथाऽहङ्कारस्यानुग्राहकत्वं शास्त्रसिद्धमिति स्फुटत्वान्न ग्रन्थे कण्ठोक्त्या निरास इति । पूर्वार्द्धोदाहरणेन श्लोकस्योत्तरार्द्धे बोद्धृगतकल्मषापनयनलक्षणानुग्रहानुपपत्तिर्द्रष्टव्येत्याचार्याः । तदिदमुत्तरार्द्धम् 'अहमर्थस्य

* तत्त्वटीका *

संस्कारद्वारकः । तन्तु कारणसम्भाव्यानुग्रहान्तरं शङ्कते ( यथेति ) प्राच्य इहाऽऽशयः, संयुक्तसमवायेन जातिग्रहणे व्यक्तिसंयोगोऽपेक्षित इत्येतावता व्यक्तिनिदर्शनम् । दर्पणादीनान्तु नयनरश्मिप्रतिस्रोतःप्रवर्तमानद्वारा व्यक्तिदर्पणादीनान्तु व्यञ्जकत्वमेव नास्तीति वक्ष्यतीति । कल्मषशब्द इह कषायशब्दोक्तं कृत्स्नमभिप्रैति । अनयोराद्यस्याऽऽत्मसिद्धौ दूषणमुक्तमित्याह ( यथोक्तमिति ) अभूमित्वात्—अविषयत्वादित्यर्थः । द्वितीये तु शब्देन प्रत्यक्षे

**किञ्च—अनुभूतेरनुभाव्यत्वाभ्युपगमेऽप्यहमर्थेन न तदनुभवसाधनानुग्रहः सुवचः, स ह्यनुभाव्यानुभवोत्पत्तिप्रतिबन्धनिरसनेन भवेत्। यथा रूपादिग्रहणो-**

* श्रुतप्रकाशिका *

बोद्धृत्वान्न स तेनैव शोध्यते' इति । एकस्यैव स्वप्रतियोगितया शोध्यत्वं शोधकत्वं चानुपपन्नमित्यर्थः । अयन्तु भाष्याभिप्रायः, अहमर्थस्य बोद्धृगतकल्मषापनयने कर्तृत्वं किं स्वरूपेण ? उतादृष्टकिञ्चित्कारमुखेन ? प्रथमे कर्मकर्तृविरोधः, एकस्यैव स्वापेक्षया शोध्यशोधकत्वानुपपत्तेः । द्वितीये निष्प्रमाणकत्वम्, न ह्यन्तःकरणस्यादृष्टवशादन्तःकरणशुद्धिरित्यत्र प्रमाणमस्तीति पूर्वमिन्द्रियगोचरत्वानभ्युपगमेन दूषणमुक्तम्॥

अथानुभाव्यत्वाभ्युपगमेन दूषणमाह (किञ्चेति) अनुग्रहस्वरूपं शिक्षयति (स हीति) व्यक्तिदर्पणादावनुग्रहप्रकारान्तरे दृष्टे ऽपि कथं प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः ? उच्यते ; जातिव्यक्त्योर्नियतधर्मधर्मिभावेन व्यक्तिर्ज्जातेर्व्यञ्जिका, न तथा अहङ्कारानुभवयोर्नियतधर्मिधर्मभावोऽस्ति; स तु परेणैव निरस्तः । मूर्तद्रव्यभूतश्चाक्षुषरश्मिप्रतिहतिहेतुर्दर्प्पणो मूर्तद्रव्यभूतचाक्षुषरश्मिमुखेन सम्बन्धयति, न तथाऽहङ्कारो मूर्तद्रव्यं कस्य चित्प्रतिहतिहेतुरिति वक्ष्यमाणमिहानुग्रहप्रकारान्तरानुपपत्तिमभिप्रेत्य प्रतिबन्धनिरसनरूपानुग्रह एव परिशेषितः । ईदृशानुग्रहे दृष्टान्तमाह (यथा रूपादीति) ततः किमित्यत्राह (न चेहेति)

ॐ तत्त्वटीका ॐ

ननयितव्ये शमादिरनुग्राहक इति निष्प्रमाणकारणकल्पनासिद्धेर्दूषणस्य दुष्टत्वात्तदुक्तिरिह नादृता। " अहमर्थस्य बोद्धृत्वात् न स तेनैव शोध्यते " इत्युक्तार्थेन दूषणम् । 'अहमर्थस्ये'ति काकाक्षिवत्, अहङ्कारातिरिक्तस्य बोद्धुरनभ्युपगमात्तस्य च स्वरूपेण स्वकल्मषविरोधित्वे कल्मषनिबर्हणार्थं कर्तव्यविधयो निरर्थकाः स्युरिति भावः । अनुभूतिस्वभावात्तदनुग्रहप्रकारस्वभावाच्च, अहङ्कारस्य व्यञ्जकत्वं निरस्तम् ॥

अथाऽनुभूतेरनुभाव्यत्वान्वारोहेऽप्यहङ्कारस्वभावात्तस्य करणानुग्राहकत्वं दुर्वचमिति वक्तुमाह (किञ्चेति) अत्र कोट्यन्तराणां दूषितत्वात्परबुद्ध्यनुसारेण सम्भावितमनूद्य दूषयति (स हीत्यादिभिस्त्रिभिः) प्रतिबन्ध इह विवक्षितकार्य्योपयुक्त-

त्पत्तिनिरोधिसन्तमसनिरसनेन चक्षुषो दीपादिना । न-चेह तथाविधं निरसनीयं सम्भाव्यते । न तावत्संविदाऽऽत्मगतं तज्ज्ञानोत्पत्तिनिरोधि किञ्चिदप्यहङ्कारापनेयमस्ति । अस्ति ह्यज्ञानमिति चेत्; न, अज्ञानस्याहङ्कारापनोद्यत्वानभ्युपगमात् । ज्ञानमेव ह्यज्ञानस्य निवर्त्तकम् ॥ न च संविदाश्रयत्वमज्ञानस्य सम्भवति; ज्ञानसमाना-

* श्रुतप्रकाशिका *

तदुपपादयति ( न तावदिति ) किं प्रागभावरूपमज्ञानम् ? किंवा भावरूपम् ? उतान्यन्निरसनीयमुच्यते ? इतिशिरस्त्रयमभिप्रेत्य तावच्छब्दः प्रयुक्तः । न तावदिति-ग्रन्थेनान्यन्निरसनीयं निरस्तम् । यद्वा, अहङ्कारस्याज्ञाननिरासकत्वमज्ञानस्य संवित्सम्बन्धित्वं चोभयमनुपपन्नमित्यभिप्रेत्य प्रथममहङ्कारापनेयत्वमज्ञानस्य प्रतिक्षिपति—न तावदिति । अहङ्कारापनेयमज्ञानमस्तीति शङ्कते ( अस्ति हीति ) दूषयति (नेति) अज्ञानशब्दो भावरूपस्य चाभावरूपस्य च साधारणः, दूषणमपि साधारणम्, द्विविधस्याप्यज्ञानस्य अहङ्कारापनोद्यत्वाभावात् किं निवर्तकमित्यत्राह ( ज्ञानमेव हीति ) प्रागभावस्यापि ज्ञानोत्पत्तिर्निवर्तिका । भावरूपस्यापि ज्ञाननिवर्त्यत्वं पराभ्युपेतम् , एवमज्ञानस्य संविदाश्रयत्वे सत्यप्यहङ्कारापनोद्यत्वायोगात्तन्निरसनरूपानुग्रहो न सम्भवतीत्युक्तम् ॥ अथाज्ञानस्य संविदाश्रयत्वं चानुपपन्नमित्याह (नचेति) संविदाश्रयत्वम्—संवित्सम्बन्धित्वमित्यर्थः । आश्रयणम् सम्बन्धः, सम्बन्धश्च

* तत्त्वटीका *

स्वनिवृत्तिपदार्थः , ततश्च तथाभूतं द्रव्यमिति परैरेवाऽङ्गीकृतम् । अत्र निरसनीयस्य संविद्गतत्वं, तत्तिरोधायकत्वमहङ्कारापनोद्यत्वञ्च दूष्यतयोपक्षिपन्नुद्भटदोषं चरमं दूषयति ( न तावदिति ) गतशब्दोऽत्र मणौ मालिन्यवदाधेयतया [दाच्छादकतया] प्राप्तं वक्ति । किञ्चिदपि—रजस्तमःकलुषादिकमित्यर्थः । परमतप्रसिद्ध्या शङ्कते ( अस्ति हीति ) तत्र स्वमतविरोधं प्रमाणविरोधञ्चाभिप्रेत्याह ( नेति ) प्रथमं विवृणोति ( अज्ञानस्येति ) द्वितीयं विवृणोति ( ज्ञानमिति ) अज्ञानस्याहङ्कारेण निवृत्तौ किं पश्चान्निष्फलेन ज्ञानेन तदर्थप्रवृत्त्या चेति भावः । भावरूपे चाऽज्ञाने

श्रयत्वात्तत्समानविषयत्वाच्च ज्ञातृभावविषयभावविरहिते ज्ञानमात्रे साक्षिणि नाज्ञानं भवितुमर्हति; यथा ज्ञानाश्रयत्वप्रसक्तिशून्यत्वेन घटादेर्नाज्ञानाश्रयत्वम् ।

* श्रुतप्रकाशिका *

कर्मत्वेनाश्रयत्वेन चेत्युभयविधसम्बन्धपर आश्रयशब्दः । 'आश्रयश्चेतसो ब्रह्मे'त्यादिप्रयोगाच्चाश्रयशब्देन विषयस्याप्युपस्थापनं युक्तम् । संविदो ऽज्ञानसम्बन्धः किमाश्रयतया ? उत विषयतया ? उभयथाऽपि सम्बन्धोऽनुपपन्न इत्यर्थः । कुत इत्यत्राह (ज्ञानेति) ततः किमित्यत्राह (ज्ञातृभावेति) साक्षिणि—द्रष्टुरेव साक्षित्वम्, ज्ञप्तेस्तु साक्षित्वमपि व्याहतं भवतीत्यभिप्रायः । भवितुमर्हतीतिनिर्देशेन आश्रयतया विषयतया वा सम्बन्धमात्रं विवक्षितम्, अनेन व्यतिरेकव्याप्तिर्दर्शिता भवति । संविदाश्रयत्वाभावे अन्वयव्याप्तिं दर्शयति (यथेति) अज्ञानाश्रयत्वं हि ज्ञानप्रागभावाश्रयत्वमनिर्वचनीयाज्ञानाश्रयत्वं वा तद्धटादौ नास्तीत्यर्थः । (ज्ञानाश्रयत्वप्रसक्तीति) ज्ञातुरप्यज्ञानाश्रयत्वं ज्ञानाश्रयत्वं च कालभेदादविरुद्धमिति भावः । ज्ञानात्यन्ताभावाश्रयत्वं हि घटादेः, ज्ञानं नाज्ञानाश्रयः, न चाज्ञानविषयः । अज्ञानाश्रयत्वे तद्विषयत्वे चोपगम्यमाने ज्ञातृत्वज्ञेयत्वप्रसङ्ग इति प्रतिकूलतर्क उक्तो भवति;

* तत्त्वटीका *

सममिदं दूषणम् ॥ अथ संविदात्मगतमित्युक्तं दूषयति (नचेति) संवित् आश्रयो यस्य तत् संविदाश्रयम्, आश्रयशब्द इह विषयतया आधारतया च सम्बन्धित्वमाह (ज्ञानस्येत्यादिना) तदुभयनिषेधहेतुद्वयोक्तेः, विषयेऽप्याश्रयशब्दः "चेतसो यो व्याप्याश्रयः' 'आश्रयश्चेतसो ब्रह्मे''ति प्रयुज्यते । शुक्तिकार्यज्ञानं हि यदाश्रितं यद्विषयञ्च तदाश्रितेन तद्विषयेण च बाधकज्ञानेनाऽपोद्यते । इह चाज्ञानाश्रयत्वे तद्विषयत्वे च ज्ञातृत्वज्ञेयत्वे प्रसज्येयातामिति भावः । उक्तस्यासम्भवस्य व्यापकाभावफलितत्वमाह (ज्ञात्रिति) स्वरूपतो धर्मतोऽपि तिरोधेयत्वासम्भवाय ज्ञानमात्रत्वोक्तिः । साक्षित्वोक्तिश्च स्वस्य परस्य वा तिरोधाने स्वपरसाक्षित्वं न स्यादिति सूचनार्था । अत्राऽज्ञानाधारत्वांशस्याऽसम्भवं निदर्शनेन निर्धारयति (यथेति) यद्यपि ज्ञानात्यन्ताभावरूपमज्ञानं घटादौ ज्ञानमात्रे चास्ति, तथापि तस्य तत्स्वरूपानुबन्धितया

तथा ज्ञानमात्रेऽपि ज्ञानाश्रयत्वाभावेन नाज्ञानाश्रयत्वं स्यात्। संविदोऽज्ञानाश्रयत्वाभ्युपगमेऽपि आत्मतयाऽभ्युपगतायास्तस्या ज्ञानविषयत्वाभावेन ज्ञानेन न तद्गताज्ञाननिवृत्तिः। ज्ञानं हि स्वविषय एवाज्ञानं निवर्तयति, यथा रज्ज्वादौ; अतो न केनापि कदाचित्संविदाश्रयमज्ञानमुच्छिद्येत। अस्य च सदसदनिर्वचनीयस्याज्ञानस्य स्वरूपमेव दुर्निरूपमित्युपरिष्टाद्वक्ष्यते। ज्ञान-

* श्रुतप्रकाशिका *

एवमज्ञानाश्रयत्वाऽनभ्युपगमेन दूषणमुक्तम्। तदभ्युपगमेन दूषणमाह (संविद इति) अवच्छिन्नज्ञानस्यानुभाव्यत्वेऽङ्गीकृतेऽप्यनवच्छिन्नस्यात्मभूतस्य ज्ञानस्यानुभाव्यत्वानभ्युपगमादित्यभिप्रायेणाह (आत्मतयाऽभ्युपगताया इति) ज्ञानविषयस्यैवाज्ञाननिवृत्तिं सदृष्टान्तमाह (ज्ञानं हीति) यद्यविषयेऽप्यज्ञाननिवृत्तिः तर्हि शुक्तिज्ञानेन सर्वभ्रमनिवृत्तिः स्यादित्यभिप्रायः, एवं ज्ञाननिवर्त्याज्ञानाश्रयत्वे ज्ञानविषयत्वप्रसङ्ग इत्युक्तं भवति। आश्रयत्वाभ्युपगमेनोक्तदूषणं निगमयति (अत इति) त्वयाऽहङ्कारापोह्यत्वेनोक्तमज्ञानं किं सदसदनिर्वचनीयम्? उत ज्ञानप्रागभावरूपम्? इति विकल्प्याह (अस्येति) द्वितीयं प्रतिवक्ति (ज्ञानप्रागभावेति)

ॐ तत्त्वटीका ॐ

निवर्त्यत्वाभावादिह परेष्टाज्ञानाधारत्वासम्भव उच्यते। भ्रान्त्या तत्सम्भवाभ्युपगमे अनिर्मोक्षप्रसङ्गमाह (संविद इति) ज्ञानविषयत्वे तु जडत्वादिप्रसङ्गः त्वयैवोक्त इतिभावः। अज्ञानस्य स्वविरोधिना निवर्त्यत्वे किं संविदो वेद्यत्वेनेत्यत्राह (ज्ञानमिति) स्वविषये–स्वविषयस्य छादक एवेत्यर्थः। तन्निदर्शनेन व्यनक्ति (यथेति) मिथ्याभूतं रज्जुसर्पादिकं स्वविषय एव हि पूर्वभावं निवर्तयतीत्यव्याहतम्; एवं विषयतया आश्रयतया चाज्ञानसम्बन्धित्वे मुक्त्यसम्भवं निगमयति (अत इति) अत्र परेष्टभावरूपधर्मसिद्धौ हि तद्धर्मतयोक्तानां सम्भवासम्भवौ चिन्त्यौ, साऽपि नास्तीत्याह (अस्य चेति) तिष्ठतु मादिष्टं भावरूपमज्ञानं ज्ञानप्रागभावरूपाज्ञाननिरासेन अहङ्कारस्तज्ज्ञानसाधनमनुगृह्णात्वित्यत्र ज्ञानमेव ह्यज्ञानस्य निवर्तकमित्य-

प्रागभावरूपस्य चाज्ञानस्य ज्ञानोत्पत्तिविरोधित्वाभावेन न तन्निरसनेन तज्ज्ञानसाधनानुग्रहः, अतो न केनापि प्रकारेणाहङ्कारेणानुभूतेरभिव्यक्तिः ॥

नच स्वाश्रयतयाऽभिव्यङ्ग्याभिव्यञ्जनमभिव्यञ्जकानां स्वभावः, प्रदीपादिष्वदर्शनात्, यथावस्थितपदार्थप्रतीत्यनुगुणस्वाभाव्याच्च ज्ञानतत्साधनयोरनुग्राहकस्य च । तच्च स्वतः प्रामाण्यन्यायसिद्धम् ॥ न च दर्पणादि-

* श्रुतप्रकाशिका *

विरोधिशब्देन प्रतिबन्धकत्वं विवक्षितम्, न सहानवस्थानमात्रम्। अभिव्यक्तेर्दुर्भिरूपत्वं निगमयति ( अत इति ) केनापि प्रकारेण—उत्पादकत्वेन वा प्रकाशकत्वेन वा तदनुभवसाधनानुग्राहकत्वेन वेत्यर्थः ॥

अथ स्वात्मस्थतयाऽभिव्यक्तिं दूषयति ( नचेति ) व्यभिचारमाह ( प्रदीपादिष्विति ) हेत्वन्तरं चाह ( यथावस्थितेति ) प्रतीतिः—व्यवहारानुगुण्यम्, तदनुगुणाज्ज्ञानादीनां स्वभावादित्यर्थः । तच्चेति तदेवोपपादयति । प्रामाण्याप्रामाण्यविषयाश्चत्वारः पक्षाः । प्रामाण्याप्रामाण्ये द्वे च परतः, द्वे च स्वतः । प्रामाण्यं परतोऽन्यत्स्वतः, प्रामाण्यं स्वतोऽन्यत्परत इति प्रथममनुपपन्नम्, द्विस्वभावत्वादि-

* तत्त्वटीका *

नेन दत्तोत्तरत्वेऽपि दूषणान्तरं दर्शयितुमाह ( ज्ञानेति ) प्रागभावस्य प्रतियोगिना समानकालत्वमेव हि विरुद्धम्, प्रतियोगिनम्प्रति तु नियतपूर्वतया हेतुत्वैवेति भावः। अहङ्कारस्य व्यञ्जकत्वायुक्तिं विकल्पकोट्यन्तरासम्भवव्यक्त्यै निगमयति (अत इति) व्यङ्क्तृव्यङ्ग्यव्यक्त्यादिस्वभावसमीक्षया दर्शितानां दोषाणां दुस्तरत्वादित्यर्थः । केनापि— उत्पादनद्वारा ज्ञापकतया तत्करणतया तदनुग्राहकतया चेत्यर्थः ॥

स्वाश्रयतयाऽभिव्यञ्जनमभिव्यञ्जकानां स्वभाव इति यत्प्रागुक्तं तत्प्रामाण्यं स्वत इति वदद्भ्योऽबाह्येभ्यो न रोचेतेत्यभिप्रायेण दूषयति ( नचेति ) स्वभावक्लृप्तिरियं व्यभिचारादयुक्तेत्याह ( प्रदीपादिष्विति ) आदिशब्द इन्द्रियलिङ्गागमसंस्काराणां तदनुग्राहकाणाञ्च सङ्ग्रहार्थः । संशयादिषु व्यभिचारेऽपि यथा धियां प्रमात्वं

* श्रुतप्रकाशिका *

प्रसङ्गात् । प्रामाण्याप्रामाण्ये अन्यत्र विद्येते चेत्, तत्सम्बन्धात् ज्ञानस्य तथात्वं तत्सम्बन्धाभावेऽनुभयत्वं च युक्तम् अनुष्णाशीतवत्, अन्यत्र तयोरविद्यमानत्वात् परतस्त्वमनुपपन्नम् । प्रामाण्यबुभुत्सापरम्परयाऽनवस्थाप्रसङ्गाच्च द्वयोरपि स्वतस्त्वमनुपपन्नम्, विरुद्धधर्मत्वेन व्याघातात् । न च व्यक्तिभेदादबाधः, इयं प्रामाण्याश्रयव्यक्तिरियं नेति नियामकाभावात्. अप्रामाण्यस्यैव स्वतस्त्वमनुपपन्नं प्रामाण्यस्यैव भूयस्त्वात् अन्यस्याऽभूयस्त्वाच्च. भूयसां स्वतस्त्वमल्पीयस औपाधिकत्वञ्च हि युक्तम्, घटपटादिज्ञानेषु शुक्तिरजतादिज्ञानानामिदमंशेष्वपि प्रामाण्यदर्शनात्तस्य भूयस्त्वम्; अतः स्वतःप्रामाण्यं परतोऽप्रामाण्यमिति क्वचिदात्मस्थतयाऽभिव्यञ्जनमभ्युपेत्य

७ तत्त्वटीका ७

स्वभावः प्राचुर्यादुच्यते तथेहापि स्यादितिशङ्कानिरासाय बहुवचनम् । स्वभावनिष्कर्षश्चाऽत्र विपरीत इत्याह ( यथावस्थितेति ) प्रतीतशब्द इह व्यवहारयोग्यतापादनपरः । स्वाभाव्यम्– स्वभाव एव । अयम्भावः,—

मुक्तनित्येश्वरधियां प्रमात्वं ह्यनुपाधिकम् ।
क्षेत्रज्ञधीपरिच्छेद—भ्रमत्वादि च दोषजम् ॥ ७ ॥
भ्रान्तावपि यथार्थत्व—मधिष्ठानादिषु स्थितम् ।
अनुप्रविष्टबौद्धैर—प्यवशादिदमीरितम् ॥ ७ ॥
अनुपप्लवसूतार्थ—स्वभावस्य विपर्ययैः ।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥ ७ ॥ इति ॥

उक्तस्यार्थस्य जैमिन्यादिसम्मतत्वेन मीमांसानिष्ठैर्दुस्त्यजत्वं सूचयति ( तच्चेति )

\+ .... .... .... ....
.... .... .... .... ....

मानत्वामानत्वे स्वत इति साङ्ख्यः कणाशनाः परतः ।
पूर्वं परतो बौद्धाः परन्तु मीमांसका द्वयं केचित् ॥ ७ ॥
सौगताश्चापि चार्वाकाः साङ्ख्यकाणादवर्त्तगाः ।
प्रामाण्यज्ञप्तिरप्येवं बहुधावादि वादिभिः ॥ ७ ॥

\+ अत्र ग्रन्थो गलितः ॥

मुखादेरभिव्यञ्जकः, अपि तु चाक्षुषतेजःप्रतिफलनरूप-
दोषहेतुः । तद्दोषकृतश्च तत्रान्यथावभासः। अभि-
व्यञ्जकस्त्वालोकादिरेव ॥ न चेह तथाऽहङ्कारेण संविदि

* श्रुतप्रकाशिका *

व्यभिचार उक्तः ॥ अथ क्वचिदपि तन्नास्तीत्याह ( नचेति ) तर्हि मुखदर्शनाय दर्प्पणादिकं नोपादीयेतेत्यत्राह ( अपि त्विति ) प्रतिफलनस्य दोषत्वमन्यथाज्ञान-हेतुत्वादित्याह ( तद्दोषेति ) कस्तत्राभिव्यञ्जक इत्यत्राह ( अभिव्यञ्जकस्त्विति ) अहङ्कारस्य मूर्त्तस्वच्छस्थूलद्रव्यत्वाभावात्संविदो ज्ञेयत्वाभावादचाक्षुषत्वाच्चाहङ्कारेण संविद्यविषयभूतायां तद्ग्राहकवस्तुप्रतिफलनदोषो न सम्भवतीत्याह ( नचेहेति )

छ तत्त्वटीका छ

अत्र दृष्टान्तैकदेशे व्यञ्जकत्वं मृग्यम्, कुतः स्वनिष्ठतया व्यञ्जनमित्यभि-प्रायेणाह (नचेति) कुतस्तर्हि सर्वैः तेषु व्यञ्जकतोक्तिरित्यत्राह (अपित्विति) दृष्टा-वभासकरणभूतदृष्टिप्रसरहेतुतामात्रेण व्यञ्जकत्वोपचार इतिभावः । अगृहीत-ग्रहणोपायस्य दीप [ तदीय ] दोषत्वं व्यनक्ति ( तद्दोषेति )

प्रतिबिम्बेऽल्पतादीना–माभिमुख्यस्थितेरतः ।
यथार्हं वासनानाञ्च दोषतैवं व्यवस्थिता ॥ छ ॥
सव्यासव्यविपर्य्यास–प्रभृतेरपि सम्भवः ।
+.... .... .... .... ....

एवं तर्हि ×

+ दोषदर्पणादेरपि धीहेतवोऽन्यथा स्युः ।
धीहेतवो यथा दोषा + श्चवद्गागामित्यसत् ॥ छ ॥
अन्वयव्यतिरेकाद्यैर्हेतुस्स इति निश्चयात् ।
तत्त्वधीरोधसङ्कोचे दोषास्स्युर्भ्रान्तिहेतवः ॥ छ ॥
अन्वयव्यतिरेकाभ्यां दोषादिर्हि विविच्यते ॥– इत्याशयः ।

तत एव दर्पणादेरपि व्यञ्जकत्वं स्यादित्यत्राह ( अभिव्यञ्जक इति ) (आलो-

× तत्र तत्र ग्रन्थो गलितः ॥

स्वप्रकाशायां तादृशदोषापादनं सम्भवति। व्यक्तेस्तु जातिराकार इति तदाश्रयतया प्रतीतिः, न तु व्यक्ति-व्यङ्ग्यत्वात्; अतोऽन्तःकरणभूताहङ्कारस्थतया संवि-दुपलब्धेर्वस्तुतो दोषतो वा न किञ्चिदिह कारणमिति नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वा। तस्मात्स्वत एव

* श्रुतप्रकाशिका *

व्यक्तौ जातिप्रतीतिर्नियतधर्मधर्मिभावान्न तु व्यङ्ग्यत्वादित्याह (व्यक्तेरिति) एत-द्दर्पणव्यक्तिनिर्वाहद्वयं हृदि निधाय पूर्वं प्रतिबन्धनिरसनरूपानुग्रहो दूषितः। धर्म-धर्मिभावेन वस्तुतस्तात्स्थ्येनोपलब्धिर्व्यक्तौ, दर्प्पणे तु प्रतिफलनरूपदोषात्; एवं पर-पक्षे न सम्भवतीत्याह (अत इति) वस्तुतः कारणं धर्मधर्मिभावः, दोषस्तु ता-त्स्थ्येनोपलब्धिकारणं मूर्तस्वच्छस्थूलद्रव्यत्वम्, उभयमप्यहङ्कारे नास्तीत्यर्थः। वस्तुतः कारणाभावान्न ज्ञातृत्वं विद्यते, दोषरूपकारणाभावान्नोपलभ्यते चेत्यभिप्रायेणाह (नाहङ्कारस्य ज्ञातृत्वं तथोपलब्धिर्वेति) ज्ञातुरात्मत्वं निगमयति (तस्मादिति)

* तत्त्वटीका *

कादिरेवेति) आलोकादिसहितं प्रतिफलितं चाक्षुषन्तत्तेज इत्यर्थः। शुक्तिरज्ज्वादि-वदधिष्ठानमात्रेण व्यञ्जकत्वं न शक्यमित्यवधारणाभिप्रायः। अस्तु अविद्यादोषा-र्थस्य दोषान्तरकन्द [र] स्याऽहङ्कारस्याऽऽदर्शवद्दोषहेतुत्वमिति शङ्कां निरस्यति (नचेहेति) स्वरूपप्रकाशे तत्प्रकाशान्तरकरणे वा विकृत्यापादनमिह दुर्वचनमिति भावः। दृष्टान्तान्तरेऽप्यन्यथासिद्धिमाह (व्यक्तेरिति) तुशब्दो दोषापादका-द्वैषम्यार्थः। आकारः— तदाश्रितस्वभाव इति यावत्। तदाश्रयतया प्रतीतिः इत्यनेन याथार्थ्यं व्यज्यते। ननु यथा दीपादयः स्वधर्मानपि प्रकाशयन्ति, तथा व्यक्तिरपि जातिमित्यत्राह (नत्विति) व्यक्तिजात्योरत्रैकसामग्रीवेद्यत्वमेव, इन्द्रिय-सम्बन्धस्तु व्यक्तिद्वारे [रैवे] त्येतावतापि न सा व्यञ्जिका; व्यक्तिशब्दोऽत्र न व्यञ्जकत्वार्थ इत्याशयः। अहङ्कारस्य स्वाश्रयतया संविद्व्यञ्जकत्वानुपपत्तिमुपसंहरति (अत इति) उपलम्भयुक्त्यागमैर्विरोधद्योतनायान्तःकरणभूतत्वोक्तिः। साङ्ख्य-मृषावादिनोर्मतभेदं जातिमुखादेरिव धर्मत्वप्रतिफलनरूपहेतुद्वयञ्चाभिप्रेत्य—वस्तुतो

ज्ञातृतया सिद्ध्यन्नहमर्थ एव प्रत्यगात्मा, न ज्ञप्तिमात्रम् । अहम्भावविगमे तु ज्ञप्तेरपि न प्रत्यक्त्वसिद्धिरित्युक्तम् ॥

तमोगुणाभिभवात्परागर्थानुभवाभावाच्चाहमर्थस्य

* श्रुतप्रकाशिका *

ज्ञप्तेरात्मत्वमयुक्तम्, अहन्त्वाभावे प्रत्यक्त्वायोगादित्याह ( अहम्भावविगम इति ) अहमितिव्यवहारानुगुणभासनविरहे स्वस्मै भासमानत्वं न स्यात्, अतः प्रत्यक्त्वमप्यहमर्थस्यैवात्मत्वसाधकमित्यर्थः ॥*॥ अथ सुषुप्तावहमर्थस्फुरणमस्तीति साधयितुं वेदान्तावलम्बिभिः सर्वैः स्वयंज्योतिष्ट्वश्रुत्यनुसारात् सुषुप्तावात्मस्फुरणमभ्युपेत्यम्, तत्र "नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मि" इतिश्रुत्या मामप्यहं न ज्ञातवानिति परामर्शाच्च नाहमर्थानुभवः, अतोऽनुभूतिस्फुरणमेव तदानीमितिशङ्कायामहमर्थस्याविशदस्फुरणमस्तीति सोपपत्तिकं प्रतिजानीते ( तम इत्यादिना ) चस्त्वर्थः शङ्कानिवृत्तौ । तमोगुणाभिभवहेतुकात् परागर्थानुभवाभावात् स्फुटावभासाभावः । विविक्तप्रतिभासः—व्यावृत्तप्रतिभासः । अनेकविशेषणविशिष्टावभासः स्फुटावभासः, व्यावर्त्तकब्राह्मणत्वादिबाह्यधर्मविशिष्टत्वेन बुद्धिसुखाद्यान्तरधर्मविशिष्टत्वेन च प्रतिभासाभावात् सकलेतरव्यावृत्ततया स्फुटतया च प्रतिभासाभावः । केनाकारेण

छ तत्त्वटीका छ

दोषतो वा— इत्युक्तम् । ज्ञातृत्वं तथोपलब्धिरिति च तत्फलितव्यञ्जनम् । ज्ञातुरहमर्थस्यात्मत्वं ज्ञानमात्रस्याऽनात्मत्वञ्च निगमयति ( तस्मादिति ) ननु सुषुप्त्यादावहम्बुद्धिविरहेऽप्यात्मस्वरूपसत्त्वं वाद्यन्तरैरुक्तम् । एवमात्मतयाऽसदुक्तायां ज्ञप्तावपि स्यादित्यत्र 'अहमर्थो न चेदात्मा' इत्यादिना तत्रोत्तरस्योक्तत्वमाह ( अहम्भावेति ) ( ज्ञप्तेरपीति ) स्वप्रकाशत्वे सत्यपीति भावः ॥ छ ॥ ननु सुषुप्तावस्थायामहमर्थप्रकाशे जागरस्वप्नयोरिव तथा व्यवहारार्हत्वं स्यात्, नच तदस्तीत्यतो न तदा तत्प्रकाशः, तत्राह ( तमोगुणाभिभवादिति ) स्वकर्मोपात्तत्रिगुणद्रव्यस्थेन तमोगुणेन सविकल्पादिरूपमनोवृत्तिनिरोधादित्यर्थः । तत्फलितमाह ( परागर्थानुभवाभावादिति) परागर्थाः—परस्मा एव भासमानाः, ते चात्राऽऽत्मधर्माः, देहेन्द्रियविषयाश्च, तेषामान्तरबाह्यवर्गाणामननुभवात् । तद्व्यावृत्तया तद्विशिष्टतया

विविक्तस्फुटप्रतिभासाभावेऽप्याप्रबोधादहमित्येकाकारेणात्मनः स्फुरणात् सुषुप्तावपि नाहम्भावविगमः। भवदभिमताया अनुभूतेरपि तथैव प्रथेति वक्तव्यम्॥ न हि

* श्रुतप्रकाशिका *

स्फुरतीत्यत्राह ( अहमित्येकाकारेण स्फुरणादिति ) अहमिति न शब्दानुकारः, अपि त्वेतद्वाच्यार्थानुकारः, प्रत्यक्त्वाकारेण स्फुरणादित्यर्थः। एकशब्देनाहम्भावाविगमो विवक्षितः। यद्वा, एकाकारेण—सर्वात्मसाधारणाकारेणेत्यर्थः। प्रत्यक्त्वादिको हि सर्वात्मसाधारणः, सुखदुःखादयो देवत्वादयश्च न हि सर्वात्मसाधारणाः, सुषुप्तौ भासमान आत्मन्यहम्भावस्साध्यः, तथा स्फुरणं हेतुः। विशदावभासाभावादहमर्थस्फुरणं नास्तीत्यत्राह ( भवदभिमताया अनुभूतेरपीति ) न केवलमहमर्थस्फुरण एव अवैशद्यदोषः, अनुभूतिस्फुरणेऽपि स तुल्यस्त्वया वाच्यः, अतो विशदावभासाभावान्नास्तित्वं चेत् ज्ञप्त्यात्मनोऽपि तदानीं स्फुरणं न स्यात्, ज्ञातृज्ञेयोपश्लेषविरहात् स्फुटानवभास इति हि तदभ्युपगम इत्यभिप्रायः। मृषावादिभिर्वादान्तरैरपि जागरितावस्थायामेवाविशदावभासो निर्विकल्पकेऽङ्गीकृतः, ते यदि विशदावभासाभावादहमर्थास्फुरणं ब्रूयुः, तत्रापि निर्विकल्पके पृथक्पृथग्वस्तुमात्रावभासा-

ॐ तत्त्वटीका ॐ

च स्फुरणाभावोऽपि विविक्तेत्यादिना सूच्यते। एतेन नायमहमित्यादि वदन्त्याः श्रुतेरभिप्रायो विवृतः। स्वप्नजागरयोर्नानाकारविशिष्टदृष्ट्या तदविरोधार्थम् आप्रबोधादित्युक्तम्। विविक्तस्फुटावभासविरहे निर्विशेषभानं स्वीकृतं स्यादित्यत्रोक्तम्— अहमित्येकाकारेणेति। सुखित्वदुःखित्वादिभिर्दैवतमनुष्यत्वादिभिश्च विशेषणैर्विशिष्टस्फुरणविरहेऽपि अनुकूलप्रत्यक्स्वरूपत्वेन भानाद्विशिष्टस्फुरणसिद्धिरिति भावः। औपनिषदमानुमानिकं वा स्वप्रकाशत्वमात्मन इच्छद्भिः सर्वैः सुषुप्त्यादिष्ववभासनात् स्वात्मस्फुरणमङ्गीकृतम्। अत्राऽहम्भावशब्देनाहमर्थः प्रकाशश्चाभिप्रेतौ। ननु एवमविशदस्फुरणं तदानीमिदानीं वा नोपलभ्यत इत्यत्र प्रतिबन्द्योत्तरमाह ( भवदभिमताया इति ) त्वदभिमतायां प्रमाणानुमतिर्नास्तीति च भावः। एवमविशिष्टार्थविषयनिर्विकल्पवादिनामपि प्रतिबन्दिर्वक्तव्या तथैव

सुप्तोत्थितः कश्चिदहम्भाववियुक्तार्थान्तरप्रत्यनीकाकारा ज्ञप्तिरहमज्ञानसाक्षितयाऽवतिष्ठत इत्येवंविधां स्वापसमकालामनुभूतिं परामृशति। एवं हि सुप्तोत्थितस्य परा-

* श्रुतप्रकाशिका *

भ्युपगमो नोपपद्यते. अविशदवस्तुमात्रावभासः परैरप्रामाणिको निर्विकल्पके स्वीकृतः, अत्र तु "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इत्यादिश्रुत्यनुसारादविशदावभासः प्रामाणिकस्स्वीकृत इति भिदा; अतः सुषुप्तावात्मस्फुरणाभ्युपगमे अविशदावभासाभ्युपगमे च तुल्ये मृषावादिमतादपि स्वपक्षे प्रमाणानुगुण्यं विवक्षुः परपक्षे प्रमाणाननुगुणत्वं दर्शयति ( नहीति ) अहम्भाववियुक्तार्थान्तरप्रत्यनीकाकारा—ज्ञातृज्ञेयादिसमस्तविशेषरहितेत्यर्थः । प्रत्यक्त्वसिद्ध्यर्थं ज्ञप्तिरहमित्यत्राहंशब्दोपादानम् । स्वपक्षे परामर्शानुगुण्यमाह ( एवं हीति ) अयं परामर्शः सुषुप्तिकाले सुखरूपतयाऽनुभूतात्मगोचरः, अतीतकालसम्बन्धस्वापौ तु पूर्वकालानुभूतार्थप्रत्यभिज्ञानयोग्यानुपलब्धिभ्यामनुमेयौ, स्वतोऽनुकूलतयाऽवभासमानस्य अहमर्थस्यानुमानिककालस्वापवैशिष्ट्यगोचरप्रत्यभिज्ञाविशेषोऽयं परामर्शः सुखमहमस्वाप्समिति । एवं स्वपरमतयोः परामर्शानुगुण्यतदभावरूपवैषम्यमुक्तम्. श्रुतिस्वारस्यं च अस्मन्मते 'अत्रायं पुरुषः स्वयंज्योतिर्भवती'ति पुरुषशब्दश्रवणात्. पुरुषशब्दो न संविन्मात्रपरः 'एष हि द्रष्टा श्रोता रसयिता घ्राता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति

* तत्त्वटीका *

अस्पष्टतयेत्यर्थः । परोक्तेऽपि स्पाष्ट्याभावं मानाभावञ्च व्यनक्ति ( नहीति ) ननु ज्ञप्तिरहमित्यनुवादो न युक्तः परमते तथात्वाभावात्, 'अहम्भाववियुक्ते'त्येतद्वाक्यस्यादविरोधाच्च । मैवम्,— प्रत्यगात्मनः प्रकाशाभ्युपगमेऽहन्त्वेन स्फुरणं दुस्त्यजमिति सूचने तात्पर्यात् । अवतिष्ठत इति वर्तमानोक्तिः तत्सामीप्यात् । ननु परामर्शः प्रमाणान्तरेण न सेत्स्यतीत्यत्र विरुद्धपरामर्शबलात्तदसम्भवं, 'स्वावसरे निपुणतर'मिति प्रागुपक्षिप्ते स्वपक्षे मानञ्च दर्शयति ( एवमिति ) हिः प्रसिद्धिं परैरप्युदाहृतत्वञ्च द्योतयति । प्रकाशकस्वरूपस्य प्रदीपस्य [ यथा ] तथैव स्वप्रकाशत्वं श्रुत्यभीष्टमित्यभिप्रायेण 'सुखमह' मित्युक्तम् । तदेव विवृणोति

मर्शः सुखमहमस्वाप्सामिति। अनेन प्रत्यवमर्शेन तदानी-मप्यहमर्थस्यैवात्मनः सुखित्वं ज्ञातृत्वञ्च ज्ञायते ॥

* श्रुतप्रकाशिका *

ज्ञातुरेव पुरुषत्वश्रवणाल्लोके ज्ञातरि पुरुषशब्दप्रसिद्धेश्च । प्रत्यक्त्वसिद्धिश्चास्मन्मत एवेति वक्ष्यते । उक्तपरामर्शफलितमर्थमाह ( अनेनेति ) सुखमहमस्वाप्समिति परामर्शे सुखमित्यनेन तदानीमनुकूलतया भासमानत्वमनुसंहितं भवति अहमित्य-नेन स्वस्मै भासमानत्वरूपप्रत्यक्त्वं चानुसंहितं भवति, यथा मन्दमगच्छं मधुरमगाय-मिति परामर्शेन पूर्वं गमनगानाभ्यां सह तदानीन्तनं मान्द्यं माधुर्यं चानुसंहितं भवति तद्वदित्यर्थः । स्वस्मै स्वयमनुकूलमित्यानुकूल्यप्रतियोगित्वाभिप्रायेण सुखित्व-मित्युक्तम् . स्वस्मै भासत इति भानप्रतिसम्बन्धित्वरूपप्रत्यक्त्वाभिप्रायेण ज्ञातृत्वमित्युक्तं न तु धर्मभूतज्ञानस्फुरणात् , तत्तु विषयप्रकाशनवेलायां ज्ञातुरात्मनस्तथैव न सर्वेषां सर्वदा तथैवेति भाष्यस्वारस्यविरुद्धम्. 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगा' दिति सूत्रस्वारस्यविरुद्धञ्च, अस्मरणनियमाद्युपपत्तिविरुद्धञ्च,– संसारदशायां मनो-व्यापारविरहेऽपि ज्ञानस्यात्मविषयत्वम्, तच्चेन्द्रियद्वारेण व्यवस्थितमिति भाष्य-स्वारस्यविरुद्धं च; अन्यथा एषां सूत्रभाष्यवचसां सङ्कोचः स्यात्, स च सङ्कोचका-भावादनुपपन्नः, तस्मात्तदानीमात्मा प्रत्यक्त्वेनानुकूलत्वेनानुसंहित इति परामर्शफलि-तार्थः । सुखमहमस्वाप्समिति सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथ-मात्मविशेषणत्वमुच्यत इति चेत्; नैवम्,–क्रियायाः सुखाश्रयत्वायोगेन पुरुषद्वारा क्रियाविशेषणत्वस्य युक्तत्वादिति । आत्मनस्तदानीं न किञ्चिदवेदिषमित्यज्ञान-साक्षित्वेन स्थितिं वदता अज्ञानाश्रयभूताहमर्थानुभवोऽभ्युपगन्तव्यः, यथा प्रात-श्चत्वरे गजो नास्तीति परामर्शे पूर्वं गजाभावाश्रयभूतं चत्वरमनुसंहितं भवति तद्वत्.

* तत्त्वटीका *

( अनेनेति ) नात्र विषयानुभवसुखं धर्मभूतधीप्रसरत्वञ्च विवक्षितम्, सुषुप्तिव्या-घातात् 'पुँस्त्वादिव'दितिसूत्रविरोधात्, पूर्वापरभाष्यैः प्रतिक्षिप्तत्वाच्च ; अतः स्वस्यैवानुकूलतया स्वेनैव प्रकाशमानत्वे तात्पर्य्यम् । यद्धि यस्यानुकूलतया भाति स तेन सुखीति व्यवह्रियते, यस्य येन यद्भाति स तेन तस्य ज्ञातेति च ॥

## नच वाच्यम्, यथेदानीं सुखं भवति; तथा तदानीमस्वाप्समित्येषा प्रतिपत्तिरिति; अतद्रूपत्वात्प्रतिपत्तेः ।

* श्रुतप्रकाशिका *

मस्वाप्समिति परामर्शेन मन्दमगच्छमित्यत्र गमनवत्स्वापोऽपि तदाऽनुसंहितः स्यादिति चेन्न, यथा प्रातश्चत्वरे गजो नास्तीत्यत्र पूर्वं गजाभावाननुसन्धानेऽपि एवं परामर्शोपपत्तिः तद्वत्सकलज्ञाननिवृत्तिरूपस्वापस्य तदानीमननुसंहितत्वेऽप्येवं परामर्शोपपत्तेः, तत्र हि प्रातश्चत्वरमेवानुभूतम्, न गजाभावः, प्रतियोगिभूतगजास्मरणात्. पश्चात् गजः किं स्थित इति पृष्टेन योग्यार्थाननुस्मरणलिङ्गेनाभावोऽनुमीयते तद्वत्सकलज्ञाननिवृत्तिरूपस्वापोऽपि योग्याननुस्मरणलिङ्गेनानुमीयते । ननु सुखमहमस्वाप्समिति परामर्शस्वरूपे सति स्वापादेस्तदानीमननुभवः सुखित्वादेरनुभवश्च कथमुच्यते सर्वमप्यनुभूतं स्यात् न वा स्यात् ? नैतत्,—सुखमहमस्वाप्समित्यत्र यस्मिन्नंशे प्रतीतिस्वारस्यापवादकमस्ति तद्विषयप्रतिपत्तिस्वारस्यभङ्गेऽप्यनपोदितांशविषयप्रतिपत्तिस्वारस्यभङ्गायोगात्, तत्र स्वापदशायां योऽर्थो नानुभवितुं शक्यः तद्विषयप्रतिपत्तिस्वारस्यं भज्यते । यस्तु तदानीमनुभवयोग्यः तद्विषयप्रतिपत्तिस्वारस्यं तिष्ठत्येव. बाह्यान्तःकरणजन्यसमस्तज्ञानाभावरूपत्वात् स्वापस्तदाऽनुसन्धातुं न शक्यते. अनुसन्धानमस्तीति चेत् स्वाप एव न स्यात्, ऐन्द्रियिकसमस्तज्ञाननिवृत्त्यभावात्, नैवं सुखादेः प्रतिपत्त्यनुपपत्तिरिति यथोक्त एवार्थः ॥

अथाऽस्य परामर्शस्य परोक्तान्यथासिद्धिमनूद्य परिहरति ( न चेत्यादिना ) ( अतद्रूपत्वादिति ) एवमर्थः,—किं प्रतिपत्तिस्वारस्यात् ? उतानुपपत्त्याऽभ्युपगम्यते ? इति विकल्प्य अतद्रूपत्वात्प्रतिपत्तेरिति प्रतिपत्तिस्वारस्यं परिहृतम्, यथा मन्द-

* तत्त्वटीका *

सुषुप्तावहमर्थस्याऽहम्बुद्धेर्वा विनाशमिच्छतां चोद्यमनूद्य क्षिपति (नचेति) मन्दमगच्छम्, "तत्र ते न्यवसन् सुख"मित्यादिवत् क्रियाविशेषणस्य तात्कालिकत्वे स्वारस्यं प्रत्यक् [ सुख ] स्वरूपानादिसाक्षिप्रकाशे परसम्मतिञ्चाभिप्रयन् हेतुमाह ( अतद्रूपत्वादिति ) तदानीं सुखमस्वाप्सम्, इदानीं दुःख्यहमित्यपि कश्चित्परामृशत इति भावः । ननु सुखमहमस्वाप्समित्यंशत्रये स्वापांशस्य तदानीमनुभवे सुषुप्तिविरोधात्

नचाहमर्थस्यात्मनोऽस्थिरत्वेन तदानीमहमर्थस्य सुखित्वानुसन्धानानुपपत्तिः, यतः सुषुप्तिदशायां प्रागनुभूतं वस्तु सुप्तोत्थितो 'मयेदं कृतं मयेदमनुभूतमहमेतदवोच'मिति परामृशति। 'एतावन्तं कालं न किञ्चिदहमज्ञासिष'मिति च परामृशतीति चेत्; ततः किम्? न किञ्चिदिति कृत्स्नप्रतिषेध इति चेत्; न, नाहमवेदिषमिति

* श्रुतप्रकाशिका *

मगच्छं मधुरमगायमिति परामर्शवचनस्य, न हि तत्र यथेदानीं मान्द्यं माधुर्यं च भवति तथा अगच्छमगायमित्यर्थ उपपद्यते, अपितु गतिगानसमकालत्वमेव मान्द्यमाधुर्ययोरुपपन्नम् तद्वत् प्रत्यक्त्वसुखित्वे अपि स्वापसमकालीने इत्यर्थः॥ अथानुपपत्तिं परिहरति (नचेत्यादिना) अनुपपत्तिश्चात्मनोऽस्थिरत्वमनुभवाभावो वा। तत्र परामर्शेन स्थिरत्वमाह (यत इति) मयेदं कृतमित्यादयो मानसवाचिककायिकत्रिविधव्यापारविषयपरामर्शपराः। अथाहमर्थाननुभवसाधकनिषेधसामान्यविषयं परामर्शं शङ्कते (एतावन्तमिति) अहमर्थस्य निषेधविषयत्वाभावाभिप्रायेणाह (ततः किमिति) पराविवक्षितं शङ्कते (न किञ्चिदिति) परिहरति (नेति)

७ तत्त्वटीका ७

'प्रातर्गजाभावा'दिति न्यायेन स्मर्तव्यस्य स्मरणाभावात्प्रबोधाभावक्लृप्त्या तथा व्यवहार इत्यास्थेयं, तद्वद्दशान्तरयोरपि गतिस्स्यात्। मैवम्,—

अयुक्तिर्यस्य तत्रैव स्वारस्यदमनं क्षमम्।
भवेदविषये वृत्ति— रन्यथाऽतिप्रसङ्गकृत्॥ ७॥

अन्यत्राप्ययुक्तिः समा, अहमर्थस्य तत्प्रकाशस्य वा सुषुप्तौ नाशादित्यत्राद्यमनूद्य क्षिपति (नचेति) अहमर्थस्य ह्यात्मत्वं स्थापितम्, अतोऽस्य न ध्वंस इति व्यञ्जनार्थं इहात्मशब्दः। प्राच्यजागरस्थात्मीयकरणत्रयवृत्तिपरामर्शद्रढिम्ना परिहरति (यत इति) शुक्तिरूप्यवदध्यस्तस्याऽहमर्थस्य प्रकाशध्वंसतोऽपि स्वरूपध्वंसं शङ्कते (एतावन्तमिति) स्वेष्टविरुद्धं वदसीत्युपालम्भाभिप्रायेण पृच्छति (ततः किमिति) अज्ञातोपालम्भः पुनश्शङ्कते (न किञ्चिदिति) अहमर्थप्रकाशस्यापि

वेदितुरहमर्थस्यैवानुवृत्तेः, वेद्यविषयो हि स प्रतिषेधः । न किञ्चिदिति निषेधस्य कृत्स्नविषयत्वे भवदभिमतानुभूतिरपि प्रतिषिद्धा स्यात । सुषुप्तिसमये त्वनुसन्धीयमानमहमर्थमात्मानं ज्ञातारमहमिति परामृश्य न किञ्चिदवेदिषमिति वेदने तस्य प्रतिषिध्यमाने तस्मिन् काले

* श्रुतप्रकाशिका *

वेद्यविषयः—वेद्यप्रतिभासविषयः । कृत्स्नविषयत्वेऽनिष्टमाह (न किञ्चिदिति) नानुभूतिनिषेधस्तस्या अनुवृत्तेरित्याशङ्कयाह ( सुषुप्तिसमये त्विति ) भवत्पक्षस्य विपरीतोऽयं परामर्श इत्यर्थः । यथा प्रातश्चत्वरे गजानुभवं पृष्टेन पश्चाद्योग्यानुसरणलिङ्गेन चत्वरे गजाभावं वदता पुरुषेण पूर्वकालीनचत्वरानुभवेन विना गजाभावो न वक्तुं शक्यते, तथा अज्ञानाश्रयमहमर्थं वदता स्वापवेलायामहमर्थानुभवोऽभ्युप-

ಳ तत्त्वटीका ಳ

निषेधात्तत्स्वरूपनिषेधोऽपि फलित इति भावः । उक्तनिषेधार्थो नकारोऽर्थात्प्रतीयत इति कृत्वा स्वाभिप्रेतं विवृणोति ( नाहमिति ) अहं नावेदिषमित्यत्र वेदनाभावाधिकरणभूतस्वात्मनिषेधस्तावदशक्यः, तत्प्रकाशनिषेधश्च स्वयंज्योतिष्ट्वश्रुतिविरुद्धः, बाह्यविषयेऽपि न स्वरूपं निषेध्यम्, सुषुप्तौ विश्वप्रलयस्यासम्भवादसम्मतेश्च ; अतः स्वान्यप्रकाशनिषेध एव विवक्षितइत्यभिप्रायेण—वेद्यविषयो हि इत्युक्तम् । परेष्टार्थेऽनिष्टमाह (न किञ्चिदिति निषेधस्येति ) त्वत्पक्षेऽनुभूतेः प्रकाशनिषेध एव स्वरूपनिषेधोऽपि स्यादिति भावः । वेदननिषेधस्याऽकृत्स्नविषयत्वे स्वीकृते-धीव्यतिरिक्तवेदननिषेधविवक्षयाऽसदिष्टं स्यादित्यत्राह ( सुषुप्तीति ) अहमर्थस्वरूपनिषेधः परामर्शबलविरुद्धः, अत एव तज्ज्ञाननिषेधस्त्वत्पक्षेऽप्ययुक्तः, इदमर्थवदहमर्थस्यापि प्रकाशाधीनस्वरूपत्वात्, सर्वत्र चाधेयनिषेधोक्तिर्हास्येति भावः ।

अभानं व्यवहारस्य सुषुप्तावहमः कथम् ।
इति चोद्यं समं विद्यौ श्रुतिश्चात्रोत्तरप्रदा ॥ ७ ॥
अहंभावस्य संस्कार- मनुत्पादयतोऽपि नः ।
त्वदिष्टधीभाननयात् स्यात्परामर्शहेतुता ॥ ७ ॥

निषिद्ध्यमानाया वित्तेस्सिद्धिमनुवर्त्तमानस्य ज्ञातुरहमर्थस्य चासिद्धिमनेनैव 'न किञ्चिदहमवेदिषम्' इति परामर्शेन साधयंस्तमिममर्थं देवानामेव साधयतु ॥

मामप्यहं न ज्ञातावानित्यहमर्थस्यापि तदानीमननुसन्धानं प्रतीयत इति चेत्; स्वानुभवस्ववचनयोर्विरोध-

* श्रुतप्रकाशिका *

गन्तव्यः । अथाप्यहमर्थनिवृत्तिज्ञानानुवृत्तिकथनं चत्वरानिवृत्तिगजावस्थानवचनतुल्यमिति भावः । (देवानामेव साधयतु) अर्चारूपा हि देवाः, प्रतिवचनमकुर्वतामित्यर्थः, त्वमावतामिति वा प्रतिवाद्यसान्निधाविति वा उल्लोकमुक्तमिति वाऽर्थः ॥

अथ निषेधविशेषविषयं परामर्शमाह (मामपीति) परिहरति (स्वानुभवेति)

७ तत्त्वटीका ७

सुषुप्तौ भानसङ्गे तु धीरेव तव लुप्यते ।
उपलब्धिपराहत्या न स्वरूपविपर्ययः ॥ ७ ॥

एवशब्दो वैपरीत्यं विवृणोति । जानामीत्यहमर्थस्वरूपप्रकाशश्चेदात्मेत्युच्यते, स तर्हि तद्धर्मः । धातूपात्तश्चेत्, इच्छाद्वेषादिधात्वन्तरार्थवदात्मस्वरूपादन्यः प्रसिद्धः । एवकारो दत्तोत्तरत्वद्योतकः । देवानामेवेत्यनेन सर्वज्ञा हि त्वदुक्तिप्रतिपत्त्यर्हा इत्युपालभते, अप्रतिवादिनामिति वा तात्पर्य्यम् । ननु "विनाशमेवाऽपीतो भवती"ति श्रुत्यैवोच्यते विनाशः । मैवम्, —प्रकरणाभिप्रेतपुरुषार्थविरहेणाऽसत्कल्पत्वे तात्पर्य्यात्; अन्यथा 'नाहं खल्वय' मित्यादिपूर्ववाक्यविरोधात्।

"स एव त्वि"ति सूत्रे च सुषुप्तप्रतिबुद्धयोः ।
स्वयमेव च तादात्म्यं सूत्रकृत् स्थापयिष्यति ॥ ७ ॥

ततश्च स्वप्रकाशत्व—जडत्वविमतावपि ।
सुषुप्तावहमर्थस्य ध्वंसो नास्तीति सुस्थितम् ॥ ७ ॥

पुनरपि तदानीमहमर्थवेदनस्यापि विशेषतो निषेधात् तत्स्वरूपनिषेधमपि शङ्कते (मामपीति) अहमर्थनिषेधं वदता स्ववाक्येन स्वपरामर्शेन चाभीष्टविरोधमाह (स्वानुभवेति) उभाभ्यामहमर्थनिषेधस्याऽशक्यत्वं व्यनक्ति (अहमिति)

मपि न जानन्ति भवन्तः । अहं मां न ज्ञातवानिति ह्यनुभववचने । मामिति किं निषिद्ध्यत इति चेत्; साधु पृष्टं भवता । तदुच्यते,—अहमर्थस्य ज्ञातुरनुवृत्तेर्न स्वरूपं निषिध्यते; अपि तु प्रबोधसमयेऽनुसन्धीयमानस्याहमर्थस्य वर्णाश्रमादिविशिष्टता । अहं मां न ज्ञातवानि-

* श्रुतप्रकाशिका *

स्वानुभववचनयोर्नान्योन्यं विरोधः—किन्तूभयोरप्यहमर्थानुवृत्तिनिषेधशब्देन विरोध इत्यर्थः, अनुभवैकदेशयोर्वचनैकदेशयोश्च मिथो विरोध इति वाऽर्थः । विरोधमेव दर्शयति ( अहमिति ) अहं न ज्ञातवानित्यत्र अज्ञानसाक्षित्वेन अहमर्थानुवृत्तेः स्वानुभवसिद्धौ वचनमपि तदनुगुणमित्यनुभववचनाभ्यामहर्थानुवृत्तिनिषेधवाक्यविरोध इत्यर्थः, निषेधशब्दतदर्थानुभवयोर्विरोध इति वाऽर्थः । तत्र मामिति पदस्यार्थं वक्तुं परप्रश्नमनुभाषते (मामितीति) पूर्वं विरुद्धार्थकथनमसाधु, अर्थतत्त्वप्रश्नस्साधुरित्यभिप्रायेणाह ( साध्विति ) निषेधानुवृत्त्योर्विषयविभागं दर्शयति ( तदुच्यत इत्यादिना ) अहं मामित्युभयोरपि पदयोर्विशिष्टविषयतैवोचिता नीतिभेदप्रसङ्गादित्यत्राह ( अहं मामिति ) विधिनिषेधयोरेकविषयत्वे व्याघातः स्यादिति तन्निवृत्त्यर्थं

ᛉ तत्त्वटीका ᛉ

हिशब्दोत्र 'अनुभववचने' इतिशब्दस्य सप्तमीत्वेनोत्तरत्रान्वये ह्यनपेक्षितस्स्यात् । स्वरूपप्रकाशनिषेधमुखेन स्वरूपस्यापि निषेधमन्तरेण का गतिरिति पृच्छति ( मामिति ) सोपालम्भं प्रतिवक्ति ( साध्विति ) असमीचीनत्यागेन प्रश्नेऽवताराद सानुकम्पं वा । ( तदुच्यते ) तस्मादुत्तरमुच्यत इत्यर्थः । यद्वा, किमिति पृष्टनिषेध्यमुच्यत इत्यर्थः । स्वरूपतत्प्रकाशयोर्निषेधो न शक्य इत्यभिप्रायेणाह ( अहमर्थस्येति ) "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे" इतिन्यायात् "अयमहमस्मी"ति श्रुतौ अयंशब्दाभिप्रेतविशेषमाह (अपितिवति) वर्णाश्रमादिविशिष्टता— तदभिमान इत्यर्थः । ज्ञेयत्वेनेति वोपस्कार्यम् । आदिशब्द आन्तरं जडपण्डितत्वाद्यपि सङ्गृह्णाति । ननु, "नो एवमिमानि भूतानि" इत्यत्र यथा बाह्यार्थानां स्वरूपवेदननिषेधपर इदंशब्दोऽपि स्वरूपमात्रपरः तथा

त्युक्ते विषयो विवेचनीयः । जागरितावस्थानुसंहित-जात्यादिविशिष्टोऽस्मदर्थो मामित्यंशस्य विषयः। स्वाप्य-यावस्थाप्रसिद्धाविशदस्वानुभवैकतानश्चाहमर्थोऽहमित्यं-शस्य विषयः । अत्र सुप्तोऽहमीदृशोऽहमिति च मामपि न ज्ञातवानहमित्येव खल्वनुभवप्रकारः ॥

किञ्च—सुषुप्तावात्माऽज्ञानसाक्षित्वेनास्त इति हि

* श्रुतप्रकाशिका *

विषयविभागः कार्य इत्यर्थः । विषयविभागविपर्यासशङ्कायां विषयविभाग-मुचितं दर्शयति ( जागरितेति) यत्सामग्र्यभावात्तदानीं न प्रकाशते तदेव निषेधविषयः, यदनयापेक्षं स्वयं प्रकाशते तदेवानुवर्तत इति अप्रकाशमानस्यानुवृत्तिः प्रकाश-मानस्य निषेधश्चानुपपन्नावित्यर्थः । एवं विषयविभागानुगुणमनुभवं दर्शयति ( अत्रेति ) शब्दप्रयोगो विवक्षावशात्. धीस्थं सर्वं वदति वा? तदेकदेशं वदति वा? न किञ्चिदपि वदति वा ? अतः शब्दप्रयोगे वैवक्षिकेऽप्यनुभव एकरूपः, स पुन-रेवंविषय विभागानुगुण एवेत्यर्थः । अनेन "नाहं खल्वयमेवं सम्प्रत्यात्मानं जानात्यय-महमस्मि"इति श्रुतिवाक्यस्थायंशब्दो व्याख्यातः ॥

परमतेनेममर्थमुपपादयति ( किञ्चेत्यादिना ) साक्षित्वेनात्माऽभ्युपगम्येत, ततः

ॐ तत्त्वटीका ॐ

"अयमह"मित्यत्रापि स्यादिति शङ्कां निरस्यति ( अहं मामिति ) अयम्भावः,—अहमर्थस्वरूपतत्प्रकाशनिषधयोरशक्यत्वं ह्युक्तम्, अतः प्रकारभूतवर्णाश्रमादि-वैशिष्ट्यमिह निषेध्यम् । तथाच श्रुत्यन्तरे [तद्वैशिष्ट्यमपि निषिध्यते । "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् एवमेवाऽयं पुरुषः प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर"मितीति ॥ ] सुषुप्तौ तत्तद्वैशिष्ट्येऽपि तद्वेदनवैधुर्यप्रतिसन्धानस्य श्रुतेश्चानुगुणं विषयविवेकं विवृणोति ( जागरितेत्यादिना ग्रन्थद्वयेन ) निषेधवचनतात्पर्य्यव्यञ्जकमनुभवप्रकारं निर्धारयति ( अत्रेति ) व्यवहारस्य वैवक्षिकत्वादीदृशोक्त्यभावेऽप्यनुभवो दुर्निषेध इत्यवधार-णाभिप्रायः ॥ ॐ ॥ सुषुप्तौ ज्ञातुरविनष्टत्वं परोक्तप्रक्रिययाऽप्यभ्युपगमयति (किञ्चेति)

भवदीया प्रक्रिया । साक्षित्वञ्च साक्षाज्ज्ञातृत्वमेव न ह्यजानतः साक्षित्वम् । ज्ञातैव हि लोकवेदयोस्साक्षीति व्यपदिश्यते; न ज्ञानमात्रम् । स्मरति च भगवान् पाणिनिः [1] "साक्षाद्द्रष्टरि संज्ञायाम्" इति साक्षाज्ज्ञातर्येव साक्षिशब्दम् । स चायं साक्षी जानामीति प्रतीयमानोऽस्मदर्थ एवेति कुतस्तदानीमहमर्थो न प्रतीयेत । आत्मने स्वय-

* श्रुतप्रकाशिका *

किमित्यत्राह ( साक्षित्वं चेति ) साक्षाज्ज्ञातृत्वम्–साक्षात्काररूपज्ञानाश्रयत्वम् । असाक्षात्कारिणि साक्षिशब्दः प्रयुक्तश्चेदौपचारिकः । उपपादयति ( नहीति ) अजानतः–अज्ञातुरित्यर्थः । कुत इत्यत्राह ( ज्ञातैव हीति ) शब्दप्रयोगनियामकं लक्षणमाह ( स्मरतीति ) साक्षिशब्दं स्मरतीत्यन्वयः । ततः किमहमर्थस्यात्मत्व इत्यत्राह ( स चेति ) अस्मिन्नर्थे अनुमानमुत्तरत्र विस्तरेण विवक्षितम् । अत्र सङ्ग्रहेणाह ( आत्मने स्वयमिति ) आत्मने स्वयमवभासमानोऽहमित्येवावभासत

ॐ तत्त्वटीका ॐ

अस्त्वज्ञानसाक्षित्वम्, तत्तु तत्प्रकाशात्मत्वमेवेत्यत्राह ( साक्षित्वमिति ) ननु किमत्र ज्ञातृत्वेन साक्षात्काररूपमेव साक्षित्वमस्त्वित्यत्राह ( नहीति ) उक्तमर्थं लौकिकवैदिकसर्वशब्दार्थनिर्णयनिदानभूतेनाऽनन्यथासिद्धेन व्यवहारेण स्थापयति ( ज्ञातैवेति ) साक्षिशब्दस्यास्तु ज्ञानविशेषे शक्तिः, तदाश्रये तु लक्षणेत्यत्राह ( न ज्ञानमात्रमिति ) अयम्भावः,– नहि सर्वत्र विशिष्टगोचरे विशेषणमात्रे शक्तिः त्वयापि स्वीक्रियते, तथासति विशिष्टवाचिषु सत्यादिपरेषु जहदजहल्लक्षणोक्तिरपि विरुध्येतेति । अन्यथा शब्दानुशासनविरोधमप्याह ( स्मरतीति ) अस्तु सुषुप्तौ साक्षिप्रकाशः, ततोप्यहमर्थप्रकाशः कथमित्यत्राह ( स चायमिति ) व्यवहारव्याकरणाभ्यां ज्ञातृत्वेन प्रसिद्ध इत्यर्थः । अज्ञानसाक्षिणस्तथैव स्वप्रकाशत्वाभ्युपगमात् 'जानामी'-तिप्रतीयमानत्वोक्तिः । ज्ञातुः स्वं ग्रहणं हि जानामीत्येव, तत्र "अस्मद्युत्तम" इत्यनुशिष्टमित्यभिप्रायेण अस्मदर्थ एवेत्युक्तम् । उक्तानभ्युपगमे स्वेष्टं स्वस्मै भास-

[1]– अष्टा. ५ अ. २ पा. ९१ सू.

मवभासमानोऽहमित्येवावभासत इति स्वापाद्यवस्थास्व-
प्यात्मा प्रकाशमानोऽहमित्येवावभासत इति सिद्धम् ॥

यत्तु—मोक्षदशायामहमर्थो नानुवर्त्तते—इति; तदपेशलम् । तथासत्यात्मनाश एवापवर्गः प्रकारान्तरेण प्रतिज्ञातः स्यात् । न चाहमर्थो धर्ममात्रम्; येन तद्विगमेऽप्यविद्यानिवृत्ताविव स्वरूपमवतिष्ठेत । प्रत्युत स्वरूप-

* श्रुतप्रकाशिका *

इति व्याप्तिवचनम्, जाग्रदात्मा सपक्षः, स्वस्मै प्रकाशमानत्वादिति हेतुः । निगमयति ( स्वापादीति ) अविशदावभासस्य सर्वाभ्युपगतत्वाच्छ्रुतिस्वारस्यात्परामर्शस्वारस्यात्साक्षित्वोपपत्तेः गत्यन्तरसिद्धेश्च सुषुप्तावात्मा अहमिति स्फुरतीत्युक्तं भवति ॥

अथ मुक्तावहमर्थाननुवृत्तिमनूद्य दूषयति ( यत्त्वित्यादिना ) तुरर्थगौरवविशेषे । अपेशलम्—असाध्वित्यर्थः । कुत इत्यत्राह ( तथासतीति ) सौगतान् ज्ञानसन्तत्युच्छेदं मोक्षं वदतः स्वरूपनाशस्य अपुरुषार्थत्वेन दूषयता त्वया शब्दान्तरेण स्वरूपनाश एवोक्तः स्यादित्यर्थः, नैयायिकाभ्युक्ते मोक्षेऽप्यपुरुषार्थत्वं तुल्यम्. दुःखनिवृत्तिः सुखप्राप्तिश्चोभयं पुरुषार्थः । अत्रापुरुषार्थभूतदुःखाभावात्पुरुषार्थान्वयः सुखाभावादपुरुषार्थान्वयश्चेति मुक्तेः पुरुषार्थापुरुषार्थमिश्रत्वं हि स्यात्, अहमर्थो ह्यारोपितः, अतस्तद्विगमे स्वरूपनाशो न प्रसज्येदित्यत्राह ( नचेति )कुत इत्यत्राह ( अहमिति )

छ तत्त्वटीका छ

मानत्वमपि न स्यादित्यभिप्रायेणाह ( आत्मन इति ) अत्र व्याप्तिपूर्वकं साध्यवचनेऽपि प्रसङ्गे तात्पर्यादुत्तरत्राऽनुमानोक्तेरपुनरुक्तिः । पूर्वं इतिर्हेतौ, उत्तरस्तु प्रकारे ।

सुषुप्तिमुक्त्योर्नान्वेतीति पूर्वपक्षोक्ते दूषितावशिष्टं यत्त्वित्यादिना अनूद्य दूषयति । (तदपेशलमिति) असुन्दरम्; अयुक्तमित्यर्थः । अयुक्तं विवृणोति ( तथासतीति ) प्रतिज्ञातस्स्यादित्येतत् परोक्त्यैव सिद्धवत्करणं ज्ञातव्यशेषाभावप्रसञ्जनार्थम् "आत्मभूतधीसन्ततिविनाशो मोक्षः" इति वदन्तस्सन्ति केचित्सौगताः, तन्मते त्वदुक्तो दोषस्तवाप्यागत इति सूचयितुं प्रकारान्तरेणेत्युक्तम् । ननु अविद्यादेहादिधर्मोऽप्यात्मन उपाधिरेव, अतस्तन्निवृत्तौ कथमात्मनाश इत्यत्राह ( नचेति ) त्वदुक्त-

मेवाहमर्थ आत्मनः। ज्ञानन्तु तस्यधर्मः, 'अहं जानामि ज्ञानं मे जात'मिति चाहमर्थधर्मतया ज्ञानप्रतीतेरेव ॥

अपि च यः परमार्थतो भ्रान्त्या वा आध्यात्मिकादि-दुःखैर्दुःखितया स्वात्मानमनुसन्धत्ते 'अहं दुःखी' इति। सर्वमेतद्दुःखजातमपुनर्भवमपोह्य 'कथमहमनाकुलः स्वस्थो भवेयम्' इत्युत्पन्नमोक्षरागः स एव तत्साधने प्रव-

* श्रुतप्रकाशिका *

अहमर्थधर्मतया ज्ञानप्रतीतेरेव—पूर्वोक्तहेतोरेवेत्यर्थः। अहमर्थात्मत्वसमर्थनोपजीवनेन स्वरूपनाशप्रसङ्ग उक्तः, एवं धर्मधर्मिभावेन प्रतीत्या अनुवृत्तिरुपपादिता ॥

अथ श्रुत्यर्थापत्तिमाह (अपिचेत्यादिना) पूर्वमहमर्थस्यात्मत्वसमर्थनाय श्रुत्यर्थापत्तिरुक्ता. इदानीमहमर्थस्य मुक्तावनुवृत्त्युपपादनाय तामेव श्रुत्यर्थापत्तिं विस्तरेणाह। यः स्वात्मानं दुःखिनमनुसन्धत्ते स एव तन्निवृत्तिसाधने प्रवर्त्तते, स चाहमर्थ एव। दुःखित्वं भ्रान्तिसिद्धमिति चेत्, यः स्वात्मानं भ्रमन्तमनुसन्धत्ते स एव भ्रमनिवृत्तिसाधने प्रवर्त्तते, स चाहमर्थः. द्विचन्द्रज्ञानादिभ्रान्तिमतोऽपि स्वभ्रमनिवृत्तिरेवापेक्षिता, नतु स्वविनाशः, अतोऽहमर्थविनाशोऽपुरुषार्थ इत्यभिप्रायेण परमार्थतो भ्रान्त्या वेत्युक्तम्। अनुसन्धत्त इत्यनेन 'निरस्ताखिलदुःखोऽह'मित्यत्रापेक्षितं वक्तव्यमुक्तम्। निरस्तेत्यादिश्लोकं विवृणोति (सर्वमेतदित्यादिना) (अनाकुलः स्वस्थो भवेयमिति) अपुनर्भवमपोह्येत्येतत्फलितमुक्तम् अनाकुल इति। आगामिदुःखशङ्कया मनःक्षोभ आकुलत्वम्, तदभावोऽनाकुलत्वम्। स्वस्थः—स्वस्मिन् स्थितः, स्वभावे स्थितः यथावस्थितात्मानुभवपरः, अनन्तानन्दभागिति फलम्। स एव—पूर्वदुःखित

७ तत्त्वटीका ७

विपरीतं हि सिद्धमित्यभिप्रायेण 'प्रत्युते'त्यादिवाक्यत्रयम्। एवकारेण प्रागेव स्थापितत्वं द्योत्यते ॥ ७ ॥ पूर्वं ज्ञातुरेवात्मत्वे परमसाध्ये सङ्क्षेपेणोक्तां युक्तिं तस्य मुक्तिदशानुवृत्तिरूपावान्तरसाध्येति हेतुतया विस्तृणीते (अपिचेति) स्वमतपरमतभेदेन 'परमार्थतो भ्रान्त्या वे'त्युक्तम्। उत्तरत्र तद्गतस्य दुःखकारणस्य भ्रमकारणस्य वा निवृत्तिरित्युच्येत, नतु दुःखभ्रमाश्रयस्वरूपस्येतिभावः। अत्र य

र्त्तेत । स साधनानुष्ठानेन यद्यहमेव न भविष्यामीत्यवगच्छेत्; अपसर्पेदेवासौ मोक्षकथाप्रस्तावात्। ततश्चाधिकारिविरहादेव सर्वं मोक्षशास्त्रमप्रमाणं स्यात्। अहमुपलक्षितं प्रकाशमात्रमपवर्गेऽवतिष्ठत इति चेत्, किमनेन ? मयि नष्टेऽपि किमपि प्रकाशमात्रमपवर्गेऽवतिष्ठत इति मत्वा न हि कश्चिद्बुद्धिपूर्वकारी प्रयतते; अतोऽहमर्थस्यैव ज्ञातृतया सिद्ध्यतः प्रत्यगात्मत्वम्। स च प्रत्यगात्मा मुक्तावप्यहमित्येव प्रकाशते, स्वस्मै प्रकाशमानत्वात्; यो यः स्वस्मै प्रकाशते स सर्वोऽहमित्येव प्रकाशते, यथा तथाऽवभासमानत्वेनोभयवादिसम्मतः

* श्रुतप्रकाशिका *

एव; उत्पन्नानिष्टनिवृत्तीष्टप्राप्त्यभिलाषः स एवेत्यर्थः। श्रवणादाविति पूर्वमुक्तत्वादिह तत्साधन इत्येतावदुक्तम्। अपसर्पेदसावित्यादिग्रन्थेन फलितमर्थमाह (ततश्चाधिकारीति) श्रवणाद्यायाससाध्यस्य शास्त्रस्यापुरुषार्थपर्यवसायित्वे श्रवणाद्यधिकारिविरहात्. श्रवणादिसापेक्षस्य शास्त्रस्य प्रमितिजनकत्वलक्षणं प्रामाण्यं न स्यादित्यर्थः। 'मयि नष्टेपीत्ये'तद्विवृणोति (अहमुपलक्षितमित्यादिना) बुद्धिपूर्वकारीत्यनेन कस्यापीति पदं विवृतम्। श्रुत्यर्थापत्तिं निगमयति (अत इति) अहमर्थविगमे ज्ञप्तिसिद्धिरप्यनुसन्धेया। अनुमानमाह (सचेति) किञ्च अनुमानमप्यस्तीति चार्थः। अन्वयव्याप्तिमाह (यो य इति) तथाऽवभासमानत्वेन–स्वस्मै प्रकाशमानत्वेन।

* तत्त्वटीका *

इत्यादिना 'प्रवर्तेत' इत्यन्तेन प्रागुक्तमेव विवृतमित्यपुनरुक्तिः, अर्थादामोक्षस्थायिपक्षनिरासश्च सिद्धः। उक्तयुक्तेः परमसाध्यपर्यन्ततां व्यनक्ति (अत इति) अवान्तरसाध्येपि प्राक् प्रसङ्गसूचितमनुमानं मूढबोधनाय, अन्वयव्यतिरेकिण एवानुमानत्वमिति वदतः सन्तोषाय च व्याप्तिद्वयोपेतं प्रयुङ्क्ते (सचेति) नात्र साध्याविशेषः, अहमिति व्यवहारविषयतया प्रकाशस्य साध्यत्वात्। नापि

संसार्यात्मा । यः पुनरहमिति न चकास्ति; नासौ स्वस्मै प्रकाशते, यथा घटादिः । स्वस्मै प्रकाशते चायं मुक्तात्मा; स तस्मादहमित्येव प्रकाशते ॥ न चाहमिति प्रकाशमानत्वेन तस्याज्ञत्वसंसारित्वादिप्रसङ्गः । मोक्षविरोधात्

* श्रुतप्रकाशिका *

व्यतिरेकव्याप्तिं दर्शयति ( यः पुनरिति ) उपनयमाह ( स्वस्मा इति ) निगमनमाह (तस्मादिति) स्वस्मै प्रकाशमानत्वं हेतुः, अहमिति व्यवहारार्हत्वं साध्यमिति न साध्याविशिष्टता । अहमित्येव प्रकाशते—अहमिति व्यवहारार्हं प्रकाशत इत्यर्थः । साध्यविपरीतविशेषसाधकतया विशेषविरुद्धत्वं शङ्कते ( नचेति ) आदिशब्दाद्रागद्वेषदुःखादि विवक्षितम् । ननु व्यापकं हि प्रसञ्जनीयम्, न च कार्यं कारणस्य व्यापकम्. सत्यम्, कारणजातीयस्य तु कदाचित्कार्यप्रसक्तिर्व्यापिका; अतोऽहंप्रत्ययेनात्मनोऽज्ञत्वादिप्रसञ्जनम् । अज्ञत्वादिप्रसक्तिः श्रुतिविरुद्धेत्याह (मोक्षेति) 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखता'मिति हि श्रुतिः, अतो यथा सहदर्शनमात्रेण पर्वते भाण्डादिप्रसक्तिः प्रत्यक्षबाधाद्वार्यते तद्वत्कालात्ययापदेश इत्यर्थः ।

छ तत्त्वटीका छ

हेत्वसिद्धिः, अभानस्य परस्मा एव भानस्य वा त्वयानभ्युपगमात् । अकस्मैचिद्भासमानत्वस्य दुर्वचत्वाच्च । नापि पक्षस्य दृष्टान्ताविशेषः, एकस्मिन्नेव सम्मतविमतदशाभेदेन तद्विभागात्; तथाच लोकेपि दृष्टतया परीक्षकैरनुमन्तव्यत्वाच्च । विपक्षे दण्डस्तु [बाधस्तु] प्रत्य [क्षा ]क्षाभावप्रसङ्गः [ इति ] प्रागुक्त इह प्रतिसन्धेयः । अत्र पञ्चावयववाक्यप्रयोगात्कैश्चिन्मीमांसकैरुक्तस्त्र्यवयवनिर्बन्ध उपेक्षितः, कचित् ञ्यवयवश्च प्रयुक्तं ; अतः प्रतियोगिधीसिद्ध्यै यथाकामं त्रयो वा पञ्च वा प्रयोक्तव्याः । "पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवत्" इतिभारतोक्तिस्तु सम्भावितविषयतया नान्यनिषेधार्थेति भावः । विशेषविरोधप्रसङ्गमनूद्य निषेधति ( नचेति )संसारित्वम्— कर्मकृतदेहादिसन्ततिमत्त्वम् । आदिशब्देन पुनरावृत्त्यादिग्रहणम् । मुक्तावस्थाविषयैः "सर्वं ह पश्यः पश्यति, अहमन्नम्"इत्यादिभिर्वेदैस्तर्कस्य मूलशैथिल्यमाह ( मोक्षविरोधादिति ) अन्यथा प्रसञ्जनीयमेवोत्तरं प्रयुक्तं;

**अज्ञत्वाद्यहेतुत्वाच्चाहम्प्रत्ययस्य। अज्ञानं नाम स्वरूपाज्ञानमन्यथाज्ञानं विपरीतज्ञानं वा। अहमित्येवात्मनस्स्वरूप-**

* श्रुतप्रकाशिका *

सोपाधिकत्वमाह ( अज्ञत्वादीति ) संसारित्वाहमर्थत्वयोः सहदर्शनमात्रेण मुक्तावपि संसारित्वादिप्रसङ्गश्चेदनुभवस्यापि तत्सहभावदर्शनात्त्वत्पक्षेऽपि मुक्तौ संसारित्वप्रसङ्गः। तत् मोक्षग्राहिप्रमाणविरोधात्कालात्ययापदिष्टम्. संसारित्वादेरनुभवप्रयुक्तत्वाभावात् सोपाधिकत्वं चेति चेत्तदस्मत्पक्षेऽपि समानमित्यभिप्रायः। अनेनाहमिति भासनं न स्वस्मै भासमानत्वप्रयुक्तम्, अपित्वज्ञत्वप्रयुक्तमिति हेतोस्सोपाधिकत्वञ्च श्रुतिबलेन व्याप्तेर्भग्नतया सहदर्शनमात्रमेवेति परिहृतं भवति। एवं कालात्ययापदेशसोपाधिकत्वे उक्ते। तत्र सोपाधिकत्वमुपपादयितुमज्ञानत्वेन सम्भावितशिरांसि विकल्पयति (अज्ञानं नामेति) धर्म्यैक्ये सति प्रकारान्तरारोपणेन ज्ञानमन्यथाज्ञानम्, यथा पीतः शङ्ख इति। इदं रजःकार्यम्, धर्म्यन्तरस्य धर्म्यन्तरत्वेन ज्ञानं विपरीतज्ञानम् यथा शुक्ताविदं रजतमिति. इदं तमःकार्यम्. "अयथावत्प्रजानाति बुद्धिस्सा पार्थ! राजसी। अधर्मं धर्ममिति या मन्यते तमसावृता॥ सर्वार्थान् विपरीतांश्च बुद्धिस्सा पार्थ! तामसी" इति स्मृतेः। अहंप्रत्ययस्य स्वरूपज्ञानरूपत्वात् तत्प्रागभावान्यथाज्ञानविपरीतज्ञानानि विरोधादेवापगतानीत्याह ( अहमित्येवेति ) अहमित्येवात्मनः

* तत्त्वटीका *

स्यात्। अज्ञत्वादेरुपाधित्वशङ्काऽप्यनेन निरस्ता। प्रसङ्गस्य सोपाधित्वमभिप्रेत्याह ( अज्ञत्वेति ) अयम्भावः, कर्मोपाधिकज्ञानादिकं सर्वकर्मक्षये न स्यात्।

पश्चात्साध्यमुपाधिर्हि स्वनिवृत्त्या निवर्तयेत्।
स्वसाहचर्याद्ध्यस्तां व्याप्यतामपि साधनात्॥ ७॥

तदिह तर्के व्याप्तिस्तावद्दुस्साध्या, साहचार्यमात्रं त्वप्रयोजकमतिप्रसञ्जकञ्च त्वत्पक्षेऽप्यनुभूतिमात्रस्यात्मनः प्रकाशमानत्वे बद्धदशायामिव सर्वे दोषाः स्युः, नच ते तदा सन्ति, अतो मुक्तौ प्रकाशमानत्वभङ्गात् स्वरूपोच्छेदप्रसङ्ग इति। अज्ञत्वादेरुपाधित्वव्यक्त्यै विकल्पव्याजेन स्वोक्तं विवृणोति ( अज्ञानमिति ) स्वरूपाज्ञानम्—कर्मणा तिरोधानात् स्वरूपगोचरज्ञानप्रसराभावः। अन्यथाज्ञानं विप-

मिति स्वरूपज्ञानरूपोऽहम्प्रत्ययो नाज्ञत्वमापादयति; कुतः संसारित्वम्, अपि तु तद्विरोधित्वान्नाशयत्येव ॥ ब्रह्मात्मभावापरोक्ष्यनिर्धूतनिरवशेषाविद्यानामपि वामदेवादीनामहमित्येवात्मानुभवदर्शनाच्च । श्रूयते हि—[1] "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" इति [2]"अहमेकः प्रथममासं वर्तामि च भविष्यामि

* श्रुतप्रकाशिका *

स्वरूपम्—अहमिति व्यवहारबुद्ध्यर्हमेवात्मनः स्वरूपमित्यर्थः । अहम्प्रत्ययस्याज्ञत्वादिप्रयोजकत्वदूषणेनाज्ञत्वादेरविद्यान्वय एवोपाधिरित्यर्थादुक्तं भवति । अथवा कार्यकारणभावेन व्याप्तिमङ्गीकृत्य परेणाज्ञत्वादिप्रसङ्ग उक्त इति व्याप्तिप्रतिक्षेपाय कार्यकारणभावं प्रतिक्षिपति— अज्ञत्वाद्यहेतुत्वाच्चेत्यादिना । अज्ञत्वफलमपि नास्तीत्याह (कुतः संसारित्वमिति) निवृत्ताविद्यानामपि अहमित्यात्मप्रतिपत्तिदर्शनेन अहम्प्रत्ययस्य मुक्तावनुवृत्तिमाह ( ब्रह्मात्मभावेति ) तद्धैतत्पश्यन्—इति ब्रह्मात्म-

* तत्त्वटीका *

रीतज्ञानञ्च रजस्तमस्कार्यतया गीतम् । तयोरज्ञानशब्दार्थतया विकल्पस्तु सम्यग् ज्ञानान्यतया तदविरुद्धतया वा । उदाहरणन्तु स्वनिष्ठात्मभ्रमाद्येव । आत्मभ्रमादित्रिष्वपि कल्पेष्वहंप्रत्ययस्य प्रयोजकत्वं नेत्याह ( अहमिति ) इति हेतौ । अयं भावः,— न तावदहम्प्रत्यय एवाज्ञानादिस्वरूपम्, तत्त्वधीरूपत्वात् । न तद्धेतुः, कर्मविरहे तदयोगात् । नच तेषां व्याप्यः, यतस्तेन [ य ] तत्प्रसङ्गस्स्यादिति । एवमज्ञानप्रसङ्गाभावे तत्फलप्रसङ्गो दूरापास्त इत्याह ( कुत इति ) आत्मतत्त्वज्ञानं ह्यज्ञत्वादिनिवर्तकतया शास्त्रप्रसिद्धम्, अतोऽत्र प्रसञ्जकप्रसञ्जनीययोर्व्याघात इत्यभिप्रायेणाह ( अपि त्विति ) तत्त्वविदात्मापरोक्ष्ये ऽहमर्थप्रकाशं वदन्त्या श्रुत्या तस्याज्ञत्वाद्यनापादकत्वमाह ( ब्रह्मात्मेत्यादि) दर्शनादियुक्तं विवृणोति ( श्रूयत इति) ब्रह्मापरोक्ष्यमविद्यानाशस्य कारकों, ज्ञापकश्च हेतुः । आदिशब्देन प्रह्लादभरतादिग्रहः । तद्धैतत्पश्यन्—जगत्कारणं ब्रह्मस्वान्तरात्मत्वेन पश्यन्नित्यर्थः । अत एवात्र

१—बृ-३-अ-४-ब्रा.१० वा ॥ २—अथर्वशिरोपनिषदि ९-खण्डे .

च" इत्यादि। सकलेतराज्ञानविरोधिनः सच्छब्दप्रत्ययमात्रभाजः परस्य ब्रह्मणो व्यवहारोऽप्येवमेव [1]" हन्ताऽहमिमास्तिस्रो देवताः" [2]" बहु स्यां प्रजायेय" "[3] स ईक्षत लोकान्नु सृजा इति" तथा— " [4] यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च

* श्रुतप्रकाशिका *

कत्वसाक्षात्कारकथनेन निर्धूतनिरवशेषाविद्यत्वं गम्यते। ब्रह्मणोऽपि तथा प्रतिपत्तिमाह (सकलेतरेति) सकलेतराज्ञानविरोधिनः—न हि सकलेतरविषहरणनिपुणस्य वैनतेयस्य विषवश्यत्वसम्भव इति भावः। सच्छब्दप्रत्ययमात्रभाजः—सच्छब्दस्य सदिति प्रत्ययस्य च विषयभूतस्य। मात्रचा पाश्चात्यनामरूपभाक्त्वव्यावृत्तिः, अनेनाहङ्कारसृष्टेः पूर्वमप्यहम्प्रत्ययं ज्ञापयति, अहम्प्रत्ययस्फुटीकरणाय 'अहमिमा' इति वाक्यं पूर्वमुपादत्ते। बहु स्यामितिवाक्ये "असद्युत्तम" इत्युत्तमपुरुषबलादहमिति प्रत्ययसिद्धिः, अहमिमास्तिस्र इत्यत्राहंशब्दः कण्ठोक्तः, न ह्यहङ्कारस्य नामरूपव्याकर्तृत्वमिति भावः। बहूपनिषत्स्वहमिति निर्देशज्ञापनायोपादत्ते (स ईक्षतेति) सृजा इत्युत्तमपुरुषेणाहंशब्दाकर्षसिद्धिरिति भावः।

७ तत्त्वटीका ७

अहमर्थसामानाधिकरण्यं स्वविशेष्यस्य सर्वात्मत्वप्रकाशकम्। तदेतत् "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इतिसूत्रे व्यक्तीभविष्यति। अथर्वशिरसोऽप्येवमेव निर्वाहो वेदार्थसङ्ग्रहे स्थापितः। आदिशब्देन "स एवाहमवस्थितः, अहं त्वञ्च तथाऽन्ये च" इत्युपबृंहणानि गृह्यन्ते। स्वतस्सर्वज्ञतया स्वयमज्ञानप्रसङ्गरहितस्य स्वाश्रिताज्ञानादिनिरासकतया स्वयमेव गीतस्य परब्रह्मणः स्वात्मन्यहंशब्दप्रयोगाच्चाज्ञत्वापादकत्वं निरस्यति (सकलेति) सच्छब्दप्रत्ययमात्रभाजः— सच्छब्दमात्रजन्यधीविषयस्येत्यर्थः। अहङ्कारसृष्टेः प्रागेव सच्छब्दवाच्यं ब्रह्म॥ "बहु स्या"मिति सङ्कल्पयतीति भावः। शाखान्तरेऽपि सिद्धिमाह (ईक्षतेति) (हन्ताहमिति)

१—छा-६-प्र-३-ख-२-वा. ॥
२—तै.आन-६-अनु २-वा. ॥
३—ऐतरेय-१-अनु १-ख-१ वा.
४—गीता-१५ अ-१८-श्लो०.

प्रथितः पुरुषोत्तमः ॥'[१] 'अहमात्मा गुडाकेश'[२] 'न त्वेवाहं जातु नासम्'[३] 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा'[४] 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते'[५] 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्'[६] 'अहं बीजप्रदः पिता'[७] 'वेदाहं समतीतानि' इत्यादिषु ॥

* श्रुतप्रकाशिका *

स्मृतिं दर्शयति (तथा यस्मादिति) यस्मादितिवचनं क्षराक्षरातीतस्वाभाविकरूपेणाहम्प्रत्ययज्ञापनार्थमुपात्तम्, न ह्यहङ्कारः क्षराक्षरातीतः, अतो ऽस्मीत्युत्तमपुरुषेणाप्यहमर्थसिद्धिः । आत्मनो ऽहम्प्रत्ययं ज्ञापयति—अहमात्मेति । न ह्यहङ्कारश्चिदचिदन्तरात्मा । स्वाभाविकनित्यरूपे ऽहम्प्रत्ययं दर्शयति—न त्वेवाहमिति । न ह्यहङ्कारो नित्यः, मृत्युविरोधिमुक्तिप्रदो ऽप्यहम्प्रत्ययविषय इत्याह—तेषामिति । न ह्यहङ्कारो मुक्तिप्रदः, एवमनेकश्रुतिस्मृतिवचनोपादानं परविवक्षितद्वित्रतादृशवचनापनोदनार्थम् । एभिरहंशब्दैश्चिन्मात्रमुपलक्ष्यते चेदनेकवाक्यस्थाहंशब्दलक्षणैव

* तत्त्वटीका *

अत्राहंशब्दः कण्ठोक्तः, "बहु स्यां प्रजायेय, सृजेय" इत्यादिषूत्तमपुरुषाक्षिप्तः । "पूर्वमेवाहमिहास" मित्यादयश्च ग्राह्याः । स्मृतावप्यहन्त्वेन व्यवहारमाह (तथेति) क्षरान्तर्भूतस्याऽहङ्कारस्य क्षराक्षरान्यत्वम्, अचेतनस्य चिदचिदन्तरात्मत्वम्, उत्पत्तिनाशभाजस्तद्राहित्यम्, महदादिजन्यस्य सर्वकारणत्वं, स्वाश्रितबन्धकस्य तन्मोचकत्वम्, अचिद्विकारस्य स्वसङ्कल्पेन सर्वत्र बीजाधानकर्तृत्वम्, त्रैकालिकसर्ववस्तुवेदितृत्वादिकञ्च विरुद्धमित्यभिप्रायेण तत्तद्वाक्योपादानम् । नचैतेष्वहंशब्देन चिन्मात्रलक्षणेति वाच्यम् । मुख्यसम्भवे तदयोगात् । आदिशब्देन "अहमज्ञानजं तमः, अहं त्वा सर्वपापेभ्यः" इत्यादिसङ्ग्रहः । उपात्तकृत्स्नवचनबाधे-

१– गीता. १०· अ. २०. श्लो.
२– गी. २- अ. १२- श्लो.
३– गी. ७- अ. ६- श्लो.
४– गी. १० अ. ८- श्लो.
५– गी. १२- अ. ७- श्लो.
६– गी. १४- अ. ४- श्लो.
७– गी. ७- अ. २६- श्लो.

यद्यहमित्येवात्मनः स्वरूपम्; कथं तर्ह्यहङ्कारस्य क्षेत्रान्तर्भावो भगवतोपदिश्यते[1] "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इति। उच्यते,—स्वरूपोपदेशेषु सर्वेष्वहमित्येवोपदेशात्तथैवात्मस्वरूपप्रतिपत्तेश्चाहमित्येव प्रत्यगात्मनः स्वरूपम्। अव्यक्तपरिणामभेदस्याहङ्कारस्य क्षेत्रान्त-

* श्रुतप्रकाशिका *

दोषः। "महाभूतान्यहङ्कार" इति क्षेत्रान्तर्भाववचनमेकम्, "अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते॥" इति त्याज्यत्वपरं वचनं द्वितीयम्, 'अहङ्कारविमूढात्मा' इत्यपरम्; एतत्त्रयमनुदाहृतमभिप्रेतम् उत्तरत्र-परिहारात्, पूर्वमेतद्वचनाभिप्रायेण सुषुप्तिमुक्त्योर्नान्वेतीत्युक्तम्। इममर्थमवलम्ब्य चोदयति (कथं तर्हीति) परिहरति (उच्यत इति) अहमर्थाहङ्कारयोरभेदबुद्ध्या परेण चोदिते प्रकृतिप्रत्यययोरर्थविभागव्युत्पादनाय प्रकृत्यर्थभूत आत्मन्यहम्बुद्धेः प्रामाणिकत्वस्थैर्यं दर्शयति (स्वरूपोपदेशेष्विति) अन्यथासिद्धिं दर्शयन् तत्राहङ्कारशब्दविवक्षितमाह (अव्यक्तेति) (अव्यक्तपरिणामभेदस्येति) न त्वहमर्थस्येत्यर्थः। 'अथातोऽहङ्कारादेश' इत्यादिषु शुद्धस्वरूपस्याहङ्कारशब्देनाभिधानाभ्युपगमेऽपि न विरोधः। स त्वहङ्कारशब्दोऽहमर्थविषयबुद्धिपरः। यद्यहङ्कारशब्द-वाच्यत्वमात्रात् प्रत्यगात्माऽपि क्षेत्रभेदः स्यात्तर्हि हरिशब्दवाच्यत्वसाम्यात् सिंहो मण्डूकः स्यात्, अतोऽनेकार्थाभिधायिशब्दैकत्वमर्थभेदाविरोधीति भावः। यथा आगमप्रामाण्ये "तथा च हरिशब्दस्य दृष्टा मण्डूकवाचिता इति।" तच्छब्द-

* तत्त्वटीका *

च्छया गीतायामेवोक्तमिति शङ्कते (यदीति) अत्र कथंशब्दस्य प्रतिषेधपरत्वायोगात् प्रश्नवत्कारेण प्रतिवक्ति (उच्यत इति) पृष्टस्य साक्षादुत्तरं दित्सुस्तदर्थे स्वपक्षे भूयसां बलीयस्त्वं प्रत्यक्षानुगुण्यञ्च प्रथममाह (स्वरूपेति) रूढिविशेषानुसारेण गीताभिप्रेतमाह (अव्यक्तेति) नह्यहङ्कारशब्दोऽहंशब्दपर्याय इतिभावः। ननु अहंशब्द एवाहङ्कारशब्दावयवतया प्रत्यभिज्ञातः, नचोभयत्र शक्तिभेदक्लृप्ति-

१- गी. १३- अ. ५ श्लो.॥

र्भावो भगवतैवोपदिश्यते स त्वनात्मनि देहेऽहम्भाव-करणहेतुत्वेनाहङ्कार इत्युच्यते, अस्य त्वहङ्कारशब्दस्य अभूततद्भावेऽर्थे च्विप्रत्ययमुत्पाद्य व्युत्पत्तिर्द्रष्टव्या । अयमेव त्वहङ्कार उत्कृष्टजनावमानहेतुर्गर्वापरनामा

* श्रुतप्रकाशिका *

वाच्यत्वात्सिंहो मण्डूक एव किम् ॥ तथा गोशब्दवाच्यत्वाच्छब्दश्चापि विषाणवान्" इति । अथाहङ्कारशब्दस्याव्यक्तपरिणामविशेषवाचकत्वप्रकारं दर्शयति ( स त्विति ) अहम्भावः अहमिति बुद्धिः, भावशब्दस्य बुद्धिवाचकत्वमभिप्रायपरतया प्रयोगात्वगम्यते । सर्वत्राहंशब्दार्थमेकरूपमङ्गीकृत्याहङ्कारशब्दस्याव्यक्तपरिणामवाचित्वं शब्दानुशासनप्रक्रिययोपपादयति ( अस्य त्विति ) च्विप्रत्ययस्य सर्वलोपः 'कृञः करणे घञ् 'क्षेत्रान्तर्भावोपदेशस्य निर्वाहः कृतः । अहङ्कारं बलं दर्पमिति त्याज्यतयोपदेशस्य निर्वाहः क्रियते ( अयमेव त्विति ) अयंशब्देन प्रस्तुताहम्भावो विवक्षितः, न त्वहम्भावकरणहेतुः, गर्वापरनामेति वचनात् । नहि महदहङ्कारयोरन्यतरोऽहङ्कारो गर्वापरपर्यायः, अतोऽत्राहम्भाव एवायंशब्दविवक्षितः । प्रशस्तदेहेऽहम्बुद्धिरुत्कृष्टजनावमानहेतुरहङ्कारः अहम्बुद्धिः मानसव्यापारवाचिनः करोतेः बुद्धिपरत्वं युज्यते । यथा "तदेकावयवं देवं चेतसा हि पुनर्बुधः । कुर्यादिति. मनसा करणं हि वेदनम्; अतोऽहम्बुद्धिरहङ्कारः, च्विप्रत्ययार्थगर्भत्वादनहम्बुद्धिगर्भाविमावहम्भावाहङ्कारशब्दौ, अत्र भावे व्युत्पत्तिः, पूर्वत्र करणे व्युत्पत्तिः, 'गर्वोऽभिमानो-

* तत्त्वटीका *

न्याय्येत्यत्र यौगिकमप्याह ( स त्विति ) अहम्भावोऽत्राहमित्यभिमानः । ननु भूमविद्यायाम् "अथातोऽहङ्कारादेश" इत्यहम्बुद्धिकरणमेवाऽहङ्कार इत्युच्यते । तत्प्रत्यभिज्ञयाऽत्र स एवार्थः किं न स्यादित्यत्र 'अनात्मनि' इत्यभिप्रेतया व्युत्पत्त्या वैषम्यमाह (अस्य त्विति) अनहमर्थस्याऽहमर्थभ्रमहेतुत्वमिह विवक्षितम् । भूमविद्यायान्तु भूमविशिष्टस्य यथार्थमहङ्कृद्धोपासनमिति भावः । ननु "अहङ्कारं बलं दर्प"मित्यादिभिस्त्याज्यतयोक्तस्य कथं मोक्षार्थविद्यायाम् "अथात आदेश" इतिवदुपादेयतयोपदेश इत्यत्राह ( अयमिति ) अनात्मनि देहेऽहम्भाव इतिर्भिर्दिष्ट

शास्त्रेषु बहुशो हेयतया प्रतिपाद्यते, तस्माद्बाधकापेताऽहम्बुद्धिस्साक्षादात्मगोचरैव। शरीरगोचरा त्वहम्बुद्धिरविद्यैव। यथोक्तं भगवता पराशरेण[1] "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन। अनात्मन्यात्मबुद्धिर्या" इति॥ यदि ज्ञप्तिमात्रमेवात्मा, तदाऽनात्मन्यात्माभिमाने शरीरे ज्ञप्तिमात्रप्रतिभासः स्यात्; न ज्ञातृत्वप्रति-

* श्रुतप्रकाशिका *

ऽहङ्कार' इति नैघण्टुकाः। ननु कथं भावे व्युत्पन्नस्याहङ्कारशब्दस्योपादेयगोचरतया प्रयोगः 'अथातोऽहङ्कारादेश' इति। उच्यते,—स त्वहङ्कारशब्दः साक्षादहमर्थबुद्धिवाची, न त्वनात्मन्यात्मबुद्धिपरच्विप्रत्ययार्थगर्भः, हेयोपादेयरूपेण शब्दप्रतिपन्नयोरहम्बुद्ध्योर्विषयविभागं निगमयति ( तस्मादिति ) अस्मिन्नर्थे प्रमाणमाह ( यथोक्तमिति ) तत्रैव पुराणे अनात्मविषयाहम्बुद्धिवचनयोर्भ्रान्तत्वमात्मविषयत्वभ्रान्तत्वं च स्पष्टम्। यथा "आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते। आत्मन्यात्ममयं भावं कः करोति कलेवरे॥ पञ्चभूतात्मके देहे देही मोहतमोवृतः। अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिम्॥ इति। आदिभरतचरिते "आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज। अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः॥"इति। एतद्वचनार्थमप्यहमर्थात्महेतुत्वेनाह ( यदीति ) ( अनात्मनीति ) अनात्मन्यहम्प्रतीतिः

* तत्त्वटीका *

इत्यर्थः। अन्यथा गर्वापरनामेत्यनन्वयात्। यद्वा, कार्ये गर्वे कारणभूताऽहङ्कारोपचारः। एवकारोऽहङ्ग्रहोपास्तिव्यवच्छेदार्थः। 'उत्कृष्टे'त्यादिना हेयत्वनिदानोक्तिः। ननु अविद्याऽहम्मतिरिति पठ्यते, तत्कथमहङ्ग्रहोपास्तिर्यथार्था विधीयत इत्यत्र विद्याऽविद्यात्मकेऽहम्मती विभजन् निगमयति ( तस्मादिति ) साक्षाच्छब्द उपहितरूपव्यवच्छेदार्थः। अविद्यानिष्कर्षं पुराणोक्त्या सम्वादयति ( यथोक्तमिति ) एतच्चाऽनन्याधीनत्वादिप्रमाणोपलक्षणम्। एवमविद्यादिरूपतया प्रसिद्धां देहेऽहम्बुद्धिमपि परेष्टभञ्जिकामाह (यदीति) स्वेष्टेऽपि तामेव प्रमाणयन् परप्रक्रान्तमुप-

---

१- वि. पु. ६- अं. ७- अ. १०-११. श्लो.॥

भासः, तस्माज्ज्ञाताऽहमर्थ एवात्मा । तदुक्तम्—

[1]"अतः प्रत्यक्षसिद्धत्वादुक्तन्यायागमान्वयात् ।
अविद्यायोगतश्चात्मा ज्ञाताऽहमिति भासते॥"इति ।

तथा च,—

[2]"देहेन्द्रियमनःप्राणधीभ्योऽन्योऽनन्यसाधनः ।
नित्यो व्यापी प्रतिक्षेत्रमात्मा भिन्नस्स्वतस्सुखी ॥ इति ।

अनन्यसाधनः—स्वप्रकाशः । व्यापी—अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावः ॥

* श्रुतप्रकाशिका *

कथमात्माभिमान इत्यर्थः । अहमर्थात्मत्वं निगमयति ( तस्मादिति ) अस्मिन्नर्थे आत्मसिद्धिग्रन्थमुदाहरति ( तदुक्तमिति ) धर्मधर्मिभावेन प्रतीतिः प्रत्यक्षसिद्धिः, स्थिरत्वास्थिरत्वादिवैषम्यं श्रुत्यर्थापत्तिश्च न्यायः, आगम– उदाहृतोपनिषद्वाक्यानि. अविद्यायोगोऽनन्तरोक्तभ्रान्तियोगः । अहमर्थस्यानात्मत्वे स्थूलोऽहमिति भ्रान्तेरयोग इति वार्थः । ज्ञातुरात्मत्वे संवादिग्रन्थो दर्शितः । ज्ञप्तेरनात्मत्वे चात्मसिद्धिग्रन्थमाह (तथा चेति) धीभ्योऽन्य इत्येतदत्रोपयुक्तम्. साधनशब्दस्योत्पादकज्ञापकसाधारण्यत्वात्तद्व्याचष्टे ( अनन्येति ) जीवस्वरूपविभुत्वशङ्काव्युदासार्थं व्यापीतिशब्दं व्याचष्टे (अतीति) पुराणेषु व्याप्तिशब्दप्रयोगात्स एवात्र श्लोके प्रयुक्तः, यत्र यत्र जीवस्य व्याप्तिवाचिनः शब्दास्तत्र तत्रायमेवार्थो द्रष्टव्य इति भावः । जीवस्य धर्मभूतज्ञानेन व्याप्तिरात्मसिद्धावेवोच्यते 'व्याप्तिरपि चैतन्यमात्रेणैवं न रूपेणे'ति, अतो यथोक्त एवार्थः ॥

❀ तत्त्वटीका ❀

संहरति ( तस्मादिति ) आत्मनोऽहन्त्वज्ञातृत्वादि साधकवर्गस्य सङ्कलितबोधार्थमात्मसिद्धौ निगमितं दर्शयति (तदुक्तमिति ) 'अविद्यायोगत' इत्येतत्परेष्टेऽनुपपत्तिं स्वेष्टे चोपपत्तिं तन्त्रत आवृत्त्या वा वक्ति । आत्मनो विषयग्राहिभ्योऽन्यत्वे स्वप्रकाशत्वादौ च तत्प्रकरणारम्भे सङ्गृहीतमाह ( तथाचेति ) अत्र

१–२–३

## यदुक्तम्— दोषमूलत्वेनान्यथासिद्धिसम्भावनया

* श्रुतप्रकाशिका *

अथ शास्त्रप्रत्यक्षविरोधे शास्त्रप्राबल्यमनूद्य निरस्यति ( यदुक्तमित्यादिना ) परेण पूर्वं मूलमूलिभावपरोक्षापरोक्षरूपत्वादिर्न बाध्यबाधकभावे कारणं ज्वालाभेदानुमानेन व्यभिचारात्. 'आदित्यो यूप'इत्यादावपि यूपादित्यैक्याद्यप्रतिपादनं न दौर्बल्यात् अपि तु यूपाञ्जनविधिशेषत्वेनैक्ये तात्पर्याभावादित्युक्तम्; तत्र ज्वालाभेदानुमानाच्छास्त्रस्य त्रिधा वैषम्यमस्ति. प्रमाणान्तरेण दोषमूलत्वानिश्चयादन्योन्याश्रयः, बाध्यबाधकयोस्तुल्यदोषत्वञ्च,मूलोच्छेदित्वञ्चेति; एतत्त्रयं ज्वालाभेदानुमाने नास्ति। तथाहि,—एकवर्तिकावर्तित्वनिबन्धनसादृश्याख्यदोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वम् अचिरनिर्वापितारोपितप्रदीपे दृष्टमिति चक्षुषा ज्वालैक्यप्रतिपत्तेः क्वचिद्दोषमूलत्वनिश्चयादन्यत्रैक्यप्रतिपत्तावपि दोषमूलत्वसम्भवाज्ज्वालैक्यप्रत्यक्षं शङ्कितं न निश्चयजननक्षमं परीक्षकस्य भवेत्, ज्वालायां सादृश्यरूपदोषस्यासत्यप्यैक्ये ऐक्यप्रतीतिहेतुत्वं प्रमाणान्तरेण न दृष्टं चेत् अन्योन्याश्रयः स्यात्। अनुमानस्य प्राबल्यात् प्रत्यक्षस्यान्यथासिद्धिः, तदन्यथासिद्ध्याऽनुमानप्राबल्यमित्यैक्यप्रतीतेरन्यथासिद्धिसम्भवः प्रमाणान्तरदृष्ट इति नान्योन्याश्रयः, अत्र न तथा प्रमाणान्तरेण भेदवासनाया दोषत्वं दृष्टम्। किञ्च दीपे बाध्यस्य ज्वालैक्यज्ञानस्य सादृश्याख्यदोषमूलत्वे बाधकस्य ज्वालाभेदानुमानस्य न सादृश्यदोषमूलत्वं दृष्टम्. अत्र तु बाध्यस्य प्रत्यक्षस्य बाधकस्य शास्त्रस्य चोभयोः पराभ्युपेतदोषमूलत्वमविशिष्टं विद्यत इति तुल्यदोषत्वम्। किञ्च तत्र ज्वालाख्यधर्मिग्राहिणः प्रत्यक्षस्य च प्रथमवर्त्यवयवाग्निसंयोगे चरमवर्त्यवयवस्य विनाशे च उत्पत्तिविनाशयोर्व्याप्तिग्राहिणः प्रत्यक्षस्य प्रत्यवयवमग्निसंयोगवर्त्यवयवविनाशाख्यलिङ्गग्राहिणः प्रत्यक्षस्य च न भेदानुमान-

* तत्त्वटीका *

साधनशब्दस्योत्पादनपरत्वेऽनित्यत्वोक्त्या पुनरुक्तिस्स्यात् तद्व्युदासाय 'स्वप्रकाश' इत्युक्तम्। व्यापिशब्देन विभुत्वविवक्षायाम् "उत्क्रान्त्यादी"तिसूत्रविरोधादर्थान्तरमाह ( अतिसूक्ष्मतयेति ) एतत्पदद्वयार्थः तत्रत्यविस्तरे व्यक्तः।

एवं प्रत्यक्षवैधर्म्यं नास्तीत्युक्तं न्यषिध्यत।
ततश्शास्त्रबलीयस्त्वं'यदि'त्यन्वाह बाधितुम॥ ७॥

सकलभेदावलम्बिप्रत्यक्षस्य शास्त्रबाध्यत्वमिति । कोयं दोष इति वक्तव्यम् यन्मूलतया प्रत्यक्षस्यान्यथासिद्धिः । अनादिभेदवासनैव हि दोष इति चेत् भेदवासनाया-

* श्रुतप्रकाशिका *

बाध्यविषयत्वम्, ऐक्यप्रतिपत्तेरेव तत् । अत्र तु शब्दाख्यधर्मिग्राहिणस्तस्य निर्दोषत्वसाधकलिङ्गग्राहिणः तल्लिङ्गव्याप्तिग्राहिणः षड्विधतात्पर्यलिङ्गग्राहिणश्च प्रत्यक्षस्य तेषां तात्पर्यलिङ्गानां च शास्त्रेणैव बाधोपगमान्मूलोच्छेदित्वमिति त्रिधा वैषम्यम् । एतद्वैषम्यत्रयमुपपादयिष्यन् पूर्वपक्षमनुवदति (दोषमूलत्वेनेति) (सकलभेदावलम्बिप्रत्यक्षस्येति ) अत्रायं भावः,—तत्त्वशुद्धिकारादिभिः कैश्चित्काचतिमिरादिरेव प्रत्यक्षस्य दोष उक्तः, स नोपपद्यते, काचतिमिरादेः काचित्कत्वात् ; एतेन प्रत्यक्षान्तराणां दोषमूलत्वमनुमीयते चेत्. शब्दत्वाच्छास्त्रस्यापि दोषमूलत्वमनुमीयताम्. शास्त्रे दोषस्य योग्यानुपलम्भनिरासश्चेत्प्रत्यक्षेऽपि तथैव स्यात् । किञ्च आयुर्वेदे दोषाणां स्वरूपं तन्निवृत्त्युपायादिकं च निरूपितम्, सर्वप्रत्यक्षस्य दोषमूलत्वानुमानं तद्विरुद्धं च । किञ्च सर्वप्रत्यक्षस्य दोषमूलत्वे सन्मात्रग्राहिणः प्रत्यक्षस्य च दोषमूलत्वात् सन्मात्रमपि मिथ्या स्यादिति दूषयति ( कोऽयमित्यादिना ) ( कोऽयं दोष इति वक्तव्यमिति ) कोऽयं दोष इत्यनया वचनव्यक्त्या दोषरूपं मूलं यदुक्तं तत्किमिति पृष्टे अयं दोष इति वक्तव्यमित्यर्थः । यद्वा यच्छब्दसामर्थ्यात्तत्रेत्याक्षेपसिद्धम् । दोषमूलत्वेनेत्यादिना यदर्थजातमुक्तं तत्र कोऽयं दोष इति पृष्टे वक्तव्यमित्यर्थः । कुतो वक्तव्यमित्यत्राह ( यन्मूलतयेति ) नहि दोषमनुक्त्वाऽन्यथासिद्धिः सुवचेत्यर्थः । दोषमाह ( अनादीति ) स्वरूपसम्प्रतिपत्तिपर एवकारः । हि शब्देन दोषान्तरासम्भवसिद्धवत्कारः । स्वमते दोषत्वसम्प्रतिपत्त्यभिमानाद्वा हिशब्दः । दोषत्वं

* तत्त्वटीका *

( कोऽयमित्यादि ) यदुक्तं दोषरूपं मूलं तत्र कोऽयं दोष इतिप्रश्ने विशेषतः प्रतिवक्तव्यमित्यर्थः । नहि कश्चिद्दोषोऽस्तीतिसामान्योक्त्याऽन्यथासिद्धिः सुवचा, त्वन्मतेऽपि प्रसङ्गात् । विशेषतश्चात्र दोषो दुर्वचः, काचादेरव्यापित्वात्, तावतैवाऽन्यत्र शङ्कायामविषयवृत्तेश्चेति भावः । प्रागेव दोषविशेष उक्त इति शङ्कते ( अनादीति ) दोषत्वमस्या दुर्वचमित्याह ( भेदेति ) यदि द्विचन्द्र-

स्तिमिरादिवद्यथावस्थितवस्तुविपरीतज्ञानहेतुत्वं किमन्यत्र ज्ञातपूर्वम्? अनेनैव शास्त्रविरोधेन ज्ञास्यत इति चेत्, न; अन्योन्याश्रयणात्, शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चये सति भेदवासनाया दोषत्वनिश्चयः, भेदवासनाया दोषत्वनिश्चये सति शास्त्रस्य निरस्तनिखिलविशेषवस्तुबोधित्वनिश्चय इति। किञ्च यदि भेद-

* श्रुतप्रकाशिका *

हि विपरीतज्ञानहेतुत्वम्, अतो विपरीतज्ञानहेतुत्वेन व्याप्तेरदृष्टतया भेदवासनास्वरूपसम्प्रतिपत्तावपि दोषत्वासम्प्रतिपत्तेः पृच्छति (भेदवासनाया इति) तिमिरादिवदित्यादिशब्देन सादृश्यादि विवक्षितम्; तद्धि ज्वालायामैक्यभ्रमहेतुः। अन्यत्र ज्ञातपूर्वत्वस्य दुर्वचत्वाच्छङ्कते (अनेनैवेति) दूषयति (नेति) एवं प्रमाणान्तरेण दोषत्वानिश्चयेनान्योन्याश्रयणापत्तिरूपवैषम्यमुक्तम्। अथ तुल्यदोषत्वं बाध्यबाधकयोराह (किञ्चेति) अथ दोषमूलत्वे तुल्येऽपि परत्वाद्बाधकत्वं शङ्कते

* तत्त्वटीका *

भ्रमादौ भेदवासनाया दोषत्वं दृष्टमित्युच्येत, तदा भिन्नेष्वभिन्नत्वबुद्धावभेदवासनापि दोषत्वेन दृष्टा, ततश्चैक्यधीरपि दुर्बला न बाधिका स्यात्। अन्यत्राऽदृष्टमप्यद्वैतश्रुत्यन्यथानुपपत्त्या कल्प्यमिति शङ्कते (अनेनेति) कल्पकासम्भवमभिप्रेत्याह (नेति) अन्योन्याश्रयणादित्यनेनाऽन्वयः। भेदवासनामात्रस्य दोषत्वं निर्विशेषाद्वैतशास्त्रविरोधात्कल्प्यम्, सिद्धे च प्रत्यक्षमात्रस्य तादृशदोषमूलत्वे यूपादित्यैक्यन्यायातिक्रमेण शास्त्रस्य निर्विशेषपरत्वमिति मिथस्संश्रयात् कृत्स्नप्रत्यक्षदौर्बल्यं दुर्वचमिति भावः। ज्वालैक्यप्रत्यक्षे हि—

व्युत्पत्तिव्याप्तिपूर्वेषु प्रत्यक्षमुपजीवतोः।
कृत्स्नप्रत्यक्षवैरं न क्षमं शास्त्रानुमानयोः॥ * ॥

अस्तु ते बाह्यतुल्यत्व ×···· ···· ···· ···· नोव ···· ···· ···· ····
हुत्वमपि। ज्वालाभेदानुमानाद्वैषम्यमाह (किञ्चेति) नहि ज्वालाभेदधीः तदैक्य-

× अत्र पाठो गलितः॥

वासनामूलत्वेन प्रत्यक्षस्य विपरीतार्थत्वम्; शास्त्रमपि तन्मूलत्वेन तथैव स्यात् ॥ अथोच्येत—दोषमूलत्वेऽपि शास्त्रस्य प्रत्यक्षावगतसकलभेदनिरसनज्ञानहेतुत्वेन परत्वात्तत्प्रत्यक्षस्य बाधकमिति । तन्न; दोषमूलत्वे ज्ञाते सति परत्वमकिञ्चित्करम् । रज्जुसर्पज्ञाननिमित्तभये सति भ्रान्तोऽयमिति परिज्ञातेन केनचित् 'नायं सर्पो

---

* श्रुतप्रकाशिका *

( अथेति ) अपच्छेदादिष्विदं रजतं नेदं रजतमित्यादिषु च परं बाधकं दृष्टम्, अतो निषेध्योपस्थापकमानापेक्षया निषेधकस्य परत्वात् बलीयस्त्वमित्यर्थः । एवं ब्रह्मप्रतिपादकशास्त्रस्यापि व्युत्पत्त्यादेः प्रत्यक्षादिमूलतया तत्पूर्वकस्य तस्य प्रत्यक्षाद्यपेक्षया परत्वात्तत्प्रतिपाद्यनिर्विशेषवस्तुसत्यत्वमपि तुल्यन्यायतया सिद्धम् । तद्दूषयति ( तन्नेति ) परत्वस्याकिञ्चित्करत्वमुपपादयति ( रज्जुसर्पेति ) उत्तरज्ञानस्य दोषमूलत्वेन प्रामाण्यानिश्चयाद्भयानिवृत्तिः । ननु भ्रान्तत्वे ज्ञाते परत्वमकिञ्चि-

७ तत्त्वटीका ७

धीजनकदोषजन्येतिभावः । + दीपसादृश्यं तद्वर्तिकासाम्यं चाऽचिरनिर्वापितारोपित-दीपैक्यभ्रमे दोषत्वेन निर्णीतम्, अतस्तत्र नान्योन्याश्रयः; नच तत्र भेदानुमानं स्वोपजीव्यप्रत्यक्षव्यक्तिविरोधीति भावः ।

नान्यपर्य्यायमानत्वं नच वाच्यं तदेव तत् ।
यूपादित्येतिवाक्यादौ बाधादेव समानता ॥ ७ ॥
अतोऽनन्यपरस्यापि बुद्धिर्निगमवद्भवेत् ।
त्यज्यन्तस्याऽप्रमाणत्वं दोषबाधे च दुस्त्यजम् ॥ ७ ॥

यथा निर्दोषत्वसाम्येऽपि पूर्वापरापच्छेदयोः परो बलीयान्, तथा स दोषत्वसाम्येऽपि परत्वादागमः प्रमाणमिति शङ्कते (अथेति) तत्र रज्जौ सर्पभूरन्ध्रबुद्ध्योरिव पौर्वापर्यमकिञ्चित्करमित्यभिप्रायेणाह ( तन्नेति ) तदेवोदाहरणेन व्यनक्ति ( रज्ज्विति ) तद्वदुत्तरस्य दोषमूलत्वं न ज्ञातमित्याह ( शास्त्रस्येति ) अन्यथा मन-

---

+ अत्र ग्रन्थो गलितः ॥

मा भैषीः' इत्युक्तेऽपि भयानिवृत्तिदर्शनात् । शास्त्रस्य च दोषमूलत्वं श्रवणवेलायामेव ज्ञातम् । श्रवणावगतनिखिलभेदोपमर्दिब्रह्मात्मैकत्वविज्ञानाभ्यासरूपत्वान्मननादेः ॥ अपि च—इदं शास्त्रम्; एतच्चासम्भाव्यमानदोषम्; प्रत्यक्षन्तु सम्भाव्यमानदोषमिति केनावगतं त्वया ? न तावत्स्वतस्सिद्धा निर्धूतनिखिलविशेषानु-

* श्रुतप्रकाशिका *

त्करमस्तु, अत्र तु भ्रान्तत्वज्ञानं नास्तीत्यत्राह (शास्त्रस्य चेति) ज्ञातत्वमुपपादयति (श्रवणावगतेति) शास्त्रस्य भेदवासनामूलत्वं तावत्सम्प्रतिपन्नम्, तस्याश्च दोषत्वं भेदमिथ्यात्वज्ञानादवगम्यते, तन्मिथ्यात्वावगतिश्च ज्ञाननिवर्त्यत्वावगमात्. ज्ञाननिवर्त्यत्वावगमश्च ब्रह्मात्मैकत्वज्ञानस्य निखिलभेदोपमर्दित्वावगतेः, अत ईदृशनिवर्त्तकज्ञानाभ्यासरूपमननं कुर्वता शास्त्रस्य दोषमूलत्वमवगतमित्यर्थः । एवं बाध्यबाधकयोस्तुल्यदोषत्वरूपं वैषम्यमुक्तम् ॥ अथ मूलोच्छेदित्वमाह (अपि चेति) इदं शास्त्रमिति शब्दराशिव्यावृत्तिः । असम्भाव्यमानदोषमिति बौद्धागमादिव्यावृत्तिः । त्वया—प्रमाणप्रमेयादिकं तात्त्विकत्वेनानभ्युपगच्छता । (न तावदिति) स्वतस्सिद्धत्वेन निर्धूतनिखिलविशेषत्वम्, एतद्विशेषणं निर्विषयत्वप्रदर्शनार्थम् । कुतो नावगम्यत

* तत्त्वटीका *

नादिकारणोच्छेदात् कार्यासिद्धिं सूचयति (श्रवणेति) निखिलशब्दः प्रमातृप्रमेयप्रमाणशास्त्रस्वरूपपदवाक्यतदर्थविकल्पादिसङ्ग्रहार्थः ॥ अथ परोक्ते तत्प्रक्रिययैव प्रमाणाभावमभ्युपगम्य परमतस्य निर्मूलत्वं वक्तुमाह (अपि चेति) इदं शास्त्रम्—अबोधकात्, प्रत्यक्षादेश्च, व्यावृत्तमित्याशयः । असम्भाव्यमानदोषम्—प्रमाणाभासवर्गाद्विलक्षणमिति यावत् । बाह्यागमवैषम्यमप्यत्र दुर्वचमिति भावः ।

कल्पितं हि प्रमाणत्वं वेदे बाह्यागमेऽपि च ।
अव्यवस्था ततो बाधस्ताटस्थ्याच्छ्रौतसंविदः ॥ * ॥

केन— न केनापि प्रमाणेनेत्यर्थः । तत्र परेष्टशुद्धसंवित्स्वरूपं तदन्यद्वा मानमितिविकल्पं मत्वाऽऽद्यं निरस्यति (न तावदिति) नहि तस्याः कतिपयवैराग्यं

भूतिरिममर्थमवगमयति; तस्याः सर्वविषयविरक्तत्वात्, शास्त्रपक्षपातविरहाच्च । नाप्यैन्द्रियिकं प्रत्यक्षम्, दोषमूलत्वेन विपरीतार्थत्वात् । तन्मूलत्वादेव नान्यान्यपि प्रमाणानि; अतः स्वपक्षसाधनप्रमाणानभ्युपगमान्न

* श्रुतप्रकाशिका *

इत्यत्राह (तस्या इति) सर्वविषयविरक्तत्वात्–निर्विषयत्वादित्यर्थः । नहि विज्ञानमसम्बध्य विषयं प्रकाशयति, वस्तुतो निर्विषयापि भ्रान्त्या अविद्यमानमपि शास्त्रप्राबल्यमवगमयतीत्यत्राह (शास्त्रपक्षपातविरहाच्चेति) असम्बन्धाविद्यमानत्वाविशेषात्सौगतादिशास्त्रान्तरप्रामाण्यमप्यवगमयेदित्यर्थः । प्रत्यक्षादिकं नावगमयतीत्याह (नापीति) योगिप्रत्यक्षादेरप्यैन्द्रियिकप्रत्यक्षमूलशास्त्रजन्यज्ञानहेतुकादृष्टकार्यत्वादैन्द्रियिकप्रत्यक्षं प्रथममुपात्तम् । तन्मूलत्वात्–भेदवासनामूलप्रत्यक्षमूलत्वात् । एवं प्रकृतगोचरतयोक्तं प्रमाणाभावं पराभिमतसर्वगोचरत्वेनोपसंहरति (अत इति) न स्वाभिमतार्थसिद्धिः-स्वाभिमतम्, प्रत्यक्षदौर्बल्यशास्त्रप्राबल्यादिकम् । एतत्खण्डनकाराद्युक्तकुतर्कनिरसनोपलक्षणार्थमुक्तम् । तत्र प्रमाणव्याप्त्यादिभङ्गः क्रियते । तत्रेदं प्रष्टव्यम्; स्वाभिमतव्यतिरिक्तार्थपरं शास्त्रान्तरमपरमार्थार्थकमित्यस्मिन्नर्थे किं तव प्रमितिस्तत्साधनं वास्ति ? उत नास्ति ? अस्ति चेन्न प्रमाणादिभङ्गः, नास्ति चेत्तत एव न प्रमाणादिभङ्गः । प्रमितितत्साधनादिकमस्त्येव तद्व्यावहारिकमिति चेत् किमिदं व्यावहारिकत्वम्? किं परमार्थत्वम्? उतापरमार्थत्वम् ? अपरमार्थभूतं प्रमाणं किं साधकम् ? उतासाधकम् ? । साधकं चेदपरमार्थसंज्ञितमन्येषां च प्रमाणं तत्तत्पक्षसाधकमेव स्यात् । अथासाधकम्, ततो नितरां वाद्यन्तराभ्युपगतप्रमाणादिकं साधकं भवेत्, त्वदुक्तं

७ तत्त्वटीका ७

त्वयाऽनुशिष्टमित्यभिप्रायेणाह (तस्या इति) एतादृशी तस्यास्सहसा विरक्तिर्जातेत्यत्राह (शास्त्रेति) अवच्छेदकं दुर्लभमितिभावः (नान्यान्यपीति) स्वरूपातिरिक्तज्ञानन्तु भ्रान्तिरूपत्वान्नार्थस्य स्थापकम्, अन्यथातिप्रसङ्ग इति भावः । अत्र प्रत्यक्षस्य तन्मूलानुमानादेश्च निरासः । बहुवचनन्त्विह तत्तद्वादिमतानुसारेण । एवं साधकाभावादभिमतं शास्त्रप्राबल्यं न सिद्ध्यतीत्याह (अत इति)—

स्वाभिमतार्थसिद्धिः ॥ ननु व्यावहारिकप्रमाणप्रमेयव्यवहारो ऽस्माकमप्यस्त्येव; कोऽयं व्यावहारिको नाम? आपातप्रतीतिसिद्धो युक्तिभिर्निरूपितो न तथाऽवस्थित इति चेत्; किं तेन प्रयोजनम्? प्रमाणतया प्रतिपन्नेऽपि यौक्तिकबाधादेव प्रमाणकार्याभावात् ॥ अथोच्येत—

* श्रुतप्रकाशिका *

प्रमाणादिकं परमार्थभूतं चेत् द्वैती विजयी स्यादिति । स्वपक्षपरपक्षभेदः किं परमार्थः? उतापरमार्थः? परमार्थश्चेन्न भेदमिथ्यात्वम् । अपरमार्थश्चेत्परपक्ष एव त्वयाऽङ्गीकृतः स्यादिति भेदपारमार्थ्यं त्वयैवोक्तं स्यादिति; एवमादिव्याघातस्सर्वत्रानुसन्धेय इत्यभिप्रायः ॥ अथ स्वपक्षसाधनप्रमाणाभावं प्रतिविवक्षुश्चोदयति ( नन्विति ) कोऽयमित्याक्षिपति । व्यावहारिकस्वरूपं दर्शयति ( आपातेति ) दूषयति ( किं तेनेति ) साध्यनिश्चयरूपप्रयोजनं नेत्यर्थः । कुत इत्यत्राह ( प्रमाणतयेति ) युक्त्या बाधो यौक्तिकबाधः, धूमबुद्ध्या गृहीतबाष्पादेः साध्यनिश्चयाहेतुत्वदर्शनादित्यर्थः । एवं मूलोच्छेदित्वं वैषम्यमुपपादितम्. एवं पूर्वं परोक्तं परत्वाद्वैषम्यं दूषितम् ॥ अथास्मात् परस्य कस्यचिद्बाधकस्याभावं ब्रह्मप्रतिपादकशास्त्रस्य प्रत्यक्षाद्वैषम्यं शङ्कते (अथोच्येत-

५ तत्त्वटीका ५

ज्वालाभेदानुमाने तु धर्मलिङ्गादिबुद्धयः ।
न दोषमानबाध्याश्च नात्मनस्तान्निदर्शनम् ॥ ५ ॥
स्वपक्षस्थापकादेव स्वव्याघातादिदोषतः ।
निर्मूलमखिलं शास्त्रमित्युक्तं भवति त्विह ॥ ५ ॥
अथ सौगतसर्वस्वे सम्वृत्त्याख्ये प्रलम्भने ।
परशब्दान्तरं न्यस्यन् समाधित्सति ‘नन्वि’ति ॥

अत्र व्यवहारसम्बन्धादिमात्रमतिप्रसञ्जकमित्यभिप्रायेण प्रतिक्षिपति ( कोऽयमिति ) बहुधा विकल्पितेषु त्वदिष्टानुगुणो न कश्चित्कल्प्य इत्याशयः । परेष्टं कोट्यन्तरं शङ्कते ( आपातेति ) एतत्स्वोक्त्यादिविरुद्धमिति सूचयति ( किं तेनेति ) लिङ्गविभ्रमं बाष्पागमन्यायमुद्घाटयति ( प्रमाणतयेति ) प्रमाण-

शास्त्रप्रत्यक्षयो (१)रविद्यामूलत्वेऽपि प्रत्यक्षविषयस्य शास्त्रेण बाधो दृश्यते; शास्त्रविषयस्य सदद्वितीयब्रह्मणः पश्चात्तनबाधादर्शनेन निर्विशेषानुभूतिमात्रं ब्रह्मैव परमार्थ इति। तदयुक्तम्, अबाधितस्यापि दोषमूलस्यापारमार्थ्यनिश्चयात्। एतदुक्तं भवति, यथा सकलेतरकाचादिदोषरहितपुरुषान्तरागोचरगिरिगुहासु वसतस्तैमिरिक-

* श्रुतप्रकाशिका *

इत्यादिना ) बाधदर्शनाभावरूपं वैषम्यं शास्त्रस्य वक्तुं प्रत्यक्षविषयस्य बाधदर्शनमाह ( शास्त्रेति ) प्रत्यक्षविषयाच्छास्त्रविषयस्य वैषम्यमाह ( शास्त्रविषयस्येति) पाश्चात्यबाधादर्शनाभ्युपगमेन दूषयति ( तदयुक्तमिति ) कुत इत्यत्राह ( अबाधितस्येति ) यस्य दुष्टं कारणं यस्य च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्यय इति नीतिविदः, अतो दुष्टमूलत्वबाधकप्रत्ययौ प्रत्येकं मिथ्यात्वसाधकौ; व्याहतमिदं यदबाधितस्याप्यपारमार्थ्यनिश्चय इति। अपरमार्थत्वेन निश्चितत्वं हि बाधितत्वमित्यत्राह ( एतदुक्तमिति ) अज्ञातस्वतिमिरस्येति पदं क्वचिद्दृश्यते, दोषज्ञाननिबन्धनपरोक्षबाधकज्ञानोदयव्युदासः प्रयोजनम्। ज्ञातस्वतिमिरस्येति तु पाठो लेखक-

* तत्त्वटीका *

कार्याभावात्---स्वपक्षसत्यत्वादेरलाभादिति भावः । शास्त्रस्य प्रत्यक्षं बाधित्वोदयात्तस्य बाधकान्तरानुदयाच्च प्रत्यक्षाद्बलीयस्त्वं शास्त्रस्य स्वार्थसाधकत्वञ्च शङ्कते ( अथेति ) बाधकान्तरानुदयमन्वारुह्य प्रतिवक्ति ( तदिति ) अप्रामाण्यज्ञप्तौ बाधकवत्कारणदोषस्यापि पृथगेव हेतुत्वं प्रसिद्धमित्यभिप्रायेणाह ( अबाधितस्यापीति ) "दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे। अर्थातुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥" इति चाहुः। अनुत्पन्नबाधकज्ञानस्याऽनवगतकारणदोषस्य कस्यचित् स्वज्ञाने कथं मिथ्यात्वसिद्धिरित्यत्राह ( एतदुक्तमिति ) सम्भावनया कल्पितेनापि परसम्मन्तव्येन निदर्शनेन बोधयति ( यथेति ) बाधानुदयार्थं 'सकलेतरे'त्यादिकमुपात्तम् 'अविशिष्टं जायत' इतिच । अविदितदोषस्य कथं

(१) प्रत्यक्षयोर्द्वयोरप्यविद्या- इति पाठान्तरम् ॥

जनस्याज्ञातस्वतिमिरस्य सर्वस्य तिमिरदोषाविशेषेण द्विचन्द्रज्ञानमविशिष्टं जायते। न तत्र बाधकप्रत्ययोऽस्तीति न तन्मिथ्या न भवतीति तद्विषयभूतंद्विचन्द्रत्वमपि मिथ्यैव, दोषो ह्ययथार्थज्ञानहेतुः। तथा ब्रह्मज्ञानमविद्यामूलत्वेन बाधकज्ञानरहितमपि स्वविषयेण ब्रह्मणा सह मिथ्यैव- इति। भवन्ति चात्र प्रयोगाः, विवादा-

---

* श्रुतप्रकाशिका *

स्खलनकृतः, स हि पुरुषान्तरागोचरत्वोक्तिविरुद्धः, बाधकाभावे कथं मिथ्यात्वमित्यत्राह ( दोषो हीति ) भ्रान्तिसमानाश्रयबाधकज्ञानाभावेऽपि पुरुषान्तरज्ञानेन मिथ्यात्वनिश्चयो न व्याहत इत्यर्थः। तिरश्चां यावज्जीवं बाधोदयाभावेऽपि देहात्मधीर्मिथ्यार्थविषया, तस्याः संसर्गरूपदोषमूलत्वात्. बाह्यभ्रमेषु स्पष्टोदाहरणस्य विवक्षितत्वादेव तदनुक्तिः। ननु तिरश्चां देहात्मभ्रमो नास्माकं प्रत्यक्षः, कार्यानवगमात् भ्रमकारणदोषोऽपि दुरवगमः, तत्कथं दोषमूलत्वसम्भावनाज्ञानमात्रेण मिथ्यात्वनिश्चयः? उच्यते,—अस्मदादेः शास्त्रश्रवणात्पूर्वं देहात्मभ्रमदर्शनात्तेषां च शास्त्राधिकाराभावाद्देहात्मभ्रमस्तन्मूलदेहसंसर्गरूपदोषवत्त्वं चानुमीयते, दोषमूलत्वनिश्चयान्मिथ्यात्वनिश्चयः, एवं तैमिरिकजनस्य तिमिरान्वये आप्तवाक्यादिकमन्वेष्टव्यम् ; ततो मिथ्यात्वनिश्चयः। एवं सपक्षे शिक्षितमर्थं दार्ष्टान्तिके निगमयति ( तथेति ) ज्ञानमिथ्यात्वं परमताभ्युपगमादुक्तम् , पाश्चात्यबाधादर्शनमुत्तरत्र निरसिष्यते। शास्त्रस्याविद्यामूलत्वाभ्युपगमेऽनिष्टं प्रसञ्जयति ( भवन्तीत्यादिना ) व्याप्ति

* तत्त्वटीका *

प्रामाण्यसिद्धिरित्यत्राह ( दोष इति ) अप्रामाण्यस्वरूपस्य दोषस्वरूपं हेतुः, तद्बोधस्य च तद्बोध इति विभागोऽभिप्रेतः। एवं भ्राम्यतो दोषधीबाधयोरभावेऽपि तद्बुद्धेर्भ्रमत्वादिकं परीक्षकस्थाप्यं पक्षे योजयति ( तथेति )

त्वदुक्तदोषसद्भावा—दप्रामाण्यसमुद्भवः।
तज्ज्ञप्तेरप्रमाणत्वाज्ज्ञप्तिरप्यत्र सिद्ध्यति ॥ ७ ॥

ऐन्द्रियबोधावबोधमभिप्रेत्य 'बाधकज्ञानरहितमपी'त्युक्तम् । तद्व्याप्तिप्रसङ्ग-

ध्यासितं ब्रह्म मिथ्या, अविद्यावत उत्पन्नज्ञानविषयत्वात् प्रपञ्चवत् । ब्रह्म मिथ्या, ज्ञानविषयत्वात्, प्रपञ्चवत् । ब्रह्म मिथ्या, असत्यहेतुजन्यज्ञानविषयत्वात्, प्रपञ्चवदेव । न च वाच्यम्-स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववदविद्यामूलत्वेनासत्यस्यापि शा-

* श्रुतप्रकाशिका *

प्रदर्शनवचनत्वात् प्रयोगा इत्युक्तम् । प्रतिज्ञादृष्टान्तहेतुरूपेण कथनमनिष्टप्रसङ्ग एवमपि न्याय्य इति ज्ञापनार्थम् ज्ञानविषयत्वमात्रमेको हेतुः, एको दुष्टपुरुषज्ञानविषयत्वम्, एको मिथ्याभूतसामग्रीजन्यज्ञानविषयत्वमिति भिदा । पूर्वं सपक्षीभूत एवार्थोऽत्र सपक्ष इत्येवकारार्थः । नन्वसत्यहेतुजन्यधीविषयत्वमन्यतरासिद्धम्, प्रपञ्चवदिति दृष्टान्तश्च साध्यविकलः । कथमेवं प्रसङ्गः? उच्यते,—'ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यत' इति वत्प्रसञ्जकप्रसञ्जनीयधर्मव्याप्तिं परमतेनाभ्युपगम्य दूषणमुक्तमिति न विरोधः, नासत्यहेतुजन्यज्ञानविषयत्वादसत्यत्वं ब्रह्मणः, असत्यादपि सत्यप्रतिपत्तिर्दृश्यत इति शङ्कामनूद्य परिहरति ( न चेत्यादिना ) किमसत्यस्य सत्योत्पत्तिहेतुत्वानुपपत्तिः ? उत तज्ज्ञप्तिहेतुत्वानुपपत्तिः ? इति विकल्पमभिप्रेत्य उत्पत्तिहेतुत्वे ज्ञप्तिहेतुत्वे चोदाहरणानि दर्शितानि । तत्र स्वाप्नविषयाणां सत्यत्वेऽभिमतेऽपि

* तत्त्वटीका *

परान् प्रयोगानाह ( भवन्तीति ) सगुणब्रह्ममिथ्यात्वस्य परसम्मतेस्तद्व्यवच्छेदाय 'विवादाध्यासित' मिति । यद्यप्यत्र परेष्टव्याप्त्या ज्ञानविषयत्वे मिथ्यात्वं स्यादित्येक एव प्रयोगस्साधीयान्, तथापि प्रथमतृतीयौ सविशेषणप्रयोगौ प्रसङ्गहेतोस्साधकत्वव्यक्त्यर्थौ । यद्वा, यथा प्रपञ्चस्य मिथ्यात्वं ज्ञानविषयत्वमात्रेण, तद्विशेषविषयत्वेन वा त्वया साध्यते, तथैव ब्रह्मणोऽपि साधयित्वा माध्यमिकयूथमध्यमध्यास्व, ततश्चासत्प्रयोगानिमान् मत्वा ऽऽत्माश्रयासिद्धिविशेषणवैयर्थ्यव्याप्तिभङ्गादिदोषान्मोदजीघट इति भावः । अथवा त्वत्सयूथ्यस्य तुर्यबौद्धस्य प्रयोगास्त्वया दुर्वाराः स्युरित्याशयः । एतावता तूष्णींभावे प्राप्तेऽपि प्रत्यक्षाच्छास्त्रप्राबल्यमसत्यात्सत्यसिद्धिं निदर्शनैः सिषाधयिषितं मत्याह ( नचेति ) दृष्टान्तं दूषयति

नस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावो न विरुद्ध इति, स्वाप्नज्ञानस्यासत्यत्वाभावात् । तत्र हि विषयाणामेव मिथ्यात्वम्; तेषामेव हि बाधो दृश्यते; न ज्ञानस्य; न हि मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यत इति कस्यचिदपि प्रत्ययो जायते । दर्शनं तु विद्यते अर्था न सन्तीति हि बाधकप्रत्ययः । मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः, तत्रापि

* श्रुतप्रकाशिका *

विषयासत्यत्वमभ्युपगम्य परिहरति ( स्वाप्नेति ) ज्ञानस्य सत्यत्वमुपपादयति ( तत्र हीति ) अवधारणं कथमित्यत्राह ( तेषामेवेति ) ज्ञानस्याबाधं दर्शयति ( नहीति ) कथं जायत इत्यत्राह ( दर्शनं त्विति ) अन्यविषयो बाधो नान्यत्र सञ्चारयितुं युक्त इत्यर्थः । अत्रानेकोदाहरणप्रदर्शनं तत्तज्ज्ञानसामग्रीविशेषाणां सत्यत्वज्ञापनार्थम्, तच्च ज्ञानसत्यत्वनिर्वहणार्थम्. स्वप्नकारणं पूर्वानुभवसंस्कारः सत्यः, प्रसिद्धत्वात्तदनुक्तिः (मायाविन इति) अत्र मन्त्रौषधादिप्रभवमित्यनेन कारण-

७ तत्त्वटीका ७

( स्वाप्नज्ञानस्येति ) अनेन दोषरूपसत्यहेतुजन्यत्वमपि सूच्यते । तर्हि तत् कथं मिथ्याज्ञानमित्यत्राह ( तत्रेति ) ज्ञाने मिथ्यात्वोक्तिर्लाक्षणिकिति भावः । अत्रापि सन्ध्याधिकरणे स्वप्नप्रपञ्चसत्यत्वे स्थापयिष्यमाणेऽपि परमतान्वारोहेणान्यथाख्यातिपक्षेण विषयबाधोक्तिः । ननु स्वप्नभुक्तिवत् कर्ममिथ्यात्वे सिद्धे ज्ञानक्रियापि मिथ्यैव स्यात् । नेत्याह ( तेषामिति ) अन्ततो यथादर्शनं सर्वत्र व्यवस्थेत्याशयः । तत्र विषयविषयिणोर्बाधाबाधौ विवृणोति ( नहीति ) सर्वत्र— .... ....

ज्ञानस्य लि[ङ्ग]ङ्गाभावेऽपि विषयो[र्थो]त्र[ न ] बोधकृत् ।
अतीतागामिविषयै-र्ज्ञानैरप्यनुमोदयात् ॥ ७ ॥

एवं स्वप्नादिभिरेवासत्यैर्लिङ्गैरसत्यात्सत्योत्पत्तिरपि दृष्टा, किमुत ज्ञप्तिरिति मन्यमानस्यान्यदप्युदाहरणमन्यथयति ( मायेति ) मायामयम्— आश्चर्य्यभूतम्, मिथ्यार्थगोचरमिति यावत् ।

ज्ञानस्याबाधितत्वात् । विषयेन्द्रियादिदोषजन्यं रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः । सत्यैवाऽदष्टेपि स्वात्मनि सर्पसन्निधानाद्दष्टबुद्धिः, सत्यैव शङ्काविषबुद्धि-

* श्रुतप्रकाशिका *

सत्यत्वमुक्तम् । मायामयम्—मिथ्याविषयमित्यर्थः, विचित्रविषयं वा ( विषयेत्यादि ) विषयदोषस्सादृश्यादिः, इन्द्रियदोषः काचादिः, आदिशब्देन देशगतदूरत्वादिदोष उच्यते, दोषश्च सत्यः ( सत्यैवेति ) सर्प्पसन्निधानं कारणं सत्यम्. दष्टबुद्धिश्च सत्या, शङ्काविषबुद्धावपि सामग्री सत्या, निर्विषोरगदंशनं वा अन्धकारे अश्म-

७ तत्त्वटीका ७

न सत्यः कस्यचिद्धेतु—र्नेतरां ज्ञप्तिकारणम् ।
नतमां सत्यधीहेतुरित्युत्पत्तिरुदाहृता ॥ ७ ॥
परप्रलापैरीदृग्भिर्माभूद्बालप्रतारणम् ।
इत्यभिन्नसमाधान —बहूदाहृतिखण्डनम् ॥ ७ ॥
सत्यहेतूद्भवस्सत्यो धीहेतुस्तत्र तत्र नः ।
हेतुरित्यपि च ज्ञप्त्यै बहुभ्रान्तिनिवारणम् ॥ ७ ॥

यद्यपि धीमात्रस्य कार्यविशेषहेतुत्वेऽतिप्रसङ्गः, तथापि विशेषणैरुपलक्षणैर्वा मिथ्याविषयैरवच्छेदे तु यथार्हमसत्यात् सत्योत्पत्तिज्ञप्ती दुस्त्यजे ; अथाप+ ········ सामग्रीशक्तिसिद्धैस्स्वभावविशेषैरेव भयविस्मयादिप्रतिनियतव्यवहारकार्यसिद्धेः स्वप्रकाशवादे वादान्तरे च विषयविषयिणोर्युगपदेकप्रकाशस्सिद्ध्यन् प्रत्य+ ···· ···· रेषु न विषयायत्तः, ईश्वरादीनां बुद्धिषु व्यवहारानुगुण्यमनुपाधिकम् । त्वेत्रियान्तु तत्तद्विषयविशेषोल्लेखस्तत्तत्कर्मोपनीतहेतुभेदायत्तः प्रागेव स्थापितः ।

अतो नासत्यधीस्सत्या तवासत्यादसत्यधीः ।
सत्यादसत्यधीर्वेति त्वसत्यात्सत्यधीर्न च ॥ इति ॥
व्यावहारिकसत्यस्य त्वसत्यात्सिद्धिरित्यसत् ।
बुद्धीनामयथार्थत्वे व्यावहारिकसत्यता ॥ ७ ॥

× परोक्ष- इति × प्रत्यक्षेषु- इति च स्यातव्यमिति भाति ॥

मेरणहेतुभूता । वस्तुभूत एव जलादौ मुखादिप्रतिभासो वस्तुभूतमुखगतविशेषनिश्चयहेतुः । एषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते । हस्त्यादीनामभावेऽपि कथं तद्बुद्धयः सत्या भवन्तीति चेत्; नैतत्, बुद्धीनां सालम्बनत्वमात्रनियमात् । अर्थस्य

* श्रुतप्रकाशिका *

लोष्टादिनिपीडनं वा सत्यं हि भवति (वस्त्विति) जलादि सत्यम्, तत्कृतचाक्षुषतेजःप्रतिहतिश्च सत्या, संवेदनानां सत्यत्वे निश्चिते शुक्तोदाहरणेषु सत्यात्सत्यप्रतिपत्तिरित्यत्राह ( एषामिति ) उत्पत्तिमत्त्वमर्थक्रियाकारित्वं च द्वयमपि प्रत्येकं सत्यत्वे साधकम्, न हि शुक्तौ रजतमुत्पत्तिमत्, न च कार्यकरम् । अथ ज्ञानसत्यत्वं विषयसत्यताव्याप्तमिति तन्निवृत्त्या ज्ञानसत्यत्वनिवृत्तिरिति शङ्कते ( हस्त्यादीनामिति ) अभावे—प्रतिपन्नोपाधौ तथात्वाभावे । ज्ञानसत्यत्वं सालम्बनत्वमात्रव्याप्तम् । अबाधितत्वादिति परिहरति ( नैतदिति ) सालम्बनत्वमात्रशब्देन सत्यालम्बनत्व-

* तत्त्वटीका *

असत्यात्सत्यबुद्धिश्च यथादृष्टि यथेष्यते ।
तथैव ब्रह्मणोऽपि स्यात्सत्यत्वं व्यावहारिकम् ॥

अत्र संस्कारमन्त्रौषधादिविशेषैस्सरया ···· ···· ···· स्वप्नादिधियस्सिद्धिः, ताभिश्च सत्याभिरेव तत्तत्सत्यसिद्धिर्दर्शिता । 'दृष्टबुद्धि' रित्यत्रापि मरणहेतुभूतेति योज्यम्, शङ्काविषोदाहरणन्तु निर्विषसर्पदष्टादौ छिन्नकण्टकवेधादौ च भाव्यम् । जलादिर्मुखादिप्रतिभासहेतुरित्यस्य प्रागुक्तत्वादिह नोक्तः । पूर्वं बाधकाभावाद्बुद्धीनां सत्यत्वं साधितम्. हेत्वन्तरतोऽपि तदाह ( एषामिति ) व्यावहारिकवादिनाऽपि बुद्धीनां कारणा[ नाम ]न्वयव्यतिरेकाभ्यामुत्पत्तिमत्त्वं कार्याणां तदन्वयव्यतिरेकार्थक्रियाकारित्वञ्च दुरपह्नवम्, नचेदमुभयं रज्जुसर्पादौ दृष्टमिति भावः । गत्यभावात्स्वमतं प्रस्मृत्य बुद्धीनां सत्यालम्बनत्वं व्यापकं मन्वानं तन्निवृत्त्या तन्निवृत्तिं चोदयति ( हस्त्यादीनामिति ) आशामोदकभक्षणन्यायेन वा विषयमिथ्यात्वाद्विषयिमिथ्यात्वं साधयत एव ···· ···· धियां सत्यालम्बनत्वनियमः प्रमाण-

**प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितम्; प्रतिभासमानता चास्त्येव दोषवशात् । स तु बाधितोऽसत्य इत्यवसीयते । अबाधिता हि बुद्धिः सत्यैवेत्युक्तम् ॥**

* श्रुतप्रकाशिका *

व्यावृत्तिः । मिथ्याभूतस्यालम्बनत्वं कथमित्यत्राह ( अर्थस्येति ) आलम्बनम् विषयः । ( प्रतिभासमानत्वमेव ह्यालम्बनत्वेऽपेक्षितमिति ) प्रतिभासमानत्वमेव विषयत्वमित्यर्थः । अविद्यमानस्याप्यतीतानागतादेः प्रतिभासमानस्यालम्बनत्वदर्शनाद्विद्यमानस्याप्यप्रतिभासमानस्य तदभावाच्चेति भावः । पक्षे प्रतिभासमानत्वमप्यस्तीत्याह ( प्रतिभासेति ) प्रतिभासमानता—संविदपेक्षया प्रतिसम्बन्धित्वम् । अविद्यमानस्य विद्यमानतया भासनाच्चेन रूपेणासत्यता, तथा साक्षादवभासमानो विषयोऽपि ज्ञानहेतुः स्यात् . सम्प्रतिपन्नविद्यमानविषयवत् विद्यमानतया भासमानत्वाविशेषात्; तथासति असत्यात्सत्योत्पत्तिरित्यत्राह ( दोषवशादिति ) अविद्यमानस्य विद्यमानतया भासनहेतुर्दोष एव, न त्वविद्यमानो विषयः । अविद्यमानो विषयो न ज्ञानस्य हेतुतयाऽपेक्षितः केवलं विषतया, विद्यमानस्तु तथात्वेन भासमानो विषयतया हेतुतया चापेक्षितः, अतो वस्तुतो विद्यमानत्वमेव विषयस्य ज्ञानहेतुत्वे उपाधिः । नियतपूर्वकालवर्तिनो हि हेतुत्वं दृष्टम्; तस्मादविद्यमानस्य हेतुत्वायोगाद्दोष एव हेतुरिति नासत्यात्सत्योत्पत्तिरित्यर्थः । प्रतिभासमानत्वे द्वयोरप्यविशिष्टे कथमन्यतरस्यासत्यत्वनिश्चय इत्यत्राह ( स त्विति ) बुद्धिरप्यसत्या किं न स्यादित्यत्राह ( अबाधितेति ) विषयासद्भावेन ज्ञानस्यासत्यताकथनं कालात्यया-

* तत्त्वटीका *

तर्कविरुद्ध इत्यभिप्रायेण प्रत्याह ( नैतदिति ) तद्व्यनक्ति ( बुद्धीनामिति ) मात्रचा विषयसत्यत्वमनियतमिति व्यज्यते । अर्थाभावे कथमालम्बनत्वमित्यत्राह (अर्थस्येति) एवकारो विद्यमानस्यैवालम्बनत्वमिति व्यवच्छेदार्थः । खपुष्पस्येवालम्बनत्वमसतः कथमित्यत्राह ( प्रतिभासमानतेति ) अवधारणेन दुरपह्नवत्वं द्योत्यते । ···· एवालम्बनमर्थसत्यत्वञ्च न भासमानत्वे ···· त्यक्तेन्द्रियस्य ···· बन्ध ···· कारण···· भावः । ( दोषवशादिति ) वध ···· तर्हि कारणविशेषवैशि ···· दित्य-

* श्रुतप्रकाशिका *

पदिष्टमित्यर्थः । ननु स्वाप्नादिविषयज्ञाने किं ज्ञानमात्रं शुभाशुभप्रतिपत्तिहेतुः ? उत ज्ञानविशेषः ? ज्ञानमात्रपक्षेऽतिप्रसङ्गः । ज्ञानविशेषश्चेत् कस्तस्यावच्छेदकः ? विषयश्चेत्किं विषय उपलक्षणतयावच्छेदकः ? उत विशेषणतया ? यदि विशेषणतया विशेष्येण सह कार्यान्वयि हि विशेषणम् , अतो हस्त्यादेरपि शुभाशुभप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः । यद्युपलक्षणतया उपलक्ष्यबहिर्भूत उपलक्ष्यप्रतीत्युपायो ह्युपलक्षणम् , अतो विषयस्य ज्ञानप्रतिपत्तिहेतुत्वादसत्यात्सत्यप्रतिपत्तिः । ज्ञानानां तत्तद्व्यवहारानुगुण्यलक्षणस्वभावविशेषैर्व्यावृत्तत्वान्नातिप्रसङ्ग इति वाच्यम्; व्यवहारानुगुण्यमात्रस्य व्यावर्त्तकत्वेऽतिप्रसङ्गात्. व्यवहारविशेषानुगुण्यस्य व्यावर्त्तकत्वे तद्विशेषश्च तत्संग्राहकविषयाधीन इति व्यवहारावच्छेदकतया अनृतस्य सत्यहेतुत्वमिति । उच्यते,—व्यावृत्तमेव ज्ञानं शुभाशुभाद्यनुमापकम् ; व्यावृत्तिश्च स्वालम्बनेन. अविद्यमानस्याप्यालम्बनत्वं दोषवशादित्युक्तम्; अन्यथा ख्यातिपक्षेऽप्यालम्बनसत्यता सर्वज्ञानानामिष्यत एव, विशेषणविशेष्यतत्संसर्गाणां क्वचित्सत्यत्वात् । विशेषणविशेष्ययोस्तथात्वनिर्वाहकस्संसर्गः स्वस्य तदीयत्वे संसर्गान्तरनिरपेक्षः, स तु संसर्गः पुरोवर्त्तिनि भ्रमाधिष्ठाने प्रतीयमानः पुरोवर्त्यपेक्षया स्वयं स्वस्य संसर्गरूपत्वनिर्वहणासामर्थ्यात् पुरोवर्तिनि नास्तीति पुरोवर्त्यपेक्षया संसर्गोऽपरमार्थः, न तु स्वरूपेण, आलम्बनत्वे च सन्निहितत्वरूपमनपेक्षितम् , असन्निहितस्याप्यालम्बनत्वदर्शनात्; अतः सत्येन रूपेणालम्बनत्वमिति हस्त्यारोहणादिज्ञानान्यपि सत्यभूतहस्त्याद्यलम्बनावच्छिन्नानि परमार्थभूतया स्वप्नावस्थयावच्छिन्नत्वाज्जाग्रदवस्थाज्ञानविलक्षणानि शुभाशुभप्रतिपत्तिनिमित्तानि, अतो नातिप्रसङ्गः, नासत्यात्सत्यप्रतिपत्तिश्च । न च प्रतिबिम्बाद्बिम्बानुमितावसत्यात्सत्यप्रतिपत्तिः, प्रतिबिम्बप्रतिभासस्य सत्यस्यैवानुमापकत्वात् , परमार्थतस्तु तत्र नानुमापकानुमेयविभागः, दर्पणादिप्रतिहतैश्चाक्षुषतेजोभिर्बिम्बस्यैव दर्पणस्थतया गृह्यमाणत्वात्, अतः क्वचिद्-

* तत्त्वटीका *

आह ( स त्विति ) स इत्यर्थपरामर्शः । ···· मिथ्याविषयिणोपि मिथ्यात्वशङ्कां निरस्यति ( अबाधितेति ) एवं सत्यसिद्धिहेतुतयोक्तानां धियामसत्यत्वमपास्तम् ।

··· सर्वकोशेषु तत्र तत्र त्रुटित एवोपलभ्यते ॥

रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धिः, रेखाया-स्सत्यत्वात् । ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धि-हेतुः, वर्णात्मता त्वसत्या । नैवम्; वर्णात्मताया असत्याया उपायत्वायोगात् । असतो निरुपाख्यस्य ह्युपायत्वं न

* श्रुतप्रकाशिका *

र्थप्रतिपत्तिः, कचित्प्रतिभासाद्यर्थप्रतिपत्तिसिद्धि नासत्यस्य लिङ्गत्वम् । किञ्च असत्यात्सत्यप्रतिपत्तिः भवत्पक्षेणोच्यते ? उतासत्पक्षेण ? न तावद्भवत्पक्षे सा सिध्यति, शुभाशुभयोरपि मिथ्यात्वेन असत्यादसत्यप्रतिपत्तिरेव हि स्यात् । न चास्मत्पक्षे, यथार्थख्यात्यभ्युपगमात् सत्यादेव सत्यप्रतिपत्तेः, एषां स्वाप्नहस्त्यादिज्ञानादीनां शुभाशुभप्रतिपत्त्यादिहेतुभूतानां परोक्तामुदाहरणज्ञानानां संस्कारादिसत्यसामग्रीकत्वं स्पष्टम्, ज्ञानानां सत्यत्वमुपपादितम्; अत उत्पत्तौ ज्ञप्तौ च हेतुसत्यत्वं सिद्धम् ॥

अथ ज्ञानव्यतिरिक्तासत्यहेतुना सत्यप्रतिपत्तौ हेतुसत्यत्वमुपपाद्यते (रेखयेत्यादिना ) हेतोरसत्यत्वं दर्शयन्नोदयति ( नन्विति ) परिहरति ( नैवमिति ) वर्णात्मकता किं सत्तया वर्णप्रतिपत्तेरुपायः ? उत प्रमितत्वया ? उत प्रतीतत्वया ? इति विकल्पमभिप्रेत्याह ( असत इति ) असत्यत्वात्सत्तयोपायत्वमनुपपन्नमित्यसतइति पदस्याभिप्रायः, असतः—सख्यातिरिक्तस्येत्यर्थः । असत्त्वादेव प्रमिततयोपायत्वं चानुपपन्न-

* तत्त्वटीका *

अथासत्यात्सत्यसिद्ध्युदाहरणानि निरस्यन्ते ; तत्र रेखानिदर्शने बह्वीर्विकल्पकोटीर्हृदि निधाय रेखाया वर्णमात्रत्वपक्षेऽनिष्टमाह (रेखयेति) रेखायामेव कार्योपयुक्तकल्पितरूपस्य सत्य .... .... .... कल्पितस्य हेतुत्वं नेत्याह ( नैवमिति ) असत्या वर्णात्मता वर्णधीहेतुत्वेन दुस्साधेत्याह ( वर्णात्मताया इति ) दोषवशात् तस्याः प्रतीत्वद्‌उपायत्वमपि किं न स्यादित्यत्राह ( असत इति ) रेखायां हि वर्णात्मता नास्ति × कश्च ग्रहम्, अतस्सम्प्रतिपन्नतुच्छवदस्यापि हेतुत्वमयुक्तम् । किञ्च,—निरुपाख्यशब्देन प्रमाणशून्यत्वं विवक्षितम् , तेनासत्त्वे हेतूक्तिः । किञ्च— सत्त्वादेव प्रत्याविषयत्वासम्भवादुपाख्याविषयत्वमपि न स्यात्, ततस्तत्रोपाय-

× अत्र ग्रन्थो गलितः ॥

**दृष्टमनुपपन्नञ्च। अथ तस्यां वर्णबुद्धेरुपायत्वम्; एवं तर्ह्यसत्यात्सत्यबुद्धिर्न स्याद्बुद्धेस्सत्यत्वादेव। उपायोपेययो-रेकत्वप्रसङ्गश्च, उभयोर्वर्णबुद्धित्वाविशेषात्। रेखाया अविद्यमानवर्णात्मनोपायत्वे चैकस्यामेव रेखायामविद्य-मानसर्ववर्णात्मकत्वस्य सुलभत्वादेकरेखादर्शनात्सर्व-**

* श्रुतप्रकाशिका *

मिति निरुपाख्यशब्दाभिप्रायः, उपाख्या—प्रमितिः, तदविषयत्वं निरुपाख्यत्वम्। प्रतीतिविषयतयोपायत्वानुपपत्तिस्तु वक्ष्यते, सत्ताप्रमित्योरभावेऽपि वर्णात्मताया उपायत्वमस्तीति कल्प्यते चेत्तदनुपपन्नम्, व्याप्तिविरोधात्। व्याप्त्यनुगुणं हि कल्पनं प्रवर्त्तेत इत्यभिप्रायेणाह (अनुपपन्नं चेति) अथ भ्रान्तितः प्रतीतायाः वर्णात्मतायां वर्णप्रतिपत्तिहेतुत्वपक्षेऽपि बुद्ध्यंशस्य हेतुत्वे परस्यानुपपत्तिं दर्शयितुमाह (अथेति) दूषयति (एवं तर्हीति) कुत इत्यत्राह (बुद्धेरिति) दूषणान्तरमाह (उपायेति) तदुपपादयति (उभयोरिति) बुद्ध्यंशस्य हेतुत्वे दूषणमुक्तम्। वर्णात्म-तांशस्य हेतुत्वे सिंहावलोकितकेन दूषणमाह (रेखाया इति) अविद्यमानवर्णा-

* तत्त्वटीका *

तोक्तिर्न क्रमेत। एतेन नियतपूर्वभावित्वरूपहेतुलक्षणाभावोपि दर्शितः। "पूर्व-सम्बन्धनियमे हेतुत्वे तुल्य एव नौ। हेतुतत्त्वबहिर्भूतसत्त्वासत्त्वकथा वृथा।" इति खण्डनोक्तिस्तु खपुष्पस्यापि हेतुत्वप्रसङ्गान्निरस्ता, ख्यातितदभावादिवैषम्यञ्चात्र दुर्वच-मिति भावः। न दृष्टम्— न प्रत्यक्षम्। अनुपपन्नञ्च—कल्पयितुमप्यशक्यमित्यर्थः। रेखायां वर्णश्रीर्मिथ्याविषयत्वान्मिथ्यार्था। सा हेतुरिति कोट्यन्तरमनुवक्ति (अथेति) तत्र दत्तोत्तरत्वमाह (एवं तर्हीति) एतेन वर्णधीविशिष्टरेखापक्षोऽपि निरस्तः। अधिकमपि दूषणमाह (उपायेति) ननु रेखायां वर्णधीरुपायः, पाठ्यवर्णधी-रसाध्या, कथमनयोरैक्यम्? तत्राह (उभयोरिति) अयम्भावः,— अभ्यस्तलिपि-दर्शनोद्बुद्धसंस्कारजनितवर्णस्मृतिपूर्विका हि रेखायां वर्णधीः, तथा च न साध्यमव-शिष्यत इति। अथ रेखावर्णात्मतयोस्सत्यानृतयोस्सम्भेदात्सत्यवर्णधीसिद्धिरिति कोट्यन्तरस्य दत्तोत्तरत्वेपि दार्ढ्यायातिप्रसङ्गमाह (रेखाया इति) सङ्केतसहकृत-

वर्णप्रतिपत्तिस्स्यात्। अथ पिण्डविशेषे देवदत्तादिशब्द-सङ्केतवच्चक्षुर्ग्राह्यरेखाविशेषे श्रोत्रग्राह्यवर्णविशेषसङ्केत-वशाद्रेखाविशेषो वर्णविशेषबुद्धिहेतुरिति । हन्त तर्हि सत्यादेव सत्यप्रतिपत्तिः, रेखायाः सङ्केतस्य च सत्य-त्वात्, रेखागवयादपि सत्यगवयबुद्धिस्सादृश्यनिबन्धना, सादृश्यञ्च सत्यमेव। न चैकरूपस्य शब्दस्य नादवि-शेषेणार्थभेदबुद्धिहेतुत्वेऽप्यसत्यात्सत्यप्रतिपत्तिः, नाना-

* श्रुतप्रकाशिका *

त्मना—अविद्यमानवर्णात्मत्वेनेत्यर्थः । अतिप्रसङ्गपरिहारार्थं शङ्कते ( अथेति ) तत्रापि स्वमतासिद्धिमाह ( हन्तेति ) तदुपपादयति ( रेखाया इति ) उदाहरणान्तरं परिहरति ( रेखागवयादपीति ) स्फोटवादावलम्बनेनोच्यमानमुदाहरणान्तरं परिहरति ( नचैकरूपस्येत्यादिना ) नादैः स्फोट्यत इति व्युत्पत्त्या स्फोट एकरूपः शब्दः, तदभिव्यञ्जकनादविशेषाः बहवः, कत्वखत्वादिभेदो व्यञ्जकगतः शब्दे आरोपितोऽर्थविशेषप्रतिपत्तिहेतुः, तत्रासत्यात्सत्योत्पत्तिरित्यपि न युक्तमित्यर्थः । कुत इत्यत्राह ( नानानादेति ) कत्वखत्वादिविशेषान्विततत्तन्नादकृतोऽभिव्यक्तिविशेषस्सत्यः,

* तत्त्वटीका *

रेखाहेतुत्वपक्षमनुवक्ति ( अथेति ) चक्षुर्ग्राह्यत्वादिकथनं रेखावर्णयोरैक्यभ्रम-निरासार्थम्; विशेषशब्दस्त्वतिप्रसङ्गनिवारकः । अत्रापि दत्तोत्तरत्वमाह (हन्तेति) एतेन सङ्केतमात्रपक्षोऽपि निरस्तः । रेखायामेव सङ्केतनिरपेक्षोदाहरणं दूषयति ( रेखागव-यादीति ) सादृश्यञ्चेति चकारेण रेखासत्यत्वं पूर्वोक्तमिति व्यज्यते । एवकारो जातिरूपं पदार्थान्तररूपं वा दृष्टं सादृश्यं दुरपह्नवमिति द्योतयति । अथैवं दृष्टे-ष्वगत्या वैयाकरणोक्तपुरस्कारिणं प्रत्याह ( नचेति ) एकरूपस्य—कत्वखत्वादिभि-रुदात्तादिक्रमेण चोज्जृम्भितस्येत्यर्थः । शब्दस्य—स्फोटाख्यस्य । नादविशेषेण—स्वरव्यञ्जनरूपवर्णभेदेनेति यावत् । अपिरन्वारोहद्योतकः । अत्र व्यङ्ग्यव्यञ्जक-तयोक्तयोर्नादस्फोटयोस्तदर्थसम्बन्धस्य तद्ग्रहणस्य चानन्तर्यत्वं दुर्वचम् । नादधर्माणां कत्वादीनां शब्देऽध्यासश्च नास्ति । तदभावेपि तादृशनादाभिव्यक्ततयैव तत्तद्बोधक-

नादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैस्सह सम्बन्धग्रहणवशादर्थभेदबुद्ध्युत्पत्तिहेतुत्वात्। शब्दस्यैकरूपत्वमपि न साधीयः, गकारादे-

* श्रुतप्रकाशिका *

तद्विशिष्टस्सत्यशब्दोऽर्थप्रतिपत्तिहेतुरित्यर्थः । यद्यपि कत्वखत्वादिवैशिष्ट्यं शब्दस्यारोपितम्, तथापि रज्जुज्ञानं सत्यमेवार्थप्रतिपत्तिहेतुः, ज्ञानस्य च सत्येनैवालम्बनेन स्वाप्नज्ञानवद्व्यावृत्तिरनुसन्धेया । कत्वाद्यालम्बनाभिव्यक्तिविशिष्टरूपेण स्फोटस्यार्थप्रतिपत्तिहेतुत्वसम्भवात् कत्वादिवैशिष्ट्यस्यासत्यस्यार्थस्य नार्थप्रतिपत्त्युपयोगः, एवं शब्दस्यैकरूपत्वमभ्युपगम्य परिहृतम्। अथ तदनभ्युपगमेन परिहरति (शब्दस्यैकरूपत्वमिति ) कुत इत्यत्राह ( गकारादेरिति ) एवकारेणैकरूपशब्दो व्यावर्त्यते, न तु दुन्दुभिशब्दादिः । स स्वतभिव्यक्तविशेषाकारो गकारादिरेव । 'अथ गौरित्यत्र कः शब्दः गकारौकारविसर्जनीया इति हि भगवानुपवर्षः' इति गकारादेरेव बोधकत्वं व्याचख्युः । ननु " तस्मिंस्तस्मिंस्तु तन्मात्रं तेन तन्मात्रता स्मृता" इति शास्त्रवशादेकरूपं शब्दमात्रमभ्युपगन्तव्यम्, तत्कथं तत्प्रतिक्षेपः ? नैवम्,—तन्मात्रावस्थासूक्ष्मभूतकारणगुणानामिन्द्रियग्राह्यत्वायोगात् पञ्चीकृतभूतगुणानामेव चैन्द्रियिकत्वम् ।

* तत्त्वटीका *

सिद्धेरित्यभिप्रायेण प्रतिवक्ति ( नानेति ) वृत्तिकारोपज्ञं स्वपद [ मत ] माह ( शब्दस्येति ) अपिर्दूषणसमुच्चयार्थः । मत ग्रावरम्,— 'गौरित्यत्र कश्शब्दः गकारौकारविसर्जनीया इति भगवानुपवर्षः' इति । वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम ; तदिह पातञ्जलादिप्रोक्तं प्रामाणिकमिति न भ्रमितव्यम् . तेषां वाह्यमतिविरुद्धपार्थे वैभवोक्तेरपि स्यात्, युक्तिविरोधाच्च । स्फोटवादस्यानपेक्षत्वमाह ( गकारादेरिति ) अयं भावः,— किमत्र वर्णातिरिक्तमेकरूपं वाचकं दृष्टत्वाद्भुच्यते ? बोधकान्यथानुपपत्त्या वा ? शब्दश्शब्द इत्यनुवृत्तव्यवहारसिद्ध्यर्थं वा ? शास्त्राद्वा ? नाद्यः,— वर्णानामेव श्रोत्रेण गृह्यमाणत्वात्, अतिरिक्तमपि श्रवणेन गृह्यत इति भाट्टचोदलीकवादः, शब्दादर्थं प्रतीम इत्येकवचनोक्तिस्तु वर्णसमुदायेपि स्यात् । न द्वितीयः,— यादृशां वर्णानां प्रतिनियतं स्फोटव्यञ्जकत्वमिष्यते तादृग्भिरेव तैर्नि-

* श्रुतप्रकाशिका *

किञ्च, दध्यवस्थायां दुग्धावस्थेव तन्मात्रावस्था. आकाशगुणभूतं शब्दतन्मात्रं स्थूलाकाशसृष्टेः पश्चान्न विद्यते, यथा महाभूततृतीये तेजसि शुक्लकृष्णादिवर्णव्यतिरेकेण रूपतन्मात्रं किञ्चिदस्ति शुक्लकृष्णादयश्चाभिव्यञ्जकगता एकरूपे आरोपिता इति च वक्तुमयुक्तम्; एवमिदानीमेकरूपशब्दस्य विद्यमानत्वं तत्राभिव्यञ्जकगतानां कत्वखत्वादीनामारोपितत्वञ्च सर्गप्रतिपादकशास्त्रानुसारिभिरभ्युपेतुमयुक्तम् । अत्रायमभिसन्धिः,—वर्णातिरिक्त एकरूपशब्दः किं स्फुटप्रतिपन्नत्वादभ्युपगम्यते? उत कल्पनावशात्? न प्रथमः, गकारादिव्यतिरिक्तस्य कस्यचिदनुपलम्भात् । न द्वितीयः, कल्पकाभावादिति । ननु वर्णानां वाचकत्वानुपपत्तेरेकं पदमित्यादिप्रत्ययस्य वर्णेष्वनुपपत्तेर्भिन्नेषु वर्णेषु शब्दश्शब्द इत्यनुवृत्तिबुद्धिवशाच्च वर्णातिरिक्तपदस्फोटसिद्धिः तत एव न्यायात्पदसङ्घातातिरिक्तवाक्यस्फोटसिद्धिश्चेत्यत्राह—गकारादेरिति । गकारादिवर्णानामेव समुदितानां वाचकत्वम् . एकं पदमेकं वाक्यमितिप्रत्ययश्च वर्णसमुदायविषयः, शब्दश्शब्द इत्यनुवृत्तिबुद्धिश्च श्रोत्रग्राह्यत्वोपाधिनिबन्धना; अतः कल्पकानामन्यथासिद्धत्वान्नैकरूपशब्दसिद्धिरित्यर्थः । ननु न कल्पकान्यथासिद्धिः । तथाहि,—न तावदेकैकस्य वर्णस्य वाचकत्वं वर्णान्तरवैयर्थ्यात् गकारमात्रेण गोगवयगजाद्यप्रतिपत्तेश्च, नापि वर्णसमुदायो वाचकः, क्रमोच्चारितश्रुतानां वर्णानां यौगपद्याभावेन वृक्षादीनामिव समुदायभावा[नुभूतवर्णविषयस्मरणा]नुपपत्तेः । न च पूर्वपूर्ववर्णश्रवणजनितसंस्कारसचिवोऽन्त्यवर्णो वाचक इति युक्तम्, वर्णानुभवजन्यसंस्काराणामनुभूतवर्णविषयस्मरणहेतुतयाऽननुभूतार्थान्तरप्रतीतिहेतुत्वाभावेनाकिञ्चित्करत्वात् तत्साचिव्यविरहितान्त्यवर्णस्य चार्थप्रत्यायकत्वायोगात्; तथा वर्णानां भिन्नत्वादेकं पदमितिप्रत्ययश्च तदतिरिक्तार्थविषयो भवितुमर्हति । नच वनसेनादिप्रत्ययवत् समुदायविषयत्वमेकत्वप्रत्ययस्य युक्तम्, एकप्रदेशसम्बन्धित्वादिवदेकीकारनिमित्तोपाध्यभावात् . एकस्मृत्यारूढत्वमुपाधिरिति चेन्न; द्वे पदे त्रीणि पदानि बहूनि वाक्यानीत्यनेकेषामेकप्रत्यया-

* तत्त्वटीका *

यतार्थधीसिद्धेः किमन्तर्गडुना स्फोटेन ? क्रमयौगपद्यविकल्पानुपपत्तिश्च स्वेष्टेपि स्यात् । न तृतीयः,— श्रोत्रग्राह्यत्वोपाधिना वर्णावर्णात्मकेषु सर्वेषु शब्दव्यव-

* श्रुतप्रकाशिका *

रूढत्वदर्शनात्. न चैकार्थावच्छिन्नवर्णसमुदाय एकं पदम्, वर्णानां वाचकत्वानुपपत्तेरेवैकार्थप्रतिपादनाभावात् । किञ्च बहुवर्णेष्वयं शब्दोऽयं शब्द इत्यनुवृत्तः शब्दशब्दो वर्णातिरिक्तार्थविषयो युक्तः, घटकरकापवरकादिभेदेऽप्येकार्थविषयस्याकाशशब्दस्य हि घटकरकाद्यतिरिक्तार्थविषयत्वं दृष्टम् । नच श्रोत्रग्राह्यत्वोपाधिना शब्दशब्दानुवृत्तिरिति युक्तम्, श्रोत्रस्य श्रोत्रग्राह्यत्वायोगेन श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहीतुमशक्यत्वात्. मानान्तरेण श्रोत्रग्राह्यताप्रतीतावलम्बितशब्दसाक्षात्कारानुपपत्तिः, अतः कल्पकान्यथासिद्ध्यभावाद्वर्णातिरिक्तः शब्दः स्फोट इति । अत्रोच्यते,— न तावद्वर्णानां वाचकत्वानुपपत्त्या स्फोटसिद्धिः, तेषां स्फोटाभिव्यञ्जकत्वेऽपि चोद्यपरिहारयोस्तुल्यत्वाल्लाघवन्यायेन वर्णानामेव वाचकत्वाश्रयणस्य न्याय्यत्वात् । तथाहि; न तावदेकैकवर्णः स्फोटव्यञ्जकः, द्वितीयवर्णवैयर्थ्यात् गकारमात्रेण गवयादिपदस्फोटाभिव्यक्तिप्रसङ्गाच्च । नापि वर्णसमुदायो व्यञ्जकः, क्रमोच्चरितश्रुतानां वर्णानां यौगपद्याभावेन समुदायभावानुपपत्तेः । न च पूर्वपूर्ववर्णजनितसंस्कारसचिवोऽन्त्यवर्णो व्यञ्जकः, वर्णानुभवजन्यसंस्काराणामनुभूतवर्णस्मृतिमात्रहेतुतयाऽननुभूतस्फोटप्रतीतिहेतुत्वायोगेन तत्संस्कारानुपकृतस्यान्त्यवर्णस्य च तदभिव्यञ्जकत्वायोगात् । यद्युच्येत पदं तावत्प्रतीयते, अतस्तत्प्रतीत्यनुरूपं कारणं कल्प्यम्. क्रमभाविनामपि संस्काराणां युगपत्कार्यकरत्वं युक्तम्, क्रमदृष्टयोरपि घटयोस्तौ घटाविति स्मरणदर्शनात्; अतो युगपद्भाविपूर्ववर्णस्मरणसचिवोऽन्त्यवर्णो वा युगपत्स्मर्यमाणसर्ववर्णसमुदायो वा स्फोटाभिव्यञ्जक इति; एवं तर्हि स्फोटाभिव्यञ्जकतया अभ्युपेतायाः सामग्र्या अर्थाभिव्यञ्जकत्वमास्थीयताम्, चोद्यपरिहारयोस्तुल्यत्वादन्यथासिद्धस्यार्थान्तरकल्पकत्वायोगाद्वर्णानामेव वाचकत्वसम्भवे तदतिरिक्तकल्पनानुपपत्तेर्लाघवन्यायस्य बलीयस्त्वाच्च. वर्णानां भिन्नत्वेऽपि युगपद्बुद्धिस्थैकविभक्त्यन्तानेकवर्णसमुदायविषयतया पदैकत्वबुद्धिरपि नार्थान्तरकल्पिका । न चार्थैकत्वात्पदैकत्वं पदैकत्वादर्थैकत्वमित्यन्योन्याश्रयः, एकविभक्त्यन्तवर्ण-

* तत्त्वटीका *

हारोपपत्तेः । न चतुर्थः,—'स्फोटस्त्वं वर्णसंश्रय' इत्यत्र स्फुटीकरणशक्तौ तात्पर्यादिति । एवं छायार्थे ···· श्येनानुमानेपि न त्वदिष्टसिद्धिरित्यभिप्रायेण निगमयति

बोधकस्यैव श्रोत्रग्राह्यत्वेन शब्दत्वात्; अतोऽसत्यात् शास्त्रात्सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा। ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वम्;प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात्। उत्पन्ने तत्त्वज्ञाने ह्यसत्यत्वं शास्त्रस्य। न तदा शास्त्रं

* श्रुतप्रकाशिका *

समुदायस्यैकपदत्वनिश्चयात् " सुप्तिङन्तं पदम् "इति हि पदनिष्कर्षः, तस्य चोक्ताभिप्रायत्वे सत्यव्याप्तिर्न स्यात् . एकव्युत्पत्तिसिद्धैकार्थप्रतीत्युपयुक्तवर्णसमुदायस्य वा पदत्वम् . बहुवर्णेष्वयं शब्दोऽयं शब्द इति प्रत्ययोऽपि श्रोत्रग्राह्यत्वोपाधिनिबन्धनत्वादन्यथासिद्ध इति नार्थान्तरसिद्धिः । नच श्रोत्रग्राह्यताया अपि श्रोत्रेण ग्रहणापेक्षा यथा चाक्षुषाणां धवलिमनीलिमपीतिम्नां चाक्षुषत्वज्ञानेन चक्षुरपेक्षा, इदं चाक्षुषमिदं चाक्षुषमिति व्यवहारश्च चाक्षुषत्वज्ञाननिबन्धन एव. प्रमाणान्तरावगतचक्षुश्श्रोत्राद्यन्वयव्यतिरेकानुविधायिज्ञानगोचरत्वेन चाक्षुषश्रावणत्वादिज्ञानम् , नहि सहसैव शब्दोऽयमिति जानन्ति । प्रथमं गकारादिरूपेणैव शब्देऽवसिते व्युत्पन्नशब्दस्मरणपूर्वकमेव शब्द इत्यवगम्यते; अतः शब्देन स्मरणकृतविलम्बवत् श्रोत्रानुमानविलम्बोप्यभ्यासपाटवकृतात् शैघ्रयान्न विविच्यते, अतो वर्णसमुदाय एव पदं. पदसमुदाय एव वाक्यमिति स्थितम् । असत्यात्सत्यप्रतिपत्तिनिराकरणमुपसंहरति ( अत इति ) सत्यप्रतिपत्तिहेतुषु सत्यतया अभिमतेषु यादृशं सत्यत्वं तादृशं सत्यत्वं शास्त्रस्याप्यस्तीत्यभिप्रायेण चोदयति ( नन्विति ) गगनकुसुमवदिति युक्तिबाधो ह्युक्तः, न त्विदानीमेव लौकिकपुरुषैर्नास्तीति प्रतिपन्नत्वम्; अतस्तादृशमसत्यत्वं नेत्यर्थः । हेतुमाह ( सद्बुद्धिबोध्यत्वादिति ) सदिति बोध्यत्वमेव कार्यकरत्वानुगुणं न सत्यत्वमित्यर्थः । तर्हि सदद्वैतभङ्गः स्यादित्यत्राह ( उत्पन्न इति ) तर्हि न बोधकमित्यत्राह

❀ तत्त्वटीका ❀

( अत इति ) अथ खपुष्पवन्नित्याप्रतीतत्वलक्षणमसत्यत्वं शास्त्रे नास्ति , अतः सत्यधीहेतुत्वं स्यादिति शङ्कते ( नन्विति ) कादाचित्कधीविषयतया तुच्छधीव्यावृत्तिं व्यनक्ति ( प्रागिति ) असत्यस्य कथं सद्बुद्धिबोध्यत्वम् ? तत्सत्यत्वे वा

निरस्तनिखिलभेदचिन्मात्रब्रह्मज्ञानोपायः । यदोपायः तदास्त्येव शास्त्रम्, अस्तीति बुद्धेः। नैवम्; असति शास्त्रे अस्ति शास्त्रमिति बुद्धेर्मिथ्यात्वात्। ततः किम्? इदं ततः मिथ्याभूतशास्त्रजन्यज्ञानस्य मिथ्यात्वेन तद्विषयस्यापि ब्रह्मणो मिथ्यात्वम्; यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषयस्याग्नेरपि मिथ्यात्वम्। पश्चात्तनबाधादर्शनञ्चासिद्धम्; शून्यमेव तत्त्वमिति

* श्रुतप्रकाशिका *

( न तदेति ) परिहरति ( नैवमिति ) नैवम्—उपायकालेऽपि सत्यत्वं नास्तीत्यर्थः। ज्ञानस्य मिथ्यात्वं मिथ्यार्थविषयत्वात्। ज्ञानस्य दोषमूलत्वाद्विषयमिथ्यात्वे निदर्शनमाह ( यथेति ) पूर्वं पश्चात्तनबाधादर्शनमभ्युपेत्य दूषणमुक्तम्। इदानीं तदेव नास्तीत्याह ( पश्चादिति ) तदुपपादयति ( शून्यमिति ) तद्वाक्यं तत्प्रामाण्य-

७ तत्त्वटीका ७

कथं सदद्वैतमित्यत्राह ( उत्पन्न इति ) पूर्वं सद्बुद्ध्या सत्यत्वं पश्चाद्बाधकादसत्यत्वञ्चेत्यविरोध इति भावः। तर्ह्यसत्यस्य कथं धीहेतुत्वमित्यत्रोत्तरावस्थायामिष्टप्रसञ्जनत्वं तावदाह ( न तदेति ) पूर्वावस्थायान्तु प्रसञ्जकासिद्धिमाह ( यदेति ) अत्रास्त्येवेत्युक्तौ स्वमतविरोधमाह ( नैवमिति ) अयं भावः,—

यदि पूर्वं सतः पश्चादसत्त्वमभिसंहितम्।
असत्यत्वमिहोक्तं स्यान्न मिथ्यात्वादिसम्भवः ॥ ७ ॥
पूर्वधीमात्रतस्सत्त्वमसत्त्वं बाधकं हि चेत्।
बाधात्पश्चादिव प्राग—प्यसत्त्वात्कार्यकृन्न तत् ॥ ७ ॥
कस्यचिद्बाधितं वस्तु यथान्येषामबाधितम्।
सत्त्वासत्त्वविरोधोपि तदा ते सम्पतेदिति ॥ ७ ॥

लिङ्गविभ्रमादिन्यायेनोपपादयति ( अस्तीति ) बुद्धेर्मिथ्यात्वमिह स्वमते विषयतः परमते स्वरूपतोपि। इष्टोपन्यासोयमित्यभिप्रायेण चोदयति ( ततः किमिति ) अनिष्टमेव प्रसञ्जितमित्याह ( इदमिति ) तथेष्टप्रक्रियया विवृणोति ( मिथ्येति )

# वाक्येन तस्यापि बाधदर्शनात् । तत्तु भ्रान्तिमूलमिति चेत् एतदपि भ्रान्तिमूलमिति त्वयैवोक्तम् । पाश्चात्य-

* श्रुतप्रकाशिका *

मपि भ्रान्तिसिद्धमिति शङ्कते ( तत्त्विति ) तुल्यत्वमाह ( एतदपीति ) पाश्चात्यबाधादर्शनस्य प्रामाण्यहेतुत्ववचनं सर्वशून्यवादिन एव साधकम् , ततः परं निषेध्याभावेन निषेधानुदयादित्याह ( पाश्चात्येति ) प्रामाण्यादीनां दोषमूलत्वं द्वयोरपि तुल्यम्, पाश्चात्यबाधादर्शनं तु शून्यवादिनोऽधिकमित्यर्थः । सर्वशून्यवादिनोऽपि परो निषेधोऽस्ति, सर्वमस्तीति वचनं हि तन्निषेध इति चेत् तर्हि प्रपञ्चमिथ्यात्ववचनस्यापि प्रपञ्चसत्यतावचनं निषेधः स्यात् , नास्तीति वचनमेव निषेध इति चेत् तत्तु शून्यवादिन एवेति भावः । इदञ्च वेदाप्रामाण्यं मृषावादिनां सौगतानां च समानम् । यदाहुः " वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् । बोद्धाऽनृतो बुद्धिफले तथाऽनृते यूयं च बौद्धाश्च समानसंसदः" ॥ इति । ननु विषयसत्यत्वरूपं शास्त्रप्रामाण्यं विद्यत इति महदिह वैषम्यमस्माकमिति चेन्न, किं कतिपयविषयसत्यत्वं विवक्षितम् ? उत कृत्स्नविषय-

ꣽ तत्त्वटीका ꣽ

लोकदृष्ट्यापि स्थापयति ( यथेति ) सन्मात्रस्य बाधादर्शनमन्वारुह्य प्रागुक्तम् . अथ [ तदपि ] नेत्याह ( पश्चात्तनेति ) असिद्धिं माध्यमिकोक्त्या व्यनक्ति ( शून्यमिति ) नन्विदं भ्रान्तिमूलं [ बुद्धान्यम ] नित्यनिर्दोषानन्यपरवेदोक्तस्य कथं बाधकमिति शङ्कते ( तत्त्विति ) त्वदुक्तयुक्त्यैव वेदान्तोऽपि न कस्यचित्साधको बाधको वा स्यादिति प्रतिबन्द्यभिप्रायेणाह ( एतदपीति )

भ्रान्तिमूलेन वाक्येन धीसत्यत्वं यदीष्यते ।
तन्मिथ्यात्वादिकं तद्वदिष्यतामिति चाशयः ॥ ꣽ ॥

एवकारस्तु वक्तव्यनैरपेक्ष्यार्थः । अन्येऽप्याहुः—"वेदोऽनृतो बुद्धकृतागमोऽनृतः प्रामाण्यमेतस्य च तस्य चानृतम् । बोद्धानृतो बुद्धिफले तथानृते यूयञ्च बौद्धाश्च समानसंसदः ॥" इति । त्वदुक्त्या न केवलं बाह्यसमीकारः, तस्याधिक्यमेव फलतीत्याह ( पाश्चात्येति ) सर्वं नास्तीत्येतदपि न सुवचमिति चेत् , तदा

# बाधादर्शनन्तु तस्यैवेत्यलमप्रतिष्ठितकुतर्कपरिहसनेन ॥

* श्रुतप्रकाशिका *

सत्यत्वम् ? कतिपयविषयसत्यत्वं बुद्धागमस्याप्यस्ति, संवित्स्वयम्प्रकाशत्वादेस्सम्प्रतिपन्नत्वात्, कृत्स्नविषयसत्यत्वं तु श्रुतेरपि त्वया न स्वीकृतमिति । किञ्च विषयसत्यत्वं दुर्वचम्, सत्यतयाऽभ्युपेतस्य ब्रह्मणः प्रमाणाविषयत्वानभ्युपगमात् । यत्तु 'आदित्यो यूप'इत्यत्र यूपादित्यैक्याप्रतिपादनं तात्पर्यलिङ्गाभावात्, न तु प्रत्यक्षप्राबल्यादित्युच्यते, तत्र तात्पर्यलिङ्गाभावोऽभ्युपेत एव, तेन प्रत्यक्षविरुद्धार्थप्रतिपादनासमस्त्वमवर्जनीयमापतति, न हि वेदान्तिभिरर्थवादादेरन्यपरत्वात्स्वार्थे प्रामाण्यं त्यज्यते, मन्त्रार्थवादानामपि स्वार्थे प्रामाण्यस्य भवद्भिरेवोपपादितत्वात्; अतः स्तुतिपरत्वात् यूपादित्यैक्याप्रतिपादनमित्यपसिद्धान्तः । अर्थवादानां स्वार्थे प्रामाण्यमस्तीति चेत् कथं तद्यूपादित्यैक्याप्रतिपादनमिति चेत्; उच्यते,–प्रमाणाविरोधश्च तात्पर्यलिङ्गम् उपक्रमोपसंहारादिष्वपूर्वत्वमपि तात्पर्यलिङ्गतया ह्युक्तम् "अभ्यासो ऽपूर्वता फलम्" इति । अपूर्वत्वं साधकबाधकप्रमाणागोचरत्वम्. यथाऽऽहुः "असन्निकृष्टवाचा च द्वयमत्र जिहासितम् । ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा"॥इति। अतः प्रमाणान्तरागोचरत्वलक्षणं तात्पर्यलिङ्गमत्र नास्तीति यूपादित्यैक्याप्रतिपादनम्, न त्वर्थवादत्वेन स्वार्थे प्रामाण्याभावादिति; अतस्तात्पर्यलिङ्गाभावो नाम प्रत्यक्षादिविरोधे पर्यवस्थित इति शास्त्रं न तद्विरुद्धार्थप्रतिपादनक्षमम् । शास्त्रप्राबल्यनिरसनं परिसमापयति ( अलमिति ) यद्वा, यत्तु प्रत्यक्षमित्यादिना न्यायमुखेन कृतं परपक्षप्रतिक्षेपमुपसंहरति–अलमिति । प्रमाणविरुद्धस्तर्कः कुतर्कः, अत एवाप्रतिष्ठितत्वम् । स्वविरुद्धबौद्धमतोपयुक्तयुक्तिकथनात्परिहसनीयत्वम्, परेण प्रत्यक्षादपि शास्त्रप्राबल्यं वदता प्रबलतयाऽभिमतं शास्त्रं पुरस्कृत्य पश्चात्तर्कः प्रतिपादितः, सिद्धान्ते तु

❁ तत्त्वटीका ❁

धीव्यतिरिक्तं नास्तीत्येतदपि नेति वक्तुं शक्यम् । अत्रानवस्थयापि परमतमात्रस्य बाधकप्रयोजकत्ववद ···· मेवो ···· मूल्येत्युपात्तेन चुलुकमात्रेण दोग्धी ···· ञ्चितं दर्शित इत्यभिप्रायेण विरमति ( इत्यलमिति ) स्ववचनविरोधादिभिरप्रतिष्ठत्वम् उपजीव्याविरोधात्कुतर्कत्वम् ॥

---

···· अत्र सर्वकोशेषु ग्रन्थो गलित एवोपलभ्यते ॥

यदुक्तं— वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रतिपादनपराणि "सदेव सौम्येदमग्र आसीत्" इत्येवमादीनीति । तदयुक्तम्; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोप-

* श्रुतप्रकाशिका *

प्रबलतया अभिमतलौकिकप्रमाणगतिं प्रथमं निरूप्य परोक्तदुस्तर्कं निरस्य लौकिकप्रमाणविरोधे शास्त्रप्राबल्यं च प्रतिक्षिप्तम्, शास्त्रस्य लौकिकप्रमाणविरुद्धार्थप्रतिपादनासामर्थ्योपपादनेन शास्त्रस्य सविशेषपरत्वं सामान्यतः सामर्थ्यात्सिद्धम् , विशेषेण शब्दस्य पदवाक्यरूपेण प्रवृत्त्या सविशेषपरतोपपादनाच्च शास्त्रस्य सविशेषपरत्वं सामान्येन सिद्धम्। अथापि ये वाक्यविशेषाः परेण निर्विशेषपरत्वेनोदाहृताः, तेषां सविशेषपरत्वं वाक्यतात्पर्यपर्यालोचनया प्रतिपादयितुमारभते ( यदुक्तमित्यादिना ) तत्र निर्विशेषपरत्वं सङ्ग्रहेणानुवदति—यदुक्तमिति । ज्ञानैकरसत्वेन शोधकवाक्येषु प्रतिपन्नत्वान्निर्विशेषत्वम्, तच्च कारणवाक्येषु प्रतिपन्नम्, वस्तुमात्रशब्देनान्यत्र सगुणब्रह्मणि तात्पर्याभावस्सूच्यते । इत्यादीनीत्युक्ते तस्यामेवोपनिषदि पर्यवस्यतीति तद्व्यावृत्त्यर्थमित्येवमादीनीत्युक्तम् । तद्दूषयति ( तदयुक्तमिति ) कुत इत्यत्राह

* तत्त्वटीका *

विशिष्टविषयैरित्थं प्रत्यक्षाद्यैर्विरुद्धता ।
तद्विरोधे च शास्त्रस्य दौर्बल्यमपि दर्शितम् ॥ * ॥
अथागमानां प्रत्येकमैदम्पर्यसमीक्षया ।
प्रत्यक्षाद्यविरुद्धेऽर्थे प्रामाण्यं प्रविवक्षति ॥ * ॥
साधकं बाधकं वापि यत्र नास्ति प्रमान्तरम् ।
तस्मिन्नेव हि तात्पर्यं शास्त्रस्येति प्रचक्षते ॥ * ॥
अर्थवैशिष्ट्यमधिकं शब्दमात्रेपि दर्शितम् ।
विशेषवच्चारम्भस्तु तद्व्यक्त्यै वाक्यतर्कतः ॥ * ॥

यदिह दूष्यं कारणशोधकवाक्ययोः परोक्तं [दूषणं] निर्विशेषपरत्वं तदनुवक्ति ( यदुक्तमिति ) अत्र वस्तुमात्रशब्देन सगुणवाक्यानां दृष्टिविधिवदन्यपरत्वं व्यज्यते । उपपत्तिवाक्यस्य परेष्टविरुद्धत्वद्योतकः परशब्दः । एवंशब्द ईदृशसर्व-

* श्रुतप्रकाशिका *

( एकविज्ञानेनेति ) येनाश्रुतमित्यादिवाक्येन एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते । अस्यायमर्थः,—येन श्रुतेन मतेन विज्ञातेन अश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवतीति, न तु ब्रह्मणस्सत्तया सर्वं ज्ञातं भवतीति । दार्ष्टान्तिकसामर्थ्यान्मृद्दृष्टान्तसामर्थ्याच्च । नहि ब्रह्मसत्तया मृत्पिण्डसत्तया वा तत्तत्कार्यं ज्ञायते 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति 'इति मुण्डकोपनिषदि, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्'इति बृहदारण्यके च श्रवणाच्च ; अतो यथोक्त एव प्रतिज्ञावाक्यार्थः । न हि घटज्ञानेन पटज्ञानसम्भव इत्येकविज्ञानेन सर्वविज्ञानं न सम्भवतीति शङ्कायां कार्यकारणयोस्तद्दृष्टमित्याह—यथा सौम्येति । तत्राप्यसत्कार्यवादमुखेन एकविज्ञानेन सर्वविज्ञानानुपपत्तिशङ्कां परिहरति—वाचारम्भणमिति । वाचा—वाक्शब्दोऽजहल्लक्षणया वाक्पूर्वव्यवहारपरः, वाचेति तृतीयया प्रयोजनतया हेतुत्वं विवक्षितम् । आरम्भणमिति कर्मणि ल्युट्, आरभ्यते आलभ्यते इत्यारम्भणम्, 'आलम्भः स्पर्शहिंसयोः' मृत्पिण्डेनेत्यर्थसिद्धम् विकारः घटत्वद्रव्यत्वाद्यवस्था । वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते, मृत्पिण्डो नामरूपभाग् भवतीत्यर्थः । कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह—मृत्तिकेत्येव सत्यमिति । मृदयं घट इति प्रत्यभिज्ञया मृण्मयं घटादिकमपि मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थः । बुद्धिशब्दादिभेदाः घटादिषु द्रव्यभेदेऽपि दृष्टाः, आस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्येऽपि दृष्टाः, अतस्ते साधारणाः । तत्रआस्ते शेते सुख्यहं दुःख्यहमित्यादिषु द्रव्यैक्यनियामिका प्रत्यभिज्ञा, सैवात्रापि द्रव्यैक्यनियामिकेति भावः । अत्र मृत्तिकामात्रस्य पारमार्थ्यं विकारासत्यत्वं च विवक्षितं चेदिति शब्दवैयर्थ्यं स्यादिति तदा मृत्तिकैव सत्येति

❀ तत्त्वटीका ❀

प्रकरणसङ्ग्रहार्थः । अत्र प्रत्यक्षादेरुपक्रमादेः श्रुतिलिङ्गादेश्च विरोधमभिप्रेत्याह ( तदयुक्तमिति ) सद्विद्यायां परोक्तैस्तात्पर्यलिङ्गैरेव तदिष्टभङ्गं व्यनक्ति ( एकेति ) एकस्य कारणस्य विज्ञानेन तत्कार्यस्य सर्वस्य ज्ञानं सिद्ध्यतीति प्रतिज्ञा ; साच 'उततमादेशमप्राक्ष्यः, येनाश्रुत'मित्यादिना बोध्यते . आदेशशब्दश्चात्र न क्रियावचनः, मृदादिदृष्टान्तैरेव 'सौम्य स आदेश' इत्यादेशेन च करणपरत्वव्यक्तेः ।

पादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जग-

* श्रुतप्रकाशिका *

हि वाच्यम्, विकारासत्यत्वे दृष्टान्तस्साध्यविकलः, सत्यत्वप्रतिपत्तेः। घटादिसत्यत्वं व्यावहारिकमिति चेत्, पिण्डस्यापि सत्यत्वं व्याहारिकमिति न कारणसत्यत्वसिद्धिः। कारणस्य व्यावहारिकमेव सत्यत्वमभिमतं चेत् तद्घटादेरपि तुल्यं स्यात् कार्यकारणद्रव्यैक्यात्। कारणविज्ञानेन कार्यविज्ञानमुपपन्नमस्तु, तथाऽपि लोके विविधकार्यवर्गस्य विविधोपादानकत्वदर्शनादेकविज्ञानेन सर्वविज्ञानमनुपपन्नमिति शङ्कायां जगतो ब्रह्मैककारणतामाह—सदेव सोम्येदमग्र आसीदिति। श्रुतिगतसच्छब्दार्थमभिप्रेत्यात्र सच्छब्दवाच्यस्येत्युक्तम्। सगुणब्रह्मपरमित्यन्यथासिद्धिर्दुर्वचेत्यभिप्रायेण परस्य ब्रह्मण इत्युक्तम्। अग्रे—सृष्टेः पूर्वमित्यर्थः, अनन्तरं सृष्टेर्वक्ष्यमाणत्वात्। विजातीयसजातीयस्वगतनानात्वव्यावृत्तिः अत्र

* तत्त्वटीका *

नाप्युपदेश्यपरः, तदनुक्तावपि ···· तति ···· द्धेस्तदुक्तिनैष्फल्यात्। अज्पूर्वस्य दिशेरुपदेशवाचित्वाभावाच्च, आदेशोपदेशयोः पृथगाम्नानात्। मुख्ये सम्भवत्युपचारायोगात् ···· ···· व्यः 'अप्राक्ष्य' इत्यनेनार्थत उपादानस्यैव निमित्तत्वोपयुक्तप्रतिज्ञासिद्ध्यर्थतया प्रेरण ···· ···· ···· ···· उपदेश्यत्वं सर्वप्रष्टव्यसाधारणम्। अपवर्गार्थोपदेश्यत्वं चोपास्यादावप्यस्ति। न चात्र तमिति विशेषणादसाधारण्यमिति वाच्यम्, ···· गात्। अपेक्षितसाधारण्यविधेरनपेक्षितसाधारण्यविधिदौर्बल्याच्च; तस्मात् 'एतस्य वाक्षरस्य प्रशासने गार्गि!' इत्यादिप्रसिद्धविश्वप्रशासितृत्वविषयोऽत्रादेशशब्दः। नन्वादेशशब्दे तावन्न कर्तरि पचाद्यच् प्रत्ययः शक्यः, 'इगुपधे'ति कस्यापवादत्वात्। नचात्र कप्रत्ययः, क्ङिति चेति गुणनिषेधात्। नापि घञ्, 'अकर्तरि च कारके संज्ञाया'मितिनियमात्। नच सर्वशासितुश्शास्तिकर्मत्वमुपदेशकर्मत्वं वा युक्तमिति। मैवम्,— विवक्षातः कारकप्रवृत्त्या कर्तुरेव करणत्वविवक्षया घञोऽप्युत्पत्त्युपपत्तेः। 'अकर्तरी'ति नियमस्तु करणत्वादिविवक्षाविरहे कर्तर्यसाधुत्वार्थः। अर्थतोपि हि प्रत्यय[मात्र] नियमनं परम्, अत 'स्तमादेश'मित्यादौ सर्वतत्त्वाधिष्ठातृत्वगुणविशिष्टं किं

···· अत्र सर्वकोशेषु ग्रन्थो गलित एव लभ्यते॥

दुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः

* श्रुतप्रकाशिका *

विवक्षिता चेदग्र इति वक्तुमयुक्तम्, न हि ब्रह्मणः कालविशेषे निर्विशेषत्वं वैषम्यनैर्घृण्यपरिहाराय जीवबहुत्वतत्कर्मप्रवाहतदनादित्वानामभ्युपगम्यत्वाच्च। तद्बहुत्वमपारमार्थिकमिति चेत् पारमार्थिकबहुत्वस्य इदानीमप्यभावादग्रशब्दवैयर्थ्यात्। न चाग्रशब्दस्याविवक्षितार्थता, अनन्तरं सृष्ट्युक्तेः, अतः कालरूपविजातीयभेदश्चेतनरूपसजातीयभेदः सार्वज्ञ्यादिसृष्ट्यनुगुणगुणरूपस्वगतभेदश्च तदानीमस्तीति विजातीयादित्रिविधभेदनिरासपरत्वं विरुद्धम्, कारणवाक्यत्वात्। न चेदिदं कारणवाक्यम्, ईदृशानां वाक्यानां सर्वशाखाप्रत्ययनयाद्विजातीयादिभेदनिरासपरत्वेन कारणपरत्वाभावात् ब्रह्मकारणत्वमप्रमाणं स्यात्। अवधारणवाचिन एवकारस्य स्वयं व्यावर्त्यविशेषोपस्थापनासमर्थस्य समभिव्याहृतपदान्तरार्थविरोधिव्यावर्तकत्व-

❀ तत्त्वटीका ❀

श्रुतवानसीति प्रश्नार्थः। 'येनाश्रुत'मित्यादौ 'यथा सौम्यैकेने'ति दृष्टान्तवाक्येषु च ज्ञातेनेति विशेषणीयम्, तत्सत्तामात्रेण तत्कार्याणां ज्ञातत्वायोगात्। तो···· सर्वं विदितम्, अत एव विज्ञातेनेत्युक्तम्। तथाच मुण्डकोपनिषदि 'कस्मिन्नु भगवो विज्ञाते इदं सर्वं विज्ञातं भवती'ति। बृहदारण्यके च 'आत्मनि खल्वरे श्रुते मते विज्ञाते इदं सर्वं विदितं भवती'ति च। अत्र घटकुड्यादिना विज्ञातेन तदन्यस्य ज्ञातत्वमयुक्तमित्यभिप्रायेण 'कथं नु भगवः स आदेशः' इति चोक्तम्। तत्रोत्तरम् 'यथा सौम्येत्यादि। बहुदृष्टान्तोक्तिस्सम्भवद्दाढिमार्थो। मृदादिकारणात्मकं [हि]सर्वं मृण्मयम्। तत्तन्मृत्पिण्डदृष्टान्तेप्यसत्कार्यापादनचोद्यं निरस्यति—वाचेति। अत्र वाचालम्बनमिति व्याख्यायां श्रुत्यक्षरविप्लवः स्यात्। कार्यमि····त्यो····क्षा-प्रसिद्धं नोदाहर्तव्यम्। त्वदिष्टे हि रज्जुसर्पादिदृष्टान्तयितव्यम्। विज्ञातं स्यादित्यत्र च सत्यज्ञानेन मिथ्याभूतस्य ज्ञातत्वोक्तिर्विरुद्धा, [अ]ज्ञातं भवतीति किं तदा वाच्यम्, सति गत्यन्तरे मिथ्यात्वेन ज्ञातं भवतीत्यध्याहारश्च न युक्तः; मृत्तिकेत्यादिष्ववितिकरणञ्च निरर्थकम्। मृत्तिकेत्येव प्रमाणसिद्धमिति प्रति[त्यभि]ज्ञा········ प्रतिसात्वेति सार्थकम् ···· ···· ···· तदिह घटेनोदकमाहरेत्यादिवाक्यपूर्वकप्रवृत्ति-

··· अत्र सर्वकोशेषु ग्रन्थो गलित एव लभ्यते ॥

# सत्यसङ्कल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्या-

* श्रुतप्रकाशिका *

नियमदर्शनात् सदेवेत्यवधारणमसत्कार्यवादव्युदासपरम्, न ह्ययं विद्वानेवेत्यवधारणं ब्राह्मणत्वं व्यावर्त्तयति, अपि त्वविद्वत्त्वमेव, अतश्शब्दस्वारस्यात् सदेवेति निरसनीयमसत्त्वमेव, न तु विजातीयभेदः । यद्यपि सद्विजातीयमसत् तथाऽपि तस्य व्यावर्त्यत्वं न विजातीयत्वाकारेण, अपि तु सद्विरोधित्वरूपेण। सदेव—न तु कदाचिदपि असदित्यर्थः। सच्छब्दो हि मानसम्बन्धयोग्यतालक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते, अयं सच्छब्दो विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्वसामर्थ्यात्कारणत्वौपयिकगुणविशिष्टं प्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति, एकमेवेत्यविभक्तनामरूपकारणावस्थं ब्रह्मोच्यते, कारणत्वावस्थायामेकत्वावधारणस्य बहु स्यामिति वक्ष्यमाणकार्यबहुत्वप्रतियोग्येकत्वपरत्वात् 'एकेन मृत्पिण्डेन

* तत्त्वटीका *

निवृत्तिरूपप्रयोजनाख्येन हेतुना आरम्बणं विकारो नामधेयमित्युभयं मृदादिद्रव्यमेव. आरम्बणम् आलम्बनं स्पर्शः । 'कृत्यल्ल्युटो बहुलम्' इति कर्मणि ल्युट् रलयोरभेदः, पक्षद्वयेपि समानः, भकारस्थाने बकारस्तु न क्वाप्यस्ति । वर्णवैषम्यानादरेणारम्भणीयत्वविवक्षायामसत्पक्षे न दोषः ।

असत्यं तव सिद्धान्ते घटादि च मृदादि च ।
लोकदृष्ट्योभयं सत्यं विभज्योदाहृतिः कथम् ॥ ५ ॥
यदि वर्गद्वयस्यास्य मृषात्वं साधयिष्यते ।
यथेति सिद्धवत्कारस्साम्यतोक्तिश्च भज्यते ॥ ६ ॥
किञ्चात्र कार्यासत्यत्वं सजातीय .... .... ।
अपि चैवं .... .... .... .... .... ॥ ७ ॥
.... .... .... .... .... .... .... .... .... .... ....

'एवं सौम्य स आदेश' इत्युपदेश्यत्वाभ्युपगमात्, 'भगवांस्त्वेवमेव तद्ब्रवीतु,' इतिपूर्वविदितस्य शुश्रूषितत्वात् पश्चादुपदेशात्, 'आचार्यवान् पुरुषो वेद' इति निगमनाच्च शब्दगोचरत्वं ज्ञानगोचरत्वञ्च स्पष्टमुक्तम्। तदापि त्वदिष्ट-

... अत्र सर्वकोशेषु ग्रन्थो गलित एव लभ्यते ॥

# अनेककल्याणगुणविशिष्टतां कृत्स्नस्य जगतस्तदात्म-

* श्रुतप्रकाशिका *

सर्वं मृण्मय'मित्युक्तदृष्टान्तसामर्थ्यात्. 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत'इतिश्रुत्यन्तरैक्यार्थ्याच्चायमेवार्थः, वैशेषिकादिभिर्नित्यतयोक्तानामाकाशादीनामपि संहाराभिप्राय एवकारः । एवमविभक्तनामरूपत्वाद्ब्रह्मण उपादानत्वं सिद्धम्, भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम् । अद्वितीयमिति निमित्तान्तरनिषेधः, उपादानस्य प्रस्तुतत्वेन निमित्तस्य बुद्धिस्थत्वात्परतन्त्ररूपविशेषाणां विहितत्वान्निषेधस्य च विहितव्यतिरिक्तविषयत्वादुपरितनवाक्यसङ्गतेरपेक्षितत्वाच्च । एकमेवेतिशब्दस्याविभक्तनामरूपतापरत्वं बहुस्यामित्यनेनावगम्यते । 'तदैक्षत तत्तेजो ऽसृजते'त्यनेन अद्वितीयपदस्य निमित्तान्तराभावपरत्वमवगम्यते, परस्य ब्रह्मणः सर्वदा सत्त्वेन सदेवेत्यवधारणमसत्कार्यवादव्युदासपरमित्युपरितनेन 'कथमसतः सज्जायेते'त्यादिवाक्येनावगम्यते । कथमसत इत्यादिवाक्यं वैशेषिकमतनिरासपरम्, न तु क्षणिकवादिनिरासपरं न शून्यवादिनिरासपरं च, क्षणिकशून्यवादिनिरासे कृते ऽप्येकविज्ञानेन सर्वविज्ञानस्य वैशेषिकमतनिराससापेक्षत्वात् 'तद्धैक आहुः असदेवेदमग्र आसीदित्यारब्धत्वाच्च, न हि क्षणिकत्वं शून्यत्वं च कालविशेषे भवति, अतोऽसत्कार्यवादनिरासपरं. तद्धैक आहुरित्यादि वाक्यम्. कुतस्तु खलु सौम्यैवं स्यादिति मृद उत्पन्नस्य मृदात्मकत्व-

* तत्त्वटीका *

विरुद्धमुपलक्षितं ·········न्यायेन बुद्धीनां शब्दानां ब्रह्मणि कुण्ठीभाव इति तु डिम्भप्रलम्भनं प्रलपनं वा । सत्कार्यवादादिसम्भवेपि विचित्रकार्याणां यथादृष्टि विचित्रकारणापेक्षणादेकविज्ञानेन सर्वविज्ञानं कथमिति चात्र प्रश्नाभिप्रायः । तत्रोत्तरं सदेवेत्यादि । तत्राग्र आसीदिति काल····विशेषणद्वयञ्च सिद्धम् ।········ विशिष्टं तद्दृश्यते, अग्रेशब्दस्य निरर्थकत्वञ्च । अवाच्यस्य कथमुपदेशत्वमित्याभिप्राये-णोक्तम्—सच्छब्दवाच्यस्येति । गुणविशिष्टोक्तिः कल्पिताकारविषयेति शङ्काव्युदासायाह (परस्य ब्रह्मण इति) अनेन सच्छब्दस्य शाखान्तरोक्तशब्दैरैकार्थ्यं सूचयता सत्तामात्रपरत्वञ्च निरस्तम् । निरूप्यमाणदशापरत्वञ्चायुक्तम् वक्ष्यमाण-

··· अत्र सर्वकोशेषु ग्रन्थो गलित एव लभ्यते ॥

* श्रुतप्रकाशिका *

वदसत उत्पन्नस्यासदात्मकत्वप्रसङ्ग इति भावः । उत्पत्तिर्नाम द्रव्यस्यावस्थान्तरापत्तिरित्ययमर्थो वाचारम्भणमित्यनेन शिक्षितः, तदुपजीव्योच्यते कथमसतः सज्जायेतेति ; कथं निराश्रयावस्थासम्भव इत्यर्थः । तदैक्षतेति सर्वज्ञत्वम्, असृजतेति निमित्तत्वम्, बहु स्यामित्युपादानत्वम्, तदुभयानुगुणं सर्वशक्तित्वम्, सत्यसङ्कल्पत्वञ्च अनेन जीवेनात्मनाऽनुप्रविश्येति सर्वान्तरत्वं चोक्तं भवति । जीवेनात्मना—जीवशरीरकेण मयेत्यर्थः । 'सिंहेन भूत्वा बहवो मयात्ता व्याघ्रेण भूत्वा बहवो मयात्ताः'

छ तत्त्वटीका छ

पेक्षया कारणनिर्देशार्थत्वात् 'नहि तदानी'मित्यादिश्रुत्यन्तरनिर्देशसामरस्याच्च प्रलयकालपरत्वं युक्तम् । 'किं तदासी'दित्यत्र 'ऋषयो वा वै तदग्र आसीत्' इति ···· अत्र निर्दिश्यते । अतस्तत्काले त्रिविधभेदनिषेधपरत्वमिह न वाच्यम्, सृष्टिकालेपि वस्तुतस्तच्छून्यत्वात्, प्रलयकालेपि वैषम्यनैर्घृण्याकृताभ्यागमकृतविप्रणाशपरिहाराय सूक्ष्माज्जीवादिभेदस्य त्वयापि स्वीकृतत्वाच्च; अतो नाग्रशब्दवैयर्थ्यं विरोधो वा । दुस्त्यजस्वगतविशेषोपि तदानीं सत्त्वैकत्वाद्वितीयत्वैस्त्वयैवाहतः, तदिह प्रलयकालावच्छिन्नसत्ताविशिष्टं चिदचिच्छरीरकं ब्रह्म सदित्युक्तम् । सच्छब्दस्य ब्रह्मात्मादिशब्दवद्विशेष्यविषयत्वेपि स्वरूपविकारादिनिषेधाच्छ्रुत्यन्तरोपबृंहणप्रसिद्धिसामरस्याच्च प्रकृतिपुरुषकालाद्यपेक्षितविशेषणसिद्धिः । तदभावे निर्विकारस्य स्वतः कारणत्वमेव न सिध्येत् । ततश्च शाखान्तरनयेन कारणवाक्यान्तराणामपि निर्विशेषपरतया ब्रह्मकारणवादस्त्यक्तस्स्यात् । अध्यासोपि ह्यविद्यापेक्षितस्त्वयैवोक्तः । 'सदेवे'त्यस्यासत्त्वनिषेधपरत्वञ्च दृष्टान्तानुगुणम् । 'तद्धैक आहुः असदेवेदम्' इत्यादिना मतान्तरोपन्यासनिरासाभ्याञ्च तद्व्यक्तम् । अत एकमेवाद्वितीयमिति न त्वदुक्त्यंशोक्तिः, सिद्धानुस्मरणमात्रार्थत्वात् । तच्छब्दोऽत्र पक्षान्तरोपक्रमार्थः । तदिदमिति वान्वयः । अत्र च कार्यं द्रव्यं प्रागसदिति वैशेषिकाद्युक्तिनिरासे प्रतिज्ञानुगुण्यं स्यात्, शून्यवादनिरासपरत्वे त्वग्रशब्दस्य वैयर्थ्यम् । क्षणभङ्गनिरासस्तु द्रव्यानुवृत्तिसाधनेनैव सेत्स्यति ।

अतुच्छत्वे स्थिरत्वे तु प्रतिज्ञा नैव सेत्स्यति ।
कार्यकारणयोर्यावदनन्यत्वं न साध्यते ॥ छ ॥

* श्रुतप्रकाशिका *

इतिवत् । सर्वज्ञत्वादिगुणकस्य तद्विपरीताकारजीवैक्यासम्भवात् 'यस्यात्मा शरीरम्' इत्यादिवचनात् 'तदनुप्रविश्ये'त्यचेतन इव जीवेऽप्यनुप्रवेशश्रवणाच्च शरीरवाचि-शब्दस्य शरीरिपर्यन्तत्वमुख्यताया उपपन्नत्वाच्चायमेवार्थः । "सदायतनाः" इत्यनेन सर्वाधारता, तत एव सर्वनियमनञ्च सिद्धम् । 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः' इति प्रशासनेन धारकत्वश्रवणात् ; एवं सर्वाधारत्वसर्व-नियमनसर्वान्तरत्वैः शरीरिलक्षणैर्जगच्छरीरकत्वं ब्रह्मण उक्तम् । आदिशब्देन

ঞ तत्त्वटीका ঞ

'कुतस्त्वि'त्यादि प्रमाणतर्काभावपरम् । कथमित्यादि तदुभयविरोधपरम् । विद्य-मानस्य हि द्रव्यस्यावस्थान्तरापत्तिस्तत्तदवस्थावत उत्पत्तिरिति प्रमाणसिद्धम् । तथाच द्रव्यस्य पूर्वमसत्त्वे तस्य सत्तावाच्यघटत्वाद्यवस्था उत्पत्तिरिति स्यात्, तदेतत्प्रमाणै-स्तदनुग्राहकै [ ग्रहकारै ] श्च निर्धूतमिति भावः । अथ यथोक्तं निगम्यते 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति । इदमग्रे एकमद्वितीयं सदेवासीदित्येक-मेवेदं वाक्यम्, सम्भवत्यैक्ये तद्भेदायोगात् । यत्तु भिन्नवाक्यवत् क्वचित्क्वचिद्भाष्यते तदपि तात्पर्यव्यक्त्यर्थम्, अन्यथा वाक्यत्रयवद्वाक्यद्वयवच्च व्यपदेशो व्याहन्यते । तदिह 'सदासी' दित्यवस्थाद्वयसाधारणाकारोक्तिः । एकमिति तु प्रतिज्ञाघटनार्थ-मविभक्तनामरूपावस्थोच्यते । अवधारणमिह जगदन्तर्भूतस्य वियदादेर्वैशेषिकाद्य-भिमतनित्यत्वशङ्कानिरासार्थम् । अत्राभिप्रेतमाह ( जगदुपादानत्वमिति ) 'तद्धेदं तर्ह्यव्याकृतमासी' दित्यादिश्रुत्यन्तरानुगुण्यात् 'बहु स्या' मित्युत्तरवाक्यादिभिश्चाय-मेवार्थ इति भावः । उदाहृतानां मृदाद्युपादानानां कुलालादिभेदर्शनादिहापि तथान्यस्मिन् कर्त्तरि चादेशशब्दार्थत्वेन ज्ञानात्तत्कार्यविश्वविज्ञानं न स्यात् ; तत्सि-द्ध्यर्थमद्वितीयपदेनाधिष्ठात्रन्तरं निरस्यते, तदिदमाह ( जगन्निमित्तत्वमिति ) 'तत्तेजोऽसृजत' 'तदात्मानं स्वयमकुरुत' इत्यादिभिरेतद्दृष्ट्या 'तदैक्षते'त्यादि-सिद्धमाह ( सर्वज्ञतेति ) 'यस्सर्वज्ञ' इति कारणवाक्यान्तरे चैतत्कण्ठोक्तम् । स्यामिति सङ्कल्पयतो निमित्तत्वानुगुणमेतदुभयानुगुणमाह ( सर्वशक्तियोग इति ) सर्वोपादानत्वसर्वनिमित्तत्वशक्त्यैकाश्रयमित्यर्थः । अत्र 'असृजत' इत्यादि-फलितम् । अन्यत्र 'ब्रह्माध्यतिष्ठत्' 'कर्तारमीशम्' इत्यादिभिः कण्ठोक्तमाह

कतां च प्रतिपाद्य एवम्भूतब्रह्मात्मकस्त्वमसीति श्वेत-

* श्रुतप्रकाशिका *

सृष्ट्युपयोगिनः श्रुत्यन्तरसिद्धा गुणा गृह्यन्ते, ऐतदात्म्यमित्यनेन कृत्स्नस्य जगतः तदात्मकता चावगम्यते. तत्सत्यमिति तदात्मकत्वेनैव जगतः प्रामाणिकत्वम्, जगतः स्वनिष्ठत्वेन प्रतीतिर्भ्रान्तिरित्यर्थः । अतः कृत्स्नस्य जगतस्स आत्मा 'ऐतदात्म्यमिदं सर्वं स आत्मे'तिनिर्देशो 'रामानुजं लक्ष्मणपूर्वजं च'इतिवदन्योन्यसम्बन्धित्वतात्पर्यातिशयकृतः । यद्वा 'स त आत्माऽन्तर्याम्यमृतः' इतिवत्कृत्स्नजगदन्तर्यामित्वात्त्वात्मा स इत्यर्थः । तस्मात् त्वंशब्दतदर्थतद्बुद्धयस्तत्पर्यन्ता इति तत्त्वमसीत्यस्यार्थ इत्याह (एवम्भूतेति) एवम्भूतशब्देन तत्पदस्य प्रकृतपरामर्शित्वं सूचितम् । अस्याः सद्विद्यायास्सविशेषवस्तुन्येव षड्विधतात्पर्यलिङ्गं विद्यते, उपक्रमे तावत्

* तत्त्वटीका *

(सत्यसङ्कल्पत्वमिति) 'हन्ताहमिमाः' इत्यादौ चिदचिदन्तरात्मत्वं व्यक्तम् । विशेषतोप्यनुप्रवेशनिबन्धनं सामानाधिकरण्यमिति 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इत्यादिभिस्सिद्धम् । अत्र 'सिंहेन भूत्वा बहवो मयात्ताः' इतिवत् 'अनेन जीवेने'ति विवक्षितं व्यनक्ति (सर्वान्तरात्मत्वमिति) सर्वाधारता सदायतनत्वोक्तिसिद्धा । सर्वनियमनन्तु आत्मत्वोक्तिलभ्यम् । अत्राधेयत्वविधेयत्वादिनियमैर्जगतश्शरीरत्वं .... शरीरवाचिनां शरीरिपर्यन्तत्वप्रतिज्ञाघटनाय प्रकाशितम् । आदिशब्दश्च खण्डान्तरोक्तांश्च कारणत्वाद्युपयुक्तान्विशेषान् संगृह्णाति । 'ऐतदात्म्य'मित्यादेरर्थमाह (कृत्स्नस्येति) तत्सत्यमित्यत्र सर्वकारणस्य सतो ब्रह्मण 'इदं सर्व'मित्युक्तस्य जगतो वा सत्यत्वमिह न विधेयम्, कृतकरत्वात्; अतो 'मृत्तिकेत्येव सत्य'मितिवत्कार्यस्य जगतस्स्वनिष्ठत्वादिभ्रमनिवारणाय तदात्मकत्वं प्रामाणिकमित्युच्यते । 'स आत्मे'त्येतदप्यस्यैवार्थस्य तात्पर्यभूम्ना निर्देशवैषम्येण दृढीकरणम् 'स त आत्मा अन्तर्याम्यमृत'इतिवत् । अत्रापि सर्वान्तरात्मत्वेन प्रस्तुतश्रोतर्यपि विशेषत उक्तिरियमिति केचित्; अत एव तत्त्वमसीत्यप्यनुसन्धातर्युपसंहारमात्रम् । जीवस्य परेण स्वरूपैक्ये बाधे वापि पक्षे पूर्वोक्तसर्वाकारविशिष्टपरामर्शितच्छब्दो विरोधी स्यादित्यभिप्रायेणाह (एवम्भूतब्रह्मात्मक इति) अतोद्देश्योपादेयचिन्ता पश्चाद्भविष्यति 'श्वेतकेतु प्रती'त्यनेन स्वेष्टसाधकार्थवादलिङ्गसूचनम् ।

# केतुं प्रत्युपदेशाय प्रवृत्तत्वात्प्रकरणस्य। प्रपञ्चितश्चाय-

* श्रुतप्रकाशिका *

'उत तमादेशमप्राक्ष्य' इत्यत्रादेशशब्देन प्रशासिताऽभिधीयते। अत्र श्लोकावाचार्यपादैरुक्तौ—" छान्दोग्ये केचिदाहुर्दिशतिरुत तमादेशमप्राक्ष्य इत्यत्राङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्ति घञन्तः। नो कर्त्तर्यस्ति कर्मण्यगणि घञिह सत्कर्तृशास्तौ न कर्म स्यात्स्यात्कर्मोपदेशे तदिदमुत तमादेशवाचोपदेश्यम्॥ अत्र ब्रूमः प्रशास्तिं वदति दिशिरसावाङ्मुखो नोपदेशं शास्तौ सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्गः। युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्वं शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा॥" इति। आदेशशब्देनोपदेश्यमुच्यते, प्रकृत्यर्थ उपदेशः, प्रत्ययार्थः कर्मत्वम् 'अकर्तरि च कारके संज्ञायाम्' इति कर्तृव्यतिरिक्तकारके घञो विहितत्वादुपदेशे ब्रह्मणः कर्मत्वोपपत्तेश्च, प्रशासने तु ब्रह्म न कर्म. अपि तु कर्तृ, कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधिः। नात्र कर्त्तरिकप्रत्यय उपपद्यते 'क्ङिति चे'ति गुणप्रतिषेधादादेशशब्दरूपासिद्धेः, नापि पचाद्यच्प्रत्यय उपपद्यते, दिशिधातोरिगुपधत्वेन 'इगुपधात्कः' इत्यपवादसूत्रेण कप्रत्ययप्राप्तेर्गुणाभावात्. अतो घञ्प्रत्ययान्त एवायमादेशशब्दः, स च प्रत्ययः कर्तर्यविहित इति कर्मार्थत्वस्यैव युक्तत्वादुपदेश्यमेवादेशशब्दवाच्यमिति। अत्रोच्यते,—प्रकृत्यर्थः शासनं प्रसिद्धिप्राचुर्यात्, अन्यथा स्वारस्यभङ्गात्. आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः, उपपूर्वस्तु नियोज्यप्रयोजनवचन इति हि न्यासकारः, नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचक इत्यर्थः, एवमन्यत्रापि। किञ्च उपदेश्यत्वं लौकिकालौकिककर्मब्रह्मभागार्थसाधारणम्, शासितृत्वन्तु ब्रह्मणोऽसाधारणम् "अन्तःप्रविष्टः शास्ता जनानाम्" "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात्. निरुपाधिकोपदेश्यत्वं ब्रह्मणोऽसाधारणमिति

७ तत्त्वटीका ७

आत्माद्वैतपक्षे प्रबुद्धस्य गुरोर्भ्रान्तिसिद्धं शिष्यं प्रत्युपदेशानुपपत्तिं सूचयति ( उपदेशाय प्रवृत्तत्वादिति )

यत्त्वष्टविधतात्पर्यलिङ्गवत्त्वमिहोदितम्।
तत्त्व[सत्प]सिन् पक्ष एवेति प्राह प्रकरणोक्तितः॥ ७॥

* श्रुतप्रकाशिका *

चेन्न, इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेषु साधारण्यात् । यद्यप्यपरिमितसुखप्राप्तिदुःखनिवृत्त्यादि साक्षादुपदेश्यं स्यात्तथापि संसारनिवृत्तिर्ब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम्, प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम्; अत उपदेश्यत्वकथनवैयर्थ्यञ्च । ननु 'येनाश्रुतं श्रुत'मित्यनेनैकवाक्यत्वात्स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमिति चेत्, तथापि तादृशमुपदेश्यत्वं प्रतिज्ञावाक्येन प्रष्टव्यत्वोक्त्या चार्थसिद्धमित्यनपेक्षितोपदेश्यत्वकथनादप्यपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तम्, येनाश्रुतमित्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत्, निमित्तान्तरे सति एकविज्ञानात्सर्वविज्ञानं नोपपद्यते; अतः प्रतिपिपादयिषितवस्तुनो विवक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम्, घञ्प्रत्ययस्य तु करणे व्युत्पन्नत्वात् "विवक्षातः कारकाणां प्रवृत्ति"रिति शाब्दोक्तन्यायेन कर्त्तर्येव करणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते, अकर्त्तरीतिसूत्रस्य प्रयोजनं करणत्वविवक्षया विना कर्त्तर्यसाधुत्वेन प्रयोगनिवृत्तिः । उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यं च । प्रशासनपक्षे तु प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्, अतः प्रशासितैवादेशशब्दाभिधेय इति स्वीकर्तुं युक्तम्, एवमुपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः । तथा जगदुपादानत्वं निमित्तत्वं तदनुगुणसार्वज्ञ्यसर्वशक्तित्वादिकञ्चावगतम्, उपसंहारे च तत्त्वमसीति सामानाधिकरण्येन जीवान्तर्यामित्वं नाम गुणविशेष उक्तः, अस्यैवार्थस्य बहुश आवर्तितत्वादभ्यासोऽप्यस्ति; एवं ब्रह्मणो जगत्कारणत्वजगदन्तरात्मत्वादिगुणानां प्रमाणान्तराप्रतिपन्नत्वादपूर्वता सिद्धा । एवमुपासकस्य " तस्य तावदेव चिरं यावन्न विमोक्ष्ये

७ तत्त्वटीका ७

अत्र ह्युपक्रमप्रभृति तत्त्वमसीत्युपसंहारपर्यन्तं निरुपाधिकं प्रशासनादिकं दर्शितम्; तच्च मानान्तरागोचरत्वादपूर्वम् । अभ्यस्तञ्च बहुशः, फलञ्च 'तस्य ताव'दित्यादिना जीवस्य परप्राप्त्यनुरूपं ···· आख्या ···· 'तन्निष्ठस्य मोक्षोपदेशा'दिती ···· ···· ···· चार्थवादसिद्धः । असत्कार्यवादनिरासेन विवर्तवादविरुद्धैर्दृष्टान्तैस्त्रिवृत्करणप्रदर्शनादिभिश्चोत्पत्तिस्स्थापिता 'तत्तेजोऽसृजत' ···· ········ सोपबृंहणैः श्रुत्यन्तरगतैरध्यासशङ्कात्र प्रशमिता ।

···· अत्र सर्वकोशेषु ग्रन्थो गलित एव लभ्यते ॥

मर्थो वेदार्थसंग्रहे। अत्राप्यारम्भणाधिकरणे निपुणतरमुपपादयिष्यते॥

* श्रुतप्रकाशिका *

अथ सम्पत्स्ये "इति शरीरपातानन्तरं मोक्षश्रवणात्फलमपि विद्यते, पितुः पुत्रं प्रति प्रतिवचनरूपत्वादर्थवादश्च लब्धः, मृत्पिण्डादिदृष्टान्तोपपादनादुपपाचिश्चेति। अस्मिन् दृष्टान्तत्रयेऽपि विवर्तपक्षानुगुणः कोपि दृष्टान्तो न दृश्यते, अपि तु परिणामपक्षानुगुण एव दृश्यते, दार्ष्टान्तिकविषयवाक्येऽपि तत्तेजोऽसृजतेत्युक्तम्, न तु तदभ्रमदिति; अतोऽस्यां श्रुतौ विवर्तपक्षप्रसङ्गोऽपि नास्ति, श्रुत्यन्तरेषु च 'तदात्मानं स्वयमकुरुते'त्यादिकं श्रूयते, न तु व्यवर्त्ततेति, सूत्रं च "परिणामादि"ति, न तु विवर्तादिति। स्मृतिषु च " कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्। क्षितितलपरिणामतोऽनिलान्ते "त्यादिषु परिणामपक्षा एव दृश्यन्ते; अतः श्रुतिस्मृतिसूत्रस्वारस्यात् परिणाम एवाभ्युपगन्तव्यः, स च परिणामस्सद्वारक एव भवितुमर्हति, निर्विकारत्वनिर्दोषत्वानुप्रवेशशरीरशरीरिभावादिविषयानेकश्रुतिस्वारस्यादन्यथा तद्विरोधप्रसङ्गाच्चेति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किम्? कथं तदुपपादनमित्याशङ्कायामेतद्विस्तरो वेदार्थसङ्ग्रह इत्याह (प्रपञ्चित इति) अत्रापि विस्तरार्थः कथं ज्ञास्यत इत्यत्राह (अत्रापीति) निपुणतरम्—तस्याधिकरणस्यैतदर्थैकविषयत्वादिति भावः॥

❀ तत्त्वटीका ❀

तथाच स्वपक्षं क्षिपति परिणामादितिवदन् विवर्तादध्यासादिति च न वदन्सूत्रकृदिह। तदन्याभावान्न स्पृशति तदनन्यत्वफणितिर्न मायामात्रोक्त्याप्यनृतगतिराश्चर्यपरया॥

अत्र किं प्रतिज्ञावाक्यम्? कानि च तदुपपादकानि? कथं तेषामेव तात्पर्यम्? इत्यत्राह (प्रपञ्चित इति) ननु बुद्धिशब्दान्तरादिकं रज्जुसर्पादिष्वध्यासाद्ध्यादिषु द्रव्यान्तरसंयोगाच्च दृष्टम्। मृत्पिण्डघटादिष्वपि तथाभा ···· भावे कथं द्रव्यैक्योपपादनमित्यत्राह (अत्रापीति) निपुणतरम्—परोक्तप्रतीतिबलानुसारेण। अहिकुण्डलवदास्ते ···· ···· त ···· धित इत्यादिवच्चकारस्य सत्यत्वे– ···· +

एतावत्पर्यन्तमेवायं ग्रन्थ उपलभ्यते॥

